**अन्यक्रियाविषय** (anyakriyā-viṣaya) *adj.* referring to another performance of rite इषे त्वेत्यस्य ... अन्यक्रियाविषये बाधे ... प्रमाणाभावेन समस्तस्यैवैकैकत्र विनियोगावगतेरेकवाक्यत्वोपपत्तिः MīmāKau. iii (2). 124. 22 (*on* ii. 1. 48)

**अन्यक्रियासंबन्ध** (anyakriyā-sambandha) *m.* connection with the action or rite of another न त्वध्वर्याद्याः स्वामिनि केनचिदपि प्रकारेण तत्क्रियासंयुक्ता उपपद्यन्त इत्यन्यक्रियासंबन्धात्ता भिद्यन्ते ŚābaBh. 2011. 22 (*on* x. 6. 56)

**अन्यक्लेशमोचिनी** (anyakleśa-mocinī) *adj. (f.)* who removes trouble of others संतानार्थगुणैरन्यैर्युक्तान्यक्लेशमोचिनी। स्वकर्मनिरता नित्यं मूलभे प्रथमार्तवा NāraS. 15. 21.

**अन्यक्षणव्यक्तित्व** (anyakṣaṇavyakti-tva) *n.* the state of being other individual moment(s) अन्येषु तत्तत्क्षणव्यक्तित्वसंबन्धेषु अन्यक्षणव्यक्तित्वसंबन्धोऽवच्छेदकः GuruCandr. i. 92. 4.

**अन्यक्षणोचिता** (anyakṣaṇocitā) *adj. (f.)* fit for the next moment राज्ञः स्नानक्षणे यामुल्लावण्यलहरी तनोः। पीता क्षणेन सा तेन प्रवृत्तान्यक्षणोचिता DarpDa. 4. 66.

**अन्यक्षम** (anya-kṣama) *adj.* fit for other (action) जयेच्छुः प्रतिमल्लकम् ... कर्षयेत्। अशक्य(त्त)श्चेत्तथा क्रष्टुमूरूभ्यां तस्य सक्थिकम्। निपीड्य धारयेन्मल्लं यया(था) नान्यक्षमो भवेत् Mānaso. iv. 6. 939.

**अन्यक्षमापाल** (anya-kṣamāpāla) *m.* other king अथ प्रतीहारधुरंधरा सा जगाद तां दन्तरुचिप्रवाहैः। अन्यक्षमापालविलोकनोत्थं प्रक्षालयन्तीव कलङ्कमस्याः VikraDeC. 9. 135.

**अन्यक्षितिपाल** (anya-kṣitipāla) *m.* other king विहितान्यक्षितिपालमानभङ्गा[:] [। *] अभवन्नृपजातभीतिलिङ्गा यदनीकेन सको[स]लान् कलिङ्गाः[:] EI. vi. 6. 13; जायः कुमारः ... । यत्रीतिरन्यक्षितिपाललक्ष्मीसंधानदूती निजवल्लभस्य EI. iii. 88. 104; धराधिपः ... । बुभुजे विषयान्विलासिनीसचिवोऽन्यक्षितिपालदुर्लभान् ŚaṅkaDigVi. (Mā.) 10. 11.

**अन्यक्षुद्रा** (anyakṣudrā) *f.* name of a plant जपा नृकन्दान्यक्षुद्रामुचुकुन्देषु लक्ष्मणा RājNi. 430. 22.

**अन्यक्षुद्रादितस्** (anyakṣudrādi-tas) *adv.* from minor ones (obstacles) etc. caused by enemy गृहरक्षा भवेद्व्याधिचोरग्रहभुजंगमात्। राजतो वैरितो बाधादन्यक्षुद्रादितस्तथा TantrRā. 9. 96 (comm. वैरिकृतक्षुद्रप्रयोगादितः)

**अन्यक्षेत्र** (anya-kṣetrá) *n.* 1A field or territory of another श्येनो हुव्यं नयत्वा पर॑स्मादन्यक्षेत्रे अप॑रुद्धं चर॑न्तम् AV. iii. 3. 4; AV. (P.) ii. 74. 4; प्रैतानि॑ तृक्मने॑ ब्रूमो अन्यक्षेत्राणि॑ वा इमा AV. v. 22. 8; AV. (P.) xiii. 1. 6; xiii. 1. 13; अन्यक्षेत्रे न र॑मसे वुशी सन्मृ॑डयासि नः AV. v. 22. 9; AV. (P.) v. 21. 7; xiii. 1. 14; वैतहव्यमन्यक्षेत्रं वा एते प्रयन्ति ये रात्रिमुपयन्ति PañcBr. ix. 2. 1; दद्यात् दक्षिणाम् ... यदन्यक्षेत्राद्य पुरुषेष्वेत्युभयोर्विचारयोः LāṭyāŚS. ix. 11. 1; येषां तु वृक्षादीनामेकस्य क्षेत्रे मूलप्रदेशा वर्तन्ते अन्यक्षेत्रस्योपरि शाखास्तद्विषयेऽप्याह SmṛtiCan. iv. 555. 11; 1B field or territory of one अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंश्रिताः। स्वामिनं तं विजानीयात् KātySm. 761; अन्यक्षेत्रेऽन्येन क्रियमाणः सेतुर्यदि बहूपकारकः ... तदासौ न निषेध्यः DīpKa. 59. 31 (*on* 2. 156); 2A another territory एतस्मिन् कलशे सर्वमन्यक्षेत्रगणार्चितम्। ... न्यसेत् PauṣkS. 42. 192; 2B another area वेधयुतिः स्थानहता वेधो मुखफलगुणः स्वखातफलम्। त्रिचतुर्भुजवृत्तानां फलमन्यक्षेत्रफलहृतं वेधः GaṇiSāSaṁ. 7. 23½; 3 wife of another ब्रामुष्यायणस्तु जनकस्यैरसादपकृष्टोऽन्यक्षेत्रोत्पन्नत्वात् Mitā. 234. 19 (*on* 2. 128)

**अन्यक्षेत्रज्ञाधिष्ठित** (anyakṣetrajñādhiṣṭhita) *adj.* ruled by another individual soul अन्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ संश्लेषमात्रम् VedāntDī. 150. 1 (*on* iii. 1. 24); अन्यक्षेत्रज्ञाधिष्ठिते व्रीह्यादौ जायन्ते संसर्गमात्रं प्राप्नुवन्तीत्यर्थो ज्ञेयः VedāntPāSau. 269. 21 (*on* iii. 1. 24)

**अन्यक्षेत्रविनिर्गता** (anyakṣetra-vinirgatā) *adj. (f.)* sprung forth in the field of another अन्यक्षेत्रोपजातानां शाखास्त्वन्यत्र संस्थिताः। स्वामिनस्ता विजानीयादन्यक्षेत्रविनिर्गताः NāraSm. 166. 14.

**अन्यक्षेत्रोपजात** (anyakṣetropajāta) *adj.* (used as noun) (tree or plant) taken root or grown in the field of one अन्यक्षेत्रोपजातानां शाखास्त्वन्यत्र संस्थिताः। स्वामिनस्ता विजानीयादन्यक्षेत्रविनिर्गताः NāraSm. 166. 14.

**अन्यक्ष्मानाथमान** (anyakṣmā-nāthamāna) *adj.* who becomes a master of the territory of another तत्रामवत्पङ्क्तिरथाभिधानो भर्ता ...। क्षत्रान्वयैर्विप्रदलङ्घ्यमन्यक्ष्मानाथमानं जयमानमोजः JānaHa. 1. 12.

**अन्यखण्ड** (anya-khaṇḍa) *m., n.* another continent अन्यखण्डे गता सैव म्लेच्छा BhaviP. 422B. 12 (iii. 5. 22); त्वया विरचितस्तात ... नरा भुवि। अन्यखण्डे न गच्छन्ति BhaviP. 598A. 13 (iii. 24. 5)

**अन्यखन्युत्थ** (anyakhany-uttha) *adj.* arising, i.e. produced in another mine ताम्रम् ... । नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते RasRaSa. 5. 44.

**अन्यखेचर** (anya-khecara) *m.* another Vidyādhara (a class of semi-divine being) विद्याधरः ... शुकं प्राह कुञ्जेऽहं स्थास्याम्यत्रान्यखेचरः SamarāSaṁ. 2. 177.

**अन्यखेट** (anya-kheṭa) *m.* other planet (than Saturn) अन्यखेटश्रुतिबिम्बकाभ्यां तत्तुल्यकालांशकभस्य बिम्बं कृत्वा SiddhāTaVi. 268. 16.

**अन्यखेटज** (anyakheṭa-ja) *adj.* belonging to other planet चन्द्रस्य बलमाधारं आधेयं चान्यखेटजम्। आधारभूतेनाधेयं दीयते परिनिष्ठितम् NāraS. 14. 20; आधेयं त्वन्यखेटजं वीर्यम् VasiS. 23. 47.

**अन्यखेटबल** (anyakheṭa-bala) *n.* power of another planet तद्वत्स्यात्। अमृतमयं तत्तस्मादभ्यधिकं त्वन्यखेटबलान्(?त्) VasiS. 20. 9.

**अन्यख्याति** (anya-khyāti) *f.* reputation of another तेन प्राणानुपेक्ष्यैवमन्यख्यातेर्मनस्विना। ऊर्ध्वाधिरोहे सोपानं कृतम् RājTa. (Ka.) 7. 1450.

**अन्यग** (anya-ga) *adj. [f. - ā]* 1A (woman) going to another person सा प्रीतियोगमप्राप्ता तेनोढेन दूषिता। पुरुषद्वेषिणी वा स्याद्विष्टा वा ततोऽन्यगा KāmSū. 207. 4 (3. 2) (JayaMa. तं मुक्त्वान्यं पुरुषं गच्छति); RatiRaha. 11. 22; 1B (woman) living with another person (of the same class) (आशौचकम्) त्रिरात्रं स्यात्तथाचार्यस्वभार्यास्वन्यगासु च KūrmaP. 620. 10 (2. 23); विष्णुवचनोक्तेषु स्वभार्यासु अन्यगासु सजातीयोत्कृष्टजातीयपुरुषान्तरसंगतासु त्रिरात्रम् (अशौचम्) HārLa. 79. 7; 2A referring to any one else एवमेष महान् शब्दो मैत्रेय भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ViṣṇuP. vi. 5. 76; 2B referring to another one, cf. अन्यगत्व; 3A pertaining to anything else न चान्यगौ भेदाभेदौ तत्र उपचार्यौ IṣṭaSi. 21. 3; 3B pertaining to the other इदमंशश्च सत्यत्वं शुक्तिगं रूप्य ईक्ष्यते। स्वयंत्वं वस्तुता चैवं विक्षेपे वीक्ष्यतेऽन्यगम् PañcDa. 6. 34; 4 present in another, i.e. individual soul सा मन्दहृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा। ब्रह्मणश्चेत्क सार्वज्ञमन्यगा चेत्स्वतोऽन्यता AnuVyā. 16A. 6 (*on* 1.4)

**अन्यगच्छ** (anya-gaccha) *m.* 1 ultimate term in a progression त्रिकादिद्युत्तरश्रेढ्यां गच्छे क्वापि च यत्फलम्। तदेव त्रिगुणं कस्मिन्नन्यगच्छे भवेद्वद BījGa. 10. 158; 2 different, i.e. heterodox school, cf. अन्यगच्छीय.

**अन्यगच्छीय** (anyagacch-īya) *adj.* belonging to different, i.e. heterodox school तद्दुःखेन निःसृतोऽन्यगच्छीयदेवचन्द्रपद्माकराभ्यां सह श्रीकाश्मीरं प्रति PrabaCin. 60 (n). 3; अन्यगच्छीयदेवेन्द्रसूरिमलयगिरिभ्यां सह कलाकलापकौशलाद्यर्थं गौडदेशं प्रति प्रस्थिताः KumāPraPra. 88. 14.

**अन्यगज** (anya-gaja) *m.* other elephant जयत्यन्यगजान् हस्ती पार्ष्णिर्निजमदाज्ञनात् ĪśānŚiPa. i. 51. 57.

**अन्यगजासह्य** (anyagajāsahya) *adj.* not tolerated or conquered by any other elephant औपवाह्यो ह्यसावन्यगजासह्यः सुशिक्षितः PariPar. 2. 586.

**अन्यगण** (anya-gaṇa) *m.* 1 different, i.e. western group of people वीक्ष्यन्तेऽन्यगणेष्वत्राचरणा लक्षणोज्झिताः Gurvā. 466; 2 another class of verbal roots सर्वे धातवः अन्यगणपठिता अपि विषयो यस्य तत् तथोक्तम् Nyās. i. 551. 14 (*on* iii. 1. 83)

**अन्यगणिकाप्रयुक्त** (anyagaṇikā-prayukta) *adj.* prompted by another harlot अन्यगणिकाप्रयुक्ता यदि यूयं प्रहसनोद्यताः SamaMā. 8. 33.

**अन्यगत** (anya-gata) *adj. [f. – ā]* 1A (woman) living with another person B approaching another person 2A referring to any other B reffered to in other text 3A pertaining to one (used as noun) (that) which pertains to one person B pertaining to another person 4 present in another 5 gone, i.e. devoted to any one else 1A (woman) living with another person अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। निवासराजनि प्रेते तदहः शुद्धिकारणम् YājñaSm. 3. 25; किं भूयसा भगिनि मां गणयान्यगतामितः। विरहज्वलनोच्छिष्टं जुहोमि ज्वलने वपुः RāmC. (App. 1) 40. 38; भार्यास्वन्यगतासु च। परपूर्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते ŚaṅkhaSm. 15. 13; ViṣṇuDhaP. ii. 75. 18; अन्यगतासु पुनर्विवाहमन्तरेण भर्त्रन्तरं समाश्रितासु स्वैरिणीषु SmṛtiCan. vi. 41. 5; 1B approaching another person बहुविधसंभोगसुरतसंपन्ना। रोदित्यन्यगतेऽस्मिन्सा मध्या कामिनी पूज्याŚṛṅgāDī. 1. 13; 2A referring to any other लिङ्गालिङ्गिनौ विधिप्रतिषेधौ अनुमीयमानौ तद्विषयावेवानुमातुं शक्येते नान्यगतौ TantrVā. 180. 8 (*on* i. 3. 11); 2B referred to in other text अतश्चान्यगता गुणाः कथंभावेन नापेक्षिताः प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्ति TantrVā. 648. 6 (*on* ii. 4. 20); 3A pertaining to one न चान्यगतया देवतयान्यस्य व्यपदेशो भवति TantrVā. 1112. 3 (*on* iii. 6. 42); न चान्यगतमेकत्वमन्यत्रोपचर्यते NyāyKu. 148. 10; TattvCin. iii. 34. 3;

क्षोभस्त्वन्यगते हेतावन्यस्मिन् कार्यकल्पनम् RasāSu. 259. 14 (3. 119); न ह्यन्यगतेन व्याप्येनान्यत्र व्यापकसिद्धिः NyāySu. (Ja.) 116B. 6 (*on* i. 1. 5); (used as noun) (that) which pertains to one person न ह्यन्यगतं व्याप्यबुद्ध्याद्यन्यगमनस्य (गतस्य) व्यापकबुद्ध्यादेर्निमित्तं भवति NyāySu. (Ja.) 351A. 12 (*on* ii. 2. 6); 3B pertaining to another person अन्यगतस्याप्यध्यासस्यापनोदनसमर्थे ... विभ्रम इत्याशङ्क्येत PañcPā. 6. 15 (*on* i. 1. 1); न किंचिदपि गुरुगतमन्यगतं वा कीर्तयेत् ManuBh. i. 182. 20 (*on* 2. 203); ManvaMu. 75. 21 (*on* 2. 203); तस्मादन्यगता वर्णा आश्रमा अपि नारद। आत्मन्यारोपिताः सर्वे भ्रान्त्या NāraPaU. 6. 14; अज्ञानरागादिकं बुद्धेरेवाभिमतं न पुरुषस्येति कथमन्यगतेनाज्ञानादिना पुरुषस्य बन्धमोक्षाद्युपपत्तिः NyāyMa. 283. 2; शस्त्रपातादिपरुषस्पर्शानवर्जनीयान्स्वगतानन्यगतांश्च धैर्येण सहन् ... युद्धाख्यं कर्मारभस्व GītāBh. (Rā.) 85. 5 (*on* 2. 18); संहारकर्तृत्वेऽन्यगते तदभावापातात्त्रिपेध्यम् TattvPrakā. 112B. 8 (*on* ii. 3. 13); 4 present in another घण्टासंबद्धेष शब्दः ... अन्यगते शब्दव्यञ्जके यथैकस्यां घण्टायां भवति तथा घण्टान्तरेष्वपि TātpaṬ. (Vā.) 460. 7 (*on* ii. 2. 35); अन्यस्यान्यगतैर्दोषैर्दूषणं न हि नीतिमत् BhaviP. 29A. 13 (i. 8. 47); सुशीलवृत्तः ... यमेषु चैवान्यगतेषु नव्यधः PadmP. v. 15. 356; नो खलु दुःखं दुःखतया भयहेतुरन्यगतस्यापि तस्य तथाभावप्रसङ्गात् NyāyMa. 175. 9; अन्यगतशब्दार्थनियन्तृत्वं तदधिकरणत्वं चेति द्विधा हि शब्दप्रवृत्तिनिमित्तम् TattvPrakā. 67A. 11 (*on* i. 4. 3); 67B. 3 (*on* i. 4. 3); अन्यगतस्य शब्दप्रवृत्तिनिमित्तस्येश्वरपरतन्त्रत्वे न तत्र मुख्यवृत्त्ययोगात् NyāySu. (Ja.) 151B. 8 (*on* i. 1. 11); न ह्ययं शब्दस्तद्गतं विशेषं विहायान्यगतं विशेषं तत्र बोधयति SiddhāLeSaṁ. 216. 10; प्रागन्यगतस्येव प्रकृते राजगतस्यापि तस्य राजस्तुत्युत्कर्षकत्वात् RasGaṅ. 47. 12; 5 gone, i.e. devoted to any one else मन्मन्त्रोपासकाः निरपेक्षा नान्यगतास्तेषां हृश्योऽहमन्वहम् AdhyāRā. iii. 2. 37.

**अन्यगतकर्तृत्व** (anyagata-kartṛtva) *n.* agency present in another person गौणोपासनाफलं च प्रधानशेषतयोक्तम्। तत्रान्यगतकर्तृत्वारोपानुवादोऽपि संभवति AṇuBh. 9. 13 (*on* i. 1. 2)

**अन्यगतक्रियाकारकसंबन्ध** (anyagata-kriyākārakasambandha) *m.* syntactic relation of cause and action pertaining to another स्वस्वामिभावादावपि संबन्धेऽन्यगतक्रियाकारकसंबन्धोऽस्ति TātpaṬ. (Vā.) 36. 9 (*on* i. 1. 1)

**अन्यगततत्तद्रूप** (anyagata-tattadrūpa) *n.* particular form belonging to other letters रश्रुतेर्लश्रुतिर्भवति इत्युक्तम्। तस्यायं भावः। वस्तुतो रत्वादिमात्र कश्चित् किं तु अन्यगततत्तद्रूपेण स्फोटस्यावभासमात्रम् VaiyāSiMañ. 231. 3.

**अन्यगतत्व** (anyagata-tva) *n.* 1 the state of pertaining to others तेषामन्यगतत्वे तु न स्यात्सम्यक्समन्वयः AnuVyā. 48A. 1 (*on* 3. 3); 2 the state of being present in another person अध्ययनस्य ... तादर्थ्यमेव युक्तम्, न तु अध्यापनाङ्गत्वम् तस्य अन्यगतत्वेन बहिरङ्गत्वात् PūrvottaVāNāMā. 287.8.

**अन्यगतत्वतस्** (anyagatatva-tas) *adv.* due to the state of partaining to another पुरुषस्य स्वरूपावस्थानं मुक्तिरित्यपि परास्तम्। आत्मनः सुखरूपत्वात् बन्धस्यान्यगतत्वतः TattvPradī. (Ci.) 368. 9.

**अन्यगतधर्म** (anyagata-dharma) *m.* property present in another object अनुमानं च धर्मिगतधर्मोपलब्धौ प्रवर्तते न पुनस्तर्कः तर्कस्त्वन्यगतधर्मप्रदर्शनेनापि प्रवर्तते NyāyVār. 145. 9 (*on* i. 1. 40)

**अन्यगतप्रवृत्तिनिमित्त** (anyagata-pravṛttinimitta) *n.* cause of use (of a word) pertaining to another अज्ञरूढितोऽपि विद्वद्रूढेरेव प्रावल्यात् अन्यगतप्रवृत्तिनिमित्तस्यापि भगवदधीनत्वाच्च तत्रैव मुख्यत्वोपपत्तेरिति भावः TattvPrakā. 22A. 13 (*on* i. 1.21)

**अन्यगतप्रशंसा** (anyagata-praśaṁsā) *f.* eulogy relating to another गवाश्वादीनपेक्ष्य नैवान्यस्य प्राशस्त्यं विद्यते इत्येनम् अन्यगतप्रशंसानिमित्तः प्रतिषेधः TantrVā. 327. 1 (*on* i. 4. 22)

**अन्यगतबहुत्व** (anyagata-bahutva) *n.* plurality present in others न च स्वस्य बहुत्वाभावेऽप्यन्यगतबहुत्वस्य तदधीनत्वेन बहुत्वसंख्यावाचिशब्दवृत्तिः TattvPrakā. 71A. 5 (*on* i. 4. 12)

**अन्यगतभावा** (anyagata-bhāvā) *adj.* (*f.*) having feeling (of love) pertaining to another person दुष्टान्यगतभावा च कन्यादोषाः प्रकीर्तिताः NāraSm. 177. 36; VyāvaNi. 382. 12; (त्यजेत्कन्याम् ... विप्रदुष्टाम्) विप्रदुष्टां रोगिण्यादिशङ्कितामन्यगतभावां च त्यजेत् ManuBh. ii. 262. 20 (*on* 9. 72); VīraMi. (Saṁskāra.) 744. 24.

**अन्यगतभेद** (anyagata-bheda) *m.* difference present in one कश्चात्र विरोधः। किमेकार्थवत्प्रवृत्तिनिमित्तभेदयोः ... किं वा निमित्तयोरेव। नाद्यः अन्यगतभेदस्यान्यगताभेदेनाविरोधात् NyāyKu. 140. 17.

**अन्यगतमुख्यविशेष्यत्व** (anyagata-mukhyaviśeṣyatva) *n.* chief qualificandness present in another प्रथमावगतयागादिव्युत्पत्तिवेलायाम् ... अन्वयव्युत्पत्तिकल्पना, न त्वन्यत्र। अन्यगतमुख्यविशेष्यत्वस्यानुपस्थितत्वेन विशेषणज्ञानाभावात् MīmāKau. iii (2). 39. 13 (*on* ii. 1. 5)

**अन्यगतविधेय** (anyagata-vidheya) *n.* predicate belonging to another अन्यगतविधेयनिषेधपर्यवसायित्वावश्यंभावेन तन्निर्वाहाय ... व्याख्येयम् ŚivārkaMaDī. i. 256. 26 (*on* i . 1. 21)

**अन्यगतसंस्कार** (anyagata-saṁskāra) *m.* impression present in one न ह्यन्यगतसंस्कारेणान्यस्य स्मृतिः संभवति ŚatDū. 122. 6.

**अन्यगतसुकृतदुष्कृत** (anyagata-sukṛtaduṣkṛta) *n.* merit and demerit belonging to one अन्यगतसुकृतदुष्कृतयोरन्यत्र प्रवेशासंभवेन स्तुतिपरत्वाभिप्रायः ŚrutaPra. ii. 490. 4 (*on* iii. 3. 26)

**अन्यगतस्तुति** (anyagata-stuti) *f.* praise pertaining to one यत्रान्यगतस्तुतिविवक्षयान्यस्तुतिः क्रियते तत्रापि व्याजस्तुतिरेव Kuval. 71 (45)

**अन्यगतहृदयत्व** (anyagatahṛdaya-tva) *n.* the state of having the heart attached to another अथ किं नामान्यगतहृदयत्वम् MadaKeC. 74 (10)

**अन्यगतहेतु** (anyagata-hetu) *m.* probans present in another अन्यगतहेतुसमुत्थत्वं तु न कथंचिदपि स्यात् NyāyPari. 338. 7.

**अन्यगतहेतुत्व** (anyagatahetu-tva) *n.* the state of being probans present in another शूर्पगतान्नकरणहेत्वपदेशान्नान्यगतहेतुत्वप्रसङ्गः TantrVā. 49. 7 (*on* i. 2.30)

**अन्यगतान्नकरणत्व** (anyagatānnakaraṇatva) *n.* the state of being the means of (preparing) food present elsewhere न च शूर्पगतहोमसाधनत्वे साध्येऽन्यगतान्नकरणत्वस्य हेतुता संभवति MīmāKau. iii (1). 55. 9 (*on* i. 2. 30)

**अन्यगताभेद** (anyagatābheda) *m.* absence of difference present in another कश्चात्र विरोधः। किमेकार्थवत्प्रवृत्तिनिमित्तभेदयोः ... किं वा निमित्तयोरेव। नाद्यः अन्यगतभेदस्यान्यगताभेदेनाविरोधात् NyāyKu. 140. 17.

**अन्यगति** (anya-gati) *f.* 1 knowledge of the opposite व्याजस्तुतौ निन्दास्तुतिभ्यामन्यगतिः AlaṅkāRa. 40 (1); 2 attainment of another thing स एनान् ब्रह्म गमयतीति। न ह्यन्यविधया अन्यगतिर्युक्ता BrahmSūBh. (Ma.) 11B. 7 (*on* i. 2. 16); 3 any other refuge उपायरूपगतेरपि हृश्यमानत्वात् कथमिव श्रीकृष्णाद्दतेऽन्यगतेरभावत्वम् VedāntRaMañ. 103. 11 (*on* 3. 8); 4 different state (of existence), cf. अन्यगतिस्थ; 5 another alternative or option, cf. अन्यगतिमत्; 6 gait of another, cf. अन्यगत्यादि.

**अन्यगति** (anya-gati) *adj.* 1 having any other alternative or option उद्भ्रान्तभेककुलकीर्णजले तडागे कोऽप्यस्ति नाम यदि नान्यगतिर्विकोटः SaduktiKa. 274. 8; 2 having another gait अतोऽन्यगतयो नेष्टाः सर्वदैव तुरंगमाः AśvaVai. 3.94

**अन्यगतिमत्** (anyagati-ma(n)t) *adj.* having another alternative or option अनन्यगतिन्यायलभ्यानामर्थानामन्यगतिमदर्थविषयत्वाभावात् CaturCin. iii (1). 344. 13.

**अन्यगतिस्थ** (anyagati-stha) *adj.* (used as noun) (one) abiding in a different state (of existence) यद्यपि देवो देवं न मारयति अन्यगतिस्थं तु मारयति AbhidhKoBh. 253. 8 (*on* 4. 83); यावत्र दुःखवेदनाभ्याहता भवन्ति। अन्यगतिस्था नित्यं जानते AbhidhKoBh. 430. 18 (*on* 7. 56); अन्यगतिस्थं तु मारयतीति। प्रेतादिगतिस्थम् Sphuṭā. iv. 91. 23 (*on* 4. 84)

**अन्यगतोत्पत्ति** (anyagatotpatti) *f.* origination which is present in one अन्यगतोत्पत्त्यादेरन्यत्रारोपे बीजं तु अन्तःकरणस्य रागादिदोष एव VaiyāSiMañ. 220. 6 (comm. अन्तःकरणस्यकारबुद्धिमपहाय यकारबुद्धिकरणात्)

**अन्यगत्यसंभव** (anyagaty-asambhava) *m.* impossibility of another alternative of option नेत्रैरिवोत्पलैः पद्मैः इत्यादौ चान्यगत्यसंभवात् SāhiDa. 567. 4.

**अन्यगत्यादि** (anyagaty-ādi) *adj.* gait of another etc. विकृतवेषादिविभावः ... आदिशब्दात्तर्तनान्यगत्याद्यनुकरणासत्प्रलापभूषणादीनि विभावा यस्य सः Kāvyānu. (He.) 89. 7.

**अन्यगत्व** (anyaga-tva) *n.* the state of referring to another one बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः। प्रसिद्धैरन्यगत्वेन वाच्यस्साक्षाज्जनार्दनः AnuVyā. 12A. 5 (*on* 1. 2); 13A. 7 (*on* 1. 4)

**अन्यगन्ध** (anya-gandha) *n.* red lotus (*lit.* having distinct odour) अल्पगन्धं (v.l. अन्यगन्धं) सोमाख्यं सुरक्तं रक्तकैरवम् ParyāMu. 13.25.

**अन्यगन्ध** (anya-gandha) *m.* odour of another object न च जले गन्धस्वाभवेनान्यगन्धप्राप्तिः सुतरां दुर्वचेति वाच्यम् BālamBha. i. 74. 21 (*on* 1. 20)

**अन्यगमकत्व** (anyagamaka-tva) *n.* the state of being what indicates another object न हि धूमे वह्निगमकत्वं सदातनम्। अन्यगमकत्वस्य च दर्शनात् Loc. 197. 23 (*on* 3. 33)

**अन्यगमन** (anya-gamana) *n.* 1 act of construing with another एकत्र विधिर्गच्छति तदा नेतरत्र गतो भवति, एवमितरगमनेऽप्यन्यगमनानुपपत्तिरसंबन्धात् TantrVā. 478. 9 (*on* ii. 2. 6); 2 act of going to another person हे राघव त्वया ... भूः ... बद्धा निबद्धा। निजायतीकृतेत्यर्थः। अन्यगमनशङ्कया इति भावः AlaṅkāMaṅ. 20. 17.

**अन्यगमा** (anya-gamā) *adj.* (*f.*) proceeding by means of other thing, i.e. chariot सेना ... स्वगमान्यगमा चेति द्विधा ...। स्वगमा या स्वयं गन्त्री यानगान्यगमा स्मृता ŚukraNī. 4 (7). 2.

**अन्यगर्भ** (anya-garbha) *m.* another womb चराचरगुरुर्ब्रह्मा। ... अन्यगर्भे परान् गर्भान् सदैव परिवर्तयन्। रतिमाप्नोति MārkP. 51. 13.

**अन्यगर्भ** (anya-garbha) *adj.* based on anything else द्रव्यसंबन्धो हि सर्वत्र क्रियागर्भ एव ... क्रियाकरणसंबन्धस्तु नान्यगर्भ इति स एव युक्तः TantrRa. 220. 10.

**अन्यगवी** (anya-gavī) *f.* cow belonging to another person अन्यदीयो वृषभो यद्यप्यन्यगवीषु वत्सान्बहूनपि जनयेत् ManuBh. ii. 255. 17 (*on* 9. 50)

**अन्यगवेषणा** (anya-gaveṣaṇā) *f.* act of searching for another person अथवा मय्येव तिष्ठति भग्नभागधेये किमन्यगवेषणया Mukundā. 183 (3)

**अन्यगात्र** (anya-gātra) *n.* body of another being अप्यन्यगात्रप्रतिच्छन्नरूपो दुरन्वेषणः स्याद्गुरुः ŚaṅkaDigVi. (Mā.) 10. 33; अन्यगात्रमपि निर्विशतो मे निर्वृतिर्भवति कापि तथापि MadaKeC. 74.

**अन्यगात्रगूढ** (anyagātra-gūḍha) *adj.* who has hidden (himself) in the body of another being किं कुर्मः क्व नु मृगयामहे क्व यामः ... । विज्ञातुं कथमिममीशमहे विचिन्त्याप्यासिन्धु क्षितितलमन्यगात्रगूढम् ŚaṅkaDigVi. (Mā.) 10. 21.

**अन्यगाथा** (anya-gāthā) *f.* laudatory verse about other ये कथास्ते विहायान्यगाथाः प्रभो कीर्तयन्तेऽथ शृण्वन्ति वा ते जनाः। दुःखिताः स्युः SkandP. ii (9). 15. 24; पापपाशेन यन्त्रितः। अनादृत्य वृथागाथासक्तबुद्धिः (v.l. अनादृत्यान्यगाथासु सक्तबुद्धिः) प्रवर्तते BṛNāraP. 1. 65.

**अन्यगामिता** (anyagāmi-tā) *f.* the state of going to other इदम-युक्तं यदन्यकृतस्य कर्मणोऽन्यगामिता फलस्योच्यते ManuBh. i. 387. 20 (*on* 4. 177)

**अन्यगामित्व** (anyagāmi-tva) *n.* 1 the state of approaching another person निर्धनस्य तु नियोगादिना योऽस्य भार्यां संगृह्णीयात्, स दद्यात्। ... तद्योषितामेवान्यगामित्वसंभवात् BālaKrī. i. 218. 3 (*on* 2.47); 2 the state of (property) going to another person (as inheritance) पुत्रे विद्यमाने पितृद्रव्यस्यान्यगामित्वाभावात् अनन्याश्रितद्रव्यः पुत्र ऋणं दाप्यः ... । सत्यपि पुत्रे पितृद्रव्यस्यान्यगामित्वमङ्गीकृत्यापि दोषमाह Subodhi. 27. 21-22 (*on* 2. 51)

**अन्यगामिन्** (anya-gāmin) *adj.* [*f.*–*ī*] **1Ai** present in another न ह्यन्य-गुणोऽन्यगामी भवति TantrVā. 52. 12 (*on* i. 2. 31); **1Aii** pertaining to another यदिह विभेदकं कथितमभ्यसनप्रभृतिकमन्यगामि तदसिद्धमपि NayaMaṅ. III. iii. 1. 2; **1Bi** approaching another person, adulterous ततः सोऽर्गलितद्वारां भार्यां तामन्यगामिनीम्। दृष्ट्वा दुःखाशनिहतो देवदासो व्यचिन्तयत् KathāSaSāg. iii. 5. 27; Rāṣṭrau. 4. 9; (used as noun) (woman) approaching another person तदहमियमन्यगामिनीति दत्तान्यंशुकानि प्रत्याहर्तुमुद्यतोऽस्मि ŚṛṅgāBhū. 69 (1); **1Bii** going to another वंशजामुपगतामपि श्रियं कामिनीमिव गुणैकलालसाम्। स्वामुपेक्ष्य कुरुतेऽन्यगामिनीम् Rāṣṭrau. 4. 9; प्रारब्धानि ... अन्यगामीनि भवेयुरित्यत्रासंभावनानिरासायाह GoviBh. 297. 4 (*on* iv. 1. 18); **1Biii** going to another person (as inheritance), cf. **अन्यगामित्व 2**; 2 belonging to one अन्यगामिना वस्तुनान्यदुपलक्ष्यते यतः SaṁkṣeŚā. 1. 334 (i. 248.10)

**अन्यगामिफल** (anyagāmi-phala) *n.* fruit going to other कथमन्यकर्तृक-मन्यगामिफलं स्यात् BrahmSūBh. (Śrī.) ii. 409. 1 (*on* iii. 4. 45)

**अन्यगामिफल** (anyagāmi-phala) *adj.* having fruit going to one वाक्यशेषोक्तं फलमिष्टिकर्तुः पितुरेव न पुत्रस्यान्यगामिफले कर्मण्यन्यस्य प्रेरणानुपपत्तेः UpaPară. 9. 15.

**अन्यगिर्** (anya-gir) *f.* speech of another person करते वाक्यामृतं त्यक्त्वा शृणोत्यन्यगिरं बुधः RasāSu. 60. 19 (1. 222)

**अन्यगुण** (anya-guṇa) *adj.* 1 having different quality त्रयः। घ्नन्ति चान्यगुणत्वेन रसदोषं शरीरिणाम् BhelaS. 67. 8 (3.1); 2 subordinate to other, cf. **अन्यगुणता 2**.

**अन्यगुण** (anya-guṇa) *m.* 1 other channels or means द्वितीयगृहगे दिनकरतनये ... अन्यगुणैः कृतं वसुचयं तदपि खलु भवत्यम्बिव वंशपत्रपतितं न बहु न च चिरम् BṛSaṁ. 104. 40; 2 other advantage लग्नेन हीनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति YogYā. 5. 34; **3Ai** extraordinary quality किं त्यक्तपास्तदेवत्वमानुष्यकपरिग्रहैः। ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता Kirātā. 15. 21; **3Aii** other (poetical) merit or excellence वाणी ...। या शून्यापि सर्वान्यगुणैर्व्यनक्ति ŚrīKaC. 2. 14 (comm. अन्ये गुणा औदार्यादयः); **3Aiii** other (actual) merit, ŚrīKaC. 2. 14 (comm. सा च गुणैर्मशक-वारणादिभिः); **3Aiv** other quality or virtue प्रतिबिम्बवदप्येषामानन्दोऽन्यगुणा यथा AnuVyā. 44A. 8 (*on* 3.2); अन्यगुणानाकीर्तयतोऽन्यां कल्पय विद्याम् NayaMaṅ. III. iii. 12. 24; **3B** quality or virtue of another न सतोऽन्यगुणान् हिंस्यान्नासतः स्वस्य वर्णयेत् YaśasCam. ii. 350. 7; संगतान्यगुणानङ्गीकारमाहुरतद्गुणम् Candrā. 5. 105; **4A** property of one न ह्यन्यगुणोऽन्यगामी भवति TantrVā. 52. 12 (*on* i. 2. 31); **4B** property of another ननु कथं शरीरगुणत्वनिराकरणे-नान्यगुणत्वसिद्धिः YuktiSneha. 120. 26 (*on* i. 1. 5); **4C** another (phonetic) property, cf. **अन्यगुणक B**.

**अन्यगुणक** (anyaguṇa-ka) *adj.* **A** possessing another quality द्रव्य-मरुणिम्ना परिच्छिद्यमानमरुणाशब्दाभिधानीयतां लभते। तदेवान्यगुणकं नारुणाशब्दः शक्नोत्यभिवदितुम् ŚābaBh. 682. 3 (*on* iii. 1. 12); क्रिया हि प्रधानभूता ... अन्यजातीयमन्यगुणकं च द्रव्यमनिच्छन्ती NyāyRa. 919. 21 (*on* 7. 269); **B** (used as noun) (one) possessing another (phonetic) property उदात्तादिगुणयुक्तानां अन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या LaŚabdeŚe. i. 89. 5.

**अन्यगुणकीर्तन** (anyaguṇa-kīrtana) *n.* act of telling the virtues of others नासौष्ठवं प्रसङ्गे न चान्यगुणकीर्तनेषु भारत्याः KuṭṭaMa. 579 (comm. परेषां गुणकीर्तनेषु गुणश्लाघासु अपि भारत्याः वाचः असौष्ठवं न); उद्भिन्नपीनपुलकाभरणो भवामि यत्सत्यमन्यगुणकीर्तनतोऽहमेकः HarVi. 579.

**अन्यगुणकृत** (anyaguṇa-kṛta) *adj.* caused by another quality वयःकृत-ज्येष्ठत्वे उत्तरार्थलाभादाह। ज्येष्ठा गुणेति। अन्यगुणकृतज्येष्ठत्वमपि नाभिमतम् BālamBha. ii. 200. 24 (*on* 2. 135)

**अन्यगुणख्याति** (anyaguṇa-khyāti) *f.* fame of virtue of another गुणैस्तस्य जगत्सर्वं शशाङ्ककिरणामलैः। व्याप्तमन्यगुणख्यातितिरस्करणकारणैः PadmP. (Ra.) 15. 149.

**अन्यगुणग्रह** (anyaguṇa-graha) *m.* assumption of the quality of another object अन्यगुणग्रहोऽन्यस्य स्वगुणत्यागतस्तु यः। तद्गुणालंकृतिः AlaṅkāMaṅ. 191.5.

**अन्यगुणता** (anyaguṇa-tā) *f.* 1 the state of being a quality of another object तदिदमपि द्वयं सुखादीनां शरीरगुणत्वं निवारयदन्यगुणतां सूचयति ŚāstrDī. 120. 1 (*on* i. 1. 5); 2 the state of being subordinate to other कर्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा VyaktiVi. 5. 20.

**अन्यगुणदूषण** (anyaguṇa-dūṣaṇa) *n.* censure of qualities or virtues of others असूयान्यगुणदूषणम् AbhidhāCin. 323.

**अन्यगुणदोष** (anya-guṇadoṣa) *m.* virtue and vice of others तथान्य-गुणदोषेषु संशयैकान्तवादिभिः। पुरुषातिशयो ज्ञातुं यद्यशक्यः किमिष्यते NyāyVi. 2. 388.

**अन्यगुणनिबन्धन** (anyaguṇa-nibandhana) *adj.* caused by the qualities of others भूतानामपि तदारम्भकाणां प्रवृत्तिविशेषोऽन्यगुणनिबन्धन एव TātpaṬ. (Vā.) 572. 4 (*on* iii. 2. 39)

**अन्यगुणनिमित्त** (anyaguṇa-nimitta) *adj.* caused by the quality of others दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि NyāyBh. 216. 8 (*on* iii. 2. 37); न केवलं शरीरस्य प्रवृत्तिविशेषोऽन्यगुणनिमित्तः TātpaṬ. (Vā.) 572. 3 (*on* iii. 2. 39)

**अन्यगुणनिष्ठ** (anyaguṇa-niṣṭha) *adj.* pertaining to the quality of others स्वनिष्ठगुणस्यान्यगुणनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतानाश्रयत्वेऽतद्गुणः AlaṅkāKau. (Vi.) 405. 16.

**अन्यगुणप्रकाशन** (anyaguṇa-prakāśana) *m.* manifestation of virtues of others मिहिरो[ऽन्यगुणप्रकाशने] परदोषावरणे महत्तमः PṛthvīVi. 12. 62.

**अन्यगुणभुज्** (anyaguṇa-bhuj) *adj.* possessing other virtues वरा गुणाः। एभिर्हीनोऽन्यगुणभुङ्महीभुक् सधनोऽपि च। महीं स्वल्पां नैव भुङ्क्ते ŚukraNī. 1.176.

**अन्यगुणरहित** (anyaguṇa-rahita) *adj.* devoid of other qualities or virtues यस्यैते पुरोहितादयः तस्यैव ते अन्यगुणरहिता अपि पुरोहितादित्वेनैव पात्राणि CaturCin. i. 33. 13.

**अन्यगुणर्द्धि** (anya-guṇarddhi) *f.* merit and prosperity of another असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता SaraKaṇṭhā. 588. 17; SāhiDa. 160.5.

**अन्यगुणस्वीकार** (anyaguṇa-svīkāra) *m.* acceptance, i.e. assumption of quality of others तद्गुणः। स चान्यगुणस्वीकारोऽर्थात्स्वगुणत्यागे भवति AlaṅkāRa. 97. 3.

**अन्यगुणापहार** (anyaguṇāpahāra) *m.* stealing the virtues of others नो जीविकेयमिदमन्यगुणापहारकर्म प्रकामसुखदं व्यसनं खलस्य UdaySuKa. 17. 21.

**अन्यगुणासहिष्णुता** (anyaguṇāsahiṣṇutā) *f.* non-tolerance of virtues of others ईर्ष्यान्यगुणासहिष्णुता ManvaMu. 255. 19 (*on* 7. 48)

**अन्यगुणोत्कर्ष** (anyaguṇotkarṣa) *m.* excellence of other qualities अनन्यसामान्यं सत्त्वं तस्यावधार्य सः। तुष्टोऽप्यन्यगुणोत्कर्षात्तुतोष सुतरां नृपः KathāSaSāg. v. 2. 158.

**अन्यगुणोपमर्द** (anyaguṇopamarda) *m.* act of reproaching or denial of virtues of others यः स्वानपि ... गुणान् खलतया मलिनीकरोति। तस्यास्य भोगिन इवोग्ररुपः खलस्य दाक्षिण्यमस्ति कथमन्यगुणोपमर्दे SubhāRaK. 38. 18.

**अन्यगुणोपरक्त** (anyaguṇoparakta) *adj.* affected by, i.e. associated with the quality of other अन्यगुणोपरक्तं वस्तु स्वरूपत एव प्रतीयते AlaṅkāRa. 97. 4.

**अन्यगुरु** (anya-guru) *m.* another teacher श्रुत्वा चान्यगुरोर्वक्त्रात् ...। पूर्वविद्याम् ... ज्ञात्वा सिद्धीश्वरो भवेत् KāliViT. 3. 9.

**अन्यगृध्र** (anya-gṛdhra) *m.* another vulture मांसाशिनान्यगृध्रेण तस्य युद्धमभूद्दिवि SkandP. iv. 28. 43.

**अन्यगृह** (anya-gṛha) *n.* house of another person भर्त्रा पित्रा सुतैर्न स्त्री वियुक्तान्यगृहे वसेत् BṛhaspaSm. 193. 9; 296. 481; पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नमन्यगृहे वासो नारीणां दूषणानि षट् Hitopa. 1. 86; त्वया गृहे यन्महता दीयते तु प्रयत्नतः। तन्मे न रोचते चौर्यं कथमन्यगृहे कृतम् ĀdiP. 22. 83; सा कालं गमयत्यन्यगृहे TriṣaŚaPuC. i. 1. 543; मदीयेऽपि गृहे कालान्नावशिष्टोऽस्ति पूर्वजः। का वार्तान्यगृहेष्वस्ति TriṣaŚaPuC. ii. 6. 138; त्वदन्तिकेऽम्ब स्थास्यामि यास्याम्यन्यगृहे न तु। वरं मे मोदकं मा दा इत्यूचानो रुरोद सः PārśvaC. 3. 773.

**अन्यगृहत्व** (anyagṛha-tva) *n.* the state of being the house of one person चैत्रगृहे मैत्रस्तिष्ठति इत्यन्यगृहत्वेन निर्दिष्टे अप्यन्यावस्थानमुच्यते ŚivārkaMaDī. i. 432. 6 (*on* i. 3. 13)

**अन्यगृहद्वार** (anyagṛha-dvāra) *n.* door of the house of another person अन्यगृहद्वारविद्धं गृहद्वारं न चिन्तयेत् ŚukraNī. 1. 233.

**अन्यगृहपरिचय** (anyagṛha-paricaya) *m.* acquaintance with the house of another person अन्योऽस्ति नगरघट्टकानां प्रवेशाय मार्गः तयापि तैरन्यगृहपरिचयाद् द्वार एव लक्ष्यं गृह्यते DhūrtaViSaṁ. 3. 21.

**अन्यगृहवास** (anyagṛha-vāsa) *m.* act of living in the house of another person पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगृहवासश्च नारीणां दूषणानि षट् SkandP. iv. 40. 89.

**अन्यगृहवासिनी** (anyagṛha-vāsinī) *adj.* (*f.*) living in the house of another person वृथाहास्यमुखीं चैव सदान्यगृहवासिनीम्। विवादशीलां भ्रमितां निष्ठुरां नोद्वहेद्बुधः BṛNāraP. 24. 8.

**अन्यगृहस्था** (anyagṛha-sthā) *adj.* (*f.*) staying in the house of another person तात नान्यगृहस्थापि चलत्येवंविधा वधूः RāmC. (App. 1) 40. 52.

**अन्यगृहीत** (anya-gṛhīta) *adj.* [*f.*–ā] i held by another person न गृहस्थितयान्यगृहीतया वा यष्ट्या यष्टिमानित्युच्यते BālaKrī. i. 106. 25 (*on* 1. 132); ii held, i.e. worn by another person भूषणं हारकटकादि तदङ्गलग्नं तदीयमेतद्वेति ज्ञात्वा विना प्रयोजनेनान्यगृहीतमपि स्पृश्यते ManuBh. ii. 220. 7 (*on* 8. 357)

**अन्यगृहोषिता** (anyagṛhoṣitā) *adj.* (*f.*) who has lived in the house of another person रजकः क्रोधसंप्लुष्टो भार्यामन्यगृहोषिताम्। पदा संताडयामास PadmP. iv. 55.68.

**अन्यगेह** (anya-geha) *n.* 1 another house गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु। अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ManuSm. 2.184 (ManvaVi. निषिद्धान्यगृहाणाम्); 2 house of another person वीरः। न यथाभ्यगाधा-चितुमन्ववग्वा न यथा यथा नाश तदन्यगेहे DvyāśraKā. 12. 2; अन्यगेहे वासः परगृहे वसनम् SmṛtiCan. iv. 567. 13; दृष्टिपातोऽन्यगेहेषु UttaKuC. 252.

**अन्यगेहगा** (anyageha-gā) *adj.* (*f.*) going to the house of another person सैरन्ध्री त्वन्यगेहगा। अलंकारादिचतुरा स्वाधीना गन्धकारिका KośaKaTa. I 1825.

**अन्यगेहवास** (anyageha-vāsa) *m.* act of living in the house of another person स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट् ManuSm. 9. 13 (ManvaMu. परगृहनिवासः); ManuBh. ii. 245. 5 (*on* 9. 13)

**अन्यगेहाटन** (anyagehāṭana) *n.* act of going to the house of another person वक्तव्यं नानृतं किंचिन्नान्यगेहाटनं तथा BrahmP. 124. 25.

**अन्यगेहोदकाचान्त** (anyagehodakācānta) *adj.* (used as noun) (one) who has sipped water in the house of another person भुञ्जानेषु च विप्रेषु त्वन्तरा मृतसूतके। अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः BṛhaspaSm. 353. 6.

**अन्यगो** (anya-go) *f.* cow belonging to another person यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्। गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ManuSm. 9. 50.

**अन्यगोक्षार** (anyago-kṣāra) *n.* alkali or ashes (of cowdung) of another cow कपिलागोर्भस्मोक्तं लब्धं गोभस्म नो चेदन्यगोक्षारं यत्र क्वापि स्थितम् BṛJābāU. 3. 1.

**अन्यगोचर** (anya-gocara) *adj.* [*f.*–ā] 1 related to another (syntactico-semantic item) उद्देश्यं तत्कर्मान्यगोचरयापि क्रियया तस्यैवाप्तुमिष्यमाणत्वात् BhāvanāVi. 138. 2; 2A referring to another object or topic विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः BrahmSi. 46. 12; न हि शुक्तौ रजतज्ञानं बाधितमिति स्वगोचरमन्यगोचरं वा भवति Kāśi. i. 72. 19 (*on* 2. 21); मृतसंजीविनीं विद्याम् ... दत्तवान् सुरश्रेष्ठः ... । इतरा लौकिकी विद्या वैदिकी चान्यगोचरा BrahmP. 95. 27; अस्य स्वसंविन्मात्ररूपस्य तन्निष्ठबोधस्य असिद्धेः न ह्यन्यसंविदन्य-गोचरा इति भावः Bhāsk. i. 216. 11 (*on* i. 5. 5); 2B referring to any other thing एकैकनियमादेव गतिः स्यान्नान्यगोचरा TantrVā. 226. 12 (*on* i. 3. 23); न चान्याभासमन्यगोचरं भवितुमर्हति Bhām. 438. 22 (*on* ii. 2. 28); 2C referring to one object न ह्यन्यगोचरस्य ज्ञानस्य ततोऽन्यगोचरत्वेन भ्रमः ŚatDū. 128. 18; 3 obtained or understood by another (means) अदृष्टपूर्वे त्वज्ञानं संबन्धप्रत्ययोऽपि वा। संबन्धो न च तस्यार्थो योऽर्थः स त्वन्यगोचरः ŚlokaVār. 431. 85 (5). 102); 4 belonging to other (than oneself) अज्ञात्वैवं परं तत्त्वं मायामोहितचेतसः। स्वात्मन्यारोपयन्त्येतत् कर्तृत्वाद्यन्यगोचरम् SarvaVeSāSaṁ. 428.

**अन्यगोचर** (anya-gocara) *m.* A object known by any other (means) नान्यगोचरे नाप्यगोचर इत्यनुसंहारबुद्धिरपि परस्परव्यावृत्तवर्णमात्र(र्णत्र?)तयावगाहिनी TattvBi. 49. 3; B object known by other (means) एष च ज्ञानस्य दोषो यद्यन्यगोचरस्य अन्याकारत्वम् Kāśi. ii. 20. 13 (*on* 5 (1). 19)

**अन्यगोचरज्ञान** (anyagocara-jñāna) *n.* knowledge referring to one तद्भित्तिरेव वा विषयवेदनं भवेत्। ... अन्यगोचरज्ञानस्यान्यविषयत्वासंभवात् Kāśi. ii. 129. 14 (*on* 5 (3). 70)

**अन्यगोचरत्वमात्र** (anyagocaratva-mātra) *n.* mere state of referring to other (than itself) भासमानादन्यगोचरत्वमात्रमतिप्रसङ्गः VedāntKa. 286. 13 (*on* ii. 2. 28)

**अन्यगोचरा** (anyagocarā) *f.* name of one of the mothers (Mātṛs attending on Skanda) मातृणां शृणु नामानि ...। चतुष्पथरता चैव भूतितीर्थान्यगोचरा MahāBhā. ix. 45. 27.

**अन्यगोचरी** (anyagocarī) *f.* name of one of the mother (Mātṛs attending on Skanda) मातृणां शृणु नामानि ...। चतुष्पथरता चैव भूतितीर्थान्यगोचरा (v.l. अन्यगोचरी) MahāBhā. ix. 45. 27.

**अन्यगोत्र** (anya-gotra) *adj.* of a different family स्थापयित्वा प्रजापालं पुत्रं राज्ये ...। अन्यगोत्रं प्रशस्तं वा क्षत्रियम् ...। अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् । ... सिद्धिमवाप्नुयात् MahāBhā. xii. 63. 19; (used as noun) (one) of a different family सगोत्रेणान्यगोत्रेण वा नियुक्तेन क्षेत्रजातः क्षेत्रजः पुत्रः ArthŚā. ii. 40. 5 (3.7); स्वगोत्रो वान्यगोत्रो वा ... । प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् LaghvāśvaSm. 20. 6; अन्यगोत्रोऽप्यसंबद्धः प्रेतस्याग्निं ददाति यः। पिण्डं चोदकदानं च स दशाहं समापयेत् AgniP. 166. 20.

**अन्यगोत्र** (anya-gotra) *n.* another amily गुरोः कुले न भिक्षेत स्वज्ञातिकुल-बन्धुषु। अलाभे त्वन्यगोत्राणां पूर्वं पूर्वं विवर्जयेत् BhaviP. 18A. 25 (i. 4. 155); यस्य दत्तकः पुत्रोऽध्ययनादिसर्वगुणोपपन्नो भवति सोऽन्यगोत्रादागतोऽपि सत्यर्थीरसे पितृरिक्थभागं गृह्णीयात् ManvaMu. 390. 3 (*on* 9. 141)

**अन्यगोत्रका** (anyagotra-kā) *adj.* (*f.*) belonging to different family स्पृष्ट्वा रजस्वलान्योन्यं सगोत्रा चान्यगोत्रका। ... त्रिरात्राच्छुद्धिरिष्यते BṛYamaSm. 3. 65.

**अन्यगोत्रज** (anyagotra-ja) *adj.* [*f.*–ā] born in a different family हरन्ति ग्रावभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः। मत्ताः पयोधरैरन्यत्यक्तरङ्गिण्यः इवाङ्गनाः RājTa. (Ka.) 7.427; (used as noun) (one) who is born in a different family प्रेतकर्मौरसः

पुत्रः पित्रोः कुर्याद्यथाविधि। तदभावेऽधिकारी स्यात्सपिण्डो वान्यगोत्रजः LaghvāśvaSm. 20. 1; कुलशीलसमैः सार्धं कृतोद्वाहोऽन्यगोत्रजैः। ... गृहिधर्माय कल्पते YogŚā. 1.47; RauhiC. App. 1; हावयेदित्यन्यगोत्रजान् धनदानव्यतिरेकेणेत्यर्थः HārLa. 23. 5; अन्ये अन्यगोत्रजा एतानि होमकर्माणि कुर्युः HārLa. 24. 8; एकाहं त्र्यहं वा अन्यगोत्रजान् पूर्वोक्तव्यवस्थया हावयित्वा ऊर्ध्वं स्वयं वैतानहोमकर्म कर्तव्यम् HārLa. 24. 15; 25. 1; शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः। ... होमः औपासनाख्यः, सोऽन्यगोत्रजैः कार्यः SmṛtiCan. vi. 77. 8; अत्र कैश्चिद्वैताने दशरात्रं होमः स्वयं कर्तव्यः। आवसथ्ये तु अन्यगोत्रजेन DīpKa. 76. 28 (*on* 3. 17); वर्ज्याः ... विधवान्यगोत्रजा त्रुटितकर्णा ... पाके BālamBha. i. 501. 1 (*on* 1. 225)

**अन्यगोत्रतस्** (anyagotra-tas) *adv*. from different family उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दात्रिमः। स हरेतैव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ManuSm. 9. 141.

**अन्यगोत्रत्व** (anyagotra-tva) *n*. the state of being one belonging to different family एकत्वं स गता भर्तुः पिण्डे गोत्रेऽथ सूतके इति अन्यगोत्रत्वान्मातुर्मातामहेन सहायुक्तमेव दानम् BālaKrī. i. 154. 10 (*on* 1. 225)

**अन्यगोत्रनिवृत्ति** (anyagotra-nivṛtti) *f*. exclusion of one belonging to different family जातेरविशेषात् स्त्रीपुंसयोर्ब्राह्मणीनामपि प्राप्तावात्रेय्या वचनमन्यगोत्रनिवृत्त्यर्थम् ManuBh. ii. 396. 17 (*on* 11. 86)

**अन्यगोत्रोपसंबन्ध** (anyagotropasambandha) *adj*. related to different family अन्यगोत्रोपसंबन्धः प्रेतस्याग्निं ददाति यः। पिण्डम् ... स दशाहं समाचरेत् LaHārīSm. 60.

**अन्यगोपति** (anya-gopati) *m*. A other king स्कन्धप्रबन्धाधिकशोभयान्वितो वित्रास्य ... सकलान्यगोपतीन्। ... हठादाक्रम्य गां पण्ड इवैष भोक्ष्यते NemiC. 2. 26 (comm. गोपतयः क्षितिपाः); B other bull, NemiC. 2. 26 (comm. पक्षान्तरे - गोपतयो - वृषभेन्द्राः)

**अन्यगोमुख** (anya-gomukha) *n*. another direction or cardinal point कुर्यात् ... मूलप्रासादस्यानुरूपतः। प्राग्द्वारे वायुकोणे वा नैर्ऋत्यां वान्यगोमुखे। प्रासादम् ŚilpaRa. ii. 29. 5.

**अन्यगोल** (anya-gola) *adj*. being in anothr hemisphere ओजे पदे युग्मपदे विधुश्चेदेकान्यगोलश्च सपातचन्द्रात्। ज्ञेयस्तदानीं खलु यातपातः KaraṇaKu. 9. 3 (31)

**अन्यगोलक** (anyagola-ka) *adj*. being in a different hemisphere अर्कशशिक्रान्तिकलान्तरैक्यजीवा समान्यगोलकयोः KhaṇḍKhā. 7. 2.

**अन्यगोव्यक्ति** (anya-govyakti) *f*. another individual cow तथाप्येकां गोव्यक्तिमवगाहमानाच्छक्तिग्रहादन्यगोव्यक्तिशाब्दधीः स्यात् LaCandr. 317. 9.

**अन्यग्रन्थ** (anya-grantha) *m*. other treatise अथान्यग्रन्थे RasRaSa. 5. 151; अन्यत्र - अन्यग्रन्थे Bhāsk. i. 34. 23 (*on* i. 1. 1)

**अन्यग्रन्थसाधारण्य** (anyagrantha-sādhāraṇya) *n*. the state of being common to other treatises ग्रन्थस्य च नाट्यवेदत्वे उत्पत्त्यादिपञ्चकस्य तद्गतस्यान्यग्रन्थसाधारण्यात् प्रश्नासंगतिः AbhinBhā. i. 3. 5 (*on* 1. 1)

**अन्यग्रन्थानुक्त** (anyagranthānukta) *adj*. not mentioned in any other treatise तदुक्तमेव प्रकारान्तरमन्यग्रन्थानुक्तमाह BālamBha. ii. 121. 13 (*on* 2. 113)

**अन्यग्रह** (anya-graha) *m*. 1 another planet इष्टग्रहेष्टशेषाद् द्युगणो गतनिरपवर्तसंगुणितैः। छेददिनैरधिकोऽस्मादन्यग्रहशेषमिष्टो वा BrāhmSphuSi. 18. 88; 1B remaining planets (than the Venus, Jupitor and Moon) शुक्रेऽस्तमनं प्राप्ते तथा चास्ते बृहस्पतौ। शशाङ्केऽन्यग्रहाश्चैव विवाहो न प्रशस्यते ViṣṇuDhaP. ii. 87. 31; 2 knowledge of another (object) अतस्तत्स्वरूपरूपत्वे नान्यस्यान्यग्रहाद्ग्रहः ŚivDṛ. 5. 88; न चैकग्रहेऽन्यग्रहसामग्री प्रतिबन्धिका TattvCin. i. 626. 2; AdvaiSi. 319.6.

**अन्यग्रहकुज** (anyagraha-kuja) *m*. another planet than Mars अन्यग्रहकुजे बिम्बगतकदम्बवृत्तध्रुववृत्तयोरन्तरं सत्रिग्रहक्रान्तिभुजः SiddhāTaVi. (ŚeṣaVā.) 30.11; 31. 17.

**अन्यग्रहचिह्न** (anya-grahacihna) *n*. another (hypothetical) point (treated) as a planet क्रान्तिवृत्ते यत्र ग्रहचिह्नं तत्सक्तकदम्बवृत्तनाडीवृत्तसंपातेऽन्यग्रहचिह्नम् SiddhāTaVi. 256. 3; तत्र क्रमेण क्षेत्रांशाः ध्रुवौ ध्रुवावन्यग्रहचिह्नं गोलसंधिरित्यन्यक्रान्तिस्पष्टक्रान्त्योरायनम् SiddhāTaVi. 256. 12.

**अन्यग्रहण** (anya-grahaṇa) *n*. 1A apprehension of another thing न ह्यन्यग्रहणं वस्तु मित्रं वित्तावपेक्षते। अन्योन्याश्रयदोषोऽयं तस्मादस्मिन्निरास्पदः TattvSaṁ. 1065; 1B knowledge (of universe) as different (from oneself) यदन्यग्रहणं जाग्रत्स्वप्नयोः तदविद्याकृतम् TaiUBh. 275. 13 (*on* 2. 8); 2 use or mention of the word *anya* अन्योऽन्यत्पश्यतीत्येतदुपादाय ... अन्यग्रहणस्य प्राप्तप्रतिषेधार्थत्वात् TaiUBh. 231. 9 (*on* 2. 1); अन्यः पूर्वस्थितो वा आधिः पर्याप्तः कार्यः। अन्यग्रहणस्य पर्याप्तत्वेन भाव्यमित्येतावन्मात्रपरत्वात् SmṛtiCan. iv. 322. 10; 3 act of taking the rest (अप्सु प्रास्य) प्रासनमादौ ततोऽन्यग्रहणम् ManvaVi. 150. 25 (*on* 2. 64)

**अन्यग्रहणसापेक्ष** (anyagrahaṇa-sāpekṣa) *adj*. dependent on the knowledge of other (syllable) अन्यग्रहणसापेक्षं कथं जात्यादि वस्तु सत्। अर्थग्रहणसापेक्ष उक्तमन्योन्यसंश्रयम् SphoṭSi. 259. 1.

**अन्यग्रहणादि** (anyagrahaṇādi) *adj*. mention of the term *anya* (other) etc. अन्यग्रहणादौ प्राणादि करणम् GoviBh. 159. 15 (*on* ii. 3. 33)

**अन्यग्रहविजित** (anyagraha-vijita) *adj*. conquerred or influenced by another planet आधानकाले ... योऽन्यग्रहविजितः केतूल्काभिहतः स स्वमासे गर्भपाताय भवति ViṣṇuDhaP. ii. 167 (294A. 5)

**अन्यग्राम** (anya-grāma) *m*. another village ग्रामान्तरेति। अस्माद्ग्रामादन्यग्रामम् KāmSū. 231. 7 (3. 5); मन्ये संप्रति वैद्योऽप्यन्यग्रामं गतो नूनम् SūktiRa. 110. 8; कश्चित् कुलपुत्रः। स परिणीतोऽन्यग्रामे PrabaK. 80. 29; PurāPraSaṁ. 8. 8.

**अन्यग्राह्यत्व** (anyagrāhya-tva) *n*. the state of being fit to be grasped by other अन्यग्राह्यत्वभ्रमाभावाय विशदयति। धान्यमिति BālamBhā. ii. 280. 30 (*on* 2. 161)

**अन्यग्लायकचरक** (anyaglāyaka-caraka) *m*. one who moves for (finding) another suffering person ग्लायकः - समुत्पन्नवेदनादिकारण एवेत्यर्थः अन्यस्मै वा ग्लायकाय भोजनार्थं चरतीति अन्नग्लानकचरकोऽयग्लायकचरकोऽन्यग्लायकचरको वा SthānṬ. 298A. 12.

**अन्यघट** (anya-ghaṭa) *m*. another jar or pitcher अन्यघटाभिप्रायेण गेहे घटोऽस्तीत्युक्ते यत्र घटान्तरं दृष्ट्वा तमानयति TattvCin. iv(1).107.2; यथैकघटमुक्तस्याकाशप्रदेशस्यान्यघटयोगाद्घटाकाशाव्यवस्था तद्वदिति SāṁkhyaPraBh. 67. 31 (*on* 1. 150)

**अन्यघटकुक्ष्यन्तर** (anyaghaṭakukṣy-antara) *n*. [Loc.] inside the belly of another pitcher क्षिपेद्रसं घटे दीर्घे नताधोनालसंयुते। तन्नालं निक्षिपेदन्यघटकुक्ष्यन्तरे खलु RasRaSa. 9. 48.

**अन्यघटादि** (anyaghaṭādi) *adj*. another jar etc. स्पर्शस्य वा यत् स्वज्ञानं अन्यघटादिविविक्तेन स्वेन रूपेण ज्ञानं तत् कर्तृ PratyabhiVi. i. 378. 1 (*on* i. 7. 10)

**अन्यघात** (anya-ghāta) *m*. 1 damage to another person वधशब्देन (न) मरणमुच्यते, अपि तु परकृतघातदानादि, तत्रान्यघातदानाद्यपि प्रत्यक्षेण रङ्गे प्रदर्श्यते AbhinBhā. ii. 427. 17 (*on* 18. 39); 2 killing of another person यथा कोऽपि तप्तलोहपिण्डेन परं हन्तुकामः सन् पूर्वं तावदात्मानमेव हन्ति पश्चादन्यघाते नियमो नास्ति TātpaVṛ. 211. 11 (*on* 2. 57)

**अन्यघृतादि** (anya-ghṛtādi) *adj*. clarified butter etc. which are other (than purified) संस्कृताज्यस्य यद् बिन्दुं क्षिपेदन्यघृतादिषु। संस्कृतान्येव तानि स्युः ĪśānŚiPa. i. 14. 138.

**अन्यघोष** (anya-ghoṣa) *m*. sound of another घोषश्च रथेनाविशेषितत्वादन्यदीयोऽपि मन्त्रं निवर्तयेत्। सिद्धान्ते तु नान्यघोषः NyāyMāVi. 532. 16 (*on* x. 4. 2)

**अन्यङ्गश्वेत** (anyaṅga-śveta) *adj*. (animal) without blemish and white सौर्यं पशुमन्यङ्गश्वेतं सवनीयस्योपालम्भ्यमालभेरन् AitBr. 18. 5 (492) (*but* Sāy. अन्यङ्गं वर्णान्तरेण संपादितं चिह्नम् अन्यङ्गं तादृशश्चासौ श्वेतश्च सोऽयमन्यङ्गश्वेतो वर्णान्तरेण मिश्रितः सर्वश्वेत इत्यर्थः)

**अन्यचक्र** (anya-cakra) *n*. 1 attack of enemy उपसर्गेऽन्यचक्रे च ... यः पलायति स जीवति CāṇaNiDa. 3. 19; 2 another country स्वाम्यगाद् यत्र नो तत्र वैरमारीत्यवृष्टयः। दुर्भिक्षमतिवृष्टिर्वा भये च स्वान्यचक्रजे TriṣaŚaPuC. i. 3. 688.

**अन्यचक्षुर्वत्** (anyacakṣur-vat) *adv*. like the eye of another person इदं चक्षुरेतज्जन्यसंयोगज्ञानत्वरहितसंबन्धज्ञानजनकं चक्षुष्ट्वादन्यचक्षुर्वत् NyāySu. (Ja.) 359A. 12 (*on* ii. 2. 6)

**अन्यचक्षुस्** (anya-cakṣus) *n*. eye of another person कृशोऽप्यकृशकीर्तिश्रीर्ह्रीदं चक्रेऽन्यचक्षुषाम् BuddhaC. 12. 98; वह्नावन्यचक्षुषि च भोग्यमुपभोग्यं च परीक्षेत NītiVā. 25. 87.

**अन्यचत्** (a-nyacat) *adj*. not bending (one's own finger) तस्मिन् हिरण्यपाणिरङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्यांशून् संगृह्य अन्यचन्नभि त्वं देवं सवितारमित्यतिच्छन्दसर्चा मिमीते ĀpaŚS. x. 24. 8 (comm. अनाकुञ्चयन्)

**अन्यचतुष्पद** (anya-catuṣpada) *m.* other quadruped तथैवान्यचतुष्पदानां प्रकीर्त्ति(र्ति?)तौ दोषगुणौ बुधेन YuktiKa. 215. 11.

**अन्यचतुःस्थान** (anyacatus-sthāna) *n.* [Loc.] in the place of other four (fingers) घृतव्रतौ भवतो वर्षिष्ठेनाङ्गुलपर्वणा सममन्यचतुःस्थाने हसिष्ठेनेतरासु MānŚS. 199. 16.

**अन्यचर्मन्** (anya-carman) *n.* hide of another animal पूर्णमास्यामुमानाथः स्वपते चर्मसंस्तरे। वैयाघ्रे च जटाभारं समुद्ग्रन्थ्यान्यचर्मणा VāmaP. 16. 11; नरवर्मचर्मान्यचर्मभ्यां सिद्धराजेन निजकृपाणे प्रत्याकारः कारितः PrabaK.91.4.

**अन्यचितास्थ** (anyacitā-stha) *adj.* remaining on the funeral pyre of another person इत्युक्त्वा सा श्मशानं च नीत्वा तस्मायदर्शयत्। अस्थीन्यन्यचितास्थानि KathāSaSāg. x. 5. 197.

**अन्यचिति** (anya-citi) *f.* another altar एतया विकृत्याभिमन्त्र्यैऽन्यचितिं चिन्वन्ति KātyŚS. xvi. 5. 9.

**अन्यचित्त** (anya-citta) *adj.* [*f.*—ā] A having mind fixed on some other person, inattentive सेवार्थमादर्शनमन्यचित्तो विभूषयन्त्या मम धारयित्वा। बिमर्ति सोऽन्यस्य जनस्य तं चेन्नमोऽस्तु तस्मै Saund. 6. 18; तस्यान्यचित्तस्य शृगात्मकस्य घ्राणं न जह्रुः हृदयं प्रतेपुः Saund. 7. 10; ततु श्रुत्वा लज्जितः किंचिद्वक्रर्णोऽप्यभाषत। न दर्पादन्यचित्तोऽहम् PañcT. 2. 26 (43) (216. 9); यो गौरवं भयं प्रेम दाक्षिण्यं पूर्वयोषिति। न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दक्षिणो यथा ŚṛṅgāTi. (Ru.) 1. 31; PuruṣPa. 197. 3; UjjvaNīMa. 36. 5; गृहे क्षेत्रे तडागेषु ... । अन्यचित्ता रुदन्त्यो याः स्त्रियस्तिष्ठन्ति VarāP. 96. 43; अन्यचित्तां कथं त्वां वै गृह्णामि वरवर्णिनि। पितरं स्वं वरारोहे व्रज शीघ्रं निराकुला DevīBhāP. i. 20. 49; नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः। दक्षिणश्चान्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम् Vāgbhaṭā. 5. 8; AlaṅkāŚe. 20. 8; (used as noun) (one) having mind fixed on another person अन्यचित्तस्य भुञ्जानस्याप्यास्वादाभिमानाभावात् AbhinBhā. i. 289. 13 (*on* 6. 31); अन्यचित्तां ज्ञात्वा स्वपतिना मुक्ता। राजदण्डभयात् परपुरुषेण मुक्ता VetāPañ. (Śi.) 28. 31; B having mind fixed on another object or thing, inattentive नान्यचित्तो नरो भूत्वा पिबेद्धरिकथामृतम् BṛNāraP. 1. 78; एवमन्यचित्तस्येन्द्रियार्थसंयोगेऽप्यग्रहात् तस्येन्द्रियसंयोगोऽनुज्ञातः NayaVi. 76. 7 (*on* i. 1. 4); नायकोक्तिभिरन्यचित्तायाः नायिकायाः JayaMa. 159. 7 (*on* 2. 8); शिष्यो गुरौ ... प्रतिकूलं च संत्यजेत्। तेनैवोक्तं पठेद्वेदं नान्यचित्तः पुरस्थितः BrahmP. 222. 26; मत्सुतस्यैव राज्यं स्यात्कुणालस्य तु नेति सा। अन्यचित्ते नरपतावकरोत् PariPar. 9. 20; तोयस्थितम् ... भूभृदन्यचित्तं मृगं हठात्। बाणेनाकर्णकृष्टेन विध्येत् Mānaso. iv. 15. 1489; कथमियमन्यचित्तेव लक्ष्यते। क्व पुनश्चित्तमस्याः PrasaRā. 2. 21 (3); मत्तां मद्येन। प्रमत्तां अन्यचित्तां क्रीडादिना ManvaVi. 301. 19 (*on* 3. 34); आर्ये। किमिति अन्यचित्तासि Hāsyārṇa. 1. 8 (2); (used as noun) (one) having mind fixed on another object or thing न ह्यन्यचित्तस्य चलेन्द्रियस्य लिङ्गं क्षमं धर्मपथाच्युतस्य Saund. 7. 47; न तीर्थे स्त्र्याकुले स्नायात् नासज्ञनसमावृते। दर्भहीनोऽन्यचित्तश्च न नग्नो न शिरोविना BṛParāSm. 2. 106; BṛBrahmaS. iii. 7. 148; अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम्। अनासनस्थितेनापि तज्जलं रुधिरायते VedavyāSm. 3. 26; हतस्वश्चान्यचित्तश्च शून्या ह्येते भवन्ति च। तदेषु मतिमान्कोपं न कुर्वीत SkandP. i (2). 6.76.

**अन्यचित्त** (anya-citta) *n.* another mind अपि तु वर्तमानं चित्तमात्मनोऽन्यचित्तहेतुभावं व्यवस्थाप्य निरुध्यतेऽन्यच्चोत्पद्यते तुलादण्डनामोन्नामवत् Sphuṭā. ii. 89. 5 (*on* 2. 44)

**अन्यचित्तकृत** (anyacitta-kṛta) *adj.* done by one whose mind is fixed on another person एतत् कामफलं लोके यद् द्वयोरेकचित्तता। अन्यचित्तकृते कामे शवयोरिव संगमः ŚatTrayī. 225.

**अन्यचित्तता** (anyacitta-tā) *f.* A the state of having mind fixed on another object or thing, inattentiveness दुरासनं दुरानीतं पिपासा चान्यचित्तता। एते चित्तविनाशस्य हेतवः ViṣṇuDhaP. iii. 41. 13; B the state of having mind fixed on another person, inattentiveness विश्वासिनि च विश्रम्भः प्रवासे चान्यचित्तता। विश्रम्भाज्जायते स्त्रीणां नानाविधविचेष्टता PadmP. iv. 108. 16

**अन्यचित्तत्व** (anyacitta-tva) *n.* A the state of having mind fixed on another object or thing, inattentiveness स्वभावत इति मौग्ध्याद्वाल्यादन्यचित्तत्वाद्वा AbhinBhā. iii. 162. 17 (*on* 22. 24); B the state of having mind fixed on another person, inattentiveness दाक्षिण्यमानुकूल्यं च धाष्टर्यं चानियतत्वतः। नोचितान्यस्य शाठ्यं स्यादन्यचित्तत्वसंभवात् RasāSu. 19. 6 (1. 84)

**अन्यचिद्** (anya-cid) *f.* A false knowledge न हि नित्यचिदाश्रयप्रतीचः परिणामः पुनरन्यचित्स्वरूपः ŚaṅkaDigVi. (Mā.) 15. 132. (comm. भ्रमज्ञानात्मकः); B another knowledge अविनाशिचिदाश्रयस्य भूयोऽन्यचिदाधारतया स्थितेरयोगात् ŚaṅkaDigVi. (Mā.) 15. 134.

**अन्यचिन्ता** (anya-cintā) *f.* 1A attention to or thought of another thing or matter ततोऽन्यचिन्तां परिहृत्य कामी यतेत संकेतकशास्त्रकेषु NāgaSa. 5.2; किं च संप्रति गता तावदन्यचिन्ता। आत्मापि चिन्त्यो वर्ततेऽस्याः। TilaMañ. 280. 8; लोकः स्वस्वकर्मकृतं फलं प्राप्नोति ततोऽहमपि स्वकार्यं कुर्वे। अन्यचिन्तया किं प्रयोजनम् KathāK. 20. 16; 1B thought of opposite यदि नाम प्रसिद्धे स्याद्युतेति च वा(विचा)रणे प्रवृत्तादन्यचिन्तायां तद्वद्वेति निश्चये BhāvPra. (Śā.) 274. 21 (9); 1C deliberation or discussion on another thing मणयः तेषां यः ओघः समूहः स एव सारः यस्य, अन्यचिन्तानां जलस्थानीयत्वात्तम् Bhāsk. ii. 210. 19 (*on* iii. 1. 1); 2 any other thought शुद्धचैतन्यरूपात्मा सर्वसङ्कविवर्जितः। नित्यानन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः TejoBiU. 4. 6.

**अन्यचिन्तानुरोध** (anyacintānurodha) *m.* [Inst.] in accordance with attention to or consideration of another thing महाशीतपरीतस्त्वमजानन् हितमात्मनः। अन्यचिन्तानुरोधेन हिमवारिणि मज्जसि PadmP. (Ra.) 55. 21.

**अन्यचिन्तापरिश्रम** (anyacintā-pariśrama) *adj.* tired of , i.e. occupied with the thought of other मोक्षचिन्तामतिक्रम्य योऽन्यचिन्तापरिश्रमः। हरिसेवाविहीनो यः स पशुर्योनितः पशुः BhaviP. 322B. 31 (ii(1). 5. 40)

**अन्यचिन्ताविनिश्चय** (anyacintā-viniścaya) *m.* ascertainment of the thought of another thing नाट्यारम्भे तुलायां चाप्यन्यचिन्ताविनिश्चये। आश्चर्ये देवतारूपे समदृष्टिरुदाहृता AbhinDa. 68.

**अन्यचिन्तित** (anya-cintita) *adj.* thought by other (चन्द्रापीडः) मृदुकाव्यमिवान्यचिन्तितस्वभावाभिप्रायावेदकम् ... राजकुलं विवेश Kād. 91. 14.

**अन्यचिन्त्यत्व** (anyacintya-tva) *n.* the state of being what is doubtful or questionable to other रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च। अन्यचिन्त्यत्वमायाति दुःशीलानामविक्षयात् SamarāSū. 44. 17.

**अन्यचिह्न** (anya-cihna) *n.* 1 other sign-post येषां वीतान्यचिह्नोत्रयमपि वहतां मार्गमाख्याति मेरौ SūryaŚ. 44; 2 mark or emblem of other (deity) स्वेश्वरचिह्नोपर्यन्यचिह्नं न धार्यम् PārāSū. 9. 6.

**अन्यचुम्बन** (anya-cumbana) *n.* act of kissing another (lady) न त्वां मां द्रष्टुं वल्लभ लप्स्यसे। अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा Kāvyāda. 2. 125.

**अन्यचेटिका** (anya-ceṭikā) *f.* another maid सर्वस्मिन्नुत्सवव्यग्रे जने युक्त्यान्यचेटिकाः। निवार्य ...। हंसावलीं प्रवेश्य ... । चक्रेऽशोककरीवेषां तां सा कनकमञ्जरी KathāSaSāg. xii. 4. 157.

**अन्यचेतन** (anya-cetana) *adj.* having mind devoted to someone else तेषां पद्मनिधिस्तत्र वसते नान्यचेतनः। गजाश्च महिषाश्चाश्वा गावोऽजा विपरिप्लुताः VāmaP. 17. 55.

**अन्यचेतस्** (anya-cetas) *adj.* A having mind fixed on another person, inattentive कथय किमप्यन्यचेतसा मया नावधारितं किमनयोक्तमिति Ratnā. 2. 6 (49); स्वभावाद्वनिता जिह्वा(ह्मा?)विशेषादन्यचेतसः। ततः सुहृदयस्तासामर्थे को विकृतिं भजेत् PadmP. (Ra.) 110. 31; प्रेयोगृहागमनभावनयान्यचेताः। भूपाविशेषरचनासदसद्विवेकशून्यैव काचिदवलोकयति स्म वक्त्रम् HarVi. 23. 47; अङ्गनानां तासां तुतोष न तु चाटुभिरन्यचेताः। आगच्छ तापसि भवामि तवैष दासः RāmC. 19. 60; तरलयसि दृशं किमन्यचेता इतिरिव लोहकृतां किमुष्णमुष्णम्। श्वसिषि RāghPāṇ. (Dha.) 15. 27; मान्त्रिकः प्राह भो राजन् राक्षसी योऽन्यचेतसाम्। प्रभविष्यति तत् कोऽयं विलम्बोऽस्या विनिग्रहे PārśvC. 3. 863; B having mind fixed on another object, inattentive याचनात्रददतीं नखक्षतं तां विधाय कथयान्यचेतसम्। वक्षसि न्यसितुमात्त तत्करः स्वं विभिद्य मुमुदे स तन्नखैः NaiṣC. 18. 72.

**अन्यचेतस्** (anya-cetas) *n.* another thought प्रसज्येत अन्यथा तद्वत्प्रथमं किन्न मृग्यते। गत्वा सुदूरमप्येवमसिद्धावन्यचेतसः NyāyVi. 2. 23.

**अन्यचेतस्क** (anyacetas-ka) *adj.* (used as noun) (one) having mind fixed on another object, inattentive अन्यचेतस्कस्य हि गुरुविरुद्धविदाहिवर्जनं सात्म्यभोजनं च न स्यात् ManuBh. i. 103. 1 (*on* 2. 53)

**अन्यचेष्ट** (anya-ceṣṭa) *adj.* having different activity गताष्टवर्षस्तु पुमान्यदा भवेत्तदान्यचेष्टो भवतीह मानवः VarāP. 39. 8.

**अन्यचोदन** (anya-codana) *n.* act of impelling, i.e. referring to one न ह्यन्यचोदनेऽन्यस्य कार्ये क्रियमाणे यथोक्तं कृतं भवति। तस्माद् द्रव्यमेव शब्देनोच्यते Pradi. ii. 95A. 11 (*on* i. 2. 64)

**अन्यचोदित** (anya-codita) *adj.* impelled or prompted by another person यः स्वयं यजति नान्यचोदितो यः स्वयं च यजते धृतादरः। जानते तमिह भूपतेश्वराः Rāvaṇā. 2. 58 [moved by another, MW]

**अन्यचोद्य** (anya-codya) *n.* another (question) to be raised चोद्यपूर्वक एतस्मिन् अन्यचोद्यस्य संभवात् BṛĀraUBhVā. iv. 4. 1234.

**अन्यचौर** (anya-caura) *m.* another robber or thief अन्यचौरेण वा तेषां कुलीनेन च शंकर। प्रविश्य विघ्नः क्रियते KulaCūT. 5.9.

**अन्यच्छन्दवर्तिन्** (anyacchanda-vartin) *adj.* following or complying with the will or liking of another person दक्षिणस्त्वन्यवत् प्रोक्तो दक्षिणजे वदान्यसरलान्यच्छन्दवर्तिष्वपि KośaKaTa. 2. 4912.

**अन्यच्छन्दस्** (anya-cchandas)(= anya-chandas) *n.* another metre अन्यासाम् आगम्यमानानाम् ऋचामन्यच्छन्दस्कत्वप्रसक्तौ त्रिच्छन्दस्त्वविध्युपपत्तेः Bhāṭ̣Dī. iv. 3. 19 (*on* x. 5. 2); iv. 4. 3 (*on* x. 5. 2); किं वा अन्यच्छन्दोयुक्तगायत्रच्छन्दस्केऽपि MīmāKau. ii. 303. 16 (*on* iii. 2. 41)

**अन्यच्छन्दानुवर्तिन्** (anyacchandānuvartin) *adj.* following or complying with the will or liking of another person दक्षिणा त्रिष्ववाक्सरलावामेष्वन्यच्छन्दानुवर्तिनि Vaija. 260. 46.

**अन्यच्छाया** (anya-cchāyā) *f.* 1 another modification of voice अन्यच्छायाप्रवृत्तौ ये छायान्तरमुपाश्रिताः। छायायास्ते मताः स्थायाः गीतविद्याविशारदैः SaṃgīRa. ii. 176. 8 (3. 125); 2 shadow of another (woman) कामिनी ... अन्यच्छायावलोकेऽपि परालापे मनागपि। पत्ये क्रुध्यति NāṭaLaRaK. 2371.

**अन्यच्छायायोनि** (anyacchāyā-yoni) *adj.* produced from the shadow of another (poet) अर्थो द्विविधः, अयोनिरन्यच्छायायोनिर्वा KāvyālaṅSū. iii. 2. 7; अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यम् KāvyPra. 483. 2; SāhiDa. 464. 6; 464. 9.

**अन्यच्छासन** (anya-cchāsana) *n.* different preaching or doctrine जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् PrabhāC. 77. 26.

**अन्यच्छेद** (anya-ccheda) *m.* denominator of another, i.e. next (term) अन्यच्छेदेनान्यौ छेदांशौ ताडयेत् समच्छित्त्यै ĀryaSi. 15. 13 (147)

**अन्यछन्दस्** (anya-chandas)(= anya-cchandas) *n.* another metre योनौ यान्यभ्यासेनान्यछन्दः संपद्यते ... तदापत्रेषु गौतमसार्दागवावनभ्यासम् LāṭyāŚS. vii. 9. 13; DrāhyŚS. xx. 4.25.

**अन्यज** (anya-ja) *adj.* [*f.*–ā] A produced from different object or thing यः प्रत्यक्षो धियो हेतुः तुल्यकारणजन्मनः। तस्य भेदः कुतो बुद्धेः व्यभिचार्यन्यजश्च सः PramāVār. 3. 470; अपग्रहश्च अनिर्वाच्योऽनादिः। तज्जो भ्रमः नान्यजः IṣṭaSi. 334. 22; तीव्रार्त्तिषु रणोत्थासु गदोत्थास्वन्यजासु च। शीघ्रं शमं प्रयान्त्येव क्लेशास्तत्र प्रपूजनात् TantrRā. 26. 87; हन्ति पापान्यसंख्यानि प्रमादादन्यजान्यपि। अन्यजानि अपण्यजानि अविक्रेयजानि CaturCin. ii(1). 417. 12; Bi belonging to another person जनानामभयं दत्त्वा तत्र स्थित्वा तथान्यजम्। आत्मसात्क्रियते राष्ट्रं स दण्डो देशहारकः Mānaso. ii. 20. 1044; Bii born of another person यदि बीजिनः क्षेत्रिणो वा पश्चादौरसोऽपि यद्यन्यजः VīraMi. 593. 8 (*on* 2. 127); (used as noun) (one) born of another person आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा। यन्नाम्ना पातयेत्पिण्डं तन्नयेद्ब्रह्म शाश्वतम् VāyuP. ii. 43.13; C produced from the opposite, i.e. illusion अन्यत्ववेदनादन्यः परस्मादातिवाहिकः। ब्रह्मत्ववेदनाद्ब्रह्म सा संवित्तिर्हि नान्यजा YogVā. iii. 67. 58.

**अन्यजड** (anya-jaḍa) *n.* another non-sentient being व्यतिरेकेतराभ्यां हि निश्चयोऽन्यजडात्मनोः। व्यवस्थितिः प्रतिष्ठा च सिद्धिर्निर्वृत्तिरुच्यते AjaḍaPraSi. 1.12.

**अन्यजन** (anya-jana) *m.* 1 stranger अथ यदतोऽन्यथाशीलिको वा पापकृतो वा हुतादो वान्यजना वा विमथ्नीरन् GopBr. i. 3. 18 (87.14); स्वजनेऽन्यजने च तुल्यबुद्धिः BuddhaC. 5. 18; नैति रतिं गृहपत्तनमध्ये ग्रामधनस्वजनान्यजनेषु। वर्षसमं क्षणमेकमवैति पुष्पधनुर्वशतामुपयातः SubhāRaSaṁ. 575; 2 other person, other people तेऽन्यजना अब्रुवन्। अस्मान् (अपि पशावन्वाभजतमिति) VādhūŚS. iv. 8. 3; स यं द्विष्यात् तमूवध्येन च लोहितेन (च) मनसा समज्याथैनम् एतेभ्योऽन्यजनेभ्यः संप्रयच्छेत् VādhūŚS. iv. 8. 6; दर्शने चास्याः ... तामुद्दिश्य बालेनान्यजनेन वा सहान्योपदिष्टा द्व्यर्था कथा KāmSū. 266. 15 (5.2); वाक्यश्रवणं तथा चरेत्तस्याः। बालेनान्यजनेन च तामुद्दिश्य द्विधार्थश्च। अन्यापदेशयुक्ताः कथयेत् सुकथाः कथापथाभिज्ञः KandaCū. v. 2. 11; भृत्यं प्रभुं तनयमन्यजनं च मर्त्यो नो मन्यते विषयवैरिवशः कदाचित् SubhāRaSaṁ. 101; आत्मनैव कृतं कर्म स्वयमेवोपभुज्यते। शुभं वा यदि वा पापं भोक्तारोऽन्यजनाः स्मृताः SkandP. vi. 124. 47; वृत्तं च द्विविधं स्त्रीणां बाह्यमाभ्यन्तरं तथा। भर्तुरन्यजने बाह्यं तस्याः शारीरमान्तरम् BhaviP. 30B. 29 (i. 10. 6); यदि ... गरुडो वाव्रश्यतेऽनुशितमन्यजनेन लङ्घितुं यम् DvyāśraKā. 8. 86; अवद्यमुक्ते पथि यः प्रवर्तते प्रवर्तयत्यन्यजनं च निस्पृहः SindūPra. 13; KumāPraPra. 65. 12; धनम् ... अन्येन गोपितमथान्यजना हरन्ति ŚaṅkaDigVi. (Mā.) 3.39; किमस्माभिरिदं कथितम्। नहि नहि अन्यजनैः Jīvān. 130.5; 3 ordinary or common man ज्वराभिभूते नृपतौ सचिवेऽन्यजनेऽथवा। महासुदर्शनं यन्त्रं कथितं मन्त्रकोविदैः AhirbuS. 38. 20; अन्यजनो न किंचिच्छक्नोति कर्तुमिति कोपवता न भाव्यम् SubhāRaSaṁ. 37; भिक्षाशनो होमजपोपपन्नः कथं स देवोऽन्यजनेन तुल्यः YaśasCam. ii. 120. 6; उत्कण्ठा भविष्यति। ब्रह्मादीनामदृश्यं यत् किं तदन्यजनस्य वै PadmP. iv. 74. 14; वशयेत्सजपमुपेत्य नृपमपि पुरुषं तथान्यजनम् ĪśānŚiPa. i. 19. 82; तत् किं न लज्जसे शोचन् प्रभावन्यजनेष्विव TriṣaŚaPuC. i. 6. 516; 4 rest of people अत्र मन्त्रिमुख्येऽस्मिन्व्यायत्यन्यजनेऽपि च KathāSaSāg. xii. 19. 156.

**अन्यजनक** (anya-janaka) *adj.* (used as noun) (one) who produces another भावः ... नित्योऽपि स्वरूपानुपयोगित्वेऽपि सहकारिसमवधानं कार्योपयोगादपेक्षेत। अथ मतं क्षणिकोऽपि नैवापेक्षतेऽन्यजनकस्य स्वयमन्यापेक्षानुपपत्तेः PañcPā. 28. 6 (*on* i. 1. 1)

**अन्यजनक** (anya-janaka) *m.* another father तयोर्यस्य यज्ञनकस्य धनं स तदेव गृह्णीयात्र त्वन्यपितृजोऽन्यजनकस्य ManvaMu. 400. 16 (*on* 9. 191)

**अन्यजनकृपालु** (anyajana-kṛpālu) *adj.* compassionate towards other people प्राणान्भोगान्दारान्सत्येषु सदान्यजनकृपालुत्वात्। आमोदते निकामं तद् विरतिं पालयेत्र कथम् MaYānaSū. 110. 3 (14. 44)

**अन्यजनता** (anya-janátā) *f.* other people यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयादन्यजनतास्य क्षेत्रमभ्यारोहुका स्यात् MaiS. iii. 8. 10 (iii. 111. 6)

**अन्यजनदुर्लभ** (anyajana-durlabha) *adj.* rare in other people अन्यजनदुर्लभेन ... मदनतन्त्रसारेण ... युवयोरेव रागेण वञ्चिताः स्मः Ubhayābhi. 15. 12.

**अन्यजनन** (anya-janana) *n.* 1 another birth हीनोऽयमन्यजननोपहताभिमानाज्ञातोऽहमुत्तमगुणस्तदकारकत्वात् SubhāRaSaṁ. 48; 2 next birth कुर्वतीं सुकृतमेतदेति यन्नार्तिरन्यजननेऽपि मामियम् Surath. 6. 87.

**अन्यजननी** (anya-jananī) *f.* 1 another mother किमन्यजननीजठरोद्भवेन धर्मादिकं कृतमशेषफलाप्तिहेतुः MatsyaP. 100. 10; BhaviP. 729A. 25 (iv. 85. 29); PadmP. v. 20. 14; 2 mother of another person शाण्डिल्यो मुनिरब्रवीत्। एष बालोऽन्यजननीं श्रितो भैक्ष्येण जीवति SkandP. iii(3). 6. 51.

**अन्यजनपद** (anya-janapada) *m.* another countryside संधिं वा कृत्वा जनपदमेनं निवेशयेत् निविष्टमन्यजनपदमविज्ञातो हन्यात् ArthŚā. iii. 206. 7 (13.4)

**अन्यजनप्रीति** (anyajana-prīti) *f.* pleasure of other people सुखम् ... किमन्यजनप्रीतये द्रविणसंचये नश्वरे SubhāRaSaṁ. 246.

**अन्यजनवत्** (anyajana-vat) *adv.* like an ordinary or common person लीलाप्रचालितमहेशनिवासशैल स्वामिन् शुचान्यजनवत् परितप्यसे किम् RāmC. (App. 2) 37. 21.

**अन्यजनवाद** (anyajana-vāda) *m.* blame or sensure by ordinary or common people छाद्यतेऽन्यजनवादवारिदैः। जानकी KundaMā. 6. 37.

**अन्यजनशङ्का** (anyajana-śaṅkā) *f.* consideration as ordinary or common man महाब्राह्मण मर्षय मर्षय। अन्यजनशङ्कया खल्विदमनुष्ठितं न दर्पात् Mṛcch. 1.43(1)

**अन्यजनसंक्रमता** (anyajana-saṅkramatā) *f.* causeway for other people व्याकुरुहे बहु किमस्य तरोः ... यदुपकारः रसः परेषु। उन्मूलितोऽपि ... वारिदुर्गे मार्गे यदन्यजनसंक्रमतामुपेतः SaduktiKa. 260. 25.

**अन्यजनसंक्षय** (anyajana-saṅkṣaya) *m.* destruction of other people पीतकृष्णैस्तैर्मिश्रैर्विप्रपूर्वकान्। हन्ति द्वित्रिचतुर्भिर्वा राज्ञोऽन्यजनसंक्षयः NāraS. 2 (1). 14.

**अन्यजनसंदिग्ध** (anyajana-sandigdha) *adj.* doubtful or unknown to ordinary or common people बहुविद्भ्यः समग्राहि समग्रा हि मतिस्त्वया। अतोऽन्यजनसंदिग्धे न संदिग्धे हिताहिते Yādavā. 6. 54.

**अन्यजनसंबद्धा** (anyajana-sambaddhā) *adj.* (*f.*) connected with ordinary or common people महामात्रस्य राज्ञो वा संबन्धः। ... अन्या वा काचिदन्यजनसंबद्धा कार्यसंपादिनी यज्ञनसंबद्धा तत्कार्येषु व्याप्रियमाणा JayaMa. 68. 4 (*on* 1. 5)

**अन्यजनसामान्य** (anyajana-sāmānya) *adj.* common to the rest of the people अथान्यजनसामान्यैर्गुरुभिर्नीतिकोविदैः। नृणां कृतोपदेशानां सिद्धिर्भवति कीदृशी SkandP. iii (3). 17. 2.

**अन्यजनाग्रहणीय** (anyajanāgrahaṇīya) *adj.* unintelligible to other people पूर्वप्रस्तुतार्थलिङ्गसंबद्धमन्यजनाग्रहणीयं लौकिकार्थं द्व्यर्थं वा वचनमुदासीना या श्रावयेत् सा वातदूती KāmSū. 286. 15 (5. 4); JayaMa. 286. 19 (*on* 5.4)

**अन्यजनानुराग** (anyajanānurāga) *m.* love for other person (than husband) सप्रेमदानैर्मधुरैर्वचोभिः संरक्षितव्याः सततं युवत्यः। अरक्षिता ह्यात्मपतिर्क्रिवर्गनाशं करोत्यन्यजनानुरागात् NāgaSa. 19. 11.

**अन्यजनाभिशङ्का** (anyajanābhiśaṅkā) *f.* apprehension of being a stranger विसृजान्यजनाभिशङ्कां नान्यस्तवायमबले श्वशुरः पिता च KundaMā. 1. 28.

**अन्यजनाशक्य** (anyajanāśakya) *adj.* impossible for ordinary or common people स्वस्य च श्रीराधास्वरूपग्रहणमन्यजनाशक्यम् ... मत्वा ... स्वयं च राधाकृतिमग्रहीत् सः CaitaCa. 58. 5 (3)

**अन्यजनाश्रय** (anyajanāśraya) *adj.* existing in another person दोषैरन्यजनाश्रयैरपटवो जाताः स्म AmaŚ. 34; SaraKaṇṭhā. 330. 23; SāhiDa. 593.2.

**अन्यजनाश्रय** (anyajanāśraya) *m.* shelter of other people संक्लेशाभिनिवेशेन प्रवृत्तिर्यत्र जायते। तत्सर्वं राज्ञि विज्ञेयं स्तेयं स्वान्यजनाश्रये YaśasCam. ii. 344. 15.

**अन्यजनाश्रित** (anyajanāśrita) *adj.* existing in another person दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्धतम् ŚatTrayī. 851; KāvyālaṅSū. iv. 3.2; SubhāRaK. 17.17; SūktiRa. 195.14; SaduktiKa. 121.7; AlaṅkāŚe. 13.0 (75)

**अन्यजनित** (anya-janita) *adj.* procreated by another person (than one's own self) अन्ये तु वोढारं भर्तारमनुत्पादकमप्यन्यजनितेन पुत्रेण पुत्रिणमाहुः ManvaMu. 369. 21 (*on* 9. 32)

**अन्यजनीय** (anyajanīya-) *denom.* to regard like a stranger स्वजनमन्यजनीयति मूढधीः परजनं स्वजनीयति मद्यपः SubhāRaSaṁ. 520.

**अन्यजनुर्भविष्णु** (anyajanur-bhaviṣṇu) *adj.* which is going to be produced in the next birth तपोऽनले जुह्वति सूरयस्तनूर्दिवे फलायान्यजनुर्भविष्णवे NaiṣC. 9. 45.

**अन्यजन्तु** (anya-jantu) *m.* 1 different creature गोगजाश्वोष्ट्रमहिषनरपश्वादयो यथा। रमन्ते चेह्रियोनौ नु पक्षिणोर्वान्यजन्तुषु VasiS. 45. 93; 2 ordinary being धन्याः सत्पुरुषास्ते ये गता मोक्षमनुत्तरम्। यतो न तेऽन्यजन्तूनां कर्मबन्धनिबन्धनम् SamarāSaṁ. 4. 626; 3 other creature दध्यौ पालः पुरा चाहं तृषितेष्वन्यजन्तुषु। पीतवान्न पयो भोज्यं भुक्तवान्नैव कर्हिचित् PālaGoKa. 184.

**अन्यजन्मकलङ्किता** (anyajanma-kalaṅkitā) *adj. (f.)* vitiated by any other birth इयं प्रथममुत्पन्ना सा तनुर्ब्रह्मणः पदात्। शुद्धा जातिर्भार्गवस्य नान्यजन्मकलङ्किता YogVā. iv. 17. 2.

**अन्यजन्मकृत** (anyajanma-kṛta) *adj.* 1A accomplished in former birth अन्यजन्मकृतैः पुण्यैः सुरुच्यां सुरुचिर्नृपः ViṣṇuP. i. 11. 20; 1B commited in former birth कौशिको ब्राह्मणः कश्चित् प्रतिष्ठानेऽभवत्पुरे। सोऽन्यजन्मकृतैः पापैः कुष्ठरोगातुरोऽभवत् MārkP. 16. 14; अन्यजन्मकृतस्यास्य ... पापकर्मणः। भविष्यति ... कथमेतत्परिक्षयः BṛKathāK. 57. 321; यथा तव विवाहे च भर्तारो मरणं गताः। स्वयंवरनिमित्तेन क्षयं गतं च क्षत्रियम्। ... अन्यजन्मकृतं कर्म तव पापं सुलोचने PadmP. ii. 88. 20; युष्मत्पादैर्दृष्टमात्रैरन्यजन्मकृतान्यपि। गलन्त्येनांसि TriṣaŚaPuC. i. 4. 780; 1C done or performed in former birth दैवे पुरुषकारे च स्थितं ह्यस्य बलाबलम्। अन्यजन्मकृतं कर्म दैवं पौरुषमैहिकम् AṣṭāSaṁ. i. 62. 3 (1. 9); अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्। शुभाशुभं समभ्येति विधिना संनियोजितम् Pañcā. 139. 3; 2 next or future birth यौवनं चलमपायि शरीरं गत्वरं वसु विमृश्य विशिष्टः। नान्यजन्मगततिक्तविपाकं दृष्टसौख्यमपि कर्म विधत्ते SubhāRaK. 49. 49; 3 the word *anyajanmakṛta* कर्तृकरणे कृता बहुलम् इति मन्यते। एवं च अन्यजन्मकृतम् PadMañ. *on* KāśiVṛ. *on* P. ii. 1. 45 (60. 21)

**अन्यजन्मचरित** (anyajanma-carita) *n.* activity belonging to former birth तदन्यजन्मचरितं नरनाथ निजं भवान्। मुनीन्पृच्छ BhaviP. 168A. 30 (i. 116. 35)

**अन्यजन्मजनित** (anyajanma-janita) *adj.* A produced in the former birth कर्मान्यजन्मनि कृतं (v.l. अन्यजन्मजनितम्) सदसद्य दैवम्। तत्केवलं भवति जन्मनि सत्कुलाढ्ये YogYā. 1. 3; B commited in the former birth दर्शयता चैतमन्यजन्मजनितेन मे फलितमधर्मेण का प्रतिपत्तिः HarṣaC. 47. 3.

**अन्यजन्मजा** (anyajanma-jā) *adj. (f.)* arisen from former birth तदहर्जातकस्यापि वासना सान्यजन्मजा ŚivDṛ. 5. 76.

**अन्यजन्मजात** (anyajanma-jāta) *adj.* arisen from former birth सा चेयं देवी ... किमन्यजन्मजातसंबन्धपुरुषविशेषप्ररूढगाढप्रेमवासनावशेन ... नाभिलषति पाणिग्रहणमङ्गलम् TilaMañ. 169. 14.

**अन्यजन्मदुरित** (anyajanma-durita) *n.* sin or evil commited in the former birth कस्ते हे बकुलान्यजन्मदुरितोद्रेको गरीयानयं येनेयं वनितावितीर्णमदिरागण्डूषपानस्पृहा AnyāŚ. (Ma.) 41.

**अन्यजन्मन्** (anya-janman) *n.* 1 former birth, past life किं नु कर्मशुभं पूर्वं कृतवत्यस्मि जन्मनि (v.l. कृत्यवत्यन्यजन्मनि) MahāBhā. i. 68. 70; त्वयाहं तोषितः पूर्वमन्यजन्मनि बालक ViṣṇuP. i. 12. 82; ये बान्धवाबान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिला यान्तु ViṣṇuP. iii. 11. 36; MatsyaP. 102. 25; PadmP. iv. 89. 35; अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितस्तया ViṣṇuP. v. 13. 35; अन्यजन्मनि कस्यापि विप्रयोगः कृतो मया। सोऽयं मयाप्युगतः को दोषोऽस्य महात्मनः MarkP. 70. 36; कर्मान्यजन्मनि कृतम् सदसद्य दैवम्। तत्केवलं भवति जन्मनि सत्कुलाढ्ये YogYā. 1. 3; यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम्। व्यञ्जयति शास्त्रमेतत् LaJāta. 1 (0). 3; YaśasCam. ii. 93.4; कर्मणामिदमीहितम्। समस्तं प्राणिजातस्य कृतानामन्यजन्मनि PadmP. (Ra.) 8. 247; अन्यजन्मसु ये दारा पितृभ्रातृसुतादयः। क्व गतास्ते ममानादौ संसारे PadmP. (Ra.) 32. 84; अपुण्यया मया नूनमन्यजन्मनि बालकः। कस्या अपहृतः PadmP. (Ra.) 43. 79; मया वियोजिताः पुत्रा मृगाणामन्यजन्मनि VarāṅgaC. 15. 30; अपान्तरतमे देशे तपस्तेपेऽन्यजन्मनि। अपान्तरतमा नाम शिशोस्तेन प्रकीर्तितम् BrahmVaiP. i. 22. 18; अन्यजन्मनि पापिष्ठा मुक्ता त्वं पिङ्गलेक्षणा। अतो लोकेषु विख्यातः पिङ्गलेश्वरसंज्ञकः SkandP. v (2). 81. 90; स्फुटं जानाम्यहं कर्म ह्यन्यजन्मनि यत्कृतम्। न्यासभङ्गः कृतः कस्य तस्मात्पुत्रो हतो मम PadmP. ii. 106. 8; 2 next or future birth चण्डालेनाननुज्ञातः प्रवेक्ष्ये ज्वलनं यदि। चण्डालदासतां यास्ये पुनरप्यन्यजन्मनि MārkP. 8. 216; स पापं केवलं भुङ्क्ते पुरीषं चान्यजन्मनि। अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते MārkP. 29. 31; वव्रे नृपो राज्यमविभ्रंस्यन्यजन्मनि MārkP. 93. 11; 95. 8; भर्ता नारायणो नूनं भविष्यत्यन्यजन्मनि MatsyaP. 70. 23; असौ ज्येष्ठभार्यया अन्यजन्मन्यपि मा भूवं मूर्खजाया AvantiKa. 182. 6; कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः ŚiśuVa. 9. 13; इह जन्मनि न स्याद्येन्यजन्मनि तदुद्भवम् ParaS. 30. 12; सोऽन्यजन्मनि दहाग्निर्विश्रवाश्च महातपाः BhāgP. iv. 1. 36; अन्यजन्मनि ...। दातुमर्हसि मे नाथ कैवल्यं केवलम् SkandP. i (1). 14. 10; स्थाणोर्वत्सस्य पूर्वेण हस्तिपादेश्वरः शिवः। तं दृष्ट्वा मुच्यते पापैरन्यजन्मनि संभवैः VāmaP. 46. 29; येनासौ तद्विनाशाय पुत्रमैच्छन् व्रते स्थितः। सोऽन्यजन्मनि पुत्रोऽभूत्त्वष्टुर्बलभृतां वरः VarāP. 28. 5; अन्यजन्मन्यहं चक्री भवयंश्च ततः स्फुटम् BṛKathāK. 109. 23; विधवा चाप्युपोष्येमां सप्तमीं त्रिपुरान्तक। नान्यजन्मसु वैधव्यं प्राप्नुयात् BhaviP. 108B. 12 (i. 59. 24); संचिन्तयामास नृपः समृद्ध्या विस्मितस्तथा। कथं स्यात्संपदेषा मे पुनरप्यन्यजन्मनि BhaviP. 167B. 25 (i. 116. 16); भार्यामित्रे इमे एव भूयास्तां स्मरतो मम। अन्यजन्मन्यपीत्युक्त्वा हृदि कृत्वा च शंकरम् KathāSaSāg. iv. 2. 164; जीमूतवाहनो भर्ता तद्धयात्सोऽन्यजन्मनि KathāSaSāg. xii. 23. 72; गतेऽपि वयसि ग्राह्या विद्या ...। यद्यपि स्यान्न फलदा सुलभा सान्यजन्मनि ŚārṅgaPa. 1425; Subhāṣi. 2645; मुनीन्द्विजयेद्यस्तु मनागपि हि ...। स आप्नोत्यापदो घोरा अन्यजन्मनि पालवत् PālaGoKa. 4; ज्वलनं विषः कथमिवेतरथा सुलभोऽन्यजन्मनि स एव पतिः Subhāṣi. 1924; तपस्तदुग्रं ध्रुवमाततान। येनान्यजन्मन्यपि रामनाम्नस्तस्यैव सीतेति बभूव दाराः Rāgh. 9. 14; त्वां पुनरन्यजन्मनि रिपुं वाञ्छामि MahāN. 9. 90; 3A different birth रविमण्डलोत्थित इवान्य इव स्वयमन्यजन्म गतवानिव सः। नरभीमयोजनसुदुःसहया प्रभया परिष्कृततनुः RāghPān. (Dha.) 12. 3; 3B another (form of) birth जन्मान्तरेऽपि पुत्रादिरूपेऽन्यजन्मन्यपि पुत्रस्य हि पितुरेव बुद्धिर्बीजभावेन आगच्छति Bhāsk. ii. 246. 20 (*on* iii. 2. 2) [being born again, MW.]

**अन्यजन्मपरिवृत्ताश्रय** (anyajanmaparivṛttāśraya) *adj.* who has acquired the cycle of other births तस्य अन्यजन्मपरिवृत्ताश्रयस्य ... बन्धोः ... सर्वजन्तुप्राणिभूतसंभूतं मांसं कथमिव भक्ष्यम् ... बोधिसत्त्वेन LaṅkāSū. 100. 19.

**अन्यजन्मप्राप्तिनिमित्त** (anyajanmaprāpti-nimitta) *n.* cause of obtainment of next or future birth कर्म(?र्मा)ण्यप्यन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्त इति युक्तम् ChāndoUBh. 301. 11 (*on* v. 10. 5)

**अन्यजन्मफलदान** (anyajanmaphala-dāna) *n.* gift of fruit in the form of next or future birth तपसा च पुनरन्यजन्मफलदानोचितेन दुःसाधमाकलय्य फलमैहिकं महाकाळे महामांसविक्रयमकरोत् AvantiKa. 38. 12.

**अन्यजन्मभर्तृ** (anyajanma-bhartṛ) *m.* husband in the former birth इतोऽन्यजन्मभर्ता मे रुद्रो दक्षमखान्तकः। इदानीं तपसा सैव ज्ञातोऽभूत् VarāP. 22. 28.

**अन्यजन्मभवान्तर** (anyajanma-bhavāntara) *n.* another embodiment in next or future birth श्रुतसागरसद्वाक्यं श्रुत्वा बलिरुवाच तम्। यतेः किं कोऽपि जानाति ह्यन्यजन्मभवान्तरम् BṛKathāK. 11. 32.

**अन्यजन्मसुकृत** (anyajanma-sukṛta) *n.* good or virtuous act in former birth वाञ्छैव सूचयति पूर्वतरं भविष्यत् पुंसोऽन्यजन्मसुकृतं यदि वेतरद्वा Pañcā. 141. 10.

**अन्यजन्मानुभूत** (anyajanmānubhūta) *adj.* (used as noun) (that) which is experienced in former birth यदिह जन्मन्येवानुभूतं स्मरति नान्यजन्मानुभूतमिति, तस्माद्दुर्घ्यं देहात्मत्वेव NyāyMañ. ii. 39. 20.

**अन्यजन्मान्तर** (anya-janmāntara) *n*. [Loc.] during the period of former birth किमन्यजन्मान्तरे कृतमवदातमेभिः पारापतप्रभृतिभिः पत्ररथैः कर्म येन तिर्यक्त्वेऽप्युपनतोऽयमायतनच्छद्मना विमानवासः TilaMañ. 220. 12; यैश्चापि पुरा राजन्नेन विधिना एतासु तिथिष्वन्यजन्मान्तरे उपवासविधिः कृतः BhaviP. 39B. 9 (i. 16. 27)

**अन्यजन्मान्तरकृत** (anyajanmāntara-kṛta) *adj*. done during the period of the former birth अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम्। यत्तस्य शकुनः पाकं निवेदयति गच्छताम् BṛSaṁ. 86. 5.

**अन्यजन्मीय** (anyajanm-īya) *adj*. (used as noun) (that) which pertains to former birth एतस्मिन्वेदसरसि स्नानं कुरु महाद्विज। कृते स्नानेऽन्यजन्मीयं येन स्मरसि VarāP. 2. 82.

**अन्यजन्मोपात्त** (anyajanmopātta) *adj*. acquired in former birth अन्यजन्मोपात्तसंस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय उपजायते Kād. 13. 11.

[1]**अन्यजन्य** (anya-janya) *adj*. 1 other than what is related to man अपेतो जन्यं भयमन्यजन्यं च वृत्रहन् KauṣīBr. 9.4(42. 20); ŚāṅkhāŚS. v. 13. 3; 2 (anyajan-ya) belonging to another personविद्याधराः ... मिलन्तः केचिदन्योऽन्यमन्यजन्यजयासहाः। स्फारानास्फोटयामासुः TriṣaŚaPuC. iv. 1. 649.

[2]**अन्यजन्य** (anya-janya) *adj*. [*f*.—ā] 1 produced by another person स्वज्ञानाख्यक्रियाशक्तिरमुष्य दुरपह्नवा। अर्थक्रियान्यजन्या तु न भावेनापि जन्यते NyāyMañ. i. 56. 15; कुलालादिकृतीनां त्वन्यजन्यादृष्टप्रागभावव्याप्यप्रागभावप्रतियोगित्वमिति ŚivārkaMaDī. i. 141. 5 (*on* i. 1. 3); 2 caused by another कलुषीभावोऽन्यजन्यस्तव ... पृच्छामि तत्त्वां पयः SaduktiKa. 235. 31.

**अन्यजय** (anya-jaya) *m*. victory over enemy स्वसामन्तांश्च संधीयान्मन्त्रेणान्यजयाय वै। संधिः कार्यः ŚukraNī. 4(7). 241.

**अन्यजलालाभ** (anyajalālābha) *m*. non-availability of other water विष्णुश्च 'परनिपानेषु न स्नानमाचरेदाचरेद्वा पञ्चपिण्डानुद्धृत्यापदी' ति। आपदि अन्यजलालाभे BālamBha. i. 420. 16 (*on* 1. 159)

**अन्यजलाशय** (anya-jalāśaya) *m*. another water reservoir अनागतविधाता (नदीस्रोतः प्रविश्य) अन्यजलाशयं गतः PañcT. 1. 127 (18) (133. 2); Pañcā. 87. 13; अन्यजलाशयेभ्यो महानदीमवतरन्त्यः ... दृष्टिपथमवतेरुः ... तरुणकिरातकामिन्यः NalaCam. 5. 56 (28); छाया लोकमिवान्येति सद्गुणैश्चैव सद्गुणः। तद्योऽब्धिं यान्ति वै हित्वा शतशोऽन्यजलाशयान् ĀdiP. 1. 26.

**अन्यजलोल्लङ्घ** (anyajalollaṅgha) *m*. crossing of ordinary water आस्तामन्यजलोल्लङ्घवार्ता धीरधियः प्रभो। त्वामवाप्य सदाधारं तरन्ति भवसागरम् PārśvC. 8. 70.

**अन्यजाग्रद्दर्शनयोग्य** (anyajāgrad-darśanayogya) *adj*. fit for perception by another who is awake न च यथान्यजाग्रद्दर्शनयोग्या जाग्रदर्था न तथा अन्यस्वप्नदृग्दर्शनयोग्याः स्वप्नार्था इति ... शक्यम् ŚivārkaMaDī. ii. 232. 3 (*on* iii. 2. 6)

**अन्यजात** (anyá-jāta) *adj*. 1Ai (used as noun) (child) born of another person न शेषो अग्ने अन्यजातमस्ति ṚV. vii. 4. 7; Nir. 3. 1 (59. 9); 1Aii (used as noun) (one) born from other person (than brother-in-law) देवरवत्यामन्यजातमभागम् GautaDS. iii. 10. 21; लग्नोडुपभृगुपुत्राः शुभैरदृष्टास्तथान्यजातश्च Sārā. 9. 33; पत्यौ जीवति तद्गृहे स्थितायां तद्भार्यायां यो गूढोत्पन्नः भङ्ग्या उपपतित्वेन वा पत्युः क्षमया जायते सोऽन्यजातः कुण्ड उच्यते ManuBh. i. 282. 17 (*on* 3. 174); 1B originating from another person मा वो भुजेमान्यजातमेनो मा तत्कर्म वसवो यच्चयध्वे ṚV. vii. 52. 2; 2 derived from other (sources) नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं परिहीणिकमौपायनिकं डमरगतकस्वमपुत्रकं निधिश्चान्यजातः ArthŚā. i. 140. 3 (2. 6); सीताराष्ट्रक्रयिम् ... अन्यजातव्ययप्रत्यायोपस्थानान्युपलभेत ArthŚā. i. 230. 2 (2. 15); (used as noun) (revenue) derived from other (sources) नष्टप्रस्मृतादिरन्यजातः ArthŚā. i. 232. 1 (2. 15); 3 born in different (family or race) अन्यजातो नरो योऽत्र प्रकरोति निमज्जनम्। तस्य चिह्नं त्वया कार्यम् SkandP. vi. 113. 91; स त्वं न भागी खलु राज्यकस्य किमन्यजातोऽपि लभेत राज्यम् ŚivaP. ii (5). 44. 3 (271B.4)

**अन्यजातक** (anyajāta-ka) *adj*. born in a different, i.e. low caste विभूतिं निन्दते यो वै ब्राह्मणः सोऽन्यजातकः। याति नरके ŚivaP. i. 24. 74 (32A.5)

**अन्यजाति** (anya-jāti) *f*. 1Ai different species (of being) अभिहितगुणसंयुतेन राज्ञा ... अभियोज्यः। ... व्रजन्ति वा मैथुनमन्यजात्याम् YogYā. 3. 12; 1Aii different class (of building) स्वजातिपरिवेषाद्या नान्यजातिप्रदूषिताः। ... केवला जातिशुद्धाश्च प्रासादाः शुभदा नृणाम् SamarāSū. 50. 5; पराजयं परिवृतैरन्यजातिप्रदूषितैः। ये ... येऽन्यविग्रहाः। ... अल्पायुषस्ते प्रासादा भवन्ति SamarāSū. 50. 15; 1Bi person of different caste पत्नी ... । अन्यजातिसमुद्भूता अन्येन विधृता यदि। तावुभौ धर्मकार्येषु संत्याज्यौ SkandP. vi. 241. 25; इदं चान्यजातिव्यभिचरिताकाम्यतो वधे VīraMi. 1011. 14 (*on* 3. 268); 1Bii different caste, cf. अन्यजात्युद्भव; 2A other degree सदृशद्विवधो वर्गस्त्यादिवधस्तद्गतोऽन्यजातिवधः। अन्योऽन्यवर्णघातो भावितकः BrāhmSphuSi. 18. 42; 2B other entity (i.e. mean Sun) तुल्यतदहर्गणयोः ... सावनजात्यन्तराभावादन्यजात्यन्तरप्राप्तिः SiddhāTaVi. (ŚeṣaVā.) 3. 13; 3 different generic property नान्यजातिविशिष्टोऽर्थः स्वतो जात्यन्तरं ततः। कश्चिदेति जगत्यस्मिन्नन्यत्रेश्वरहेतुतः BṛĀraUBhVā. ii. 1.439; 4 different type अबोधात्सितकर्णार्थं गदितं यच्छिरोमणौ। अन्यजातिभवं जात्यं चन्द्रार्कान्तश्च तत्र सत् SiddhāTaVi. 244.23.

**अन्यजाति** (anya-jāti) *adj*. 1 of different class, heterogeneous व्यञ्जको नान्यजातिश्चेच्छ्रोत्रं शब्दस्य ते कथम् ŚlokaVār. 6. 46 (742. 3); सजातीयेषु नियता दृश्यते नान्यजातिषु BṛĀraUBhVā. ii. 3. 105; 2 belonging to different caste यथान्यजातिः पुरुषो नान्यजातिसुतागताः BṛDharmaP. ii. 14.12; (used as noun) (husband) belonging to different caste अन्यजातेर्मृतस्याथ धृता वापि विवाहिता। वैश्वानरस्य मार्गेण सा तमुद्धरते पतिम् SkandP. vi. 241. 23; 3 of different category प्रमाणमिच्छा च समानजाती आद्यन्तयोस्तः फलमन्यजाति Līlā. 70.

**अन्यजातिग्रहण** (anyajāti-grahaṇa) *n*. knowledge of other generic property यथैव ... °आकारविशेषादयोऽन्यजातिग्रहणे कारणं तथैवात्रोत्पादकजातिस्मरणम् TantrVā. 6. 7 (*on* i. 2. 2); यदि चान्यजातिग्रहणे सर्वत्रैकरूपं सहकारि स्यात्ततोऽत्र तद्वैषम्यस्य दोषत्वं शङ्क्येत NyāySu. (So.) 11. 31 (*on* i. 2. 2)

**अन्यजातिपरिणत** (anyajāti-pariṇata) *adj*. entering into the (mutation of) another birth तत्र कायेन्द्रियाणामन्यजातिपरिणतानाम् (जात्यन्तरपरिणामः प्रकृत्यापूरात्) YogBh. 183. 1 (*on* 4. 2)

**अन्यजातिविषया** (anyajāti-viṣayā) *adj*. (*f*.) referring or pertaining to different class सेयमन्यजातिविषयान्योक्तिः समासोक्तिरेव भवति SaraKaṇṭhā. 463. 1.

**अन्यजातिसमायोग** (anyajāti-samāyoga) *m*. association, i.e. allying with other species (of being) वशिष्ठः स महर्षिश्च विश्वामित्रश्च कौशिकः। अन्यजातिसमायोगं गतावप्यमितौजसौ MarkP. 9. 12.

**अन्यजातिसंबन्धिन्** (anyajāti-sambandhin) *adj*. related to different species मृगमांसः ... मृगजातिसंबन्धि मांसम्। न अन्यजातिसंबन्धि इति Nyās. ii. 447. 8 (*on* vi. 3. 42)

**अन्यजातिसुता** (anyajāti-sutā) *f*. girl of different caste यथान्यजातिः पुरुषो नान्यजातिसुतागताः। अन्यांश्च संकरान् कुर्युस्तन्निवर्तय सर्वथा BṛDharmaP. ii. 14. 12.

**अन्यजातिस्थ** (anyajāti-stha) *adj*. pertaining to different species अश्वायां रासभेनास्ति संभवोऽस्येति चेन्न सः। नितान्तमन्यजातिस्थशफादितनुसाम्यतः PadmP. (Ra.) 11. 197.

**अन्यजातीय** (anyajātīya) *adj*. 1A belonging to different caste स च यद्यन्यजातीयः पतितः क्लीब एव वा KātySm. 81; (used as noun) (person) belonging to different caste तद्वत्यपि वा अन्यजातीये अनभिधानं द्रविडानाम् TantrVā. 590. 5 (*on* ii. 3. 3); उपनायनं पुरुषस्य तथा चान्यजातीयानां विशेषतः एकादशे द्वादशे वा कार्यम् BhaviP. 269A. 23 (i. 182. 10); राजशब्देन चात्र क्षत्रजातीयो वान्यजातीयो ... गौणवृत्त्या प्रतिपाद्यते SmṛtiCan. iii. 34. 9; अन्यदप्यन्यजातीयास्वपि महापातकमुपलक्ष्यते ManvaVi. 650. 11 (*on* 5. 90); कर्मणाम् ... विपर्ययेऽन्यजातीयेनान्यजातीयवृत्त्युपजीवने ... तज्जातीयत्वं तस्य भवति VīraMi. 172. 25 (*on* 1. 96); 1B belonging to different species यो मोहादन्यजातीयं कुरुते वृषभं नरः। तस्य नश्यन्ति वित्तानि धनमायुः कुलं बलम् YuktiKa. 210.4; (used as noun) belonging to different species संस्थानमात्रस्य त्वन्यजातीयेष्वपि समानत्वात् NyāySu. (So.) 10. 34 (*on* i. 2. 2); 2 belonging to different generic property क्रिया हि प्रधानभूता गोत्वशुक्लत्वाभ्यामवरुद्धत्वादन्यजातीयमन्यगुणकं च द्रव्यमनिच्छन्ती श्रुतावेव जातिगुणावेकस्मिन् द्रव्ये नियच्छति NyāyRa. 919. 21 (*on* 7. 269); 3 belonging to different type or kind व्युत्पत्तिर्विकृता उत्पत्तिः। सा चान्यजातीयशब्दोत्पत्तिर्दुःश्रुतिशब्दोत्पत्तिर्वा AdbhuSāg. 469. 23.

**अन्यजातीयत्व** (anyajātīya-tva) *n*. the state of belonging to different caste (आर्यवाचः) ते चातुर्वर्ण्यादन्यजातीयत्वेन प्रसिद्धास्तदा दस्यव उच्यन्ते ManuBh. ii. 344. 28 (*on* 10. 45)

**अन्यजातीयदाह** (anyajātīya-dāha) *m*. act of burning, i.e. remation of (the body of ) a person belonging to different caste अन्यजातीयदाहं कृत्वा तत्सुतपत्न्याद्यन्नभक्षणे प्रेतजात्यशौचं तावद्भवत्येव HārLa. 92. 1.

**अन्यजातीयालम्बन** (anyajātīyālambana) *n.* substratum belonging to different kind कथं नामान्यजातीयालम्बनस्पर्शसंभूता वेदनान्यालम्बना भविष्यति येन वा चित्तेन संप्रयुक्ता ततो भिन्नलम्बनेति AbhidhK. 145. 22; Sphuṭā. iii. 64. 13 (*on* 3. 32)

**अन्यजात्य** (anya-jātya) *n.* 1 another, i.e. similar type (of hypothenuse) एकजात्यत्र्यस्रभुजकर्णसंधावन्यजात्यत्र्यस्रकोटिकर्णसंधिः SiddhāTaVi. 56.14; 2 another quantity अन्यजात्यं परिकल्प्य चात्र नतिस्तु या सान्यकदम्बवृत्ते SiddhāTaVi. 326. 15.

**अन्यजात्यसंभव** (anyajāty-asambhava) *m.* absence of origin from a person of different caste न च मास्तु मानसव्यभिचाराद्रक्षणम् अन्यजात्यसंभवेन प्रजाशुद्धिविघाताभावादिति वाच्यम् SmṛtiCan. iv. 565. 14.

**अन्यजात्युद्भव** (anyajāty-udbhava) *adj.* born in a different caste स सुहृद् व्यसने यः स्याद् अन्यजात्युद्भवोऽपि सन् Pañcā. 90. 22.

**अन्यजान्मिक** (anyajānm-ika) *adj.* belonging to another birth अविद्यादीनां धर्माणां दृष्टे धर्मे यानि बीजानि जातस्य भूतस्येह तान्यन्यजान्मिकस्य जातिजरामरणस्याक्षेपहेतुः BodhiBhū. 71. 6; 71. 9 [DBHS.]

**अन्यजान्ववबद्ध** (anyajānv-avabaddha) *adj.* fixed by, i.e. related to the other knee ग्रीवायाः सभुजायाश्च पादेनाक्रमणे सति। अन्यजान्ववबद्धेन कुर्यादुत्तरढोङ्करम् Mānaso. iv. 6. 906.

**अन्यजामातृ** (anya-jāmātṛ) *m.* other son-in-law अन्यजामातृवार्ताभ्यां द्वाभ्यां द्वाभ्यां प्रयाणकात्। निर्वर्तितव्यं युष्माभिरिति चासावुवाच तान् BṛKathāŚloSaṁ. 22. 135.

**अन्यजायाप्रसक्त** (anyajāyā-prasakta) *adj.* attached to second wife अन्यजायाप्रसक्तेन पित्रा तत्प्रेरितेन सः।· निरस्तो वनवासाय सभार्यो निरगाद्गृहात् KathāSaSāg. x. 9. 3.

**अन्यजालस्थ** (anyajāla-stha) *adj.* remaining in another web भृङ्गाः ...। विपोद्वेगाद्य तत्पुष्पजालस्थेष्वारटत्स्वथ। अन्येऽपि तेऽन्यजालस्थाः प्रवृत्ताः क्रन्दितुं तदा KathāSaSāg. xii. 3. 94.

**अन्यजिघृक्षा** (anya-jighṛkṣā) *f.* desire for seizing another object गृहीताद्विषयाद्योऽस्य विरामोऽन्यजिघृक्षया। सा संहृतिः समाख्याता तत्त्वशास्त्रविशारदैः LakṣmīT. 13. 28.

**अन्यजित** (anyajita) *n.* name of a Śaiva text शैवागमस्य भेदाः स्युः प्रथमं कामिकादयः। ... कामिकं योगजाचिन्त्यकारणान्यजितं तथा ĪśānŚiPa. ii. 1.49(5)

**अन्यजिता** (anya-jitā) *adj.* (*f.*) (used as noun)(one) who is won by another person नाहं गृह्णाम्यन्यजितामिति साल्वनिराकृता। ऊर्ध्वरेतास्त्वहमिति भीष्मेण च निराकृता (अम्बा) MahāBhā. i. App. I. 55 (41)

**अन्यजीव** (anya-jīva) *m.* 1 another individual soul अन्यः अन्यजीवः LaCandr. 490. 23; बन्धुजीवं नयन्दैन्यमन्यजीवस्य का कथा AlaṅkāMañ. 163.3; एकचित्तत्वापेक्षया ... तथा चान्यजीवजन्ममरणादिनापि अन्यजीवस्य जन्ममरणादिमत्त्वं युक्तमेव Bhāsk. ii. 81. 24 (*on* ii. 3. 2); 2 another living being अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः। अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् Kuval. 120 (7)

**अन्यजीववत्** (anyajīva-vat) *adv.* like another living being येन केनापि भावेन तेन संबध्यते तु यः। संसृतिं न प्रयात्येव स तु क्वाप्यन्यजीववत् SkandP. ii (9). 3. 38.

**अन्यजीवाधिष्ठित** (anyajīvādhiṣṭhita) *adj.* inhabited by another individual soul 'त इह व्रीहियवाः' इत्यादौ चान्यजीवाधिष्ठिते व्रीहियवादौ संश्लेषमात्रम् VedāntSā. (Rā.) 252. 3 (*on* iii. 1. 24); जायन्ते इति श्रवणात् तस्य व्रीह्यादिजन्म। अन्यजीवाधिष्ठिते व्रीह्यादौ जीवस्य संश्लेषमात्रम् BrahmSūBh. (Śrī.) ii. 218. 1 (*on* iii. 1. 24)

**अन्यज्ञातत्व** (anyajñāta-tva) *n.* the state of being known by another person ज्ञातरूपस्य चान्यज्ञातत्वे प्रमाणाभावात् IṣṭaSi. 208. 10.

**अन्यज्ञान** (anya-jñāna) *n.* 1 knowledge of another (object) अस्वरूपेण प्रतिपत्तौ न तदात्मज्ञानम् अन्यज्ञानमेव भवति BrahmSi. 151. 22; तत्र ज्ञानं स्वतःसिद्धं क्रिया कायाश्रिता सती। परैरप्युपलक्ष्येत तयान्यज्ञानमूहते ĪśvaPraSū. i. 1. 4; PrakaVi. 100. 21; न ह्यन्यज्ञानान्मोक्ष उपपद्यते BrahmSūBh. (Ma.) 6B. 8 (*on* i. 1. 16); TattvPrakā. 19B. 12 (*on* i. 1. 16); 2 knowledge of one अन्यज्ञानादन्यफलप्राप्तेरयोगात् LalitāTriBh. 355. 18 (*on* 59); नन्वन्यज्ञाने नान्यस्य कश्चिदस्त्यवबुद्धता BṛĀraUBhVā. i. 4. 981; अन्यज्ञानेनान्यज्ञानासंभवपरिजिहीर्षया तु दृष्टान्तोपादानम् VedāntDī. 15. 5 (*on* i. 1. 5); एकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति प्रतिज्ञातेऽन्यज्ञानेनान्यज्ञानासंभवं मन्वानस्य VedāSaṁ. 89. 5; कारणद्रव्यमेवावस्थान्तरापन्नं कार्यद्रव्यमिति। कथमन्यथान्यज्ञानादन्यस्य विज्ञानं स्यात् NyāyKu. 143. 9; अन्यज्ञानादन्यत्र प्रवृत्तावतिप्रसङ्गो कः प्रतीकारः Kiraṇā. 268. 6; न ह्यन्यज्ञानादन्यज्ञानं संभवति PrakaVi. 100. 21; GoviBh. 97. 8 (*on* ii. 1. 14); PrakaVi. 124. 6; अन्यज्ञानादन्यत्र ज्ञेयमिति VedāntKa. 108. 16 (*on* i. 1. 7); 3 knowledge of anything else सूक्तेन पौरुषेणैनं यजन्त्यध्यात्मकोविदाः। इति पैङ्गिश्रुतिस्तेन नान्यज्ञानादिमुच्यते AnuVyā. 8B. 9 (*on* 1.1); तं विदित्वास्य मुक्तिः स्यान्नान्यज्ञानात्कथंचन AnuVyā. 9A. 7 (*on* 1.1); 4 another knowledge अन्यज्ञानस्य ... प्रामाण्यमनुमीयते TarkBhā. (Ke.) 56. 9; सन्तमेनं विदुरिति तत्त्वेनान्यज्ञानं यदुक्तं तेन ... ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदुः AṇuBh. 33. 25 (*on* i. 1. 11); 5 thought of other परचित्तविषयः - अन्यज्ञानविषयः Bhāsk. i. 173. 21 (*on* i. 4. 5)

**अन्यज्ञानकृत** (anyajñāna-kṛta) *adj.* caused by another knowledge अनुभवज्ञानस्य ... स्वान्तर्भावाभासो नैसर्गिकः - निसृष्टः स्वातन्त्र्यात् आयातो न तु स्मरणादेरिवान्यज्ञानकृतवासनादिबलात् PratyabhiVi. i. 336. 3 (*on* i. 6. 9)

**अन्यज्ञानज्ञेय** (anyajñāna-jñeya) *adj.* (used as noun) (object) which is to be known by another knowledge ज्ञानस्य च निर्वाच्यत्वे ज्ञेयस्यापि तथात्वं स्यात्, अन्यज्ञानज्ञेयवत् IṣṭaSi. 48. 3.

**अन्यज्ञानधारा** (anyajñāna-dhārā) *f.* flow or continuation of the knowledge of another (object) अन्यज्ञानधाराकालीनाहंकारस्य ... अनुसंधानम् SiddhāLeSaṁ. 155. 3; न चास्मिन्पक्षे ... अन्यज्ञानधाराकालीनाहमर्थानुसंधानानुपपत्तिः SiddhāLeSaṁ. 183. 3.

**अन्यज्ञानप्रतिबन्ध** (anyajñāna-pratibandha) *m.* hinderance to the knowledge of another (object) न चैवमन्यज्ञाने द्वारत्वम्, अन्यज्ञानप्रतिबन्धद्वारेण शुद्धज्ञान एव द्वारत्वसंभवात् AdvaiSi. 694. 15.

**अन्यज्ञानप्रतिबन्धिका** (anyajñāna-pratibandhikā) *adj.* (*f.*) hindering the knowledge of another (object) (बुभुत्सा) नाप्यन्यज्ञानप्रतिबन्धिका, घटबुभुत्सायामपि पटज्ञानोदयात् TattvCin. i. 772. 5.

**अन्यज्ञानमात्र** (anyajñāna-mātra) *n.* another knowledge in general (संततिः) सा चानादिरनन्ता च न सिद्धिं कथमृच्छति। ... नित्यहेतुसमुद्भूतं नित्यं सत्त्वत एव वा। भूतमात्रोद्भवं वापि यद्वान्यज्ञानमात्रजम् TattvSaṁ. 1880.

**अन्यज्ञानवर्जित** (anyajñāna-varjita) *adj.* devoid of another knowledge गङ्गानन्तगुणा ... यां शिरसा धृत्वा शिवोऽन्यज्ञानवर्जितः BṛDharmaP. i. 58.60.

**अन्यज्ञानसाधन** (anyajñāna-sādhana) *n.* means of another knowledge शेष्यन्तरनिवृत्तिफलकपरिसंख्येत्याहुः। तत्र। ... श्रुत्यादिविचारस्यान्यज्ञानसाधनत्वेनाप्राप्तेः Nyāyāmṛ. 624B. 3.

**अन्यज्ञानहेतु** (anyajñāna-hetu) *m.* cause of the knowledge of another (object) न ह्यन्यसंनिकर्षोऽन्यज्ञानहेतुः SphoṭSi. 140. 2; स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणम् ŚrutaPra. iA. 187. 5 (*on* i. 1. 1)

**अन्यज्ञानादि** (anyajñānādi) *adj.* knowledge of another etc. अन्यविषयकसंयमसिद्धितयान्यज्ञानादेः कथनात् YogSā. 53. 14 (3)

**अन्यज्ञानानपेक्ष** (anyajñānāpekṣa) *adj.* independent of any another knowledge दृष्टेर्द्रष्टेति विज्ञायत एव, अन्यज्ञानानपेक्षत्वात् BṛĀraUBh. 131.13 (*on* i. 4. 10)

**अन्यज्ञानानुपयोगिन्** (anyajñānānupayogin) *adj.* not conducive to the knowledge of another प्रमेयम्। किं लक्षणम्। यद्विषयं ज्ञानमन्यज्ञानानुपयोगित्वेन निःश्रेयसाङ्गं भवति तत्प्रमेयम् NyāySā. 34. 13.

**अन्यज्ञानाभाव** (anyajñānābhāva) *m.* absence of another knowledge अन्यज्ञानाभावस्तु न स्वयंप्रकाशब्रह्मतत्त्वावभासप्रतिबन्धक्षमः VivaPraSaṁ. 25. 22.

**अन्यज्ञानावेद्य** (anyajñānāvedya) *adj.* not to be known by means of another knowledge एकज्ञानवेद्यस्यान्यज्ञानावेद्यत्वात् NyāyKu. 49. 12.

**अन्यज्ञानासंसृष्ट** (anyajñānāsaṁsṛṣṭa) *adj.* not associated with any other knowledge तपःक्रियाविशेषान्यदर्थं सेवन्ते तपस्विनस्तज्ज्ञानमन्यज्ञानासंसृष्टं केवलम् SarvaDaSaṁ. 3. 174.

**अन्यज्ञानासंभव** (anyajñānāsambhava) *m.* impossibility of the knowledge of another अन्यज्ञानेनान्यज्ञानासंभवपरिजिहीर्षया तु दृष्टान्तोपादानम् VedāntDī. 15. 6 (*on* i. 1. 5); एकस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति प्रतिज्ञातेऽन्यज्ञानेनान्यज्ञानासंभवं मन्वानस्य VedāSaṁ. 89. 5.

**अन्यज्ञानोपयोगिता** (anyajñānopayogi-tā) *f.* the state of being conducive to the knowledge of another कुतः पुनरेष प्रमेयविशेषो लभ्यते ... प्रमेयज्ञानस्य प्रमाणज्ञानवदन्यज्ञानोपयोगितामन्तरेण ... अपवर्गे हेतुत्वप्रतिज्ञानात् NyāyMañ. ii. 2. 5.

**अन्यज्ञार्था** (anyajñārthā) *adj.* (*f.*) meant for other knower, i.e. sentient being प्रतिपुरुषमेकैकं चित्तम् ... तत्प्रवृत्तिस्तदर्थैव नान्यज्ञार्था स्वार्था वेति IṣṭaSi. 361. 3.

एकस्मिन् प्रयोजने येषां सहाधिकारः तत्र अन्यतरनिवृत्तौ इतरनिवृत्तिः Pradī. iv. 61B. 8 (*on* iv. 1. 36); अन्यतरनिवृत्तावपरस्यापि निवृत्तिः BālamBha. ii. 59. 12 (*on* 2. 43)

**अन्यतरनिवेश** (anyatara-niveśa) *m.* inclusion, i.e. mention of one of the two ब्रह्मणः स्वावच्छिन्नचिद्विषयितायाः घटादेश्च स्वविषयितायाः अज्ञाने अप्रसिद्धया अन्यतरनिवेशः GuruCandr. i. 149. 16.

**अन्यतरनिश्चय** (anyatara-niścaya) *m.* **1A** ascertainment or determination of one of the two तदसौ तद्भावाभावयोः अन्यतरनिश्चये निवर्तते Kāśi. i. 89. 19 (*on* 2. 47): यत्र समस्तं तत्रोपमारूपकयोः साधकबाधकप्रमाणसद्भाव एवान्यतरनिश्चयकारणम् Ekāva. 8. 6 (66) (217. 7); **1B** ascertainment or determination of any one of the two न च समानोपायत्वादुभयोरन्यतरानिश्चये अन्यतरनिश्चयो न भवति Kiraṇā. 298. 19; अन्यतरनिश्चयाभावात्संदेहेन संकरः Ekāva. 8. 76 (17) (335. 6); **2** ascertainment or determination of another न च समानोपायत्वादुभयोः ... अन्यतरानिश्चये नान्यतरनिश्चयः NyāyVārPari. 667. 2.

**अन्यतरनिषेध** (anyatara-niṣedha) *m.* **1** refutation of one अनयोरन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वात् TātpaṬ. (Vā.) 381. 11 (*on* ii. 1. 32); न ह्येकतानेकते प्रतिस्पर्धिप्रकारान्तरवत्यौ तयोरन्यतरनिषेधेऽन्यतरव्यवस्थापनान्नित्यत्वानित्यत्ववत् NyāyMa. 46. 4; भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वेनाभ्युपगमात् KhaṇḍanKhā. 1099. 3; परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् Tattvodyo. 5A. 4; TarkSaṁ. (Ā.) 113. 20: वैलक्षण्यं नानिर्वचनीयत्वं जगतः। न च विरोधः। विरोधिनोरन्यतरनिषेधेऽन्यतरव्याप्तत्वानुभवात् KarmaNi. 2A. 7; **2** refutation or negation of one of the two उभयविरहस्य च परस्परविरुद्धयोर्लोकसिद्धयोरन्यतरनिषेधस्येतरविधिनान्तरीयकत्वनियमदर्शनादेवानुपपत्तेः TattvPradī. (Ci.) 75. 14; **3** refutation or negation of another तत्सादृश्यं न तु विशेषमात्रम् ... सादृश्यैक्ययोरेकतरविधानायान्यतरनिषेधात् Nyāyāmṛ. 590A. 6.

**अन्यतरनिष्ठ** (anyatara-niṣṭha) *adj.* devoted to one of the two (states) सर्ववर्णानां प्रवृत्तिनिवृत्तिधर्मयोरन्यतरनिष्ठानाम् ... इदं कार्यमिदमकार्यमिति च या वेत्ति GītāBh. (Rā.) 679. 1 (*on* 18. 30)

**अन्यतरनिष्ठा** (anyatara-niṣṭhā) *f.* ascertainment of one of the two (mutually contradictory symptoms) प्रवृत्तिनिवृत्तिलक्षणसंयोगे तु गुरुलाघवं संप्रधार्य सम्यगध्यवस्येदन्यतरनिष्ठायाम् CaraS. iii. 8. 134 (1941Ed.); तत्र प्राज्ञ एव दोषादिगुरुलाघवेन सम्यगध्यवस्येदन्यतरनिष्ठायाम्। कालश्च भेषजस्य योग्यतामादधाति AṣṭāSaṁ. i. 121. 5 (1. 23)

**अन्यतरनिह्नव** (anyatara-nihnava) *m.* denial of one of the two (positions) न सौगतादिनयेनान्यतरनिह्नवः शक्यः NyāySiA. 187. 18.

**अन्यतरन्यूनत्व** (anyataranyūna-tva) *n.* the state of being deficient in one of the two (views) द्व्यवयवप्रयोगेऽन्यतरन्यूनत्वापसिद्धान्तयोरुद्भावनादित्यर्थः NyāySu. (Ja.) 275B. 8 (*on* ii. 1. 2)

**अन्यतरपक्ष** (anyatara-pakṣa) *m.* **1A** any one of the two alternatives, sides or views नन्वयमसाधारण एवाचाक्षुषत्वप्रत्यक्षत्ववत् संहतयोरन्यतरपक्षासंभवात् ततश्चानध्यवसितः PadārthaSaṁ. 239. 3; NyāyKa. 241. 26; न पुनः कृतकत्वाद्यन्यतरपक्षसिद्धं साध्यतयोपनीयते तदा कृतकत्वादेः साध्यनिर्देशस्य प्रतिज्ञात्वं प्राप्तमिति नैष दोषः NyāyVār. 114. 9 (*on* i. 1. 33); भेदाभेदयोर्विधिनिषेधरूपयोः एकतरप्रतिषेधेऽन्यतरस्यावश्यं विधिभावादन्यतरपक्षाभ्युपगमः SyādvāMañ. 19. 25; श्रुतिद्वयेन संदेह एव नान्यतरपक्षावधारणम् TattvPrakā. 83B. 5 (*on* ii. 1. 8); वर्णदेवतात्वविषये तूक्त्योः साम्यम्। अन्यतरपक्षे विशेषादर्शनात् TattvPrakā. 206B. 11 (*on* iv. 2.1); न च विशेषो दृश्यते। येनान्यतरपक्षनिश्चयः स्यात् NyāySu. (Ja.) 11B. 10 (*on* i. 1. 1); **1B** one of the two alternatives, sides or views तेन व्यवधारणकल्पनया अन्यतरपक्षावधारणं कार्यम् TantrVā. 816. 2 (*on* iii. 3. 1); संदिग्धेऽर्थेऽन्यतरपक्षानुकूलकारणदर्शनात् NyāyMañ. i. 7. 32; i. 10. 1; अत एव चान्यतरपक्षनिर्णयावसान एव भवति वादः NyāyMañ. ii. 151. 19; तस्य लक्षणमुचितमयमपि चान्यतरपक्षनियमविरहिततनुरिति किमिति न भवति NyāyMañ. ii. 159. 21; शास्त्रम् ... अवहितबुद्ध्या निबद्धम् इत्यन्यतरपक्षावलम्बनविक्लवमनसां क इव निर्णयोपायः ĀgaPrā. 64. 25; प्रकरणं पक्षप्रतिपक्षौ तयोश्चिन्ता विचारः सा यत्कृता स निर्णयार्थमुपदिष्टः उभयपक्षसाम्यात्र प्रकरणसाम्येऽन्यतरपक्षनिर्णयाय कल्पते NyāyKa. 202. 18; सर्वत्र हि संशयस्य निदानोच्छेदादुच्छेदो भवति। अन्यतरपक्षावधारणाद्वा ŚāstrDī. 77. 14 (*on* i. 1. 5); सति च विकल्पेऽन्यतरपक्षपरिग्रहाय प्रयोगदशायां मीमांसा संभवति ŚāstrDī. 777. 1 (*on* x. 8. 5); पक्षद्वये दोषोपसंहारः। अन्यतरपक्षपरिग्रहे सर्वविषयाव्यापनादविशेषितश्चिण्वद्भावः Pradī. v. 321B. 28 (*on* vi. 4. 62); तयोरन्यतरपक्षपरिग्रहे पितुरिच्छैव कारणम् SmṛtiCan. iv. 609. 7; सविशेषनिर्विशेषत्वयोः यदन्यतरपक्षोपाधिकं तत्सत्यमेवेति कुतो निर्णयः VedāntKa. 373. 10 (*on* iii. 2. 11); बुद्धिप्राणयोरन्यतरपक्ष एव छायातपनिर्देशो लोकशब्दनिर्देशश्च घटताम्, गुहाप्रवेशस्तु न कथंचिदपि घटते ŚrutaPra. iB. 303. 21 (*on* i. 2. 11); एवं च भुक्तिव्यक्तिपक्षयोरुभयोरपि सामाजिकानां रसाश्रयत्वोपपत्तेरन्यतरपक्षपरिग्रहाग्रहादुदास्महे RasāSu. 174. 11 (2. 165); कार्योत्पत्तिरेवान्यतरपक्षदोषमाभासयिष्यति NyāySu. (Ja.) 398B. 6 (*on* ii. 2. 7); तदपि वादस्यान्यतरपक्षनिर्णयावसानत्वविरोधादनुपपन्नम् NyāySu. (Ja.) 465A. 3 (*on* ii. 3.1); **2** one of the two parties अन्यत् साध्यमन्यत् सिद्धमन्यद्वासिद्धमिति साध्यमन्यतरपक्षसिद्धमन्यतरं प्रति कर्मतया यदुपादीयते NyāyVār. 116. 4 (*on* i. 1. 33)

**अन्यतरपक्षपात** (anyatarapakṣa-pāta) *m.* favouring, i.e. partiality towards one of the two views उभयोर्मध्यस्थत्वात्तदस्पृष्टत्वं फलितम्, मध्यस्थस्यान्यतरपक्षपाताभावात् ŚrutaPra. ii. 90. 23 (*on* i. 3. 42); उत्तरत्र जीवबहुत्वमपि तथैवेति किमन्यतरपक्षपातेन तत्साधनेन वा ŚatDū. 220. 28; अन्यतरपक्षपातं परित्यज्य ... व्यवस्थापनं युक्तम् NyāySu. (Ja.) 399A. 7 (*on* ii. 2. 7); मध्यस्थस्येवान्यतरपक्षपाताभावेन तदुभयास्पृष्टत्वम् ŚivārkaMaDī. i. 503. 25 (*on* i. 3. 42); स चान्यतरपक्षपातेनान्यथा लिखत्यन्यतरत् VīraMi. (Vyavahāra.) 53. 18.

**अन्यतरपतन** (anyatara-patana) *n.* sin of one of the two यत्रैवोभयोः पतनं, तत्रैव वैतानिकसंबद्धानि प्रायश्चित्तानि। अन्यतरपतने तु शरीरमात्रसाध्यैरेवाधिकारः BālaKrī. ii. 96. 7 (*on* 3. 237 (243))

**अन्यतरपद** (anyatara-pada) *n.* **1A** one of the two words ततश्चान्यतरपदानर्थक्यप्रसङ्गः TantrVā. 908. 6 (*on* iii. 3. 43); पूर्वं लक्षणाङ्गीकारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि ŚrutaPra. iB. 210. 30 (*on* i. 1. 13); विरोधस्य दुष्परिहरत्वे सति हिरण्यगर्भरुद्रशब्दयोरन्यतरपदप्रसिद्ध्यनादरेण निर्वाहः स्यात् ŚrutaPra. ii. 192. 16 (*on* i. 4. 29); अन्यतरपदस्य व्यवस्थितार्थत्व एव ... नानार्थपदस्याभिधानियमनम् RasGaṅ. 150. 14; **1B** any one of the two words तत्तेदन्तोपस्थितिद्वारकाभेदबोधस्यैव भेदभ्रमविरोधितया नान्यतरपदवैयर्थ्यम् AdvaiSi. 706. 4; **2** the word *anyatara* (स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि) मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरपदम् KarmaNi. 8A. 4.

**अन्यतरपदलक्षणा** (anyatarapada-lakṣaṇā) *f.* secondary signification or indication of one of the two words विरोधपरिहारार्थं लक्षणा चेत् अन्यतरपदलक्षणैव विरोधपरिहारायालम् ŚrutaPra. iB. 55. 26 (*on* i. 1. 1)

**अन्यतरपदार्थ** (anyatara-padārtha) *m.* **1** one object दूरत्वादिदोषसंभवादप्रामाण्यशङ्का तत्रापि प्रत्यासत्तिगमनादिना अन्यतरपदार्थनिर्णयात्रातिदूरगमनम् NyāyRa. 64. 20 (*on* 2. 60); **2A** another word-meaning तत्त्वंपदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनः अन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात् VedāntSā. (Sa.) 24. 20; **2B** one word-meaning न चैवं सति तत्र समासोपात्तसाहित्यस्य विवक्षापत्तेः अन्यतरपदार्थबाधे अन्यतरवाग्यमानुपपत्तिः MīmāKau. ii. 181. 18 (*on* iii. 1. 14)

**अन्यतरपर** (anyatara-para) *adj.* **A** meant to convey one of the two (meanings) 'दिवि दिव' इति शब्दौ परान्तरिक्षपराकाशान्यतरपरावित्येव युक्तम् ŚivārkaMaDī. i. 282. 22 (*on* i. 1. 28); **B** meant to convey one of the two (alternatives) श्रूयमाणस्यैव क्रमेण युगपद्वा उभयरूपपरत्वायोगात् श्रूयमाणो विधिः अन्यतरपरः MīmāKau. i. 226. 1 (*on* i. 4. 8)

**अन्यतरपरत्व** (anyatarapara-tva) *n.* **A** the state of being meant to convey one of the two (meanings) तेन सप्तम्या ... द्युशब्दस्याद्यस्थानातिरिक्तपरान्तरिक्षपराकाशान्यतरपरत्वं चाविष्कृतम् ŚivārkaMaDī. i. 282. 30 (*on* i. 1. 28); मनोमयादिशब्दानां पूर्वप्रस्तुतब्रह्मपुरुषान्यतरपरत्वानिर्धारणात् ब्रह्मपरत्वेऽपि, ब्रह्मशब्दस्य शिवजीवान्यपरत्वानिर्धारणात् ... संशयमाह ŚivārkaMaDī. i. 295. 19 (*on* i. 2. 1); **B** the state of being meant to convey one of the two (alternatives) उभयपरत्वायोगाच्छ्रूयमाणविधेरन्यतरपरत्वमभ्युपेत्यान्यतरस्यार्थिकत्वेऽभ्युपेयेऽपेक्षितयोग्यत्वाभ्यां करणत्वस्यैव शाब्दत्वम् BhāṭṭCin. ii. 59. 6 (*on* i. 4. 5)

**अन्यतरपराजय** (anyatara-parājaya) *m.* defeat of or loss for one of the two तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातम् ArthŚā. iii. 21. 1 (8.3)

**अन्यतरपरिग्रह** (anyatara-parigraha) *m.* **1** acceptance of one of the two (alternatives) तत्रानुष्ठात्रभिप्रायाधीनोऽन्यतरपरिग्रह इति दृष्टप्रयोजनभेदादपि सिद्धो वाक्यभेदः TantrVā. 432. 24 (*on* ii. 1. 47); यः सोमं वमति यस्य सोमभृत्विग्वमतीति चाश्रयणादन्यतरपरिग्रहे तु स्वामिवमनग्रहणं युक्तम् TantrVā. 1014. 2 (*on* iii. 4.41(?35)); तदेव ब्रह्म आनन्दमय आत्मा अवयवी, तदेव च अब्रह्म पुच्छं प्रतिष्ठा अवयव इत्यसमञ्जस्यं स्यात्। अन्यतरपरिग्रहे तु युक्तम् ... ब्रह्मनिर्देश आश्रयितुम् BrahmSūBh. (Śaṅ.) 59. 13 (*on* i. 1. 19); क्रमविक्रमयोरन्यतरपरिग्रहेण राज्यस्य दुष्करः परिणामः NītiVā. 5. 29; तत्रोभयोरलंकारयोरन्यतरपरिग्रहेण दोषः ... तत्र संकरालंकारो वक्ष्यते Kāvyānu. (He.) 316. 20; तथापि बुद्धिप्राणयोरन्यतर-

परिग्रहो न्याय्यः ŚrutaPra. iB. 303. 13 (*on* i. 2. 11); वस्तुविकल्पानुपपत्तेरन्यतरपरिग्रहे हेत्वभावात् NyāySu. (Ja.) 314A. 1 (*on* ii. 2.1); न ह्युपाधिरन्यदन्यथाकरोति ... अतश्चान्यतरपरिग्रहेऽपि निरस्तसमस्तविशेषमेव ब्रह्म प्रतिपत्तव्यम् NyāySu. (Ja.) 500B. 4 (*on* iii. 2. 8); तत्र चोभयासंभवादन्यतरपरिग्रहे वचनार्थवत्त्वाय सादृश्यं परिगृह्यते MayūMāli. 528. 8 (*on* vii. 1.2); 2 acceptance of one (alternative) विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहे अन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणम् BrahmSūBh. (Śaṅ.) 284. 7 (*on* ii. 1. 1); यत्रान्यतरपरिग्रहे साधकप्रमाणाभावः ... तत्रैवोभयप्रसक्तिरनिवार्या Kāvyānu. (He.) 300. 7; होमत्वादाहवनीयस्य स्थानत्वं प्राप्तम्, एवमनेकहोमविषयवाक्यद्वयेऽन्यतरानुष्ठानगर्भेऽन्यतरपरिग्रहविरोधोऽस्त्येव ŚrutaPra. ii. 423. 20 (*on* iii. 1. 25); 3 acceptance of any one of the two न चोभयभावः, विरोधादेव। न चान्यतरपरिग्रहोऽविशेषात् Kāśi. iii. 60. 23 (*on* 5 (4). 88); एकः प्रकारो दर्शितो द्वितीयः प्रकारस्तु संदेहसंकराख्यः। यत्रान्यतरपरिग्रहे साधकं प्रमाणं नास्ति AlaṅkāSa. 199. 16; यत्र पुनरन्यतरपरिग्रहे साधकबाधकप्रमाणविरहस्तत्र संदेहसंकरः Ekāva. 8. 6 (95) (219. 8); 4 acceptance of one among many (beings) कयाचिदुपपत्त्या स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थम् AṇuBh. 77. 22 (*on* i. 3.10)

**अन्यतरपरिच्छेद** (anyatara-pariccheda) *m.* ascertainment of another न चैकस्य संशयहेतुत्वमन्यतरपरिच्छेदात् Kāśi. iii. 63. 27 (*on* 5 (4). 92)

**अन्यतरपरित्याग** (anyatara-parityāga) *m.* 1 abandonment of one of the two (alternatives) तस्मादन्यतरपरित्यागे सति त्वत्पक्षसिद्धिर्भवतीति संनिकृष्टवशेन दध्यपि होमेन संबध्यते TantrVā. 548. 19 (*on* ii. 2. 25); शीतोष्णयोरिवान्यतरपरित्यागो बलात्प्राप्नोति BrahmSūBh. (Bhā.) 82. 23 (*on* i. 4. 21); स च क्वचिदन्यतरपरित्यागकारणाभावादगत्याभ्यनुज्ञायते यथा व्रीहिभिर्यजेत यवैर्यजेत ĀgaPrā. 61. 12; अमावास्याया अभावादन्यतरपरित्यागावश्यकत्वे यत्पूर्वेद्युरिति वचनानुसारेण चन्द्रदर्शनस्यैव हानं युक्तम् BhāṭṭCan. 15. 12 (*on* xiii. 2. 11); 2 abandonment of another (alternative) विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणम् BrahmSūBh. (Śaṅ.) 284. 7 (*on* ii. 1. 1); 3 abandonment of one (alternative) तत्र आरब्धस्य क्रतोरवश्यसमापनीयत्वेन अन्यतरपरित्यागेन अनुष्ठाननिर्वृत्त्यवश्यंभावात् PūrvottaVāNaMā. 150. 12.

**अन्यतरपरिशेष** (anyatara-pariśeṣa) *m.* remaining of one of the two (items) तादात्म्यं तु भिन्नत्वे स्थिते अस्थिते च कुतः सिध्येत्, आद्ये निरोधात् द्वितीये तु अन्यतरपरिशेषात् TarkSaṁ. (Ā.) 32. 22; न च प्रकृतिपुरुषसंगतिः अतिरिक्तास्ति ... तयोः अन्यतरपरिशेषे कुतः संगतिः TarkSaṁ. (Ā.) 50. 1; 52. 2; ततश्चान्यतरपरिशेषे प्रामाणिकेनात्मना निषेधस्यैव स्थितौ विधेरसंभवः ŚatDū. 108. 24; केयमेकप्रतीतिर्नाम ... न प्रथमद्वितीयौ, अन्यतरपरिशेषादिप्रसङ्गात् NyāySiA. 265. 25.

**अन्यतरपरिहार** (anyatara-parihāra) *m.* rejection or refutation of one of the two (views) विरोधे च अन्यतरपरिहारेणान्यतरत्र प्रवर्तमानः TantrRa. 237. 12.

**अन्यतरपर्याय** (anyatara-paryāya) *m.* synonym of one (word) अग्निर्ज्योतिरित्यत्र ज्योतिः शब्दः सूर्यवाची सूर्यो ज्योतिरिति पुनरग्निवाची तेनोभौ मिश्रलिङ्गाविति। ... अन्यतरपर्यायश्च सन्नितरत्र न प्रयुज्येत TantrVā. 30. 3 (*on* i. 2. 12)

**अन्यतरपर्युदास** (anyatara-paryudāsa) *m.* exclusion or elimination of one of the two न चैकीकरणपृथक्करणाभ्यां तस्यानाभासता स्यात् येनान्यतरपर्युदासे प्रयस्येम NyāyPari. 283. 3.

**अन्यतरपाठ** (anyatara-pāṭha) *m.* reading of one or either of the two (terms) इह सुहृदयदुर्हृदयशब्दावेव पठितव्यौ ... अन्यतरपाठेऽपि हि सौहार्दं दौहार्दमिति सिध्यति GaṇRa. 7. 406 (431)

**अन्यतरपार्श्व** (anyatara-pārśva) *n.* 1 one side, i.e. particular extremity काण्डभग्नम् ... अस्थि ... अन्यतरपार्श्वावशिष्टं छिन्नम् SuśruS. ii. 15. 10; 2 one of the two sides, i.e. region of the ribs सिरां विध्येत् ... चतुर्थके स्कन्धाधोगतानामन्यतरपार्श्वाश्रयाम् AṣṭāSaṁ. i. 176. 22 (1. 36)

**अन्यतरप्रकर्षविषय** (anyataraprakarṣa-viṣaya) *adj.* referring to the excellence or eminence of one of the two (items) उक्तदोषपरिहाराद्द्वयोरपि प्रशस्यत्वाद् अन्यतरप्रकर्षविषयः प्रश्नः Pradī. iv. 289B. 17 (*on* v. 1. 115)

**अन्यतरप्रकार** (anyatara-prakāra) *m.* 1 one quality अस्ति च तयोरन्यतरप्रकारनिषेधेऽन्यतरव्यवस्थानियमः TātpaṬ. (Vā.) 552. 18 (*on* iii. 2. 14); 2 [Inst.] in one of the two ways दुःखहेतुभावाद् अन्यतरप्रकारेणास्ति कर्मिणो दुःखम् TattvPrakā. 147A. 3 (*on* iii. 1. 27)

**अन्यतरप्रकाश** (anyatara-prakāśa) *m.* appearance or manifestation of one of the two (items) परस्परप्रकाशेन अहमर्थतदभिमानयोरन्यतरप्रकाशेन GuruCandr. iii. 52. 8.

**अन्यतरप्रकाशक** (anyatara-prakāśaka) *m.* manifestor or indicator of one of the two तेन ... गौणवृत्त्यान्यतरप्रकाशकत्वाङ्गीकारात् BhāṭṭCin. ii. 55. 2 (*on* i. 4. 3)

**अन्यतरप्रतिक्षेप** (anyatara-pratikṣepa) *m.* 1 negation of one न चोभयविधेरर्थान्तरमुभयनिषेधः। अन्यतरप्रतिक्षेपरूपत्वादन्यतरान्तरस्य NyāyKu. 62.6; 2 negation of one of the two उदयाचलकारागृहादौ ... किं च परस्परविरुद्धतया तिरस्कृततृतीयकोटिकमिवान्यतरप्रतिक्षेपे परस्यैव लाभं जनयति AlaṅkāŚe. 3. 1 (c) (8)

**अन्यतरप्रतिज्ञातार्थ** (anyatara-pratijñātārtha) *m.* object or item promised by one of the two अन्यथा अन्यतरप्रतिज्ञातार्थविपरीतम् VīraMi. (Vyavahāra.) 130.18.

**अन्यतरप्रतिपादनशक्ति** (anyatara-pratipādanaśakti) *f.* power expressing one of the many (meanings) कारकान्तरेषु च व्यभिचारादन्यतरप्रतिपादनशक्तौ विहतायाम् ... किंचिदुपस्थापकमस्ति TantrVā. 960. 11 (*on* iii. 4. 13)

**अन्यतरप्रतिबन्ध** (anyatara-pratibandha) *m.* 1 obstruction or impediment of one of the two आद्ये विसदृशकार्यजनकत्वस्य द्वितीयेऽन्यतरप्रतिबन्धस्य तृतीये तूभयजनकत्वस्यापादकं कुतः NyāySu. (Ja.) 392B. 4 (*on* ii. 2. 7); 2 obstruction or impediment of another item सामान्यविशेषपरिच्छेदावरणापगमे कस्य प्रथमतरमुत्पादो भवेत् ... अन्यतरसामग्र्या अन्यतरप्रतिबन्धकत्वे च उभयोरप्यभाव-प्रसङ्गात् JñānBi Pra. 37. 30.

**अन्यतरप्रतिभास** (anyatara-pratibhāsa) *m.* 1 knowledge of any one of the two यदि नास्त्येवान्यतरप्रतिभासोऽपि उद्भवाभिभवात्मकत्वे तु विशेषः इत्युपरिष्टाद्वक्ष्यामः Śarka. 18. 13; 2 knowledge of one of the two, i.e. individual and generic property जातिरूपान्तर्गता व्यक्तिः, तत्स्वरूपान्तर्गता च जातिः तत एवान्यतरप्रतिभास एवेतरमिश्रगोचर इति चेन्न NyāyKu. 132. 8.

**अन्यतरप्रतिषेध** (anyatara-pratiṣedha) *m.* prohibition of one (party) संसर्गो यद्यप्युभयाश्रयत्वादन्यतरप्रतिषेधेनोभयोरपि सिद्धः प्रतिषेधः ManuBh. ii. 383. 27 (*on* 11. 46)

**अन्यतरप्रतीति** (anyatara-pratīti) *f.* 1 knowledge of one (generic property) उभयत्र चाभिधात्री शक्तिरतिभारः शब्दस्य अन्यतरप्रतीत्या चान्यतरप्रतीतिसिद्धेः NyāyMañ. i. 293. 4; 2 knowledge of another (individual), NyāyMañ. i. 293. 4; 3 knowledge of one of the many (semantic relations) घटमहं जानामीति कर्मकर्तृक्रियाणां प्रतीतेः अन्यतरप्रतीत्यपलापे प्रमाणाभावात् PramāMī. 31.23 (*on* i. 1. 42); 4 knowledge of one of the two यदि विशेषणविशेष्ययोरैक्यमस्ति, तर्ह्यन्यतरदेव प्रतीयेत। अन्यतरप्रतीतिर्वास्तु, तथापि नैक्यम् ŚrutaPra. iA. 122. 29 (*on* i. 1. 1)

**अन्यतरप्रत्यय** (anyatara-pratyaya) *m.* knowledge of another प्रमाणमुक्तं न चैतत् द्रव्यस्वरूपम् एकतराप्रतीतावन्यतरप्रत्ययात् Kiraṇā. 210. 14.

**अन्यतरप्रदिग्धा** (anyatara-pradigdhā) *adj.* (*f.*) besmeared with something else अजातुपेयेवमेव तप्तां जतुमधूच्छिष्टान्यतरप्रदिग्धां शलाकाम् AṣṭāSaṁ. i. 183. 3 (1. 37)

**अन्यतरप्रबन्ध** (anyatara-prabandha) *m.* one of the two (Prakrit and Sanskrit) literary compositions योऽन्यतरप्रबन्धे प्रवीणः स महाकविः KāvyMī. 19. 24.

**अन्यतरप्रमेय** (anyatara-prameya) *n.* death of one of the many (uterine brothers) तेन विभक्तानामप्यन्यतरप्रमेये सोदर्य एव गृह्णीयान्नास्य भागः परिलुप्यते ManuBh. ii. 303. 14 (*on* 9. 212)

**अन्यतरप्रयोग** (anyatara-prayoga) *m.* 1 adoption of another in practice पृथगधिकासत्पृथक्प्रयोगता। अन्यस्यान्यतरप्रयोगः ManuBh. ii. 393. 17 (*on* 11. 77); 2 employment or use of one of the two (factors of syllogism) अन्यतरप्रयोगेणापि साध्यसिद्धेरुभयोपादानमनर्थकम् इति मीमांसकाः PrakaPañ. 223.12; हेतूपनययोस्त्वन्यतरप्रयोगेणापि साध्यसिद्धेरुभयोपादानं व्यर्थमिति मीमांसकाः TantrRaha. 11.22; 3 utterance of one of the two प्रत्ययार्थोपाधित्वाद्य द्वयोरसंदेहार्थोऽन्यतरप्रयोगः Pradī. iv. 279B. 34 (*on* v. 1. 74)

**अन्यतरप्रयोजक** (anyatara-prayojaka) *m.* prompter of one of the two तौ हि वधकखादकौ स्वार्थप्रवृत्तौ नष्टाश्वदग्धरथवत् इतरेतरोपकारमनुभवन्तौ न पुनरन्यतरप्रयोजकौ ManuBh. i, 443. 23 (*on* 5. 51)

**अन्यतरप्रवृत्तिनिवृत्ति** (anyatara-pravṛttinivṛtti) *f.* activity and withdrawal pertaining to another अनयोरेकतरप्रवृत्तिनिवृत्त्योरेव अन्यतरप्रवृत्तिनिवृत्ती

NyāyVārPari. 705. 11.

**अन्यतरप्रवेदन** (anyatara-pravedana) *n.* act of conveying one of the two इह खलु निखिलप्रेक्षावान् समीहिततत्साधनयोरन्यतरप्रवेदने प्रवर्तते SarvaDaSaṁ. 16. 491.

**अन्यतरप्रवेश** (anyatara-praveśa) *m.* act of entering of one अरिविजीगिषुमध्यवर्ती क्षुद्रोऽपि मध्यमोऽन्यतरप्रवेशेनान्यतरं बाधते ManvaVi. 830. 18 (*on* 7. 155)

**अन्यतरप्रसक्ति** (anyatara-prasakti) *f.* undesired occasion of one of the two नित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिनिवारकत्वम् KhaṇḍanKhā. 1206. 21; किमिदं कारणत्वम् ... यदनभ्युपगमे नित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिस्तद्वा TattvPradī. (Ci.) 321. 4.

**अन्यतरप्रसङ्ग** (anyatara-prasaṅga) *m.* undesired occasion of one of the two बाधासिद्धयोरन्यतरप्रसङ्गात् ĀtmaTaVi. 39. 2; अव्याप्तिव्याप्त्योः पूर्ववद् अन्यतरप्रसङ्गः स्यात् Pradī. vi. 184. 17 (*on* vii. 3. 1); शक्तिभेदकल्पन-अमुख्यत्वयोरन्यतरप्रसङ्गात् ŚrutaPra. iA. 251. 20 (*on* i. 1. 1); प्रागसिद्धस्य तुच्छत्वकार्यत्वयोरन्यतरप्रसङ्गात् ŚatDū. 51. 25; अभ्युपगमे वा तत्सत्यत्वमिथ्यात्वविकल्पेन सद्वितीयत्वानवस्थयोरन्यतरप्रसङ्गात् ŚatDū. 106. 9; न ह्यसावनध्यस्ता, सत्यत्वतुच्छत्वयोरन्यतरप्रसङ्गात् ŚatDū. 174. 19; अत्यन्तविशदस्वरूपे च वस्तुनि ... अनिर्मोक्षासंसारयोरन्यतरप्रसङ्गात् NyāySiA. 227. 3; स्नानं नाचरेयुः ... परमार्थस्तु रागप्राप्तस्यैव प्रतिषेधः। वैधनिषेधे विकल्पपर्युदासयोरन्यतरप्रसङ्गात् VīraMi. 195. 11 (*on* 1. 100)

**अन्यतरप्रसिद्ध** (anyatara-prasiddha) *adj.* 1 established (as existing) in any one of the two तथा चोक्तम् 'य एव तूभयनिश्चितवाची स साधनं दूषणं वा' नान्यतरप्रसिद्धः संदिग्धवाची पुनः साधनापेक्षत्वात्' इति PramāVāSvopVṛ. 103.15; 2 established in (the view of) one of the two अन्यतरप्रसिद्धाश्रयोदाहरणमाह TātpaṬ. (Vā.) 333. 5 (*on* i. 2. 4)

**अन्यतरप्राधान्य** (anyatara-prādhānya) *n.* prominence of one of the two प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येन उभयोः स्रष्टृत्वम् AṇuBh. 65. 20 (*on* i. 2. 21)

**अन्यतरप्राप्तिविषय** (anyatarprāpti-viṣaya) *adj.* referring to the obtainment by any one of the two येषां सूत्रान्तरेणानेन च प्राप्तिर्वनस्पत्यादीनां तद्विषय एव संशयो न तु अन्यतरप्राप्तिविषयः Pradī. ii. 539A. 32 (*on* ii. 4. 12)

**अन्यतरप्रामाण्य** (anyatara-prāmāṇya) *n.* authoritativeness of one of the two (means) प्रत्यक्षयोरनुमानयोर्वा मध्येऽन्यतरप्रामाण्यसंभववद्वाक्ययोरपि अन्यतरप्रामाण्यसंभवात् NyāySu. (Ja.) 80A. 2 (*on* i. 1. 1)

**अन्यतरप्रायश्चित** (anyatara-prāyaścitta) *n.* A one of the many expiations अन्यतरप्रायश्चित्तमग्निवर्णं भवत्येव ManuBh. ii. 397. 23 (*on* 11. 90); B one of the two expiations एकस्मिन्निमित्ते प्राजापत्यब्रह्मकूर्चयोरन्यतरप्रायश्चित्ताचरणादूर्ध्वम् ... आधानम् VīraMi. (Saṁskāra.) 1012.11.

**अन्यतरप्रियहान** (anyatarapriya-hāna) *n.* abandonment of one beloved कस्मात्पुनः आत्मानात्मप्रिययोः अन्यतरप्रियहानेन इतरप्रियोपादानप्राप्तौ ... इतरहानं क्रियते BṛĀraUBh. 118. 9 (*on* i. 4. 9)

**अन्यतरप्रेप्सु** (anyatara-prepsu) *adj.* desirous of obtaining one of the two चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम्। खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयस्य वा MahāBhā. vi. 114. 64; vii. 114. 50.

**अन्यतरप्रेरण** (anyatara-preraṇa) *n.* act of prompting by one of the two संयोगः ... पूर्वः परिमितानां परिमितापरिमितानां च। उभयप्रेरणादन्यतरप्रेरणाद्वा, यथा मेषयोः स्थाणुश्येनयोर्वा NyāySiA. 254. 2.

**अन्यतरफलेच्छा** (anyataraphalecchā) *f.* desire for any one of the two fruits यदा तु नान्यतरफलेच्छा तदा द्वयोर्मुण्डनयोरगृह्यमाणविशेषत्वात्तन्त्रम् TristhaSe. 21. 12.

**अन्यतरबल** (anyatara-bala) *n.* strength or competence of one of the two हेतुसाध्ययोरन्यतरबलात्कस्यचिदनिष्टस्य ... समुत्कर्षप्रसञ्जनमुत्कर्षसमः NyāyPari. 243. 6.

**अन्यतरबाध** (anyatara-bādha) *m.* 1 annulment of one अन्यतरबाधेन ... अन्यतरविषयं वाक्यम् ... कथमपि क्लेशेन गमयितव्यम् TantrVā. 1004. 13 (*on* iii. 4. 30); अतोऽत्यन्तविरोधे ... कम्बुकलधौतवद्योभयबाधोऽन्यतरबाधो वावश्यंभावी ŚatDū. 129. 17; 2 annulment of another श्रुतेर्नान्यतरानुरोधेनान्यतरबाधः कल्प्यः BrahmSūBh. (Bhā.) 49. 16 (*on* i. 2. 28); 3 annulment of any one of the two उभयश्रुत्यवगतस्येतरेतरविरोधाभावान्नान्यतरबाधे प्रमाणमस्ति VedāntDī. 245. 22 (*on* iv. 4. 7); न केवलमाकारद्वये, अन्यतरबाधनिरपेक्षमपि सामानाधिकरण्यं संभवति ŚrutaPra. iA. 224. 26 (*on* i. 1. 1); विषयभेदाद्विरोधे शाम्यति अन्यतरबाधोऽनुपपन्न इति सगुणनिर्गुणश्रुतिचिन्तने सुस्पष्टम् ŚatDū. 150. 26; अन्यतरबाधाद्वा अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् ... कर्तृत्वबाधः AṇuBh. 19. 14 (*on* i. 1. 4); वर्णाश्रमधर्माणां भगवद्धर्माणाम् ... युगपदुभयोः करणासंभवादन्यतरबाधे प्राप्ते कस्य स्यान्न कस्येति स्यात्संशयः AṇuBh. 247. 4 (*on* iii. 3. 40); अन्यतरबाधेनैवोपपत्तौ उभयबाधे प्रमाणाभावः BhāṭṭDī. iii. 237. 5 (*on* x. 2. 27); चोदकप्रयोगवचनयोरन्यतरबाधस्य प्रसङ्गनिबन्धनत्वात् MayūMāli. 846. 13 (*on* xii. 1. 2); 4 annulment of one of the two एकबाधेनोपपत्तौ नोभयबाधनं युक्तम्। तस्मादन्यतरबाधः ŚāstrDī. 675. 7 (*on* x. 2. 28); विरोधकरणिकार्थापि कथमनुमानेऽन्तर्भवेत् इति चेन्न ... विरुद्धयोश्चान्यतरबाधावश्यंभावेन उभयोर्मानत्वाभावात् SarvaDaKau. 55. 7.

**अन्यतरबुद्धि** (anyatara-buddhi) *f.* 1 notion or knowledge of one अध्यासो नाम द्वयोर्वस्तुनोः अनिवर्तितायामेव अन्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते BrahmSūBh. (Śaṅ.) 628. 14 (*on* iii. 3. 9); अध्यासेऽन्यतरबुद्ध्या नान्यतरबुद्धिनिवृत्तिः ŚrutaPra. ii. 468. 25 (*on* iii. 3. 9); 2 notion or knowledge of another. BrahmSūBh. (Śaṅ.) 628. 14 (*on* iii. 3. 9); ŚrutaPra. ii. 468. 25 (*on* iii. 3. 9); भाष्ये भेदबुद्धावनुवर्तमानायामन्यतरबुद्धिरध्यास इत्यध्यासलक्षणमुक्तम् VedāntKa. 406. 2 (*on* iii. 3. 9)

**अन्यतरबोधक** (anyatarabodha-ka) *adj.* expressive of one of the two श्रुतिः साध्यत्वसाधनत्वयोः अन्यतरबोधकं तृतीयाद्वितीयादिपदम् LaCandr. 356. 24; (used as noun) (that) which expresses one of the two कथंचित्संयुक्तयोर्घटयोरन्यतरबोधकात्षष्ठ्यापत्तेः LaŚabdeŚe. ii. 345. 10.

**अन्यतरभङ्गतस्** (anyatarabhaṅga-tas) *adv.* on account of the rejection or annulment of one of the two इदमित्थंत्वयोः किंचिद्यदि केनापि भज्यते। इदं नास्तीति वाचोऽपि भङ्गोऽन्यतरभङ्गतः NyāySiA. 188. 10.

**अन्यतरभार्या** (anyatara-bhāryā) *f.* co-wife पत्युः सविशेषकमित्यन्यतरभार्याभ्यो वैशेषिकीं पूजां पत्युः सकाशादप्रकटं लब्धुमिच्छेत् JayaMa. 246. 7 (*on* 4. 2)

**अन्यतरभाव** (anyatara-bhāva) *m.* existence of one of the two अर्थेऽपि च हानिरनिर्वाच्यतायाम् अविद्यातद्विलासयोरन्यतरभावापत्तेः NyāyMa. 357. 9; शुक्तिकाशकलस्य समीहिततत्साधनयोरन्यतरभावाभावात् SarvaDaSaṁ. 16. 493.

**अन्यतरभेद** (anyatara-bheda) *m.* difference of one of the two नीलादिगुणभेदोपाधिको घटादिव्यक्तिभेदः व्यक्तिभेदोपाधिको वा तत्तद्गुणभेद इति अन्यतरभेदापलापः प्रसज्येत NyāyKu. 123. 12; क्षत्रियत्वावच्छिन्ननिष्ठमन्यतरभेदसमानाधिकरणं शूरत्वमिति बोधः BhāṭṭCin. i. 106. 17 (*on* i. 1. 4)

**अन्यतरभोजनादि** (anyatara-bhojanādi) *adj.* food etc. of another कर्मण्यतिहारः क्रियाविनिमयः। ... एकस्यान्यतरभोजनाद्यपरस्यापीतरभोजनादि Prasā. i. 963.9.

**अन्यतरभ्रमत्व** (anyatara-bhramatva) *n.* illusoriness or invalidity of one of the two सत्प्रतिपक्षत्वम् ...। नापि व्याप्तिपक्षधर्मतया ज्ञातत्वम् ... अन्यतरभ्रमत्वनियमेन ... आरोपयितुमशक्यत्वात् TattvCin. ii (1). 867.1.

**अन्यतरमरण** (anyatara-maraṇa) *n.* death of one of the two आमरणान्ते भव आमरणान्तिकः। अन्यतरमरणेऽपि तस्यान्तोऽस्तीत्यर्थः ManuBh. ii. 271. 22 (*on* 9.101); मातापितृभ्यां त्यक्तं तयोरन्यतरमरणेनान्यतरेण वा त्यक्तं पुत्रं स्वीकुर्यात् सोपविद्धाख्यः पुत्र उच्यते ManvaMu. 395. 27 (*on* 9.171)

**अन्यतरमहत्त्व** (anyatara-mahattva) *n.* great size or magnitude of one of the two प्रचयो हि ... बृहत्तूलपिण्डयोरन्यतरमहत्त्वातिशयकारणम् VedāntKa. 261.2 (*on* ii. 2.11)

**अन्यतरमात्र** (anyatara-mātra) *n.* 1A merely any one of the two स्वपरपक्षयोः साधनोपालम्भाभ्यामेव विजयो नान्यतरमात्रेण TārkiRa. 214.2; 1B only one of the two तन्त्वोः विभागस्य आश्रयनाशात् उत्तरसंयोगात् च नाशः ... अन्यतरमात्रस्वीकारे कारणाभावात् TarkSaṁ. (Ā.) 75. 20; निगमयति अत इति। उपमानस्य प्रतिपन्नवस्तुसादृश्यसंज्ञासंज्ञिसंबन्धयोरन्यतरमात्रगोचरत्वेनाप्रतिपन्नपदार्थप्रतिपादनासामर्थ्यादनुपन्यासः ŚrutaPra. iA. 137.17 (*on* i. 1.1); श्रुतिद्वयस्यापि समबलत्वेनान्यतरमात्रबाधायोगात् ... न श्रुतिसमन्वयेन नारायणस्य जगत्कारणत्वम् TattvPrakā. 128.8 (*on* ii. 4.6); 2 only one of the many क्रियाहेतुगुणेष्वन्यतरमात्रेणापि क्रियोपपत्तौ गुणान्तरकल्पनानैरर्थक्यात् NyāyPari. 292. 11.

**अन्यतरमास** (anyatara-māsa) *m.* one of the two months मासिकश्राद्धं मलमासे उत्तरमासे च कार्यम्। सांवत्सरिकं त्वन्यतरमासे ... इत्यनुसंधेयम् SmṛtiCan. v. 115.7.

**अन्यतरमिथ्यात्व** (anyatara-mithyātva) *n.* 1 falsehood or falsity of any one of the two विरुद्धयोर्जीवब्रह्मणोरैक्यम् ... अन्यतरमिथ्यात्वमन्तरेण नोपपद्यते

NītiMā. 21.14; 2 falsehood or falsity of one किं चेयमविद्या .. साश्रया वा। ... असावाश्रयः किं ब्रह्मस्वरूपम्। उत तदेवोपहितम्। ... न प्रथमः नित्यशुद्धस्याशुद्धिविरोधात्। अन्यतरमिथ्यात्वे वा उभयमिथ्यात्वे वा तदविरोध इति चेन्न ŚatDū. 175. 25; 3 falsehood or falsity of one of the two (एकमिथ्यात्वे अपरसत्यत्वनियमात्) एकमिथ्यात्वे अन्यतरमिथ्यात्वे GuruCandr. i. 110. 8.

**अन्यतरमूलत्व** (anyataramūla-tva) *n.* the state of having one of the two (Vedas) as the basis स्मृतेस्त्वन्यतरमूलत्वानवधारणाद् वेदभ्रेषनिमित्तप्रायश्चित्तावधारणं स्यात् TantrVā. 979. 8 (*on* iii. 4.13)

**अन्यतरमूलप्रसिद्धि** (anyataramūla-prasiddhi) *f.* establishment or recognition of any one of the two as basis स्तुतिनिन्दात्मकत्वेन ह्येकवाक्यतया चानुन्मीलितस्तुतिनिन्दोत्प्रेक्षाश्रयणम्। न चान्यतरमूलप्रसिद्धिरस्ति यतोऽवतिष्ठेत TantrVā. 3. 19 (*on* i. 2.1)

**अन्यतरयुक्त** (anyatara-yukta) *adj.* mixed with one of the two (items) स्पृश्यपश्वस्थिभवस्य गजादिदन्तस्य च क्षौमवत् पिष्टश्वेतसर्षपकल्केन गोमूत्रजलयोरन्यतरयुक्तेन शास्त्रविदा शुद्धिः कर्तव्या ManvaMu. 219.10 (*on* 5. 121)

**अन्यतरयोग** (anyatara-yoga) *m.* 1 tenability of another, i. e. primordial matter (being the cause) पूर्वभावित्वे द्वयोरेकतरस्य हानेऽन्यतरयोगः Sāṁkhya PraSū. 1. 75; 2 one of the two congresses समुच्चयेनेति न विकल्पेन। द्वयोर्योगयोरन्यतरयोगे स्वाभाविकरागस्यानुत्पत्तेः JayaMa. 183. 11 (*on* 2. 10)

**अन्यतरयोग्यता** (anyatara-yogyatā) *f.* competency or fitness for (obtaining) one of the two देशतः सर्वतो वापि नरो न लभते व्रतम्। स्वर्गापवर्गयोर्यस्य नास्त्यन्यतरयोग्यता YaśasCam. ii. 326. 8.

**अन्यतररजतप्रतिभास** (anyatararajata-pratibhāsa) *m.* appearance of any one of the two silvers न हि संप्रतिपन्नसमीचीनरजतस्वीकारेऽपि निमित्तमस्त्यन्यद् रजतावभासात्। न ह्यन्यतररजतप्रतिभासपक्षपाते कारणमस्ति NyāySu. (Ja.) 43A. 5 (*on* i.1. 1)

**अन्यतररञ्जन** (anyatara-rañjana) *n.* one of the many acts of pleasing or delighting स हि भागः काव्यं यश्च यश्च रसाभिनिष्पन्दी वर्ण्य इत्युक्तमसकृत्। ततश्चान्यतररञ्जनोपक्रमविनेयहृदयसंवादिवैचित्र्यांशोऽसौ नाट्ये लास्याङ्गप्रसादोपनत एव AbhinBhā. iii. 74. 17 (*on* 19. 134)

**अन्यतररसनिर्वाह** (anyatararasa-nirvāha) *m.* development of one of the many sentiments यस्मिन् सति बहून्यपि पदानि एकपदवद्भासन्ते स श्लेषः। ... तं चान्यतररसनिर्वाहे निषेवन्ते Kāvyānu. (He.) 235. 8 (4)

**अन्यतररूढित्व** (anyatara-rūḍhitva) *n.* conventionality of one of the two (words) जातिशब्दो राजेति ततस्तस्य कर्म राज्यम् ...। तस्मान्न तावदुभावपि रूढिशब्दौ नापि यौगिकौ। अन्यतररूढित्वे तु राजशब्दस्य तत्कल्पना युक्ता TantrVā. 591. 13 (*on* ii. 3. 3)

**अन्यतररूप** (anyatara-rūpa) *adj.* 1 having one nature द्विरूपं ब्रह्म श्रूयते ... सविशेषम् ... निर्विशेषं तत्र किमुभयरूपं ब्रह्म प्रतिपत्तव्यम् उतान्यतररूपम्। यद्यप्यन्यतररूपं तदा(पि) किं सविशेषमुत निर्विशेषम् NyāySu. (Ja.) 500B.1 (*on* iii. 2. 8); 2 having one of the two forms असंकीर्णत्वस्य व्यावर्तकवैशिष्ट्यव्यावृत्तिवैशिष्ट्ययोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वापातात् Nyāyāmṛ. 439A. 6; 3 having any one of the many forms उपासनभेदात् फलभेदस्यावश्यकत्वात् मार्गभेदोऽपि तथा ...। मार्गस्तु नान्यतररूपोऽतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः AṇuBh. 332.24 (*on* iv.3.1)

**अन्यतररूप** (anyatara-rūpa) *n.* 1A one of the two forms or characteristics न मुख्यातिक्रमे किंचिद् दृश्यते कारणान्तरम्। मुख्यत्वस्य विवक्षा तु यथेष्टं न न युज्यते। सर्वत्रैवार्थद्वये संभवत्यन्यतररूपविवक्षा युक्ता TantrVā. 972. 25 (*on* iii. 4.13); नन्वेकस्य सामान्यविशेषात्मकत्वविरोधादन्यतररूपं भ्रान्तमौपचारिकं वा NyāyRa. 547. 11 (*on* 5 (12). 7); विन्ध्यो वर्धितकमिति। पूर्ववदन्यतररूपारोपेण व्याख्येयम् Pradī. ii. 250A. 3 (*on* i. 4. 24); न च केवलान्वयिकेवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः Upask. 159. 19 (*on* iii. 1. 17); 1B one of the two (grammatical) natures or conditions एकस्य यदा धर्मद्वयं न संभवति तदान्यतररूपाश्रयणादुभयोः साम्यात् कार्यप्राप्तिः Pradī. iv.92A. 26 (*on* iv. 1.78); यङन्तस्य धातोः पुत्रपत्योरनन्तरयोः संप्रसारणं भवतीत्युक्ते ... तत्र धातुत्वानन्तर्ययोरन्यतररूपपरित्यागेन भवत् संप्रसारणम् ... आनन्तर्यमात्राश्रयणेन भवति PadMañ. *on* KāśiVṛ. *on* P. iv. 1. 78 (388. 6); 2 form or nature of one of the two यदि वस्त्वन्तरमेवापूर्वमुच्यते तदप्ययुक्तम्। तस्य साध्यसाधनयोरन्यतररूपानुप्रवेशितया प्रत्येतुमशक्तेः Kāśi. i. 162. 14 (*on* 2. 197); अपूर्वम् ... कर्मशक्तिः फलशक्तिर्वा वस्त्वन्तरमेव वा स्यात्। न चैतस्य साध्यसाधनयोरन्यतररूपानुप्रवेशः संभवति YuktiSneha. 25. 30 (*on* i. 9. 2); 3 one form or nature असतोरपि वहिः सामान्यविशेषयोर्ज्ञानाकारयोः सद्भावात्तन्निबन्धनं बुद्धिद्वयम् ...। किं चान्यतररूपाभ्युपगमे तदाक्षेपादेवेतरदपि रूपं सिध्यति NyāyRa. 547. 20 (*on* 5 (12). 8); अवश्यं कर्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः। तत्रान्यतररूपप्रतिपादनेऽन्यतरेणैव गुणेन फलेन वा संबन्धान्नोभयसंबन्धसिद्धिः ŚāstrDī. 71. 17 (*on* i. 4. 6); तदुभयमपि घटादावनुभूयमानं कथमुभयरूपातिरेकमन्तरेण निरुह्येतेति चेत् विरोधेऽन्यतररूपबाधेनेतरपरिरक्षणेनाविरोधे चोभयसमर्थनेनेत्युक्तम् NyāyKu. 63. 2; [Inst.] in one form or nature यदि च तत्र हिंसात्वाभावे ... स्मृत्याभिचारस्य निषिद्धतया तत्र अधर्मत्वं विभाव्यते। तदा तस्यान्यतररूपेण धर्मत्वेऽपि न क्षतिः BhāṭṭCin. i. 8.6 (*on* i. 1. 2); 4 any one of the many forms or characteristics गमकतौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वं तेनान्यतररूपशून्यत्वस्य निश्चयवत् संदेहोऽप्यनुमितिप्रबन्धकः Upask. 159.16-17 (*on* iii. 1. 17)

**अन्यतररोग** (anyatara-roga) *m.* disease of any one of the two यत्र त्वन्यतररोगनिवृत्त्यर्थमेव दर्शादिप्रयोगः तत्रेतरस्य पत्नीत्वाद्यभावेऽपि गुणलोपे चेति न्यायेन ... न सर्वत्र तथा कल्पनायां प्रमाणमस्ति BhāṭṭDī. ii. 223.19 (*on* vi. 1.4)

**अन्यतरलक्षण** (anyatara-lakṣaṇa) *n.* one of the two forms or characteristics उक्तयोर्लक्षणयोरन्यतरदनुभूतित्वं न तु समुच्चितमुभयम् ...। तत्रान्यतरलक्षणराहित्यरूपमननुभूतित्वम् ŚrutaPra. iA. 135.12 (*on* i. 1.1)

**अन्यतरलक्षणा** (anyatara-lakṣaṇā) *f.* secondary signification of indication in one of the two व्रीहिजातिर्निर्दिश्यते व्रीहिद्रव्यलक्षणार्था वा अपूर्वसाधनविशेषलक्षणार्था वा। अन्यतरलक्षणया कृतार्थेति नोभयलक्षार्था स्यात् ŚābaBh. 1660. 15 (*on* ix. 1.13); अग्नेर्ऋग्वेद इत्यादावप्यृगादिशब्दार्थबाध आवश्यकः भिन्नार्थयोः सामानाधिकरण्यस्यान्यतरलक्षणया समर्थनीयत्वात् UpaParā. 13. 20; 'ओमित्येतदक्षरमुद्गीथ'मिति ...। अन्यतरलक्षणया ... किमुद्गीथशब्देनोद्गीथावयव ओंकारो लक्षणीयः 'ओमित्येतदक्षर'मित्यनेन वा तद्वानुद्गीथो लक्षणीय इत्यत्र विनिगमकं नास्ति ŚivārkaMaDī. ii. 296. 14 (*on* iii. 3.9)

**अन्यतरलघुचाप** (anyatara-laghucāpa) *m., n.* another, i.e. remaining small arc उपपन्नं चापान्तरस्य जीवा स्यात् तयोरन्तरसंमितेति। अत्रान्तरज्याधनत्वम् अन्यतरलघुचापोनत्वेन सिद्धम् SiddhāTaVi. 72. 18.

**अन्यतरलाभ** (anyatara-lābha) *m.* obtainment, i.e. knowledge of another (meaning) एतद्रीत्यैवान्यतरोपादानेनान्यतरलाभेऽन्यतरसवर्णग्रहणवैयर्थ्यापत्तिः BālamBha. i. 275.9 (*on* 1.90)

**अन्यतरलिङ्ग** (anyatara-liṅga) *n.* 1A one of the two grammatical genders यत्र तु ... शुद्धादेव प्रातिपदिकादन्यतरलिङ्गप्रत्ययो भवति ...। तत्र तथात्वाभ्युपगमे न किंचिद् विरुद्धम् TantrVā. 951. 11 (*on* iii. 4.13); 1B any one of the two grammatical genders न च गोपश्वादिशब्देष्वन्यतरलिङ्गाभिव्यक्तिर्जातिवदस्ति TantrVā. 951.21 (*on* iii. 4.13); 2 one of the two indicatory or characteristic marks (ब्रह्मणः) अन्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम् BrahmSūBh. (Śaṅ.) 582. 19 (*on* iii. 2. 11); एवं जीवत्वे निश्चिते इति। द्वयोरपि जीवपरयोर्लिङ्गप्रतिभासेन विरोधादन्यतरलिङ्गभङ्गेऽवश्यंभाविनि ŚrutaPra. ii. 2. 24 (*on* i. 3.1)

**अन्यतरलिङ्ग** (anyatara-liṅga) *adj.* having only one indicatory or characteristic mark सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः ...। किमासु श्रुतिषु उभयलिङ्गं ब्रह्म प्रतिपत्तव्यम्, उतान्यतरलिङ्गम् BrahmSūBh. (Śaṅ.) 582.9 (*on* iii. 2.11); काश्चित् ... श्रुतयः सविशेषलिङ्गाः ... च निर्विशेषलिङ्गाः। तासु किमुभयलिङ्गं ब्रह्म प्रतिपत्तव्यम् उतान्यतरलिङ्गम् ŚrutaPra. ii. 445.3 (*on* iii. 2.29)

**अन्यतरलोप** (anyatara-lopa) *m.* loss, i.e. exclusion of one of the two किं संख्यानुग्रहो मुष्टिलोपः उत मुष्ट्यनुग्रहः संख्यालोपः अथवा किं संख्याया मुष्टीनां च लोपः अथवान्यतरलोप इति। किं प्राप्तम्। अन्यतरलोप इति ŚābaBh. 1856. 17 (*on* x. 2.64); ŚivārkaMaDī. i. 304.18 (*on* i. 2.1)

**अन्यतरवचन** (anyatara-vacana) *adj.* (used as noun) (that) which is expressive of one of the two न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुम् ... यदि वा समुदायवचनः तत्संबन्धात् काले। अन्यतरवचनो युक्तो नोभयवचनः ŚābaBh. 1739.11 (*on* ix. 2. 53)

**अन्यतरवचन** (anyatara-vacana) *n.* one of the two expressions अथ वचनव्यक्तिद्वयासंभवेनान्यतरवचनव्यक्तिपरिग्रहाभिप्रायेण चोद्यद्वयम् TātpaṬ. (U.) 19.7 (*on* 1.82)

**अन्यतरवत्** (anyatara-va(n)t) *adj.* possessing of one of the two (senses) मयट् किं स्वार्थिकत्वविकारार्थकत्वयोरन्यतरवान् उत प्राचुर्यार्थः ŚrutaPra. iB. 192. 9 (*on* i. 1.13)

**अन्यतरवत्त्व** (anyataravat-tva) *n.* the state of possessing one of the two (items) स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं प्रातिभासकवृत्ति तयोरन्यतरवत्त्वं मिथ्यात्वम् GuruCandr. i. 80.3; अभावस्य स्वप्रतियोगिन्यूनसत्ताकत्वम् ... प्रातिभासिकनिष्ठं व्यावहारिकपारमार्थिकान्यतरप्रतियोगिकत्वं व्यावहारिकनिष्ठं पारमार्थिकप्रतियोगिकत्वं चेत्यन्यतरवत्त्वम् LaCandr. 102.9; यदज्ञानाभावत्वमज्ञानप्रयुक्ताभावत्वं च तयोरन्यतरवत्त्वं वा ज्ञानप्रयुक्तनिवृत्तित्वम् LaCandr. 175. 4.

**अन्यतरवर्ग** (anyatara-varga) *m.* one of the two classes कंचित् कालमन्यतरासिद्धवद् विमतिपथापतितस्य वस्तुनः पक्षत्वमुपेयते, निर्णयजन्मना तु विमतिविरतौ नूनमन्यतरवर्गपतितोऽसौ भविष्यति NyāyMañ. ii. 164. 25.

**अन्यतरवर्ण** (anyatara-varṇa) *m.* caste of either of the two (parents) नियोगतः ...। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वान्यतरवर्णापत्तिः स्मर्यते TantrVā. 7. 5 (*on* i. 2.2); NyāySu. (So.) 10.4 (*on* i. 2. 2)

**अन्यतरवर्ण** (anyatara-varṇa) *adj.* (wife) belonging to another caste स्ववर्णादिक्रमेणोढदारस्य दैवादन्यतरवर्णदारनाशेऽन्तरितस्य पुनस्तद्वर्णकन्यकां परी(?रि)णीतवतः ... दारेषु ... विवाहक्रमेण गमनं नियम्यते VīraMi. (Saṁskāra.) 162. 11.

**अन्यतरवाक्य** (anyatara-vākya) *n.* another sentence न ह्येवंभूतविपरीतकोट्युपनीतदर्शकवाक्यव्यतिरेकेणान्यतरवाक्यप्रतिज्ञास्वरूपमस्ति Kiraṇā. 336.9.

**अन्यतरवाग्यम** (anyatara-vāgyama) *m.* control of speech of any one of the two (*viz.* officiating priest and patron) 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यादौ ... समासोपात्तसाहित्यस्य विवक्षापत्तेः अन्यतरपदार्थबाधे अन्यतरवाग्यमानुपपत्तिः MīmāKau. ii. 181.18 (*on* iii. 1.14)

**अन्यतरवाचित्व** (anyataravāci-tva) *n.* the state of expressing one of the two (senses) शोणप्रातिपदिकमविभक्तावयवं गुणाधत्वयोर्वाचकमापद्यमानमनेकशक्तिकल्पनाभयादन्यतरवाचित्वेनाध्यवसीयमानम् ... व्यभिचारिगुणवचनत्वेनावधारितम् TantrVā. 950.9 (*on* iii. 4.13)

**अन्यतरवाचिन्** (anyatara-vācin) *adj.* expressive of one of the two (senses) अन्येन संयुज्य पदार्थान्तरसंबन्धेऽप्यन्यतरवाचिशब्दनिर्देशे दृष्टान्तमाह ŚrutaPra. ii. 596. 20 (*on* iv. 2. 4)

**अन्यतरवाच्यवाचकसंबन्ध** (anyatara-vācyavācakasambandha) *m.* expressive and expressed relationship of one प्रेरणा भावना चैकप्रत्ययवाच्यतया युगपत्प्रतिपन्ने। न तत्रान्यतरवाच्यवाचकसंबन्धज्ञानादन्यतरोत्पत्तिर्युक्ता TantrRaha. 44.12.

**अन्यतरवादिन्** (anyatara-vādin) *m.* A advocate or disputant of one of the two ननु अस्तीयमुभयरूपा बुद्धिः। किंतु अन्यतरवादिभिरन्यतरसामान्यभेदवासनानिबन्धना भ्रान्तिः औपचारिकी वा इत्युक्तम् Śarka. 2. 24; B one of the two advocates or disputants अन्यतरवादिप्रसिद्धमन्यतरं प्रति यत् साधयितुमुपादीयते तत्साध्यम् NyāyMañ. ii. 162. 12; एतेऽसिद्धभेदाः ... उभयासिद्धा भवन्ति। यदा त्वन्यतरवाद्यसिद्धत्वेन विवक्षितास्तदान्यतरासिद्धा भवन्ति NyāySā. 9.2; PramāMī. 55. 24 (*on* ii. 1.19); नोभयवादिसिद्धं व्यावर्तकत्वमपेक्ष्यते किं त्वन्यतरवादिसिद्धम् LaCandr. 402. 21.

**अन्यतरवासस्** (anyatara-vāsas) *adj.* having one of the two (garments or skins) as clothing काषायाजिनयोरन्यतरवासा जटी शिखी वा ... यथोक्तेषु वर्णेषु ब्रह्मचारिधर्माण्यनुतिष्ठति VaikhāGS. 2.8.

**अन्यतरविकल्प** (anyatara-vikalpa) *m.* one of the two alternatives or options 'विभाषाश्वेः' इत्यत्र ... न च शक्यं वक्तुम् – पित्तु विधिमुखेन प्रवर्तते, किन्तु प्रतिषेधमुखेनेति, एकत्वाद् वाक्यस्य तस्य चान्यतरविकल्प एवोपक्षीणत्वात् PadMañ. *on* KāśiVr. *on* P. i. 1.44 (159.6)

**अन्यतरविगम** (anyatara-vigama) *m.* loss or cessation of one of the two परस्परसंनिधानेन यदा द्वयोरपि सामर्थ्यमाहितं तदान्यतरविगमेऽपि सामर्थ्यहानाभावः Pradī. ii. 468A. 8 (*on* ii. 2. 29); दीपः किं विशरणस्वभावः उत स्थिरस्वभावः। ... पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेत्यम्। तयोर्मिथः प्रतिघातुकत्वादन्यतरविगमे पिण्डीभाव एव वा विशरणमेव वा स्यात् ŚrutaPra. iA. 152. 22 (*on* i. 1.1)

**अन्यतरविजय** (anyatara-vijaya) *m.* victory of one of the two अन्यतरविजयेऽपि तु क्षत्रियान्तकरश्चेद् राजपुत्रं (रामं) विजयते नैनमनभिहत्य रोषणो विरमेत् MahāviC. 2.12(1)

**अन्यतरविद्** (anyatara-vid) *m.* knower of one of the two (entities) कर्मविन्निरूपणे ... ब्रह्मनिरूपणे च ... अन्यतरविदोऽशक्यनिरूपणासुदुर्गीयविद्यासुभयविद एव चिन्तनावकाशः ŚatDū. 75. 2.

**अन्यतरविधा** (anyatara-vidhā) *f.* one of the two kinds or classes (अनाप्तवाक्यस्य) तस्य सदपि द्वैविध्यं नोपदर्शितमस्माभिः। अन्यतरविधानुपातिनोऽप्यनाप्तवाक्यस्याप्रामाण्यात् Kāśi. i. 113.13 (*on* 2.102½); प्रतियोगिनी शुक्तिरियमिति, विपरीता नेदं रजतमिति, तदनयोरन्यतरविधोपनिपातिनी ... अस्ति बुद्धिः NyāyRa. 239.14 (*on* 5(2). 94)

**अन्यतरविधान** (anyatara-vidhāna) *n.* assertion of another सापेक्षत्वानपेक्षत्वयोश्चान्यतरनिषेधस्यान्यतरविधानान्तरीयकत्वेन प्रकारान्तराभावान्नास्थिराद् भावाद् भावोत्पत्तिः Bhām. 434.17 (*on* ii. 2. 26)

**अन्यतरविधि** (anyatara-vidhi) *m.* 1 injunction of one अन्यतरविधावन्यतरस्याश्रौतत्वात् को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातम् Kāśi. i.59. 24 (*on* 2.2); नित्योऽनित्यो वेत्यत्रैकतरनिषेधस्यान्यतरविधिरूपतयोभयविधिनिषेधयोरसंभवात् TattvPradī. (Ci.) 228.2; 2 injunction of another न च कृत्स्नैकदेशाभ्यां प्रकारान्तरमस्ति। अनयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् TātpaṬ. (Vā.) 381.12 (*on* ii. 1.32); किं पुनरिदं मिथ्यात्वं प्रमाणागम्यत्वं वा ... सदसद्विलक्षणत्वं वा ...। न पञ्चमः। एकतरनिषेधस्यान्यतरविधिनान्तरीयकतया तदसंभवात् TattvPradī. (Ci.) 33.9; भेदाग्रनुभवस्याप्रान्तित्वमेव भवति। परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् Tattvodyo. 5A. 4; ईश्वरे कथम् आलस्याभावः स्यात् इ(ति चेत्), सिद्धे दुःखाभाववत् इति ब्रूमः ... भावाभावयोः मिथो विरोधित्वात् अन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वात् TarkSaṁ. (Ā.) 113.20; अन्यतरस्वरूपेऽन्यतरविधेरशक्यत्वादुक्तमन्यतरकार्यम् इति MayūMāli. 84.6 (*on* i. 4.13); 3 affirmation (of existence) of another यदि विषाणाभावाधिकरणत्वप्रतीतिर्भ्रान्ता शृङ्गस्य तर्हि शशोऽधिकरणं स्यात्। भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वेनाभ्युपगमात् KhaṇḍanKhā. 1099.3; 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इतिन्यायेनैकतरनिषेधस्यान्यतरविधिरूपत्वात् ... व्याघातः Nyāyāmṛ. 407B. 8; भूतले घटो नास्ति ... । न चैवं तत्र घटसत्त्वप्रसङ्गः ... तदभावाभावेऽपि तदनधिकरणत्वोपपत्तेः उभयाधिकरणत्वयोग्य एवान्यतराभावेऽन्यतरविधिनियमात् BhedaDhi. 86.4.

**अन्यतरविनाश** (anyatara-vināśa) *m.* destruction, i.e. killing of one of the two persons वृषलपर्वतकयोरन्यतरविनाशेनापि चाणक्यस्यापकृतं भवति MudrāRā. 1.15(3)

**अन्यतरविनिश्चय** (anyatara-viniścaya) *m.* ascertainment or determination of one of the two दोषभावाभावाभ्यामन्यतरविनिश्चये नास्मन्मतेऽप्यसौ दण्डवारिता पदवी NyāyMa. 76. 4.

**अन्यतरविपत्ति** (anyatara-vipatti) *f.* misfortune or calamity of one of the many (operators) अथ किं संभूय व्यवहरतामन्यतरविपत्तौ तदीयं द्रव्यमन्यैर्वणिग्भिर्ग्रहीतव्यम्। नेत्युच्यते Bālakrī. i. 288.4 (*on* 2. 268)

**अन्यतरविभक्ति** (anyatara-vibhakti) *f.* 1 case affix of one of the two (words) अवश्यं कर्तव्येऽन्यतरविभक्तिपरिणामे ... कथ्यते कर्तुरिकत्व इति। TantrVā. 957.17 (*on* iii. 4.13); 2 one of the two case affixes किं लिङ्गवचनं हेतुरुत तृतीयापञ्चम्योरन्यतरविभक्त्यन्तं साधनत्वख्यापकं लिङ्गवचनं वा TattvPradī. (Ci.) 251. 5.

**अन्यतरविभाग** (anyatara-vibhāga) *m.* classification or division of one of the two (forms) देव्या अर्थमयशब्दमयशरीरद्वयसमुच्चयशीलत्वेनाप्यन्यतरविभागमात्रेणैवोपास्त्युपकारस्य कल्पयितुं शक्यत्वात् SetuBa. 266.1.

**अन्यतरविभागिन्** (anyatara-vibhāgin) *adj.* (used as noun) one of the two constitutes of separation or division तन्त्वोः विभागस्य आश्रयनाशात् उत्तरसंयोगात् च नाशः ... तदपि न, अन्यतरविभागिविनाशात् विभागविनाशे अन्यतरावस्थानात् तदवस्थानस्यापि सुवचत्वात् TarkSaṁ. (Ā.) 75. 21.

**अन्यतरवियोग** (anyatara-viyoga) *m.* semantic separation of one सर्वादीनीत्यस्य ... तदन्तविधिरित्यपास्तम् ... रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगात् LaŚabdeŚe. i. 220.11.

**अन्यतरविरहिन्** (anyatara-virahin) *adj.* (used as noun) (item) devoid of any one of the two शास्त्रप्रमाणकत्वं ब्रह्मणः संभवत्येव। ... न च प्रवृत्तिनिवृत्त्योरन्यतरविरहिणः प्रयोजनशून्यत्वम् SarvaDaSaṁ. 4. 382.

**अन्यतरविरोधिता** (anyatara-virodhitā) *f.* [Inst.] by way of being contradictory to one of the two प्रत्यक्षे मिथस्समानाधिकरणत्वेन तयोः (भेदाभेदयोः) युगपदुभानेऽप्यन्यतरविरोधितया एकतरस्य शाब्दादिबुद्धेः प्रतिबन्धकत्वसंभवात् GuruCandr. i. 35.12.

**अन्यतरविलम्ब** (anyatara-vilamba) *m.* delay of one of the two गोदोहनवाक्ये त्वन्यतरविलम्ब एव, फलस्य स्ववाक्ये श्रवणात् पशुं प्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात् ŚrutaPra. ii. 533.27 (*on* iii. 3.63)

**अन्यतरविवक्षा** (anyatara-vivakṣā) *f.* speaker's intention for one of the two अर्थवतामपि वाक्यानाम् ...। उच्चारणार्थप्रत्यायने ... अन्यतरविवक्षया प्रयुज्यमानेऽपि किंचिन्नान्तरीयकं भवति TantrVā. 50. 3 (*on* i. 2.31); विशिष्टस्य

निमित्तत्वानादरः ... अन्यतरविवक्षयापि निमित्तश्रुत्युपपत्तेः ... इति द्रष्टव्यः BhāṭṭDī. ii. 275.18 (*on* vi. 4.6)

**अन्यतरविवक्षित** (anyatara-vivakṣita) *adj.* meant by one of the two (aphorisms) रूपोपन्यासाद्येति सूत्रस्य पुरुष एवेदमिति वाक्यप्रतिपन्न ... वर्णनमनुपपन्नम्, पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानान्तर्गतत्वात् सर्वात्मभावस्य ŚrutaPra. iB. 338.16 (*on* i. 2. 25)

**अन्यतरविविक्त** (anyatara-vivikta) *adj.* distinguished from one यो हि मेयमातृप्रमासु सहोपलम्भमातिष्ठते तस्यान्यतरविविक्तान्यतरबुद्ध्यभावादभेद एव त्रयस्यापद्येत Kāśi. ii. 106. 28 (*on* 5(3). 32).

**अन्यतरविवेक** (anyatara-viveka) *m.* distinction or separation from another अन्यतरांशान्वयेऽन्यतरविवेकात् सिद्धो ग्राह्यग्राहकयोर्भेदः Kāśi. ii. 135.11 (*on* 5(3).85)

**अन्यतरविशिष्ट** (anyatara-viśiṣṭa) *adj.* [*f.* –ā] 1 qualified by any one of the two ज्योतिष्टोमद्रव्यं सोमः परिप्राप्यते। ... क्रयो विधीयते। स च नान्यतरविशिष्टः प्रतीयते ŚābaBh. 698.2 (*on* iii. 1.12); प्रधानभूते (आख्यातार्थे) आकृतिर्गुणो वा तत्संबन्धार्थमुच्यते, तत्रोभयविशेषणविशिष्ट एकस्माद् वाक्यादवगम्यते। ... अन्यतरविशिष्टं कुर्वन्त्रश्रुतं कुर्यात् ŚābaBh. 1441.18 (*on* vi.4.23); 2 qualified by one किमाकृत्यैव विशिष्टः संबन्ध एव उत व्यक्त्यैव ... किमन्यतरविशिष्टयान्यतरयाथोभाभ्यामित्येवं समुदायविशेषणत्वपक्षाः पूर्ववदेव योज्याः TantrVā. 246.14 (*on* i. 3.26); अन्यतरविशिष्टस्यान्यतरस्य वा तदैक्यस्य वाक्यार्थत्वाङ्गीकरणे प्रमाणान्तरविरोधाभावात् वाक्यार्थः संगच्छते VedāntSā. (Sa.) 23.15; (used as noun) (that) which is qualified by one व्यक्तिरेव शब्दार्थो नाकृतिः। न च विकल्पसमुच्चयसंबन्धसमुदायान्यतरविशिष्टान्यतराभिधानपक्षाः संभवन्ति TantrVā. 257. 4 (*on* i. 3.26); 3 qualified by one of the two (*viz.* qualities or virtues) बीजं बीजी पुरुषः विशिष्टं ब्राह्मण्यादिगुणवत्। अन्यतरविशिष्टत्वेन प्रजा विशिष्टा न भवति किं तु यत्रोभयं विशिष्टं स एव प्रसवः शस्यते ManvaVi. 1133.6 (*on* 9. 34)

**अन्यतरविशेष** (anyatara-viśeṣa) *m.* 1 one particular quality यत्र हि अर्थसामर्थ्येन संशयः ... तत्रान्यतरविशेषानवगमेऽपि नैराकाङ्क्ष्यम् BrahmSi. 90.7; 2 peculiarity or distinction of one रजतगतविशेषस्मृतेश्च तस्मिन् धर्मिणि रजतप्रत्ययो भवति विपर्ययात्मकः, संशये ह्युभयविशेषस्मरणं करणम्, इह त्वन्यतरविशेषस्मरणमिति विशेषः NyāyMañ. i. 167.23; अन्यतरविशेषानुपलम्भे भ्रान्त्या हेतुत्वेन प्रयुज्यमानस्तथोच्यते NyāyMañ. i.215.32; शब्दस्य ... करणपरत्वे तु फलस्यैव न गुणस्येत्यन्यतरविशेषपरत्वेऽन्यतरस्यैव संबधात्र तन्त्रेणोभयसंबन्धः ŚāstrDī. 71.7 (*on* i. 4.6); स्थाणुर्वा पुरुषो वेति संशयानन्तरं दारुमयो मांसमयो नायमिति संशयो नोपपद्येत ...। अन्यतरविशेषदर्शनं संशयप्रतिरोधकं संशयेन तूभयोरुपदर्शनम् KhaṇḍanKhā. 1258. 6; द्वयोरन्यतरस्य चोरत्वे सिद्धेऽयम् ... तयोरन्यतरस्याचोरत्वे वा तात्पर्यान्निर्णयगर्भत्वम्। तथाप्युभयोरन्यतरविशेषनिर्णयाभावात् तस्मिन्नंशे संशय एव NyāyPari. 66. 2; 3 speciality or distinction of one of the two द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः ...। इह चान्यतरविशेषानवधारणादुभयोरपि विनाशं प्रति कारणत्वम् NyāyKa. 170.16.

**अन्यतरविशेषण** (anyatara-viśeṣaṇa) *n.* A qualification of another यत्तु ... नानावाक्यत्वमुक्तं तदिह स्थितम् ... यदि हि लिङ्गं बलीयस्ततः संभवदन्यतरविशेषणत्वेनैकवाक्यत्वं परित्यज्य ... प्रयोजनभेदाद् वाक्यभेदो भवति TantrVā. 869.20 (*on* iii. 3.14); न च अर्थयोराकाङ्क्षासत्त्वेऽप्यभिधानतोऽन्यतरस्यान्यतरविशेषणत्वयोग्यत्वरूपेणाख्यातद्वयस्योपस्थापकत्वाभावाद् ... स शब्दोऽवश्यं कल्पनीय इति वाच्यम् MayūMāli. 584. 23 (*on* ix. 1. 5); B one of the two qualifications or attributes जीवत एव चैत्रस्यैवाभावश्चैत्रस्य बहिर्भावं साधयति, अन्यतरविशेषणापाये तु न इत्याह TātpaṬ. (U.) 393.15 (*on* 5(7). 25); क्तषष्ठ्योः प्रकृतत्वात् अन्यतरविशेषणे दोषदर्शनात् पृच्छति – कथमिति Pradī. ii. 434A. 16 (*on* ii. 2.14); पितृयज्ञक्रिया ... उत्तरस्मिन्नेव पर्वणि क्रियेत तत्रास्य चोदितत्वात्। अमावास्यानुपपत्तिरिति चेत् ... सकलचोदितानुष्ठानसंभवेऽन्यतरविशेषणपरित्यागे प्रमाणाभावात् SaṅkarKāBh. 20.15 (*on* i.2.21); C attribute of one क्वचिद्बिम्बप्रतिबिम्बभूतयोरन्यतरविशेषणस्य शाब्दत्वेऽन्यस्यार्थत्वमपि AlaṅkāKau. (Vi.) 37.3.

**अन्यतरविशेष्य** (anyatara-viśeṣya) *n.* one of the two substantives अत्र प्रदोषवर्णने खलस्य संबोध्यत्वेन खलदोषाकरयोः प्रकृतयोरन्यतरविशेष्यप्रतिपादकस्य दोषाकरत्वस्य साम्यम् AlaṅkāRa. 44.59.

**अन्यतरविषय** (anyatara-viṣaya) *adj.* A relating to, i.e. existing at one (point of time) न च लिङः कालविशेषसंबन्धेनोत्पत्तिर्येनान्यतरविषयमेव निमित्तं ब्रूयात् TantrVā. 584. 21 (*on* ii. 3.2); B referring to one of the two यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति ... कथमुभयोरुपदेशे सति अन्यतरविषय एव प्रश्नः स्यात् GītāBh. (Śaṅ.) 20.16 (*on* 2.1-10); पृथक्परिग्रहौ पक्षप्रतिपक्षावुदाहृतौ। 'न हि ताभ्यां निर्णयः तयोरन्यतरविषयो हि भवति न तत्करणक एवेति' सत्यम् NyāyMañ. ii. 148. 20; C having one of the two as the object, cf. अन्यतरविषयत्व B.

**अन्यतरविषयत्व** (anyataraviṣaya-tva) *n.* A the state of referring to one of the two स्वशब्दस्य वादिप्रतिवादिनोः अन्यतरविषयत्वं प्रसङ्गविषयत्वं वा TarkSaṁ. (Ā.) 103. 27; B the state of having one of the two as the object 'अक्षरमम्बरान्तधृतेः' इत्यत्रापि ... प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारकः पूर्वपक्षहेतुर्विद्यते ŚrutaPra. iB. 339.9 (*on* i. 2. 25)

**अन्यतरवृत्ति** (anyatara-vṛtti) *adj.* 1 referring to one of the two (senses) साधारणत्वेऽप्यात्मशब्दस्य न प्रकरणमुपपदं वा किंचिन्निश्चायकमन्तरेणान्यतरवृत्तिता निर्धारयितुं शक्यते BrahmSūBh. (Śaṅ.) 44.15 (*on* i. 1.7); 2 existing in one of the two (*viz.* subject or counter-subject) साधनाव्यापकत्वमुपाधेर्निश्चितमेव। न चान्यतरवृत्तित्वस्य ... उपाधित्वकल्पे साधनाव्यापकत्वासंभव इति वाच्यम् Guru-Candr. i. 421.12; LaCandr. 411.15.

**अन्यतरवृत्ति** (anyatara-vṛtti) *f.* one course of action प्रत्यक्षा वृत्तिस्तस्य राज्ञो भवेदेकान्ततो हि दोषः ...। अस्यार्थः। ... एकान्ततः अन्यतरवृत्तिमात्राश्रयेण VīraMi. (Rājanīti.)186.15.

**अन्यतरवृद्ध** (anyatara-vṛddha) *m.* another elderly person वृद्धयोर्व्यवहरतोरेकतरवृद्धप्रयुक्तशब्दश्रवणसमनन्तरजनितान्यतरवृद्धसमवेतचेष्टां दृष्ट्वा शब्दशक्तिः अवसीयते ĀgaPrā. 20.19.

**अन्यतरवैकल्य** (anyatara-vaikalya) *n.* 1Ai deficiency of one of the two संस्कारद्वयपक्षे तु वृथा दोषद्वयं हि तत्। येनान्यतरवैकल्यात्सर्वैः शब्दो न गम्यते TattvSaṁ. 2209; 1Aii deficiency of one अष्टौ दृष्टान्तदोषानेके भाषन्ते। तन्निरासाय दृष्टान्तदोषस्य पृथगुपादानम्। ... उभयविकलस्तावत्र परिसंख्येयः। अन्यतरवैकल्येनैव दृष्टान्तदुष्टतासिद्धावाधिक्यप्रसङ्गात् NyāySu. (Ja.) 265A. 10 (*on* ii. 1.2); 1B deficiency of any one of the two द्वयसंस्कारपक्षेऽपि सत्यं दोषद्वये (व)चः। यत्रान्यतरवैकल्यं प्राक्तनस्यानुवृत्तितः TattvSaṁ. 2572; ŚlokaVār. 6.87 (752.7); 2 absence of one of the two आसङ्गाविद्ययोरेव मन्योन्याश्रयतोदिता। ... निरासङ्गस्य विदुषस्तस्मान्मुक्तिं प्रतीमहे। स्यादन्यतरवैकल्ये न वेत्येतदनिश्चितम् BṛĀraUBhVā. iv. 3.1100.

**अन्यतरवैदिकार्थ** (anyatara-vaidikārtha) *m.* one of the many meanings of the Vedic statement एकस्यैवागमस्यानेकार्थप्रतीतौ युक्त्यनुसारिणमर्थमुपादाय तदनुगुणतद्विरुद्धार्थपरित्यागः क्रियत इति नोक्तनियमभङ्गः। ... अन्यतरवैदिकार्थानुसारिण्या युक्तेरङ्गीकृतत्वात् NyāySu. (Ja.) 241A. 13 (*on* ii. 1.2)

**अन्यतरवैयर्थ्य** (anyatara-vaiyarthya) *n.* 1A futility or uselessness of any one of the two (items) एकाधिष्ठानेनैव कार्यं स्यादिति चेत् – स्यादेव। तथापि न संभेदेऽन्यतरवैयर्थ्यम् NyāyKuA. ii. 43.11; छन्दोगपरिशिष्टम् – सदोपवीतिना भाव्यम् ... यत्करोति न तत्कृतम्। अत्र पूर्वार्धेनोपवीतित्वादेः पुरुषार्थत्वमुत्तरार्धेन क्रत्वर्थमभिप्रेतमतो नान्यतरवैयर्थ्यम् VīraMi. 87.8 (*on* 1.29); न च प्रकृते संभेदेनान्यतरवैयर्थ्यमिति न्यायाद् द्वयोरेव व्यापकताबोधकत्वमवर्जनीयमिति वाच्यम् VyutpaVā. 154.3; विनियोगम् ...। आत्मनि रक्षामात्मविषयकरक्षणम्। ... उत्तरत्र वक्ष्यमाणो विधिस्तु क्रमविधानार्थ इति नान्यतरवैयर्थ्यम् SetuBa. 59.27; मृतेति निमित्तद्वयं नैकम् अन्यतरवैयर्थ्यापत्तेरित्याह BālamBha. ii. 282.3 (*on* 2. 164); 1B futility or uselessness of one of the two (items) किं पुरुषस्य प्रवृत्तिशक्तिरस्ति न वा। ... यदि न शक्तिस्तर्हि पुरुषाङ्गित्वमनुपपन्नं स्यात्।... यदि तन्नास्ति शक्तिस्तर्ह्यन्यत्रापि स्यादित्यन्यतरवैयर्थ्यम् TattvPrakā. 97A. 6 (*on* ii. 2.9); अन्यतरवैयर्थ्यं स्पष्टमेव BālamBha. i. 360.16 (*on* 1.111); ii. 97.13 (*on* 2.83); 1C futility or uselessness of another अनपेक्षवेदगम्यकार्यस्य हेत्वन्वयायोग्यत्वादेव हि तदन्वयो निराकार्य इत्येकत्र तन्निराकरणे पुनस्तच्छङ्कानुदयादन्यतरवैयर्थ्यस्यापरिहार्यत्वात् MayūMāli. 8.33 (*on* i.2.1); 2 meaninglessness of one of the two (words) अग्नआयाहीत्यर्धर्चस्य पाठत एवोत्तरत्वलाभेनान्यतरवैयर्थ्यापत्तेरैन्द्रवायवाग्रं प्रथममहरित्यत्र प्राथम्यस्येवोत्तरत्वमात्रविवक्षितम् BhāṭṭCan. 101. 26 (*on* xvi. 1.5); गोपदलक्षणायां गवि चित्रान्वयो न स्यादिति लक्षणा न युक्ता तथापि पदद्वयमपि लक्षकम्। परस्परं तात्पर्यग्राहकत्वाद्य नान्यतरवैयर्थ्यमिति संप्रदायः VaiyāBhū. 157.11 (*on* 5.31); विभक्तिवचनशब्दौ कारकसंख्यापरौ प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः LaŚabdeŚe. i. 363.16.

**अन्यतरवैलक्षण्य** (anyatara-vailakṣaṇya) *n.* distinction of one of the two अनिर्वचनीयस्य जगतः सदसद्विलक्षणत्वेऽपि सद्विलक्षणत्वमात्रेणासत्पदेन ग्रहणम्।... श्रुतिष्वन्यतरवैलक्षण्येनैव प्रयोगदर्शनात् LalitāSaBh. 140.14 (*on* 181)

**अन्यतरव्यतिरेक** (anyatara-vyatireka) *m.* absence of one of the two (sentences) अर्थवादविधिवाक्ययोरन्यतरव्यतिरेकप्रयुक्तप्रवृत्त्यजनकत्वेनाकाङ्क्षा BhāṭṭCin. i. 50.19 (*on* i. 1.4)

**अन्यतरव्यतिषङ्ग** (anyatara-vyatiṣaṅga) *m.* syntactic connection with another ननु क्रियाकारकयोरन्यतरोच्चारणेऽवश्यमन्यतरस्यान्यतरव्यतिषङ्गे बुद्धौ भवति Kāśi. iii. 134.18 (*on* 5(5).107)

**अन्यतरव्यपदेश** (anyatara-vyapadeśa) *m.* 1 mention of any one of the many न त्वस्माकं देवता पिबति। किं तर्हि संकल्पविषयत्वेनैवोपयुज्यते। न च मिश्रसंकल्पेऽन्यतरव्यपदेशः संभवति तद्धितवत् समासस्य सापेक्षेष्वप्रवृत्तेः TantrVā. 812.2 (*on* iii. 2.41); 2 one of the two designations अत्रापीग्लक्षण एव गुणो यो ह्युभयोः स्थाने भवति। लभते सोऽन्यतरव्यपदेशम् Nyās. i. 43.24 (*on* i. 1.4); i. 99.20 (*on* i. 1.51); PadMañ. *on* KāśiVṛ. *on* P. i. 1.51 (178.11); उरण् रपरः - ऋवर्णस्य स्थाने यः अण् आदिश्यमानः स रप्रत्याहारपरो भवति। यो हि द्वयोः संबन्धी भवति सः अन्यतरव्यपदेशं लभते Rūpāva. 1.9 (*on* i. 1.4); अकारऋकारयोरुभयोः स्थाने भवन्नण् कथमृस्थानीयत्वेन रपरः स्यात्। उच्यते। यो ह्युभयोः स्थाने भवति लभतेऽसावन्यतरव्यपदेशम् Prasā. i. 59.15.

**अन्यतरव्यपाय** (anyatara-vyapāya) *m.* death of one of the two persons (विप्रलम्भशृङ्गारः) स चतुर्धा – पूर्वानुरागो मानः प्रवासः करुणश्च। ... संगतयोरेवान्यतरव्यपाये करुणः SaraKaṇṭhā. 625.14.

**अन्यतरव्यभिचार** (anyatara-vyabhicāra) *m.* deviation from, i.e. absence of one of the two मध्यमपरिमाणत्वमपि तस्य (आत्मनः) अनित्यत्वप्रसङ्गात् न - इति चेत्, न ... परमाणुषु अन्यतरव्यभिचारस्य तव सिद्धा(?द्धयां) सुकरनिरसनत्वात् TarkSaṁ. (Ā.) 55.9.

**अन्यतरव्यवस्थान** (anyatara-vyavasthāna) *n.* establishment of another अर्थक्रियासु भावानां कर्तृत्वस्य द्वयी गतिः। क्रमेण युगपद् वेति ... अनयोरन्यतरनिवृत्तावन्यतरव्यवस्थानादर्थक्रियाजनने भावानां न तृतीयप्रकारसंभवः ĀtmaSi. 69.16.

**अन्यतरव्यवस्थानियम** (anyataravyavasthā-niyama) *m.* rule of the establishment of another यत्र यत्प्रकारप्रतिषेधेन यदितरप्रकारव्यवस्थानियमस्तत्र न प्रकारान्तरसंभवः यथा नीलप्रकारप्रतिषेधेनानीलप्रकारव्यवस्थायां पीते अस्ति च तयोरन्यतरप्रकारनिषेधेऽन्यतरव्यवस्थानियमः TātpaṬ. (Vā.) 552. 18 (*on* iii. 2.14)

**अन्यतरव्यवस्थापन** (anyatara-vyavasthāpana) *n.* establishment of another न ह्येकतानेकते प्रतिस्पर्धिप्रकारान्तरवत्यौ तयोरन्यतरनिषेधेऽन्यतरव्यवस्थापनात् NyāyMa. 46. 5.

**अन्यतरव्यापक** (anyatara-vyāpaka) *adj.* which pervades one of the two अतीन्द्रिय उपाधिर्व्यापको न वा। ... उत्तरत्रापि नित्योऽनित्यो वा ... अनित्यत्वेऽपि हेतुसाध्ययोरुभयोर्व्यापक उभयाव्यापकोऽन्यतरव्यापको वा NyāyPari. 114.4.

**अन्यतरव्याप्तत्व** (anyatara-vyāptatva) *n.* pervadedness of another अपि चेद् वैलक्षण्यं नानिर्वचनीयत्वं जगतः। न च विरोधः। विरोधिनोरन्यतरनिषेधेऽन्यतरव्याप्तत्वानुभवात् KarmaNi. 2A.7.

**अन्यतरव्याप्ति** (anyatara-vyāpti) *f.* 1 pervasion of one of the two things साध्यतदभावयोरिव तद्व्याप्यत्वेनावधारितयोर्विरोधादेकत्र न निश्चयः किं तु संशयः, निर्णये वान्यतरव्याप्तिसंशय इति व्याप्त्वासिद्धिः TattvCin. ii(1). 878.3; 2 one of the two (types of) concomitances or pervasions अन्वयव्याप्तिरेव प्रधानभूता व्यतिरेकव्याप्तिरप्यन्वयसिद्धप्रतियोगिलाभात् समीची। तत्र अन्यतरव्याप्त्युदाहरणमात्रेणापि परार्थप्रयोगोऽपि चरितार्थः NyāyPari. 143.2.

**अन्यतरव्याप्यत्व** (anyataravyāpya-tva) *n.* the state of being pervaded by either of the two यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्र ... बहिःसत्त्वमनुमितौ भासते SiddhāMu. 73. 20 (*on* 144)

**अन्यतरव्यावृत्ति** (anyatara-vyāvṛtti) *f.* exclusion of another न च प्रयत्नेन बुद्धिरिह साध्यते बुद्ध्या वा प्रयत्नः इतरव्यावृत्त्या वान्यतरव्यावृत्तिः Kiraṇā. 102.9.

**अन्यतरशङ्का** (anyatara-śaṅkā) *f.* doubt regarding one of the two aspects उभयशब्दः सर्गप्रलयपरः पररैर्व्याख्यातः। तदुक्तम् ... जगतो बहूपादानकर्तृबहुकर्तृकत्वयोरन्यतरशङ्काव्यावर्तनसंभवेन निमित्तोपादानभेदनिवारकत्वाभावात् ŚrutaPra. ii. 166.26 (*on* i. 4. 25)

**अन्यतरशिरस्** (anyatara-śiras) *n.* one of the two heads, i.e. alternatives पूर्वपक्षं वक्तुमन्यतरशिरसो युक्तिमत्त्वेन निर्धारणाकाङ्क्षां दर्शयति ŚrutaPra. iB. 174. 28 (*on* i. 1. 5); ii. 637.27 (*on* iv. 4. 4); गन्धादिविशिष्टद्रव्यस्य नित्यानित्यसाधारणतया भासमानैर्द्रव्यत्वादिभिरेव तत्रान्यतरशिरो निर्णिनीषया विशेषकधर्मचिन्तायां तु गन्धवत्त्वम् ... उभयोरप्यनिष्कर्षकम् NyāyPari. 63.7.

**अन्यतरश्रुति** (anyatara-śruti) *f.* A one of the two scriptural passages यत्र तूभयत्र द्वितीया निर्दिश्यते तत्रान्यतरश्रुतिमात्रभङ्गस्य पूर्वपक्षसिद्धान्तयोरविशेषात् कथं नियमः VedāntKa. 520. 6 (*on* iv. 1.6); B any one of the two scriptural passages श्रुतिद्वयेन जीवेशयोर्भेदाभेदावुच्येते। न चान्यतरश्रुतिबाधो युक्तः TattvPrakā. 122B.12 (*on* ii. 3.43)

**अन्यतरश्रौतत्व** (anyataraśrauta-tva) *n.* the state of being prescribed by the Vedas of one of the two अणुत्वं गतिश्चोभयं श्रौतम्। अतो न कल्पनागौरवम्। अन्यतरश्रौतत्वे च न कल्पनागौरवम् ŚrutaPra. ii. 363.27 (*on* ii. 3. 23)

**अन्यतरषट्क** (anyatara-ṣaṭka) *n.* one of the two hexads, i.e. groups of six होमलिङ्गाः षट् षण्मन्त्रा आम्नाताः। तत्र षड् जुहोतीति श्रूयमाणो विधिरन्यतरषट्कस्य होमेषु विनियोगार्थमाहुतिवाद एव BhāṭṭCan. 67. 22 (*on* xiv. 4. 28)

**अन्यतरसंयोग** (anyatara-saṁyoga) *m.* A association or relation with another दुःखनिवृत्तिरेव सुखं चेत् - दुःखनिवृत्तौ सुखनिवृत्तिर्न स्यात्। तदा सुषुप्तावपि सुखान्वयप्रसङ्गः। अन्यतरनिवृत्तिरन्यतरसंयोगश्चेत् स्वापेऽपि दुःखसुखान्वयः प्रसजेत् ŚrutaPra. iB. 93.17 (*on* i. 1.1); B association or relation with one of the two निषेधस्य क्रत्वर्थपुरुषार्थोभयविधिहिंसासंयोगे ... एकेन वाक्येन तदुभयरूपबोधनस्याशक्यतया अन्यतरसंयोग एव स्वीकर्तव्ये ... शीघ्रप्रतीतिकपुरुषार्थहिंसासंयोग एवादर्तव्यः PūrvottaVāNaMā. 44. 2.

**अन्यतरसंवित्ति** (anyatara-saṁvitti) *f.* knowledge of one of the two अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः। तदान्यतरसंवित्तौ द्व्याकारं ग्रहणं भवेत् ŚlokaVār. 5(3).73 (290.6)

**अन्यतरसंस्पर्श** (anyatara-saṁsparśa) *m.* association with any one of the two सजातीयविजातीयव्यावृत्त्योर्न च भिन्नता। यतोऽन्यतरसंस्पर्शो विकल्पे न प्रकल्पते NyāyMañ. i. 289. 5.

**अन्यतरसंख्या** (anyatara-saṅkhyā) *f.* measure, i.e. quantity of one of the two विवादास्पदं धनमनास्थयोक्तम्। अधनाभियोगमहत्त्वाल्पत्वे तत्र विहितदण्डधनप्रायश्चित्तप्रत्याम्नानधनयोरन्यतरसंख्यया प्रत्येतव्ये इति तात्पर्यार्थः SmṛtiCan. iii. 237. 2.

**अन्यतरसंगति** (anyatara-saṅgati) *f.* semantic relation with one of the two संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत्। तद्विशेषपरत्वे तु स्यादन्यतरसंगतिः ŚāstrDī. 70.10 (*on* i. 4.6)

**अन्यतरसचिव** (anyatara-saciva) *adj.* A associated with one of the two things स्मृतिवचनेषु ... धारणादिष्वन्यतमोक्तावाप्यन्यतमान्तरसिद्धिरनुसंधेया। ततश्च व्यापनमेव धारणनियमनयोरन्यतरसचिवं हि ... शरीरत्वमवगमयति ŚrutaPra. ii. 152. 8 (*on* i. 4. 22); B assisted or helped by one of the two मातृशरीरं प्राप्तात् कर्मणः प्रथमं हृदयवस्तु स्त्रीन्द्रियपुरुषेन्द्रिययोरन्यतरसचिवोऽष्टद्रव्यकलापः तदनन्तरं चित्तमप्युत्पद्यते ŚrutaPra. ii. 307. 4 (*on* ii. 2. 30)

**अन्यतरसत्ता** (anyatara-sattā) *f.* existence of (only) one of the two persons पत्नीवदिति ... यजमानस्य पत्नीसंबन्धविशिष्टमग्निहोत्रं कर्म भवति। अस्येति षष्ठ्या मतुपा चोभयसंबन्धवैशिष्ट्यविधानादन्यतरसत्तायां न भवति BālamBha. i. 267. 20 (*on* 1. 89)

**अन्यतरसत्त्व** (anyatara-sattva) *n.* existence of another गोत्वाश्वत्वयोरेकस्मिन् गजे निषेधे गजत्वात्यन्ताभावव्याप्यत्वं निषेध्यतावच्छेदकमुभयोस्तुल्यमिति नैकतरनिषेधे अन्यतरसत्त्वम् AdvaiSi. 213. 3.

**अन्यतरसदसद्भाव** (anyatara-sadasadbhāva) *m.* presence and absence of one of the two (उपाधिद्वैविध्यमाह) भवन्ति ते च द्विविधा निश्चिताः शङ्किता इति। ... उक्तयोर्विशेषणयोरन्यतरसदसद्भावशङ्कायां तु शङ्कित उपाधिः स्यात् TārkiRa. 69.7.

**अन्यतरसद्भाव** (anyatara-sadbhāva) *m.* existence of one of the many 'भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति' भ्रातृस्वस्रोरेकशेषे भ्रातराविति वा पुत्रदुहित्रोरेकशेषे पुत्राविति। एतेषामन्यतरसद्भावे भवति तत्प्रतीतिः Subodhi. 77. 23 (*on* 2.145)

**अन्यतरसंदिग्धता** (anyatara-sandigdhatā) *f.* doubtfulness of either of the two वाद्यसिद्धप्रतिवाद्यसिद्धतया उभयान्यतरसंदिग्धतया च चतुःषष्टिद्वयेनाष्टाविंशकं शतमपरम् (हेत्वाभासानाम्) TātpaṬ. (Vā.) 332. 14 (*on* i. 2. 4)

**अन्यतरसंनिपात** (anyatara-sannipāta) *n.* occurrence or presence of one of the two 'यदग्नेऽवनृथेत्' इत्यादिलिङ्ग ... शेषित्वेनासंभवे ... तद्भेदे च वाक्यभेदावश्यकत्वादनुषङ्गेण निमित्तद्वयेऽप्येकं नैमित्तिकविधानं तेनान्यतरसंनिपातेऽप्येतत् BhāṭṭDī. iii. 192. 5 (*on* x. 1.1)

**अन्यतरसमर्थ** (anyatara-samartha) *adj.* competent for (performing) one अनुमन्त्रयेत प्राण्यभिमृशेद्वाणि कन्यां चेत्याश्वलायनोक्त्योः कन्यास्पर्शानुमन्त्रणयोरुभयसमर्थं प्रत्युभयम्, अन्यतरसमर्थं प्रत्यन्यतरदिति ViraMi. (Saṁskāra.) 401.19.

**अन्यतरसमवेतत्व** (anyatarasamaveta-tva) *n.* the state of being inherent in one of the two समवायिकारणतत्समवायिकारणयोरन्यतरसमवेतत्वं समवायिकारण-प्रत्यासत्त्वम् NyāySu. (Ja.) 337A.10 (*on* ii. 2.6)

**अन्यतरसमानाधिकरणत्व** (anyatara-samānādhikaraṇatva) *n.* community of locus of one of the two सामानाधिकरण्यप्रत्यये व्यक्त्योर्भेदाभेदौ चकास्त इत्यादि भामतीविरोधाद्येति चेन्न। ... अन्यतरसमानाधिकरणत्वेन अज्ञायमानतद्विषयकज्ञानत्वमेव तद्विरोधिता तज्ज्ञानत्वम् GuruCandr. i. 35. 14.

**अन्यतरसमाप्ति** (anyatara-samāpti) *f.* end or completion of one of the two (observances and Vedic studies) (समावर्तनाय) वेदव्रतयोस्समाप्तिरुत्तमः पक्षः। अन्यतरसमाप्तिर्मध्यमः VīraMi. (Saṁskāra.) 565. 18.

**अन्यतरसमारोप** (anyatara-samāropa) *m.* superimposition of one of the two सत्त्वं चैकं कार्यकारणयोः ... तत्र भेदाभेदयोरन्यतरसमारोपकल्पनायां किं तात्त्विकाभेदोपादानाभेदकल्पनास्त्वाहो तात्त्विकभेदोपादाना भेदकल्पना Bhām. 361. 14 (*on* ii. 1. 16)

**अन्यतरसमाश्रयण** (anyatara-samāśrayaṇa) *n.* act of resorting to one of the two (alternatives) न वा श्रोतृन् ... अन्यतरसमाश्रयणसंदेहसमुद्रतरङ्गपरंपरानिमज्जनेन क्लेशयेत् ŚivārkaMaDī. i. 118. 26 (*on* i. 1. 2)

**अन्यतरसमुच्चय** (anyatara-samuccaya) *m.* connection with one सूर्यवाक्ये चशब्दद्वयश्रवणेनान्यतरसमुच्चयस्यैकेनैव चशब्देन लाभे चशब्दान्तरस्यान्यसमुच्चयप्रापणार्थतया ... गुणविधिः संभवति MayūMāli. 64. 22 (*on* i. 4. 4)

**अन्यतरसंपत्ति** (anyatara-sampatti) *f.* attainment or accomplishment of one of the two उभयसंपत्तिसत्त्वे तु न केषामपि तन्मात्रफलेच्छूनां द्वितीयादिविवाहः। 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत' इत्यापस्तम्बोक्तेः। अन्यतरसंपत्त्यभावे उभयाभावे चापि द्वितीयादिविवाहः BālamBha. i. 229. 3 (*on* 1. 81)

**अन्यतरसंबन्ध** (anyatara-sambandha) *m.* connection (of dressing and worshipping) with one of the two persons आच्छादनार्हेण कन्यादा वरस्य चान्यतरसंबन्धे प्रमाणाभावादुभयोपयोगः कार्यः ManuBh. i. 219. 28 (*on* 3. 27)

**अन्यतरसंबन्धिन्** (anyatara-sambandhin) *adj.* connected with one of the two things न च अन्यतरसंबन्धिसमवेतकर्मासमवायिकारणकः संयोगः संभवति, संबन्ध्यन्तराप्रतिनियमप्रसङ्गात् TarkSaṁ. (Ā.) 70. 4.

**अन्यतरसंमानाश्रयण** (anyatarasammānāśrayaṇa) *n.* act of restoring to, i.e. acceptance of one or either of the two measures यदुक्तमेकादशिन्यां पक्षवेदिसंमानदर्शनं न स्यादिति। तत्र ब्रूमः। ... एकादशिन्यां हि सत्यामन्यतरसंमानाश्रयणात् क्लेशो भवेत् TantrVā. 650. 14 (*on* ii. 4. 25)

**अन्यतरसम्यक्प्रयोग** (anyatara-samyakprayoga) *m.* proper employment of one of the two दृष्टान्तेन व्याप्तिप्रतीतिः। ... अन्यतरसम्यक्प्रयोगेऽपि च व्याप्तिप्रतीतिः TātpaṬ. (U.) 40. 8 (*on* 2. 26)

**अन्यतरसवर्ण** (anyatara-savarṇa) *n.* **1** person belonging to the same caste of one of the two उत्पादकासावर्ण्येऽपि क्वचिदन्यतरसवर्णोत्पत्तिस्मरणात्रात्यन्तं तदुच्छेदः NyāySu. (So.) 13. 20 (*on* i. 2. 2); **2** one of the two accurences of the word *savarṇa* (सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः) अन्यतरोपादानेनान्यतरलाभेऽन्यतरसवर्णग्रहणवैयर्थ्यापत्तिः BālamBha. i. 275. 9 (*on* 1. 90)

**अन्यतरसाधक** (anyatara-sādhaka) *adj.* proving one of the two न च सद्भावासद्भावौ सहैकत्र संभवतः। न चान्यतरसाधको हेतुरुपलभ्यते NyāyBh. 39. 3 (*on* i. 1. 23)

**अन्यतरसाध्यत्व** (anyatarasādhya-tva) *n.* the state of being what is to be accomplished by either of the two (Sāmans) बृहद्रथन्तरयोरन्यतरत् स्यात्। कुतः। 'बृहता रथन्तरसाम्ना वा' इति ज्योतिष्टोमस्यान्यतरसाध्यत्वावगमात् NyāyMāVi. 560. 23 (*on* x. 5. 15)

**अन्यतरसाध्यविकल** (anyatarasādhya-vikala) *adj.* devoid of any one of the two probandums नेदं वाक्यार्थानुमानं किं तु सिद्धेऽर्थे वाक्यस्य लिङ्गतानुमानमेव। तत्र च दृष्टान्तोऽन्यतरसाध्यविकलः NyāySu. (Ja.) 276A. 10 (*on* ii. 1. 2)

**अन्यतरसापेक्षत्व** (anyatara-sāpekṣatva) *n.* expectancy of or dependence on either of the two न तावदेकस्यैवेन्द्रशब्दस्य युगपत् तद्धितसमासरूपवृत्तिद्वयसंभवः, अन्यतरसापेक्षत्वेन एकस्या अपि वृत्तेरनुपपत्तेः MīmāKau. iii(2). 89. 9 (*on* ii. 1. 15)

**अन्यतरसामग्री** (anyatara-sāmagrī) *f.* totality of causes of one सामान्यविशेषपरिच्छेदावरणापगमे कस्य प्रथमतरमुत्पादो भवेत्। अन्यतरोत्पादे तदितरस्याप्युत्पादप्रसङ्गात्, अन्यतरसामग्र्या अन्यतरप्रतिबन्धकत्वे च उभयोरप्यभावप्रसङ्गात् JñānBiPra. 37. 30.

**अन्यतरसामत्वपक्ष** (anyatarasāmatva-pakṣa) *m.* view of the state of having one Sāman (being employed at the Viṣuvat-sacrifice) समुच्चितोभयसामा जगत्सामा। नैवमपि युक्तम्। एवं हि सति जगत्सामेत्यनर्थकं स्यात्। ... अन्यतरसामत्वपक्षयोः पूर्वाभ्यामग्रताभ्यामवरुद्धत्वात् ŚāstrDī. 730. 9 (*on* x. 5.15)

**अन्यतरसामपक्ष** (anyatarasāma-pakṣa) *m.* view of having one Sāman (being employed at the Viṣuvat-sacrifice) नन्वाग्रयणाग्रान् गृह्णीयादित्येतावत्युक्ते कथं समुच्चयपक्षे निवेशः, अन्यतरसामपक्षेऽपि निवेशसंभवात् MayūMāli. 730. 13 (*on* x. 5. 15)

**अन्यतरसामान्यभेद** (anyatara-sāmānyabheda) *m.* either of universal or particular ननु अस्तीयमुभयरूपा बुद्धिः। किं तु अन्यतरवादिभिरन्यतरसामान्यभेदवासनानिबन्धना भ्रान्तिः औपचारिकी वा – इत्युक्तम् Śarka. 2. 24.

**अन्यतरसिद्ध** (anyatara-siddha) *adj.* **A** established in the view of one उभयवादिसिद्धस्य साधनत्वम्, नान्यतरसिद्धस्येति दिङ्नागेनोक्तम् 'तत्र यो वादिप्रतिवादिनिश्चितः स साधनम्' इति TātpaṬ. (U.) 224. 21 (*on* 5 (2). 130); **B** established in the view of one of the two प्रतिवादिवादिनोस्सिद्धं व्यावर्तकत्वं नापेक्षते किं तु तयोरन्यतरसिद्धमिति भावः GuruCandr. i. 384. 9.

**अन्यतरसिद्धि** (anyatara-siddhi) *f.* **1Ai** accomplishment of one of the two कारणाभावे बलसमुच्छ्रये वा परस्य दुर्गमुन्मुच्यापगच्छेत्। अग्निपतङ्गवदमित्रे वा प्रविशेत्। अन्यतरसिद्धिर्हि त्यक्तात्मनो भवतीत्याचार्याः ArthŚā. ii. 340. 1 (7. 15) (comm. शत्रुजयात्मविनाशयोरेकतरस्य); मे श्वराहयोः कलहे चण्डालस्येवान्यतरसिद्धिर्भविष्यति ArthŚā. iii. 53. 5 (9. 2); **1Aii** establishment of one of the two शक्तिसंकेतयोरन्यतरसिद्धिरिति चेत् न, तद्बीजनकत्वेन ज्ञातत्वस्यैव संबन्धत्वात् TattvCin. iv (2.) 656. 1; शास्त्रतोऽन्यतरसिद्धौ तत्प्राबल्यापेक्षया चक्रकापातः NyāySiA. 227. 30; यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद् बहिःसत्त्वमनुमितौ भासते SiddhāMu. 73. 20 (*on* 144); **1B** establishment of another एकतरदृष्टयैकतर (v.l. °दृष्टयान्यतर SāṁkhyaSūVṛ.)सिद्धेर्नापलापः SāṁkhyaPraSū. 1. 112; उपमानमित्युपमेयमिति च संबन्धिशब्दावेतौ तयोः एकतरोपादानेनैवान्यतरसिद्धिः KāvyālaṅSū. iv. 2. 1; (शब्दस्य) कार्यत्वानित्यत्वयोः परस्पराविनाभावादेकतरसिद्धावन्यतरसिद्धिर्भवत्येव NyāyMañ. i. 188. 31; स्वर्गकामशब्दः किं भावनापेक्षितं भाव्यं समर्प्येत् आहोस्विद् विध्यपेक्षितं नियोज्यम् उभयपरत्वानुपपत्तेर्वैरूप्यापातादन्यतरेणान्यतरसिद्धेः NyāyRaMā. 165. 22; अन्वयनियमे ... व्यतिरेकोऽप्यवर्जनीयः। अन्वयव्यतिरेकयोरन्यतरनियमस्यान्यतरसिद्धिनान्तरीयकत्वादिति बौद्धस्थितेः Kiraṇā. 145. 6; **2** ascertainment of one of the two (अन्यतरासिद्धः) असावन्यतरसिद्धवनन्तरं तु सम्यग् हेतुरुभयासिद्धो वा भविष्यति NyāyMañ. ii. 163. 6.

**अन्यतरस्थायिस्वर** (anyatara-sthāyisvara) *m.* one of the two basic tones (दूरस्थाभाषणे तारं शिरसा) दूरस्थाभाषणे कर्तव्ये शिरःस्थाने षड्जपञ्चमयोरन्यतरस्थायिस्वराश्रयेणांशस्वरविभागचतुश्चतुष्कसंमिश्रं कर्तव्यम् AbhinBhā. ii. 398. 16 (*on* 17. 130)

**अन्यतरस्नेहसंपादन** (anyatara-snehasampādana) *n.* act of forming or cultivating friendship with one of the two persons साम दानं च भेदश्च दण्डश्चेति चतुर्विधः। उपायस्सर्वकृत्येषु ...। भेदस्त्रिधान्यतरस्नेहसंपादनं पुरा NītiPra. 8. 78 (comm. एकेन स्नेहसंपादनम्)

**अन्यतरस्मरण** (anyatara-smaraṇa) *n.* **A** recollection of one of the two जन्मनाम्नोरन्यतरस्मरणोत्पादनेऽपि समानोदकभावो निवर्तते SmṛtiCan. vi. 37. 13; **B** recollection of another शब्दार्थयोः संबन्धिनोरन्यतरग्रहणे अन्यतरस्मरणमाविरस्ति SarvaDaKau. 41. 14; न हि चैत्रमैत्रादिषु साहचर्यशब्दादन्यतरदर्शनेनान्यतरस्मरणं जायमानं स्वोपपादकतया संबन्धान्तरकल्पनामपेक्षते ŚivārkaMaDī. i. 176. 22 (*on* i. 1. 4); श्रूयमाणेतिकारविसर्गादीनां वाचकता न तु ... अर्थप्रत्यायकत्वम्। ... अन्यथा वृषभो वृष इत्यादावप्यन्यतरेणान्यतरस्मरणेनैकत्रैव शक्त्यापत्तेः BhāṭṭCin. i. 61. 13 (*on* i. 1. 4)

**अन्यतरस्मृति** (anyatara-smṛti) *f.* one of the two Smṛti-texts (canons) सिद्धवस्तुपरत्वेऽन्यतरस्मृत्यनुगुणं वेदार्थो नेयः न तूभयानुगुणम् ŚrutaPra. ii. 210. 28 (*on* ii. 1. 1)

**अन्यतरस्वरूप** (anyatara-svarūpa) *n.* **1** one of the two forms यदावधारणं गुणान्तरव्यावर्तनक्षमम्, तदानीमविरोधासंभवेन प्राबल्यदौर्बल्यविभागाश्रयणस्य न्याय्यत्वात् ... अन्यतरस्वरूपत्वसिद्धिः ŚrutaPra. ii. 638. 29 (*on* iv. 4. 5); **2** one form (अन्यतरस्य कार्येऽन्यतरस्य विधानाद् गुणविधिः) अन्यतरस्वरूपेऽन्यतरविधेरशक्यत्वादुक्तमन्यतरकार्य इति MayūMāli. 84. 6 (*on* i. 4. 13)

**अन्यतरस्वीकार** (anyatara-svīkāra) *m.* acceptance of one of the two (options) क्रियायामिव वस्तुनि विकल्पासंभवादवश्यकर्तव्येऽन्यतरस्वीकारे क्लृप्तमूलत्वात् श्रुत्यनुसारिण्यः स्मृतयः प्रमाणम् PrakaVi. 387. 13.

**अन्यतरहविर्विनाश** (anyatarahavir-vināśa) *m.* loss or decay of one of the two sacrificial materials सत्यप्युभयश्रवणे यद्युभयं हविरार्तिमियादित्यन्यतरहविर्विनाशेऽपि भवत्येव पञ्चशरावः ManuBh. ii. 408. 2 (*on* 11. 123)

**अन्यतरहस्तच्छेदन** (anyatarahasta-cchedana) *n.* act of cutting off one of the two hands (उत्क्षेपकग्रन्थिभेदौ करसंदंशहस्तकौ। कार्यौ) करसंदंशोऽङ्गुल्यः तद्धीनौ यद्वा करसंपुटः करसंदंशः तद्धीनौ। अन्यतरहस्तच्छेदनमित्यर्थः BālaKri. i. 290. 24 (*on* 2. 278)

**अन्यतरहान** (anyatara-hāna) *n.* abandonment of one of the two (words) "चन्द्रादर्शने अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति चोदितस्य ह्यविशेषणस्य कालस्य पूर्वस्मिन्नाप्यहति विद्यमानत्वात्। चन्द्रादर्शनं नास्तीति चेत् न उत्तरस्मिन्नपि पूर्वाह्णेति चेत् अमावास्याया अनुपपत्तिः। नियोगतोऽन्यतर(हाने) वरं विशेषणहानिः SaṅkarKāBh. 20. 9 (*on* i. 2. 21)

**अन्यतरहेतु** (anyatara-hetu) *m.* one of the two causes युगपद्विरुद्धकार्यजननायोगात् ज्ञान उपलब्ध्यनुपलब्ध्योरन्यतरहेतुरास्थीयते VedāntDī. 126. 2 (*on* ii. 3.32)

**अन्यतरा** (anya-tarā) *f.* (declined pronominally) [AltGr. III. 583] 1 [Loc.] A optionally, variously, either way B additionally, inclusively 2 [Loc.] word or expression *anyatarasyām* 3 low-caste woman 1 [Loc.] A optionally, variously, either way उदुपधाद् भावादिकर्मणोरन्यतरस्याम् (निष्ठा सेण् न किन्) P. i. 2. 21; i. 2. 58; i. 2. 69; द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् P. ii. 2. 3; संज्ञोऽन्यतरस्यां कर्मणि P. ii. 3. 22; ii. 3. 34; तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् P. ii. 3. 72; ii. 4. 40; ii. 4. 44; ii. 4. 69; उपविदजागृभ्योऽन्यतरस्याम् P. iii. 1. 38; iii. 1. 41; iii. 1. 54; अक्षोऽन्यतरस्याम् P. iii. 1. 75; iii. 1. 122; समुच्चयेऽन्यतरस्याम् P. iii. 4. 3; iii. 4. 32; पादोऽन्यतरस्याम् P. iv. 1.8; iv. 1. 24; दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् P. iv. 1. 81; iv. 1. 103; iv. 1. 140; उदश्वितोऽन्यतरस्याम् P. iv. 2. 19; iv. 2. 48; iv. 2. 105; युष्मदस्मदोरन्यतरस्यां खञ् च P. iv. 3. 1; iv. 3. 46; iv. 3. 64; हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः P. iv. 3. 81; शलालुनोऽन्यतरस्याम् P. iv. 4. 54; iv. 4. 68; शूर्पादञन्यतरस्याम् P. v. 1. 26; v. 1. 53; विंशत्यादिभ्यस्तमडन्यतरस्याम् P. v. 2. 56; v. 2. 96; v. 2. 109; सर्वस्य सोऽन्यतरस्यां दि P. v. 3. 6; v. 3. 21; एनबन्यतरस्यामदूरेऽपञ्चम्याः P. v. 3. 35; v. 3. 44; बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् P. v. 4. 42; v. 4. 109; नञ् दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् P. v. 4. 121; वश्चास्यान्यतरस्यां किति P. vi. 1. 39; vi. 1. 59; अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे P. vi. 1. 169; vi. 1. 184; पूगेष्वन्यतरस्याम् P. vi. 2. 28; vi. 2. 54; निष्ठोपसर्गपूर्वमन्यतरस्याम् P. vi. 2. 110; vi. 2. 169; पुत्रेऽन्यतरस्याम् P. vi. 3. 22; vi. 3. 44; नगोऽप्राणिष्वन्यतरस्याम् P. vi. 3. 77; vi. 3. 110; सनः क्तिचि लोपश्चास्यान्यतरस्याम् P. vi. 4. 45; vi. 4. 70; चिण्णमुलोर्दीर्घोऽन्यतरस्याम् P. vi. 4. 93; vi. 4. 115; तुह्योस्तातङाशिष्यन्यतरस्याम् P. vii. 1. 35; जराया जरसन्यतरस्याम् P. vii. 2. 101; लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने P. vii. 3. 39; vii. 3. 43; vii. 4. 3; आपोऽन्यतरस्याम् P. vii. 4. 15; vii. 4. 41; अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् P. viii. 1. 13; प्रस्त्योऽन्यतरस्याम् P. viii. 2. 54; viii. 2. 56; तिरसोऽन्यतरस्याम् P. viii. 3. 42; viii. 3. 85; झयो होऽन्यतरस्याम् P. viii. 4. 62; युष्मदस्मदोरन्यतरस्यामन्वादेशे Vār. 1 *on* P. viii. 1. 26; MahāBh. iii. 373. 22 (*on* viii. 1. 26); हृदयाद्यालुरन्यतरस्याम् Vār. 5 *on* P. v. 2. 122; MahāBh. ii. 399. 18 (*on* v. 2. 122); तिह्योस्तादाशिष्यन्यतरस्याम् MahāBh. i. 131. 7 (*on* i. 1. 53); PariVṛ. (Sī.) 183. 9; MahāBh. i. 400. 11 (*on* ii. 1. 58); अन्यतरस्यां डाब् यथा स्याड्डापा मुक्ते प्रतिषेधोऽपि यथा स्यात् MahāBh. ii. 204. 12 (*on* iv. 1. 13); ii. 302. 3 (*on* iv. 3. 1); वश्चास्यग्रहणं शक्यमकर्तुम्। अन्यतरस्यां किति वेञो न संप्रसारणं भवतीत्येव सिद्धम् MahāBh. iii. 33. 19 (*on* vi. 1. 39); iii. 240. 8 (*on* vii. 1. 1); सदातनमिति। ... सदाशब्दात् तत्र भव इत्यर्थे अव्ययात्त्यबिति त्यप्प्रत्यये कृते सर्वस्य सोऽन्यतरस्यां दीत्यत्र योगविभागात् सदाशब्दस्य सोऽन्यतरस्यां भवति NyāySu. (Ja.) 225A. 6 (*on* i. 4. 6); **1B** additionally, inclusively प्राणिस्थादातो लजन्यतरस्याम् P. v. 2. 96; लजन्यतरस्यामिति समुच्चयः Vār. 1 *on* P. v. 2. 97; MahāBh. ii. 395. 10 (*on* v. 2. 97); अनेकार्थत्वात् निपातानाम् अन्यतरस्यामिह समुच्चये वर्तते। तथा च वार्तिककारेणोक्तम् अन्यतरस्यामिति समुच्चय इति Nyās. ii. 94. 17 (*on* v. 2. 97); तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम्। किमपि विचित्रा धात्रा सृष्टिरियं भुवनकोषस्य AnargharaRā. 2. 50; **2** [Loc.] the word or expression *anyatarasyām* आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति। बहुलम् अन्यतरस्याम् उभयथा वा एकेषामिति MahāBh. i. 105. 20 (*on* i. 1. 44); i. 300. 2 (*on* i. 4. 1); i. 407. 12 (*on* ii. 2. 3); i. 457. 1 (*on* ii. 3. 32); वक्ष्यति डाबुभाभ्यामन्यतरस्याम् इत्यत्रान्यतरस्यांग्रहणस्य प्रयोजनम् डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्यातामिति MahāBh. ii. 203. 15; (*on* iv. 1. 7); षष्ठी समासापवादोऽयं योगः। अन्यतरस्यांग्रहणात् सोऽपि भवति। पूरणेति प्रतिषेधश्चात एवान्यतरस्यांग्रहणसामर्थ्यान्न प्रवर्तते KāśiVṛ. *on* ii. 2. 3; *on* ii. 3. 34; छन्दसि विषये बहुलमदो घस्लृ आदेशो भवति। ... अन्यतरस्यांग्रहणमेव कस्मान्न क्रियते तदेवोत्तरार्थमपि भविष्यति KāśiVṛ. *on* ii. 4. 39; अन्यतरस्यांग्रहणेन लज् विकल्प्येत Nyās. ii. 94. 15 (*on* v. 2. 97); अभिनिविशश्चेत्यत्र परिक्रयण इत्यतोऽन्यतरस्यांग्रहणानुवर्तनाद्विकल्पेन कर्मसंज्ञाविधानात् सप्तमी कृता Pradī. ii. 326A. 31 (*on* ii. 1. 1); ii. 507B. 1 (*on* ii. 3. 32); 'हृक्रोरन्यतरस्याम्' इत्यादावन्यतरस्यांग्रहणे वाग्रहणे चोभयत्रविभाषास्विष्टसिद्धिः PadMañ. *on* KāśiVṛ. *on* P. i. 1. 44 (159. 11); *on* P. i. 2. 22 (297.9); दशरथापत्यमित्यादिसमासार्थम् ... द्वितीयान्यतरस्यांग्रहणानुवृत्तिरुक्ता न्यासकृता PariVṛ. (Sī.) 70. 8; 175. 9; अन्यतरस्यामित्यनुवृत्तेः समासोऽपि उपगवपत्यमिति PrakriKau. i. 697. 2; LaŚabdeŚe. i. 88. 12; वेत्यनुवर्तमानेऽन्यतरस्यांग्रहणमुत्तरसूत्रे चकारेण तस्यानुकर्षणार्थम् Prasā. i. 453. 18; i. 509. 23; ननु च पूर्वसूत्रादिहान्यतरस्यांग्रहणं न स्वर्यते Prasā. i. 606. 18; i. 888. 15; नीलादिशब्देभ्यो मतुपः प्रसक्तिर्नास्तीत्येतदसिद्धम् ... सूत्रगतस्य अन्यतरस्यांग्रहणस्य सर्वत्रैव मत्वर्थीयप्रकरणे मतुप्समुच्चयार्थत्वेन अनुवृत्तेरिष्टत्वात् PūrvottaVāNaMā. 121. 18; द्वितीयं भिक्षायाः द्वितीयभिक्षा। ... अन्यतरस्यांग्रहणसामर्थ्यात् 'पूरणगुण' इति निषेधं बाधित्वा पक्षे षष्ठीसमासः। भिक्षाद्वितीयम् SiddhāKau. 173B. 1 (*on* ii. 2.3); 226A.1 (*on* iv. 1. 92); 'परिक्रयण' इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेरस्य वैकल्पिकत्वम् LaŚabdeŚe. i. 468. 5; आरम्भसामर्थ्यादेव विकल्पे सिद्धेऽन्यतरस्यामिति स्पष्टार्थम् LaŚabdeŚe. ii. 163. 13; ii. 261. 18; ii. 307. 10 [TrikāŚe. iii. 4. 6; KośaKaTa. 2. 2975]; **3** low-caste woman ब्राह्मणाः क्षत्रियाः वैश्याः सवर्णापाणिसंग्रहम्। अकृत्वान्यतरापाणेः पतन्ति नृप संग्रहात् MārkP. 113. 34.

**अन्यतरांश** (anyatarāṁśa) *m.* **1** zodiacal sign or place of (a planet that is) othar than (the one having highest degree) **2** one of the two views or sides (of an argument) **3A** one of the many parts, aspects or elements **B** one of the two parts, aspects or elements **4** one part or aspect **1** zodiacal sign or place of (a planet that is) othar than (the one having highest degree) (नवमे) शना मृत्युवदग्निकणश्च। स्वांशेऽपि। अन्यतरांशे च JaimiUpaSū. iii. 3. 72; **2** one of the two views or sides (of an argument) यदपि च नित्यानित्यपृथक्त्वैकत्वसामान्यविशेषव्यतिरेकाद्येकान्तप्रतिपादनं तदपि पक्षपाताहतेऽन्यतरांशनिरूपणाशक्तेः TantrVā. 81. 8 (*on* i. 3. 2); **3A** one of the many parts, aspects or elements संबन्धमात्रं कृत्वा निवृत्तव्यापारायां श्रुतावन्यतरांशनिवेशो योग्यत्वादाश्रयितव्यः TantrVā. 353. 8 (*on* ii. 1. 1); **3B** one of the two parts, aspects or elements सर्वं हि जगत् स्वभावद्वयान्तर्भूतम् ... न च स्वभावान्तरमस्ति, सत्त्वगुणत्वादयो ह्यन्यतरांशपातिनः TātpaṬ. (U.) 44. 15 (*on* 2. 36); कार्यपदार्थयोः ... सप्तमाष्टमयोरन्यतरांशेन चतुर्थोत्तरषट्कान्तर्भावादन्यतरत्रारम्भे कर्तव्ये सत्यविशेषादुत्तरषट्क एवारम्भः NyāyRaMā. 178. 4; विशिष्टहेतौ विशेषणविशेष्ययोरन्यतरांशासिद्ध्यभिप्रायेण कर्मफलाल्पास्थिरत्वब्रह्मज्ञानफलानन्तास्थिरत्वज्ञानहेतुक इत्युक्तम् ŚrutaPra. iB. 88. 13 (*on* i. 1. 1); ननु ज्ञाने सत्त्वगुणत्वज्ञेयत्वादिस्वभावसद्भावात् कथं निःस्वभावत्वम्। मैवम्। सत्त्वगुणत्वादीनामप्यन्यतरांशपातित्वात् YuktiSneha. 21. 17 (*on* i. 1. 2); **4** one part or aspect अन्यतरांशान्वयेऽन्यतरविवेकात्सिद्धो ग्राह्यग्राहकयोर्भेदः Kāśi. ii. 135. 10 (*on* 5 (3). 85); ii. 138. 6 (*on* 5 (3). 93)

**अन्यतरांशवत्** (anyatarāṁśa-vat) *adv.* like one of the two parts or aspects अनुमानमन्तर्णीतं नाविभागं द्व्यात्मकम् अविभागत्वाद् अन्यतरांशवत् Kāśi. ii. 125. 10 (*on* 5 (3). 64)

**अन्यतराकाङ्क्षा** (anyatarākāṅkṣā) *f.* **1** expectancy of (only) one, one-sided requirement (a definition of 'position') उभयाकाङ्क्षालक्षणसंबन्धाभावे ह्यन्यतराकाङ्क्षालक्षणः संबन्धो गृह्यते न संभवे TantrVā. 832. 9 (*on* iii. 3. 11); एकत्वं तु ... ग्रहमेव द्वारमवलम्बिष्यते। तत्स्यतयावगमादन्यतराकाङ्क्षापि हि संबन्धकारणमेव TantraRa. 55. 2; अन्यतराकाङ्क्षालक्षणत्वेन च विप्रकृष्टः (संबन्धः) NyāySu. (So.) 37. 9 (*on* i. 2. 7); अन्यतराकाङ्क्षयापि संबन्धोऽपि ... भविष्यति NyāySu. (So.) 43. 14 (*on* i. 2. 7); 77. 15 (*on* i. 2. 22) पश्चात्तनार्थवादानर्थक्यपरिहाराय ... अन्यतराकाङ्क्षयार्थवादस्यान्वये सत्यपि निर्णीतार्थत्यागायोगात् तदनुरोधेन अर्थवादस्यैव घृताघृतलक्षकत्वं स्यात् UpaParā. 19. 24; यत्र च परस्पराकाङ्क्षाविरहेऽपि अन्यतराकाङ्क्षा ... तत्रापि ... एकस्य द्वयोर्वा आकाङ्क्षां परिकल्प्य भवत्येवान्वयः MīmāKau. i. 185. 9 (*on* i. 4. 3); ii. 166. 2 (*on* iii. 1. 12); विकृत्याकाङ्क्षावदन्यतराकाङ्क्षाया अप्यनन्यथासिद्धत्वाद्विनियोजकत्वम् MīmāKau. ii. 226. 18 (*on* iii. 2. 1); अन्यतराकाङ्क्षाबललभ्यसंबन्धानुमन्त्रणमन्त्रकल्प्यवसन्तादिदेवतापेक्षया उभयाकाङ्क्षाबललभ्ययाज्यामन्त्रवर्णकल्प्यसमिदादिदेवतानां बलवत्त्वेन ... नियमविध्ययोगात् MīmāKau. iii (2). 147. 24 (*on* ii. 2. 2); BhāṭṭDī. i. 109. 23 (*on* ii. 2. 2); षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य तत्रापि

पाठक्रमात् ... संनिधानस्य प्राबल्यम् BhāṭṭDī. i. 252. 22 (*on* iii. 3. 5); ii. 158. 19 (*on* v. 1. 3); उपहोमादीनां वैकृतानामन्यतराकाङ्क्षयैव ग्रहणम् BhāṭṭDī. iii. 270. 16 (*on* x. 4. 1); विश्वजिन्न्यायेन ... दर्शपूर्णमासाङ्गत्वं स्वीक्रियत इति। मैवम्। स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षया संबन्धः स्यात् MīmāNyāPra. 216. 12; 219. 17; 225. 18; **2A** expectancy of any one of the two न ह्यन्यतराकाङ्क्षा अन्वयहेतुः अपि तूभयाकाङ्क्षा NyāyKuA. ii. 84. 2; द्वयोश्च परस्पराकाङ्क्षायां संबन्धः, न त्वन्यतराकाङ्क्षायाम् Pradī. iii. 3B. 16 (*on* iii. 1. 1); **2B** expectancy of one of the two कर्मणाम् ... पुरुषाभिलषितमाकाङ्क्षतां संनिधानादन्यतराकाङ्क्षानिबन्धनो रक्तपटन्यायेन संबन्धः Bhām. 610.7 (*on* iii. 3. 25); प्रकृतानां विशिष्य स्तोत्रादौ विनियोगेन निराकाङ्क्षात्वादन्यतराकाङ्क्षायुक्तसामान्यवाक्येन कथं विनियोगः MīmāKau. ii. 264. 2 (*on* iii. 2. 21); उभयाकाङ्क्षालभ्यत्वेन याज्याया एव देवताकल्पकत्वसंभवे अन्यतराकाङ्क्षालभ्यानुमन्त्रणमन्त्रस्य तदभावादुक्तवाक्यानाम् ... पञ्चवैजात्यसिद्धिः LaCandr. 825. 36; प्राकरणिकीनां क्रियाणां विश्वजिन्न्यायेन फलकल्पने रात्रिसत्रन्यायेनार्थवादिकफलकल्पने वान्यतराकाङ्क्षया फलसंबन्धः कल्प्येत SiddhāTa. 35. 26; आस्तां त तयोस्त्वाष्ट्रं पात्नीवतमित्यादावियान्यतराकाङ्क्षायाः ... अन्वयः BhāṭṭCin. ii. 51. 4 (*on* i. 4. 2).

**अन्यतराकाङ्क्षातस्** (anyatarākāṅkṣā-tas) *adv.* in comparison with one-sided requirement प्रयाजानाम् ... अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसी MīmāNyāPra. 216. 19; अङ्गत्वकल्पने तूक्तयोभयाकाङ्क्षया संबन्ध इति अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलवती SiddhāTa. 36. 2.

**अन्यतराकार** (anyatarākāra) *m.* 1 any one of the two forms अन्यतरलक्षणराहित्यरूपम् अननुभूतित्वमन्यतराकारविरहप्रयुक्तमिति सोपाधिक(त्व)मित्यर्थः ŚrutaPra. iA. 135. 13 (*on* i. 1. 1); 2 one form इदं जगत् ... सत्यम् उत मिथ्या ... तत्र मिथ्येत्युत्तरं वक्तव्यम्। तत्रान्यतराकारोपस्थापके आकारान्तरनिषेधके च शब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नम् ŚrutaPra. iA. 233. 10 (*on* i. 1. 1)

**अन्यतराक्रान्तत्व** (anyatarākrānta-tva) *n.* the state of being affected by one of the two समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम्। ... न चेदमनुमानम्, आश्रयासिद्धिबाधयोरन्यतराक्रान्तत्वात् NyāyKuA. ii (2). 28. 7.

**अन्यतरागम** (anyatarāgama) *m.* one of the two scriptures युक्तिः ... सा खल्वन्यतरागमप्रामाण्यमुपोद्बलयन्ती अन्यतरागमबाधया अर्थनिर्णयाय प्रभवति। अन्तरागमसिद्धधर्म्याधारश्रयेणाश्रयासिद्धयाद्यनवकाशात् NyāySu. (Ja.) 240B. 12 (*on* ii. 1. 2); 241A. 10 (*on* ii. 1. 2)

**अन्यतराग्नि** (anyatarāgni) *m.* one of the two fires यस्योभावनुगतावग्नी ... तस्य प्रायश्चित्तिरित्यत्र ... श्रुतस्याग्न्युभयत्वस्याविवक्षयान्यतराग्न्यनुगमनेऽपि ... आधानं सहितयोरेवाग्न्योरुत्पादनक्षमम् VidhiRa. 29 (151. 1)

**अन्यतराग्नेयवत्** (anyatarāgneya-vat) *adv.* like the ones, i.e. the properties belonging to one of the two fires न चैव सौर्येऽपि ... भेदकत्वापत्तिः। तत्राकाङ्क्षावशेन कल्प्यस्य प्रकृतिवच्छब्दस्यैकप्रकृतिधर्मैरेव निराकाङ्क्षत्वोपपत्तेः अन्यतराग्नेयवदित्येव कल्पनात् MīmāKau. ii. 87. 13 (*on* ii. 3. 24)

**अन्यतराग्रहण** (anyatarāgrahaṇa) *n.* non-apprehension of one सिद्धं बाह्यालम्बनमेव ज्ञानम्। एवं तावदन्यतराग्रहणेऽन्यतरो न गृह्यते Kāśi.ii.133.9 (*on* 5 (3). 78); ii. 133. 12 (*on* 5 (3). 78)

**अन्यतराङ्ग** (anyatarāṅga) *n.* 1 accessory to one of the two ननु संभावितमूलं वाक्यमाप्तविशेषात् प्रमाणं भवति, न चेहान्यतराङ्गत्वावधारणे किंचिन्मूलं संभवति NyāyRa. 901. 15 (*on* 7. 199); 901. 20 (*on* 7. 200); 2 one of the two elements (of Tāla) अयुगन्यतराङ्गं स्यात् प्रवृत्तं स्थितवन्मतम् SaṃgīRa. iii. 73. 4 (5. 126); 3 any one of the two limbs अन्यतरत्वं तदतद्वृत्ति, न च तदतद्वृत्तिसामानाधिकरण्येन ज्ञायमानस्य दोषत्वम् ... अन्यतराङ्गवैकल्यज्ञानोपजीव्यस्य तुल्यबलत्वज्ञानस्यैव प्रतिबन्धकत्वात् TattvCin. ii. (1). 989. 5; ii. (1). 989. 1.

**अन्यतराङ्गिरस** (anyatarāṅgirasa) *m.* one of the two principal sentiments दशाङ्कं नाटकम् परम्। वीरशृङ्गारयोरन्यतराङ्गिरसनिर्भरम् BhāvPra. (Śā.) 237. 6 (8)

**अन्यतरातिक्रम** (anyatarātikrama) *m.* transgression of one of the two (prescribed rites) (अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्) अन्यतरातिक्रमैकाहाद्यतिक्रमयोस्तु गौतमोक्तः क्रमादाज्यहोमः समिद्द्वयहोमश्च ManvaVi. 234. 13 (*on* 2. 187)

**अन्यतरातिदेश** (anyatarātideśa) *m.* transfer of one of the two ऐन्द्राग्नैककपालयोर्मध्येऽन्यतरातिदेशेनैव तत्प्राप्तिसिद्धेरितरानर्थक्यम् BhāṭṭDī. ii. 346. 24 (*on* vii. 1. 5)

**अन्यतरातिशय** (anyatarātiśaya) *m.* excess of one of the two (items) (अज्ञेभ्यो ग्रन्थिनः श्रेष्ठाः) उभयोः प्रशस्यत्वे सत्यन्यतरातिशयविवक्षायां श्रेष्ठ इतीष्ठनो विधानादीषदध्ययना अज्ञास्तेभ्यः समग्रग्रन्थाध्येतारः श्रेष्ठाः ManvaMu. 521. 6 (*on* 12. 103)

**अन्यतरातिसेवनता** (anyatarātisevana-tā) *f.* the state of consuming excessively another (taste) केषांचिन्मधुरे भवत्यतितराकाङ्क्षाम्लसंसेवनाद्वा वान्यतरातिसेवनतया वाञ्छा भवेदादरात् KalyāKā. 5. 42.

**अन्यतरातीन्द्रियाधारत्व** (anyatarātīndriyādhāra-tva) *n.* the state of being one transcendental substratum इन्द्रियमनःसंनिकर्षत्वव्यपदेशकोऽप्रसिद्धश्च ...। नन्वन्यतरातीन्द्रियाधारत्वमिन्द्रियार्थसंनिकर्षस्याप्यस्ति उभयातीन्द्रियाधारता आत्ममनःसंनिकर्षस्यापि नास्ति NyāyVārPari. 506. 7.

**अन्यतरात्मकत्व** (anyatarātmaka-tva) *m.* the state of being of the nature of the one सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा साध्यम्। तथा चोभयात्मकत्वेऽन्यतरात्मकत्वे वा, तादृग्भेदासंभवेन ताभ्यामर्थान्तरानवकाशः AdvaiSi. 57. 1.

**अन्यतरात्यन्तबाधक** (anyatarātyantabādhaka) *adj.* which excessively contradicts or impedes one of the two (rules) (ईश्वरपरिच्छेदः) नियमे हि विरोधनयात् परानुत्पत्तिरेव। न च विषयव्यवस्थया विरोधपरिहारे सति अन्यतरात्यन्तबाधकापच्छेदन्यायावतारो युक्तः NyāySiA. 226. 19.

**अन्यतरादान** (anyatarādāna) *m.* absence of giving (punishment etc.) to one of the two अभिज्ञानेन चास्य गृहे जनमुभयं याचेत। अन्यतरादाने यथोक्तं पुरस्तात् (निक्षेपं स्तेयदण्डं च) ArthŚā. ii. 78. 7 (3. 12)

**अन्यतरादोष** (anyatarādoṣa) *adj.* (used as noun) (that) which forms another unspoiled portion (of Agnihotra-milk) विष्यन्दमानम् ... अन्तः परिधिदेशे निर्वपेयुः। अन्यतरादोषे व्यासिच्य प्रचरेयुः ĀśvaŚS. I. iii. 10. 25.

**अन्यतराधिकरणनिर्णय** (anyatarādhikaraṇa-nirṇaya) *m.* ascertainment of one of the two theories वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः NyāyBh. 6. 11 (*on* i. 1. 1); विचारणा हि नाम संशयोत्तरकालभाविनी साधनदूषणप्रयोगरूपान्यतराधिकरणनिर्णयावसाना NyāyVār. 119. 12 (*on* i. 1. 33); जल्पे ... यत्र निर्णयावसानत्वमस्ति न ततोऽजल्पादन्यतराधिकरणनिर्णयावसानत्वेन वादो व्यवच्छेत्तुं शक्यते NyāyVārPari. 340.5

**अन्यतराधिकार** (anyatarādhikāra) *m.* direct reference to one of the two यद्यपि विज्ञानप्रमाणयोरन्यतराधिकारेण संस्कारनिर्णययोर्व्युदासः विज्ञानाधिकारे हि तत्पूर्वकमनुभवकारणमनुमानमिति सूत्रसंबन्धः NyāyVārPari. 709. 7.

**अन्यतराधिकारिक** (anyatarādhikārika) *adj.* falling under the entitlement of one of the two (spouses) रोगादिना अशक्तौ कार्यान्तरव्यापृते वान्यतराधिकारिककर्मसु यद्यपि स्वामिनः कालादिवत् प्रयोगविध्यविषयत्वात् ... न प्रतिनिधिप्रसक्तिः BhāṭṭDī. ii. 258. 22 (*on* vi. 3. 7); न हि दम्पत्योः सह विहितमाधानादिकमन्यतराधिकारिकं कस्यापि संमतम् BālamBha. ii. 201. 15 (*on* 2. 145)

**अन्यतराधिगमहेतु** (anyatarādhigama-hetu) *m.* cause or means of the knowledge of any one of the two अभेदे हेतुभावादेकयैव बुद्ध्योभयाधिगमो युक्तः, नैकत्वेऽन्यतराधिगमहेतुर्नास्तीति शक्यं वक्तुम् BrahmSi. 66. 4.

**अन्यतराध्यास** (anyatarādhyāsa) *m.* superimposition of one of the two (*viz.* object and knowledge) न चोभयाध्यासः शून्यवादप्रसङ्गात्। अन्यतराध्यासे च विनिगमकमनुवृत्तव्यावृत्तत्वप्रकाशजडत्वादिकमेव AdvaiSi. 472. 13; विषयविषयिणोरन्यतराध्यासे आवश्यके LaCandr. 472. 35.

**अन्यतरानतिपात** (anyatarānatipāta) *m.* non-transgression, i.e. non-overextension of one of the two न च सेवा दुःखहेतुः सेवात्वादिति वाच्यम् ... एतद्व्यतिरिक्तसेवा दुःखहेतुः सेवात्वात् एतत्सेवावद् इत्यत्रापि व्यतिरेकोपलक्षितव्यक्तिद्वयेंऽशतः सिद्धसाधनबाधयोरन्यतरानतिपातात् NyāySiA. 221. 11.

**अन्यतराननुवृत्ति** (anyatarānanuvṛtti) *f.* absence of continued existence, i.e. persistence of one of the two अस्ति च भेदग्राहिणी सत्यपि तस्मिन्नसत्त्वादिति हेतुजनिता दृष्टिरिति। (न चैते बाध्यबाधके। अन्यतराननुवृत्तिप्रसङ्गात्) NyāySu. (Ja.) 364B. 4 (*on* ii. 2. 6)

**अन्यतराननुष्ठान** (anyatarānanuṣṭhāna) *n.* non-performance of one of the two (rites) 'आहवनीये जुहोति' इति वाक्येन होमत्वादाहवनीयस्य स्थानत्वं प्राप्तम् एवमनेकहोमविषयवाक्यद्वयेऽन्यतराननुष्ठानगर्भोऽन्यतरपरिग्रहविरोधोऽस्त्येव ŚrutaPra. ii. 423. 20 (*on* iii. 1. 25)

**अन्यतरानभिधान** (anyatarānabhidhāna) *n.* non-expression of one of the two (semantic relations) कृदादावपि कर्त्राद्यभिधानादेवाभिधानव्यवस्था अन्यतरानभिधाने तृतीयेति तु सूत्रार्थः VaiyāBhū. 6. 18 (1. 2)

**अन्यतरानर्थक्य** (anyatarānarthakya) *n.* futility of one of the two (items) सिद्धान्तेऽपि गुणफलयोः ... संबन्धस्य वक्तव्यत्वात् प्राप्तभावनायां च गुणफलोभय-

NyāyPari. 16. 8; अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम् PrakriKau. i. 205. 4: एकत्रानित्यत्वमन्यत्र कार्यरूपस्य निर्मूलत्वम् AṇuBh. 133. 4 (*on* ii. 2. 16); 12C in the latter half or second quarter (of a verse) स्यात् कलाङ्गुल्या कनिष्ठया तया चानामयान्यत्र SaṃgīRa. iii. 18. 2 (*on* 5 (1) 33); विष्णवाख्यमुक्तमन्यत्र ह्यर्ध्वरेतं च तत्प्रति AnuVyā. 7B. 2 (*on* 1. 1); 13A on the contrary अन्यत्र कर्म चैव कर्मविपाकं च MaVastuAva. iii. 66.8; श्रोणः कोटिकर्णः ... सार्थं न पश्यति नान्यत्र गर्दभयानमेव Divyāva. 4. 15; सर्वजम्बुद्वीपादन्नाद्यं परिक्षिणमन्यत्र राज्ञः कनकवर्णस्य Divyāva. 181.32; न खलु पुनर्भिक्षवो मायादेवी बोधिसत्त्वकुक्षिगते गुरुकायतां संजानीते अन्यत्र लघुतामेव मृदुतामेव सौख्यतामेव LaliVi. 53.1; न च केवलमात्मार्थं ध्यायत्यास्फानकं ध्यानम्। अन्यत्र करुणाचित्तो भावी लोकस्य विपुलार्थम् LaliVi. 189. 20; समनुस्मरमाणश्च कस्यचिदाचक्षेदन्यत्रैक एवात्मनाध्यात्मं संतप्येत् SaddhaPuṇ. 72.5; 52.10; 225.7; वयं दरिद्राः ...। सचक्षुषः शुद्धपटाभिशोभिता नान्यत्र हीनाः कनकेरलंकृताः ŚatTrayī. 730; अधर्माः ... न लक्षणतः कल्प्याः। तेऽन्यत्र संव्यवहारार्था अभिधीयन्ते LaṅkāSū. 1.43(110) (8.19); 13B on the other hand एकत्रोन्नतगात्रगौरवभरात् प्राप्ते तथा नम्रतामन्यत्र श्रियमुद्वहत्यतिलघुं तुङ्गे भुजङ्गेश्वरे EI. ii. 333. 1; अन्यत्रानृजु वर्त्म Subhāṣi. 1004; 14 in separate or different place अकृतात्कारणाद् अन्यत्र पृथग्भूतम् VedāntKa. 97. 17; (*on* i. 1. 4) मलयजरसबिन्दुर्बाधते नेत्रमन्तर्जनयति च स एवाह्लादमन्यत्र गात्रे Subhāṣi. 307; पुष्पेऽन्यत्रावकाशो निपुणमपहतो सौरभालोभनाभिः Subhāṣi. 934; 15 the word *anyatra* अन्यत्र घायेद् विषु चित् सुकं किं स्विदन्तरेणैकपदेऽहहोत्र:। ... अन्यत्र। इति वर्जने GaṇRa. 1. 8 (19. 21); ŚrutaPra. iB. 79. 16 (*on* i. 1.1); iB. 147. 25 (*on* i. 1.4)

**अन्यत्रकरण** (anyatra-karaṇa) *m.* illegitimate son वा महाव्याहृतीनां स्थाने चतस्रोऽन्यत्रकरणस्य ŚāṅkhāGS. iii. 13. 5 (comm. अन्यजातः पुरुषः तस्य) KauṣīGS. iii. 15. 5.

**अन्यत्रग** (anyatra-ga) *adj.* referring or applicable to another अन्यत्रगैः शब्दैः उक्तन्यायैः समन्ततः एको नारायणो देवो भण्यते AnuVyā. 10B. 7 (*on* 1. 1); NyāySu. (Ja.) 153B. 10 (*on* i. 1. 12)

**अन्यत्रगत** (anyatra-gata) *adj.* going to, i.e. perceiving another शष्पाणीव विचिन्वन्तमन्यत्रगतमानसम्। वृकीवोरणमासाद्य मृत्युरादाय गच्छति MahāBhā. xii. 169. 12; क्षेत्रापणगृहासक्तमन्यत्रगतमानसम् ... मृत्युरादाय गच्छति ViṣṇuSm. 20.42; MatsyaP. 201. 8; अन्यत्रगतचित्तोऽपि चक्षुषा रूपमीक्षते। तत्संकेताग्रहस्तत्र स्पष्टः PramāVār. 3. 175; यथान्यत्रगतविकल्पचेतसोऽपि ... कल्पनाकलङ्काङ्कितैव धीरुपजायते TattvSaṃPañ. 222. 10 (*on* 668)

**अन्यत्रत्य** (anyatra-tya) *adj.* A existing in another thing अन्यत्रत्यो यथान्यत्र प्रकारोऽन्वयमृच्छति तथा धर्मा अपीष्यन्ते PrakaPañ. 493. 15; B belonging to or coming from any other place नान्यत्रत्यो दीक्षितोऽपि स हि मुक्तेरभाजनम् SkandP. iv. 85. 15; C pertaining to (the view or theory of) others अन्यत्रत्यो ह्यपवर्गः कुतश्चिन्मुक्तिः PratyabhiVi. i. 26. 2 (*on* i. 1. 1) (Bhāsk. बौद्धसिद्धान्तादिपुभव:)

**अन्यत्रदर्शन** (anyatra-darśana) *n.* observation, i.e. obtainment in another place अन्यत्रदर्शनरूपा अभ्युच्चययुक्तिरिह नास्ति UpaParā. 4. 22.

**अन्यत्रधर्ममनु** (anyatradharma-manu) *m.* formula beginning with the expression '*anyatra dharmāt*' अन्यत्रधर्ममनुना प्रथितेतरेषु प्रश्नत्रये करणसाधकतत्फलेषु ... क्लिश्नन्ति PūrvottaVāNaMā. 256. 8.

**अन्यत्रप्रदर्श्यत्व** (anyatrapradarśya-tva) *n.* the state of being what is to be shown in another section त्रिधाविभक्तस्याहृस्तृतीयो भागोऽपराह्ण इत्यन्यत्रप्रदर्श्यत्वेनानुसंधेयः CaturCin. iii (1). 314. 3.

**अन्यत्रप्रसिद्ध** (anyatra-prasiddha) *adj.* A established in another sense अन्यत्रप्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यते BrahmSūBh. (Ma.) 5B.9 (*on* i. 1. 12); अन्यत्रप्रसिद्धानां विष्णावेव समन्वयम्। शब्दानाम् AnuVyā. 7A.5 (*on* 1.1); 47B.7 (*on* 3.3); अन्यत्रप्रसिद्धानन्दमयनाम्नो ब्रह्मणि समन्वयसमर्थनात् TattvPrakā. 15B. 13 (*on* i. 1. 2); 22B. 8 (*on* i. 1. 22); 39A. 1 (*on* i. 2. 24); 65A. 7 (*on* i. 4. 1); अन्यत्रप्रसिद्धनामसमन्वयस्य फलम् ... उपसंहरति NyāySu. (Ja.) 154B. 2 (*on* 1. 12); 171A. 9 (*on* i. 2. 7); B ascribed or applied elsewhere परमात्मन्यन्यत्रप्रसिद्धेन्द्रादीनाम् ... अस्ति शास्त्रादिसंगतिः TattvPrakā. 21B. 2 (*on* i. 1. 20)

**अन्यत्रप्रसिद्धत्व** (anyatraprasiddha-tva) *n.* the state of being established in another sense न चान्यत्रप्रसिद्धत्वविरोधः TattvPrakā. 68B. 13 (*on* i. 4.8)

**अन्यत्रप्रसिद्धि** (anyatra-prasiddhi) *f.* establishment or usage in another sense उभयत्रप्रसिद्धानामन्यत्रप्रसिद्धिपराकरणमात्रस्य ... अमुख्यत्वेन प्रायमयोगात् TattvPrakā. 15B. 7 (*on* i. 1. 12); 22B. 8 (*on* i. 1. 22); न चान्यत्रप्रसिद्धिविरोधः TattvPrakā. 69A. 9 (*on* i. 4. 9)

**अन्यत्रभाव** (anyatra-bhāva) *m.* existence in another place कर्वीनामाधाराणामभावेऽप्याधेयानां गिरामवस्थितिरन्यत्रभावो विषयार्थ इति विषयत्वेन ... ज्ञेयम् AlaṅkāSa. 137. 7.

**अन्यत्रभाविफल** (anyatrabhāvi-phala) *adj.* having fruits occurring at the later or future time यान्यप्यन्यत्रभाविफलानि ज्योतिष्टोमादीनि तत्रापि ... कर्मणो वर्षशते फलं भविष्यति ManuBh. i. 71. 17 (*on* 2. 10)

**अन्यत्रमनस्** (anyátra-manas) *adj.* whose mind is attached to some other object, distracted अन्यत्रमना अभूवं नादर्शम् ... नाश्रौषम् ŚatBr. XIV. iv. 3. 8; BṛĀraU. i. 5. 3; AitUBh. 275. 3 (*on* 4. 0); ततोऽन्यत्रमना आसं नातोऽद्राक्षं त्वदीरितम् BṛĀraUBhVā. i. 5. 102.

**अन्यत्रय** (anya-traya) *n.* another triad द्वितीयार्णं साध्ययुतं कोणेष्वन्यत्रयं लिखेत् TantrRā. 10. 25.

**अन्यत्रवत्** (anyatra-vat) *adv.* as (staying) at different place अन्योन्यमन्यत्रवदीक्षमाणौ परस्परेणाध्युषितेऽपि देशे। ... तथ्यं मिथस्तौ परिषस्वजाते NaiṣC. 6. 51.

**अन्यत्रशब्दद्वय** (anyatraśabda-dvaya) *n.* pair of *anyatra*-words प्रकृतस्यान्यत्रशब्दद्वयसामानाधिकरण्यवत् VedāntKau. 121. 18 (*on* i. 4. 6)

**अन्यत्रसावकाश** (anyatra-sāvakāśa) *adj.* having scope elsewhere द्वौ प्रसङ्गौ अन्यत्रसावकाशौ यत्र युगपत् प्राप्नुतः स तुल्यबलविरोधः Prasā. i. 114.13.

**अन्यत्रस्थ** (anyatra-stha) *adj.* being on another, i.e. opposite side कलहे कुशलाः सर्वेऽन्यत्रस्था जिग्यिरे मया RatnaCūKa. 454.

**अन्यत्रस्थान** (anyatra-sthāna) *adj.* occurring in different case (प्रगाथानाम्) तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्रस्थानाः LāṭyāŚS. x. 6. 4; बार्हताः प्रगाथाः ...। तेषां चत्वारोऽन्यत्रस्थानाः बृहद्रथन्तरकालेयस्तोत्रियाः NidāSū. 82. 20 (5. 3); 84. 4 (5. 4)

**अन्यत्रादृष्ट्यपेक्षत्व** (anyatrādṛṣṭyapekṣa-tva) *n.* the state of requiring the absence of perception elsewhere अन्यत्रादृष्ट्यपेक्षत्वात् क्वचित्तद्दृष्ट्यपेक्षणात्। श्रुतौ संबध्यतेऽपोहो नैतद्वस्तुनि युज्यते PramāVār. 3. 172.

**अन्यत्रानुक्तावाप** (anyatrānuktāvāpa) *m.* insertion of what is not stated in another section क्वचिदन्यत्रानुक्तावापेन क्वचिदन्यत्रोक्तोद्वापेन ... परमेश्वरस्वरूपं प्रतिपादयन्तीति शाखानां स्वभावः NyāySu. (Ja.) 143A. 12 (*on* i. 1. 6)

**अन्यत्रानुराग** (anyatrānurāga) *m.* love for another person अन्यत्रानुरागवत्यामपि पत्यावनुरागिण्यां परकीयायामतिव्याप्तिः स्यात् ŚṛṅgāMañ. (A.)3. 5; सामान्या ... अन्यत्रानुरागाभावेऽपि वित्तग्रहणार्थमनुरागवती भवति ŚṛṅgāMañ. (A.)13. 22.

**अन्यत्राभाव** (anyatrābhāva) *m.* non-existence in any other place अन्यत्राभावाच्च न तृणादिवत् BrahmSū. ii. 2. 5; तृणादेः प्राज्ञानाधिष्ठितस्य परिणामाभावादृष्टान्तासिद्धेः। कथमसिद्धिः। अन्यत्राभावात् BrahmSūBh. (Rā.) 474. 1 (*on* ii. 2. 4); VedāntKau. 180. 25 (*on* ii. 2. 5)

**अन्यत्रायतना** (anyatrāyatanā) *adj.* (*f.*) having abode or place elsewhere तामन्यत्रायतनां सतीं नियुनक्ति JaimiBr. 1. 268.

**अन्यत्रावस्थित** (anyatrāvasthita) *adj.* A pertaining to another place प्रागभावोऽपि शक्यः ... अन्यत्रावस्थितभावज्ञानेन वा निरूपयितुम् TātpaṬ. (Vā.) 440. 20 (*on* ii. 2.10½); B existing elsewhere अन्यत्रावस्थितकलिकलुषितवासनावद्भिः पुरुषैः सह वासनाद्वारा कलिप्रवेशः संभवत्येव TristhaSe. 306.18.

**अन्यत्रास** (anya-trāsa) *m.* fear from another यत्र तत्र स्थिताप्यन्यत्रासाच्छद्मपरायणा ... विफला फलदा सा स्वभावजा ŚārṅgaPa. 2507.

**अन्यत्रिक** (anya-trika) *n.* set of three verbal endings of the third person आभ्यामन्यस्यार्थे साधनेऽन्यत्रिकं भवति JaineVyā. 45. 6 (*on* i. 2. 153)

**अन्यत्रिदिक्स्थ** (anyatridik-stha) *adj.* being, i.e. fixed in other three directions क्लृप्तव्यासं रचयतु घनद्वारमन्यत्रिदिक्स्थम् TantrSa. 2. 34.

**अन्यत्रेन्द्रियवृत्ति** (anyatrendriyavṛtti) *adj.* (used as non) (one) having functions of sense-organs turned towards something else अन्यत्रेन्द्रियवृत्तिश्च कामरागप्रयोजनात्। ... कुतः सौख्यं च यौवने PadmP. ii. 66. 108.

**अन्यत्रैवप्रसिद्ध** (anyatraiva-prasiddha) *adj.* established only in the other sense अन्यत्रैवप्रसिद्धाव्यक्तादिशब्दानां भगवति समन्वयप्रतिपादनात् TattvPrakā. 65B. 4 (*on* i. 4. 1)

**अन्यत्रोक्त** (anyatrokta) *adj.* stated in another section अल्पत्वं च तदभिधानसमाप्तावन्यत्रोक्तादृष्टैकार्थधर्मानभिधानम् CaturCin. iii (1). 757. 11; (used as noun) (that) which is stated in another section क्वचिदन्यत्रोक्तोद्वापेन ... परमेश्वरस्वरूपं प्रतिपादयन्ति NyāySu. (Ja.) 143A. 12 (*on* i. 1. 6)

**अन्यत्व** (anya-tva) *n.* **1A** the state of being different, difference, i.e. change or transformation **B** the state of being different, difference [Inst.] as being different, by difference **C** [Inst.] by difference, i.e. without connection or relationship **2A** distinction, separateness [Inst.] as being distinct **B** diversity **3A** the state of being another thing, otherness, the state of being something else [Inst.] as being another thing **B** the state of being another thing (than what it is) [Inst.] as being another thing (than what it is) **4** the state of being dissimilar, dissimilarity **5** the state of being unique, indifferent **6** the state of being the latter one **1A** the state of being different, difference, i.e. change or transformation सिद्धस्वभावानां न व्यवधानादन्यत्वं यथा पृष्ठ्याभिप्लवयोः ĀśvaŚS. II. vi. 4.17; उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः। वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् YogBh. 100. 15 (*on* 2. 28); अभिमन्त्र्य तु तौ (पाषाणौ) ...। दक्षिणस्थं तु पाषाणं रत्नत्वमुपयाति च। ... एवमश्मनयानां तु अन्यत्वमुपपद्यते LakṣmīT. 46. 36; **1B** the state of being different, difference अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् MīmāSū. vi. 8. 36; उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः। अभ्यासात्। न, अन्यत्वेऽपि अभ्यासस्योपचारात् NyāySū. ii. 2. 30; NyāyBh. 139. 7 (*on* ii. 2. 31); षड्जग्रामे द्विश्रुत्युत्कर्षाद्‌, दै(?धै)वतीकृते गान्धारे मूर्च्छनाग्रामयोरन्यत्वम् NāṭyaŚā. 28. 33 (2); द्रव्यादिषु वृत्तिनियमात् प्रत्ययभेदाच्च परस्परतश्चान्यत्वम् PadārthaSaṁ. 314. 17; अथ मतमन्यत्वे सति सादृश्येन व्यामूढाः स (शब्दः) इति वक्ष्यन्ति। तत्र। ... विदिते च स्फुटेऽन्यत्वे व्यामोह इति गम्यते ŚābaBh. 88. 2-4 (*on* i. 1. 20); न तेषामेषां च विभागमुपलभामहे। अत एवैकशब्दत्वम् ...। अतो नान्यत्वं च वदामः ŚābaBh. 292. 1 (*on* i. 3. 30); 1414. 10 (*on* vi. 3. 12); KauhaŚi. 60; वद किं करवाणीति ननु नान्यत्वमावयोः PadmP. (Ra.) 15. 129; यत् किंचिच्चिन्तयेद् वस्तु नान्यत्वं प्रतिपद्यते MālinīT. 17. 22; पुद्गलो नैव विद्यते पारमार्थिकः। तत्त्वान्यत्वादवाच्यत्वात् TattvSaṁ. 338; न च कुलालभाव एव घट उपलभ्यते, सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात् BrahmSūBh. (Śaṅ.) 317. 8 (*on* ii. 1. 15); ज्ञानाज्ञानयोः अन्यत्वेनोपपत्तेः GītāBh. (Śaṅ.) 359. 13 (*on* 13. 2); अरं छिद्रं भिदान्यत्वं वेद्यवेत्तृत्वलक्षणम् TaiUBhāVā. 135. 1 (2); जन्मनाशयोरन्यत्वेऽनन्यत्वे च वस्तुनो न क्षणिकता IṣṭaSi. 310. 1; यादृशीमानुपूर्वीं वैदिकानां वर्णपदादीनां करोत्यध्यापयिता तादृशीमेवानुकरोति माणवकः ... आचार्यव्यक्तिभ्यो माणवकव्यक्तीनामन्यत्वात् Bhām. 74. 6 (*on* i. 1. 3); एकत्वमर्थवत्त्वं च ... प्रधानमधिकृत्योक्तम्, अन्यत्वमकर्तृत्वं बहुत्वं चेतिपुरुषमधिकृत्य SāṁkhyTaKau. 506. 5 (*on* 72); तत्त्वान्यत्वसाधारणं प्रत्यक्षम् NyāyRa. 414. 7 (*on* 5 (5). 27); 633. 9 (*on* 5 (14). 78); सतोऽन्यत्वमेवासत्त्वम् ŚāstrDī. 110. 21 (*on* i. 1. 5); न चेहान्यत्वं वास्तवमभिप्रेतम् NyāyMa. 16. 5; अन्यत्वं शरीरस्य वैसदृश्याच्छरीरिणः YogŚā. 4. 70; एकस्य विरोधव्यक्तिविशेषस्यात्र परिगृहीतस्यापरविरोधव्यक्त्यनात्मत्वात् (v.l. °व्यक्तेरन्यत्वात्) KhaṇḍanKhā. 865. 19; विश्वजिदग्निष्टोमयोः व्यपदेशभेदात् अन्यत्वम् SaṅkarKāBh. 34. 7 (*on* i. 3. 33); न ह्यन्यस्यान्यत्वं युज्यते BrahmSūBh. (Ma.) 25A. 2 (*on* ii. 1. 14); पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः। व्यवह्रियन्ते AnuVyā. 11B. 11 (*on* i. 2. 10); समवायिनामन्यत्वात्तेभ्योऽन्येषु चतुर्विधेषु अन्यतमस्मिन् अतिव्याप्तिः TarkSaṁ. (Ā.) 12. 27; 53. 18; 109. 24; अन्यत्वमन्योन्याभावः NyāySu. (Ja.) 168A. 11 (*on* i. 2. 6) नञ्‌विशिष्टेन परपदेनान्यत्वविरुद्धत्वाभावविशेषा लक्ष्यन्ते Prasā. i. 538. 5; अन्यभावोऽन्यत्वं भेद इति यावत् ŚivārkaMaDī. i. 536. 18 (*on* i. 4. 16); सत्यपि वर्णैकत्वे लौकिकपदेषु ... वैदिकेषु ... स्पष्टो भेदः। यूपादिसाहचर्याच्च लोकवेदयोः पदानां तावदन्यत्वम् MīmāKau. i. 138. 5 (*on* i. 3. 30); यत्र चैकस्य द्वयोर्वान्यत्वं (संख्यान्यत्वं वा) तत्राप्यसमानतैव VīraMi. 110. 23 (*on* 1. 52-54); प्रमाणाभावादन्यत्वमसिद्धम् MayūMāli. 257. 22 (*on* iii. 3. 14); पणादिसाहचर्यात् पादशब्दः परिमाणवाची ...। अनुवर्तते न तु नान्यत्वम् LaŚabdeŚe. ii. 305. 12; **[Inst.]** as being different, by difference संवृतिसत्त्वेन वर्णनादिष्टसाधनम्। तत्त्वान्यत्वेन निर्वाच्यम् TattvSaṁ. 678; किमुपास्यं ब्रह्मोपासि-तुरन्यत्वेनोपास्यमुतोपासितुरात्मत्वेन BrahmSūBh. (Rā.) 715. 6 (*on* iv. 1. 3); ŚrutaPra. ii. 573. 18 (*on* iv. 1. 3); मुखादि कमलादिरूपतयाध्यवसितम्। यद्य तदेवान्यत्वेनाध्यवसीयते सा अपरा (अभेदे भेदरूपातिशयोक्तिः) KāvyPra. 630. 1; अन्यत्वेनाध्यवसायाद् वैपरीत्यं संबन्धः AlaṅkāRa. 37. 50; जगद् ब्रह्मविकारो न भवति। ततोऽन्यत्वेनोपलभ्यमानत्वात् NyāySu. (Ja.) 199A. 11 (*on* i. 1. 6); अन्यदङ्गलावण्यमन्यत्वेनाध्यवसीयते SāhiDa. 551. 2; (स गार्हपत्यः) स आहवनीयादन्यत्वेन निश्चितो देवतारूप एव कश्चिदग्निः BhaṭṭCan. 110. 15 (*on* xvi. 2. 10); **1C [Inst.]** by difference, i. e. without connection or relationship आत्मशब्दः शरीरप्रतिसंबन्धिपरः ...। अन्यत्वेन शरीरशरीरिभावसंबन्धशून्यत्वेन ŚrutaPra. ii. 573. 20 (*on* iv. 1. 3); **2A** distinction, separateness एकोऽयमात्मोदकं नाम तस्य गुणभेदादन्यत्वं भवति MahāBh. i. 42. 1 (*on* i. 1. 1); एकैकोऽपि हि (रसः) पुनरेषामाश्रयादीनां भावानां विशेषानाश्रयते ... न च तस्मादन्यत्वमुपपद्यते CaraS. i. 26. 9; मृदूनपि च दारुणान्। स्पर्शान् सृष्ट्वा ततोऽन्यश्च(त्वं) मुमुर्षुरेषु मन्यते BhelaS. 106. 9 (5. 7); त्रिगुणमविवेकि विषय इत्यन्यत्वं सिद्धम् (प्रधानस्य) TattvSa. 136. 6; उद्यनीचविशेषाद्धि स्वरान्यत्वं प्रवर्तते NāraŚi. i. 1. 1; अन्यानुविद्धबोधेऽपि नान्यत्वमुपरुध्यते SphoṭSi. 178. 4; तपसास्याः कृतान्यत्वं कौमाराद् येन लक्ष्यते KāvyālanSāSaṁ. 2. 14; अध्यस्य मिथुनीकृत्येति च क्त्वाप्रत्ययो न पूर्वकालत्वमन्यत्वं च लोकव्यवहारादङ्गीकृत्य प्रयुक्तः PañcPā. 4. 15 (*on* i. 1. 1); अन्यत्वे चान्यथाभावोऽन्यथाभावेऽपि चान्यता IṣṭaSi. 231. 13; 232. 8; आत्मज्ञानयोरेकत्वान्यत्वं चिन्तयति TattvPradī. (A.) 36. 6 (*on* 1. 27); 162. 8 (*on* 2. 24); भावतदभावयोश्च साक्षाद् विरोधाद् वाच्याद् व्यङ्ग्यस्य स्फुटमेवान्यत्वम् Loc. 21. 8 (*on* 1. 4); तन्त्रेण सदृशयोरनभिधानात् सादृश्यस्य पुनरुपमानोपमेयभावविवक्षितेन श्लेषतोऽन्यत्वे सति ... पूर्णलुप्तानामेवं पदार्थोपमासु वाक्योपमाभक्तिः SaraKaṇṭhā. 407. 2; अवस्थावतोऽनुच्छेदात् ततो न कर्तृभोक्त्रोरन्यत्वं लौकिका मन्यन्ते NyāyRa. 695. 11 (*on* 5 (17). 25); अर्थकामौ तावच्छास्त्रनियतौ धर्म्यावेव। अपवर्गस्यान्यत्वमिति चेत्। तदयुक्तम् BālaKrī. i. 27. 5 (*on* 1. 8); हस्तादिना गुरोः प्रतिरोद्धा चपेटादिदानेन। अस्मिन् पक्षे स्थितमन्यत्वं विवादस्य ManuBh. i. 276. 21 (*on* 3. 149); यत्रान्यत्वं शरीरस्य ... धनबन्धुसहायानां तत्रान्यत्वं न दुर्वचम् TriṣaŚaPuC. iii. 5. 94; कार्योपादानभेदे न कथमधिकृतो गौरवादेः स्वकार्यम्, नान्यत्वं नामसंख्याव्यवहृतिधिषणाकारकालादिभेदैः TattvMu. 1. 20; घटादन्यः पट इत्यत्र कथमन्योन्याभावप्रतीतिरिति वाच्यम्, अन्यत्वस्यापि पृथक्त्वरूपत्वात् Tarkāmṛ. 10. 21; यत्राभेदेऽपि भेदो लोकोत्तरत्व-प्रतिपत्त्यर्थः इदमेव प्रस्तुतस्यान्यत्वमित्यनेनोक्तम् RasGaṅ. 415. 10; न तु जात्यन्तरमन्वेषणीयम्। अन्यथा संदिग्धासिद्धादीनामपि अन्यत्वं स्यात् MānaMe. 79. 4; अन्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेत्। न, अर्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन ... अनुपपादनात् LaŚabdeŚe. i. 76. 2; **[Inst.]** as being distinct ये पाकादयोऽन्योन्यमन्यत्वेनावस्थिताः क्रियाविशेषास्तत्समवेतं सामान्यमेव वाच्यम् Kāvyānu. (He.) 28. 11; **2B** diversity, cf. **अन्यत्वहेतु; 3A** the state of being another thing, otherness, the state of being something else वचनात्तु ततोऽन्यत्वम् MīmāSū. vii. 4. 3; निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव। ... भ्रमन्तीं भावयेन्नारीं योजनानां शतादपि BrahmāṇḍP. iii. 41. 48; (अकार्यस्य) तयोरन्यत्वं तुच्छत्वम् SāṁkhyaPraSū. 1. 134 (Bh. अकार्यस्य प्रकृतिपुरुषभिन्नत्वे); विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः SāṁkhyaPraSū. 5. 16; 'सिद्धे शब्दार्थसंबन्धे' इत्यत्र च सिद्धशब्दः। तेन तत्त्वान्यत्वाभ्यामनिर्वचनीयाभिः शक्तिभिः समाविष्टम् VākyaPa. 4. 3; 21. 3; वस्तुगत एष विभागः - तत्त्वभावत्वमन्यत्वं चेति BrahmSi. 48. 5; प्रमाणमेवेदं सम्यक्त्वेऽन्यत्वमुच्यते ŚlokaVār. 2. 183 (101. 3); स्वशब्देनैव तान्युक्त्वा तेभ्योऽन्यत्वं वरं कृतम् ŚlokaVār. 6. 342 (817. 1); न ... बहिस्सत्तारूपेणार्थानां गम्यगमकभावः। ... नापि धूमजातेः तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् TātpaṬ. (U.) 231. 22 (*on* 5 (3). 168); 447. 14 (*on* 5 (11). 18); परमात्मनो जीवादन्यत्वं द्रढयति BrahmSūBh. (Śaṅ.) 179. 7 (*on* i. 3. 19); अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् BrahmSūBh. (Śaṅ.) 231. 13 (*on* i. 4. 3); 237. 12 (*on* i. 4. 6); 315. 10 (*on* ii. 1. 14); घटस्य प्राक्प्रध्वंसात्यन्ताभावानामपि घटादन्यत्वं स्यात् BṛĀraUBh. 19. 19 (*on* i. 2. 1); 35. 10 (*on* i. 3. 1); न चान्यत् सत् समस्ति ... अजडस्य चान्यत्वजनिमत्त्वायोगात् IṣṭaSi. 365. 5; मेघा अपि रवेरन्ये स्वरूपेण च वास्तवाः। तत्त्वान्यत्वाद्यचिन्त्या तु नाविद्यावरणक्षमाः NyāyMañ. ii. 79. 25; स्वातन्त्र्याहुर्निवारैव स्वतन्त्रः केन वार्यते। तत्त्वान्यत्वैरवाच्या वा यद्यविद्याभिधीयते ŚivDṛ. 2. 30; अनुमीयतेऽनेनेति करणकारकमेव युक्तम् ... न त्वनुमितिरनुमानम् ... करणकारकादन्यत्वात् TātpaṬ. (Vā.) 169. 19 (*on* i. 1. 5); न हि संतानस्य संतानिभ्योऽन्यत्वमनन्यत्वं वा संभवति NyāyRa. 844. 11 (*on* 6. 441); मत्स्योऽन्यत्वमथाज्ञानादुदकात्राभिमन्यते BrahmP. 243. 25; वैकल्पिकोऽयं संतानस्तत्त्वान्यत्वाभ्यामनिर्वाच्यः NyāyMa. 273. 5; अक्षरस्य परमपुरुषादन्यत्वं व्यावर्तयति VedāntDī. 47. 5 (*on* i. 3. 11); अन्यत्वं स्वात्मनः ... अनुभूयते UpādhiKha. 1B. 10; प्रत्यभिज्ञाया भ्रान्तित्वं न वाच्यम्। पञ्चस्कन्धेभ्योऽन्यत्वात् ViṣṇuTaNi. 2B. 1; अतश्चान्यद्धि (v. l. अतोऽन्यत्वं च) दोषाय AśvaVai. 3. 11; इदमन्यत् सारस्वतमन्यद् गाम्भीर्यमन्यदौदार्यम्। ... अत्र सारस्वतादीनामभेदेऽप्यन्यत्वेन भेदः Ekāva. 8. 13 (13) (238. 9); अद्वितीयपदे किं तत्पुरुषः। उत बहुव्रीहिः। यदा तत्पुरुषः, तदापि किं द्वितीयादन्यत्वम् ŚatDū. 217. 24; ततोदंते स्वतान्यत्वे त्वंताहंते परस्परम्। प्रतिद्वन्द्वितया लोके प्रसिद्धे PañcDa. 6. 49; यदपि गुणगुणिनोरन्यत्वानन्यत्वाभ्यामनिरूपणादिति लक्षणस्य तटस्थत्वविसिद्धये परेणोक्तं तद्दूषयितुमनुवदति NyāySu. (Ja.) 102B. 5 (*on* i. 1. 2); सूत्रम्। ... स्मृतिश्च तर्कस्यानुमानादन्यत्वं सूचयतः NyāyPari. 325. 12; सदनिर्वाच्यामन्यत्वमसत्त्वम् Nyāyāmṛ. 30A. 6; 268B. 5; प्रकृतिप्रत्ययसमुदायस्य मातुः पितुरित्यस्य मातृपितृशब्दाभ्यामन्यत्वात् Prasā. i. 694. 4; अनाधारत्वं

चाधाररहित्यम्, न त्वाधारादन्यत्वम् AdvaiSi. 794. 5; परशब्दो नान्यार्थोऽन्यत्वस्याव्यभिचरितत्वात् LaŚabdeŚe. i. 49. 22; अन्येषामित्यस्योत्तरेषामित्यान्वयः। अन्यत्वं च पुत्रिकातः BālamBha. ii. 174. 21 (*on* 2. 132); [Inst.] as being another thing तमसोऽन्यत्वेन संभावने हि तमो लेपनमेवेति प्रतीतिः स्यात् AlaṅkāRa. 32. 60; यत्रान्यधर्मसंबन्धादन्यत्वेनोपतर्कितम्। प्रकृतं हि भवेत् प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते PratāYaBhū. 383. 5; CitraMī. 73. 16; वर्णनीयपदार्थस्य यदन्यत्वेन वर्णनम्। भेदकातिशयोक्तिः सा AlaṅkāMañ. 51. 6; 3B the state of being another thing (than what it is) अन्यत्वमतद्भावो न तद्भवद् भवति कथमेकम् TattvPradī. (A.) 146. 7 (*on* 2. 14); अन्यत्वाविशेषेऽपि यौन्द्रानां किंचिदेव वस्तु कार्यं स्यात् किंचिदेव कारणम् TarkBhā. (Mo.) 23. 16; लोकेऽन्यद् वस्त्वन्यत्वं वस्त्वन्तरेणाभेदमापन्नम् NyāySu. (Ja.) 294A. 12 (*on* ii. 1. 5); [Inst.] as being another thing (than what it is) जडश्चेतत्यहंकारश्चेतन्याध्यासवान् ध्रुवम्। अन्यवस्त्वन्तराध्यासादात्मान्यत्वेन भासते SarvaSiSaṁ. 12.42; 4 the state of being dissimilar, dissimilarity वचनसाम्यादिदमपि वितथमवगम्यते। न, अन्यत्वात् ŚabaBh. 17.4 (*on* i. 1.2); 5 the state of being unique, i.e. indifferent (पुरुषस्य। कैवल्यं माध्यस्थ्यम्) कैवल्यं केवलभावः, कैवल्यमन्यत्वमित्यर्थः, त्रिगुणेभ्यः केवलोऽन्यः SāṁkhyaKāBh. 14. 12 (*on* 19); 6 the state of being the latter one, cf. अन्यत्वोपलक्षण.

•अन्यत्वकथन (anyatva-kathana) *n*. statement of otherness पूर्वोदाहरणे स्वसदृशादन्यत्वकथने हेतुरुक्तः AlaṅkāMañ. 52. 6.

अन्यत्वकर (anyatva-kara) *adj*. i causing distinction (in affix etc.) अनुबन्धोऽन्यत्वकर इति चेत्तन्न ... लोपात् Vār. 3 *on* P. i. 1. 26; Vār. 9 *on* P. i. 1. 69; ii causing distincition (in nature or form) तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं कालाक्षी गौः स्वस्तिमती गौरिति। ... जातिलक्षणसारूप्याद् देशभेदोऽन्यत्वकरः इदं पूर्वमिदमुत्तरमिति YogBh. 177. 12-13 (*on* 3. 53)

अन्यत्वकर्तृ (anyatva-kartṛ) *m*. one who makes distinction, i.e. shows the ownership of others राजस्वेऽन्यत्वकर्तृणां तटाकारामघातिनाम्। शिक्षणार्थं चरा योज्यास्तेभ्यो विज्ञाय तत्त्वतः NītiPra. 8. 36.

अन्यत्वकल्पन (anyatva-kalpana) *n*. A assumption or imagination of otherness अध्यवसितिसिद्धत्वं प्रकृतस्यान्यत्वकल्पनं यद्वा। संबन्धासंबन्धौ तद्व्यत्यासे भवेदतिशयोक्तिः Ekāva. 8. 13 (236. 11); 8. 13 (1) (237. 1); अथापह्नुतिः - प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्। .:. अपह्नुतिः ... अन्यत्वकल्पनमात्रं रूपके CitraMī. 70. 13; B assumption of distinction भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् (v.l. °त्वकल्पनम्) Kuval. 38.

अन्यत्वकल्पना (anyatva-kalpanā) *f*. 1 assumption of difference अविद्याकल्पितस्याविद्याकल्पितान्यत्वस्यान्यत्वकल्पना IṣṭaSi. 325. 22; तत्त्वतो विभक्ताभावेऽप्यविद्याकाशादेरन्यत्वकल्पनायां सत्यामस्ति विभक्तत्वम् VedāntKa. 310. 21 (*on* ii. 3. 6); 2 assumption of otherness अक्षपादस्य कणादवत् प्रमातृकल्पना परमेश्वरस्य प्रमातुरन्यत्वकल्पना SarvaMaSaṁ. 26.11.

अन्यत्वकल्पिका (anyatva-kalpikā) *adj*. (*f*.) which causes the assumption of difference जीवस्य या स्वरूपकल्पिका अविद्या सैव तस्यान्यत्वकल्पिका IṣṭaSi. 332. 14.

अन्यत्वकारण (anyatva-kāraṇa) *n*. A cause of difference, i.e. change or transformation अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः YogBh. 101. 5 (*on* 2. 28); TattvVai. 102. 7 (*on* 2. 28); B cause of difference विषयसामग्रीसाम्यादेकत्वनिश्चये। न विलक्षणतामात्रं किंचिदन्यत्वकारणम् NyāyMañ. i. 139. 18.

अन्यत्वक्लृप्ति (anyatva-klpti) *f*. assumption of otherness प्रत्यक्षायास्ततोऽन्यत्वक्लृप्तौ नैवं प्रसज्यते NyāySiA. 238. 8.

अन्यत्वगर्भित (anyatva-garbhita) *adj*. consisting of difference तस्य चान्यत्वगर्भितस्यैकस्मिन्नसंभवात् Nyāyāmṛ. 519A. 9.

अन्यत्वग्राहिन् (anyatva-grāhin) *adj*. grasping or referring to difference अन्यत्वग्राहिप्रत्ययमिथ्यात्वे हि सर्वं साधनं न सिध्यति NyāyRa. 235. 11 (*on* 5 (2). 76)

अन्यत्वज्ञान (anyatva-jñāna) *n*. knowledge of difference अन्यत्वज्ञानमिथ्यात्वे हि अन्यत्वं न स्यात्, तदभावे च ... साधनासिद्धिः NyāyRa. 235. 13 (*on* 5 (2). 77)

अन्यत्वता (anyatva-tā) *f*. the state of being distinctness or distinction अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान्। तदैषोऽन्यत्वतामेति न च मिश्रत्वमाव्रजेत् MahāBhā. xii. 295. 20.

अन्यत्वदर्शन (anyatva-darśana) *n*. 1 knowledge of otherness तथा सांख्याः ... अन्यत्वदर्शने तस्थुः ChāndoUBh. 537. 15 (*on* viii. 12. 1); अन्यत्वदर्शनापवादाश्च विद्याविषये सहस्रशः श्रूयन्ते TaiUBh. 221. 7 (*on* 1. 11); विशेषसंज्ञा ... अन्यत्वदर्शनलक्षणा BṛĀraUBh. 318. 15 (*on* ii. 4. 13); 2 perception of difference विदुषां हि फलहेतुभ्याम् आत्मनः अन्यत्वदर्शने सति तयोः अहमिति आत्मदर्शनानुपपत्तेः GitāBh. (Śaṅ.) 365. 8 (*on* 13. 2); सतोरेव लोके अन्यत्वदर्शनात् IṣṭaSi. 166.8.

अन्यत्वदर्शिन् (anyatva-darśin) *adj*. perceiving the difference न विधिप्रतिषेधशास्त्रं तावत् फलहेतुभ्याम् आत्मनः अन्यत्वदर्शिनः भवति GitāBh. (Śaṅ.) 365. 12 (*on* 13. 2)

अन्यत्वदुःख (anyatva-duḥkha) *n*. sorrow of being another कालेनान्यत्वदुःखार्तिवासनाशतशो ध्रुवम्। ... वस्तु सद्भासते ParaśuKS. 18. 3 (318. 26); TantrRā. 26. 41.

अन्यत्वनियम (anyatva-niyama) *m*. rule or determination of distinction मा भूदन्यत्वनियमः पात्रे तन्त्रं किमैच्छिकम्। नियतं वा NyāyMāVi. 648. 13 (*on* xi. 3. 13)

अन्यत्वनिरूपण (anyatva-nirūpaṇa) *n*. act of describing or pointing out the otherness न च सर्वाप्रसिद्धत्वे गम्यैतेकोऽपि कथनं। तेनासिद्धैरसिद्धानां नास्त्यन्यत्वनिरूपणम् TantrVā. 245. 13 (*on* i. 3. 26)

अन्यत्वनिश्चय (anyatva-niścaya) *m*. ascertainment of distinction यद्यप्यनुकार्यानुकरणयोरर्थभेदादन्यत्वनिश्चयस्तथाप्यन्यत्वस्य दार्ढ्याय स्वरादिभेदोपन्यासः Pradī. iv. 334A. 35 (*on* v. 2. 59)

अन्यत्वनिषेध (anyatva-niṣedha) *m*. negation of otherness देवाद्याकाराणामनात्माकारत्वाद्य सर्वं तं परादात् इत्यादिनान्यत्वनिषेधश्च BrahmSūBh. (Rā.) 373. 9 (*on* i. 4. 19)

अन्यत्वपक्ष (anyatva-pakṣa) *m*. A view as being another स च सामान्यस्य सतः तत्त्वान्यत्वपक्षयोः न संभवति PramāVāSvopVr. 48. 32; B view as being distinct अन्यत्वपक्षस्तावदनुभवाभ्युपगमोपपत्तिविरुद्धत्वादसंभावितः NyāySu. (Ja.) 375B. 5 (*on* ii. 2. 6); [Loc.] in the view as being distinct उभयस्मिन्नपि विषयेऽनारम्भणमेवाधिकरणस्यान्यत्वपक्षे स्यात् ŚāstrDī. 49. 3 (*on* i. 3. 10)

अन्यत्वप्रकल्पन (anyatva-prakalpana) *n*. assumption as being another प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनं साम्यादपह्नुतिः CitraMī. 70. 11; RasGaṅ. 372. 16.

अन्यत्वप्रकारक (anyatvaprakāra-ka) *adj*. having the distinction as the qualifier अन्यत्वप्रकारकानुमितिविषयतारूपधात्वर्थतावच्छेदकफलाश्रयो भिदाकर्मतया भेद्यः VyutpaVā. 183. 33.

अन्यत्वप्रतिद्वन्द्विन् (anyatva-pratidvandvin) *adj*. opposed to the otherness प्रत्यक्त्वं न ... अन्यत्वप्रतिद्वन्द्विस्वत्वं वा Nyāyāmṛ. 372B. 5.

अन्यत्वप्रतिपत्ति (anyatva-pratipatti) *f*. knowledge as being another जीवस्य कार्यकारणसंघातादन्यत्वप्रतिपत्तेः PañcPā. 40. 1 (*on* i. 1. 1); स परस्परप्रदेशानां प्रदेशबन्धात् कर्मणैकीभूतस्यात्मनोऽन्यत्वप्रतिपत्तिकारणं भवति SarvaDaSaṁ. 3.209.

अन्यत्वप्रतिपादन (anyatva-pratipādana) *n*. act of explaining distinction व्यावर्तकाकारान्तरेणाप्यन्यत्वप्रतिपादनसंभवात् ŚrutaPra. iB. 194. 26 (*on* i. 1. 13)

अन्यत्वप्रतियोगिन् (anyatva-pratiyogin) *adj*. A counter-positive of difference उभयव्यतिरेकस्यान्यत्वप्रतियोगिकोट्यप्रवेशेन तत्संगृहीतव्यतिरेकपक्षतापातात् KhaṇḍanKhā. 877. 15; B counter-positive of the otherness स्वयंत्वं चान्यत्वप्रतियोगि SiddhāLeSaṁ. 73. 2.

अन्यत्वप्रतिषेधार्थम् (anyatvapratiṣedhārtham) *adv*. for the sake of negating the difference नान्यत्वेऽप्यध्यासस्योपचारादिति। ... एतत्सूत्रमन्यत्वप्रतिषेधार्थम् NyāyVār. 303. 18 (*on* ii. 2. 31)

अन्यत्वप्रतीति (anyatva-pratīti) *f*. knowledge as being another यदि ... आकाशस्य नामरूपमध्यस्थात् ब्रह्मणोऽन्यत्वप्रतीतिः तदा ... त्रिकोटिकसंशयोपपत्तिः ŚivārkaMaDī. i. 501. 11 (*on* i. 3. 42)

अन्यत्वप्रत्यय (anyatva-pratyaya) *m*. knowledge of distinction परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवति YogBh. 178. 9 (*on* 3. 53)

अन्यत्वप्रत्युपस्थापक (anyatva-pratyupasthāpaka), *adj*. which makes (one) realise the otherness अन्यत्र प्रविभक्ता इव अन्यत्वेन काम्यमानाः ... तस्य आत्मैव अन्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावात् आत्मकामम् BṛĀraUBh. 571. 15 (*on* iv. 3. 22)

अन्यत्वप्रथा (anyatva-prathā) *f*. showing, i.e. apprehension of distinction (शब्दः) न चासौ क्षणिको युक्तः साधकानुपलम्भनात् । प्रत्युच्चारणमन्यत्वप्रथा व्यञ्जकभेदतः TarkSaṁ. (Ā.) 119. 16.

**अन्यत्वप्रमा** (anyatva-pramā) *f.* valid knowledge of distinction असिद्धे भेदे ग्रहग्राह्ययोर्ग्रहो न भवति। ग्राह्य इत्यनया अन्यत्वप्रमया ग्रह एव चेदुक्तः तयोरेकतैव पूर्वप्राप्ता उक्ता स्यात् IṣṭaSi. 279. 2.

**अन्यत्वप्रसङ्ग** (anyatva-prasaṅga) *m.* 1 undesired occasion of distinction धर्मलक्षणावस्थान्यत्वे तदभिन्नस्य धर्मिणोऽप्यन्यत्वप्रसङ्गः TattvVai. 131. 17 (*on* 3. 13); पदान्येव वाक्यमित्युक्तम्। एकैकं पदं वाक्यं तत्संघातो वा। ... न द्वितीयः। संघातस्य चान्यत्वप्रसङ्गात् TantrRaha. 34. 20; 2 undesird occasion of the otherness विष्णोरन्यत्वेऽदृश्यत्वं च तस्यैवेत्यानन्दमयस्यान्यत्वप्रसङ्गात् TattvParkā. 21B. 5 (*on* i. 1. 20)

**अन्यत्वबुद्धि** (anyatva-buddhi) *f.* knowledge as being another विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्यापनेतुमिति कर्मान्तरत्वं भवति TantrVā. 620. 8 (*on* ii. 3. 24); दृष्टान्तश्च तप्तलोहसमावर्तितं जलम्। तद्धि जलं जलरूपेणानुपलभ्यम् ... जलपरिणामशक्तियुक्तं लोहादन्यत्वबुद्ध्यविषयस्तिष्ठति ŚrutaPra. ii. 227. 9 (*on* ii. 1. 12)

**अन्यत्वभाव** (anyatva-bhāva) *m.* 1 condition of being different, i.e. change or transformation सचिपमत्रं स्राव्यमानमविस्राव्यं भवति। ... द्रव्याणामार्द्राणां सहसा म्लानत्वमन्यत्वभावः AṣṭāSaṁ. i. 45. 18 (1. 8); 2 feeling or thought as (the embodied soul) being other (than body etc.) केचित् पौषधतन्निष्ठा मृत्युदा .अपि वेदनाः। सहन्तेऽन्यत्वभावेन MalliC. 7. 920.

**अन्यत्वभावना** (anyatva-bhāvanā) *f.* feeling or thought as (the embodied soul) being other (than body etc.), JainL.

**अन्यत्वमात्र** (anyatva-mātra) *n.* 1 mere difference (न 'अन्यत्वमस्ति'-इतीयता सामर्थ्यं भवति) नान्यत्वमिति। उपकारविवक्षायां सामर्थ्यम्, न अन्यत्वमात्रेणेत्यर्थः Pradī. ii. 342A. 13 (*on* ii. 1. 1); 2 mere otherness अन्यत्वावधेरात्मन उपलक्षणत्वे चान्यत्वमात्रमुपलक्ष्यमाणमन्यस्मादप्यन्यत्वमादाय पर्यवस्येत् KhaṇḍanKhā. 1303. 16.

**अन्यत्वलक्षण** (anyatva-lakṣaṇa) *n.* characteristic or definition of being another अथ पृथक्त्वलक्षणं किमन्यत्वलक्षणं च किमिति पृष्टे प्रत्युत्तरं ददाति TātpaVṛ. 146. 20 (*on* 2. 14)

**अन्यत्ववचन** (anyatva-vacana) *adj.* expressive of difference अनेकार्था हि धातव इति वचनाद् भिदिः विभागवचनोऽन्यत्ववचनश्च NyāySu. (Ja.) 382A. 9 (*on* ii. 2. 6)

**अन्यत्ववर्णन** (anyatva-varṇana) *n.* description of distinction भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनम् Kuval. 38.

**अन्यत्ववाचोयुक्ति** (anyatva-vācoyukti) *f.* appropriateness of speech of being another नात्मैव तद्दाह इति तत्रान्यत्ववाचोयुक्तिः न पुनरन्यत्वविवक्षया IṣṭaSi. 366. 9.

**अन्यत्ववादिन्** (anyatva-vādin) *m.* advocate of distinction or separateness यत्पुनरव्यतिरिक्तत्वे कारणमुक्तम् अवयवनिष्कर्षणाविज्ञानं तदन्यत्ववादिनो वैशेषिकस्यापि युज्यते Śarka. 102. 21.

**अन्यत्ववारक** (anyatva-vāraka) *adj.* which excludes the otherness अन्यत्ववारकं स्वत्वमिति चेदन्यवारणम्। कूटस्थस्यात्मतां वक्तुरिष्टमेव हि तद् भवेत् PañcDa. 6. 42.

**अन्यत्वविरुद्धत्व** (anyatva-viruddhatva) *n.* distinction and contradictoriness अभेदशब्दे नञः कोऽर्थः। यदि भेदादन्यो भेदविरुद्धो वा, तदा भेदाभेदयोर्भेदसिद्धः। न हि भेदं विना अन्यत्वविरुद्धत्वे संस्तः IṣṭaSi. 100.18.

**अन्यत्वविवक्षा** (anyatva-vivakṣā) *f.* [Inst.] with the speaker's intention for being another आत्मैव तद्दाह इति तत्रान्यत्ववाचोयुक्तिः न पुनरन्यत्वविवक्षया IṣṭaSi. 366.10.

**अन्यत्वव्यक्तिभेद** (anyatva-vyaktibheda) *m.* particular individual difference अन्यत्वमात्रमेव ... अन्यत्वव्यक्तिभेदपर्यन्तगमनं प्रमाणस्य न सहते KhaṇḍanKhā. 1303. 19.

**अन्यत्वव्यपदेश** (anyatva-vyapadeśa) *m.* expression of the otherness विज्ञानमयादन्यं इत्यन्यत्वव्यपदेशस्यैव हेतुत्वोक्तिपरत्वमत्यन्तोचितम् ŚrutaPra. iB. 236. 11 (*on* i. 1. 20)

**अन्यत्वव्यवस्थापन** (anyatva-vyavasthāpana) *n.* establishment of otherness ब्रह्मणो जीवादिरूपतया संदिग्धत्वप्रदर्शनेन ... न प्रथमसूत्रतः शास्त्रस्य प्रयोजनवत्त्वसिद्धिः। तस्य जीवादन्यत्वव्यवस्थापनेन ... ततो न विषयसिद्धिरिति दूषणस्य नावकाशः ŚivārkaMaDī. i. 94. 19 (*on* i. 1. 1)

**अन्यत्वव्यवहार** (anyatva-vyavahāra) *m.* usage or convention of distinction गुणत्वे सति अन्यत्वव्यवहारविषयः पृथक्त्वम् - इति चेत्, न TarkSaṁ. (Ā.) 67. 8.

**अन्यत्वशङ्का** (anyatva-śaṅkā) *f.* doubt regarding the otherness (देहयोगाद् वा) वाशब्दो जीवस्य ईश्वरात् अन्यत्वशङ्काव्यावृत्त्यर्थः BrahmSūBh. (Śaṅ.) 569. 5 (*on* iii. 2. 6)

**अन्यत्वश्रवण** (anyatva-śravaṇa) *n.* scriptural mention of the otherness 'अन्यत्र धर्माद्' इति ब्रह्मणो धर्मशब्दार्थादन्यत्वश्रवणाद्य SiddhāSi. i. 41. 8.

**अन्यत्वसंबन्ध** (anyatva-sambandha) *m.* relationship with the otherness अन्यमिति विनष्टस्य प्रतिनिधेरन्यत्वसंबन्धः ŚābaBh. 319. 14 (*on* i. 3. 53); अन्यत्वसंबन्धो व्यक्तेरवकल्पते न जातेः NyāyMañ. i. 292. 1.

**अन्यत्वसाधन** (anyatva-sādhana) *n.* act of proving the otherness सर्वस्य च 'आत्मा' स्वभावस्ततो 'व्यवच्छेदो' भेदनं पृथक्करणमन्यत्वसाधनमसंकीर्णरूपताप्रत्यायनं भवति HetuBiṬ. 195. 1.

**अन्यत्वसिद्धि** (anyatva-siddhi) *f.* establishment of the difference ननु विशेषांशानां व्यावृत्तेरन्यत्वसिद्धिः, तथा च द्वैताद्वैतात्मकं जगदिति BrahmSi. 67. 16.

**अन्यत्वहेतु** (anyatva-hetu) *m.* A cause of diversity भूतं सद् विभु यत् ... धराश्रयरसाधन्यत्वहेतुश्च यत्। ... यदरूपमेभिरवतायुग्मान्श(ञ्श)रीरैः शिवः EI. ii. 10. 3; B cause of difference कार्यभेदस्यान्यथासिद्धिपरं द्वितीयसूत्रं व्याख्यातम्। तदयुक्तम् ... तत्रान्यत्वहेत्वन्यथासिद्धावुक्तायामनन्यत्वनियामकहेतुपरत्वं द्वितीयस्य युक्तम् ŚrutaPra. ii. 233. 30 (*on* ii. 1. 15)

**अन्यत्वाग्रह** (anyatvāgraha) *m.* non-grasping or non-comprehension of difference उत्तरभाष्यम् - 'अथ प्रत्यक्षे नित्ये एव' इति। ... न तु कार्यतोऽस्तीत्येवमनुमेये, न ह्यन्यत्वाग्रहः तद्ग्रहः NayaVi. 245. 9 (*on* i. 1. 8)

**अन्यत्वाग्रहण** (anyatvāgrahaṇa) *n.* non-grasping or non-comprehension of difference अन्यत्वाग्रहणे प्रोक्तः कथमन्योन्यसंश्रयः। अन्यत्वं यदि सिद्धं स्यात् कथमन्योन्यसंश्रयः AnuVyā. 31A. 2 (*on* 2. 2)

**अन्यत्वाङ्गीकार** (anyatvāṅgīkāra) *m.* acceptance of the otherness परमेश्वरादन्यत्वाङ्गीकारे ब्रह्मणोऽस्वातन्त्र्यात् जगत्कारणत्वाद्यसंभवः। अतो जीवपक्ष एव समीचीनः BrahmSūBh. (Śrī.) i. 218. 3 (*on* i. 1. 15)

**अन्यत्वादि** (anyatvādi) *adj.* 1 difference etc. नाशनाम्ना पदार्थेन भावो नाश्यत इत्यसत्। अन्यत्वादिविकल्पानां तत्राप्यर्थानुवृत्तितः TattvSaṁ. 362; एकसंतानसंबन्धात् प्रत्यभिज्ञानकल्पना। ज्ञानसंततिमार्गेण बार्धान्यत्वाद्यसंभवात् Śloka-Vār. 6. 441 (844. 2); न च सतोऽन्यस्मादसतो विलक्षणं जगत्। असतोऽन्यत्वादि-धर्मानङ्गीकाराद् ब्रह्मणः KarmaNi. 2A. 5; उत्तरत्र जीवादिष्वसंभावितजगत्-स्रष्टृत्वादिनान्यत्वादिसमर्थनम् Nyāyāmṛ. 268B. 7; विपक्षाव्यावर्तकमन्यत्वादिनिष्ठोक्तावच्छेदकताया अनवच्छेदकम् GuruCandr. i. 193. 8; LaCandr. 329. 9; 2 distinction etc. अन्यत्वादिभिरनन्वयत्वप्रतीतेरेव चमत्कारित्वम् RasGaṅ. 419.2.

**अन्यत्वाधिगम** (anyatvādhigama) *m.* knowledge of difference सांख्यैः ... उक्तः प्रकृत्यात्मनोरन्यत्वाधिगमोऽभ्युपाय इति स प्रागेव निर्वासितः NyāyMañ. ii. 117. 9.

**अन्यत्वाधिष्ठान** (anyatvādhiṣṭhāna) *adj.* which has difference as the substratum, i.e. different उत्पादनिरोधसंततिभृतः प्रबन्धो नान्यत्वं बाधते देहादिसंघातस्यान्यत्वाधिष्ठानत्वात्। अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायते NyāyBh. 161. 3 (*on* iii. 1.4)

**अन्यत्वाधिष्टान** (anyatvādhiṣṭhāna) *n.* substratum of difference उत्पादनिरोधसंततिभृतः प्रबन्धो नान्यत्वं बाधते देहादिसंघातस्यान्यत्वाधिष्ठानत्वात् NyāyBh. 161. 3 (*on* iii. 1. 4)

**अन्यत्वानवगति** (anyatvānavagati) *f.* absence of understanding of difference यदि पदार्थान्यत्वं स्यात्, आवागोद्वारतैव केवलमन्या। कथम्। वैदिकलौकिकयोः पदार्थयोरन्यत्वानवगतेः Bṛha. 382. 9 (*on* i. 1. 25)

**अन्यत्वानुपपत्ति** (anyatvānupapatti) *f.* 1 untenability of the otherness यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते पर एव स भवति ... प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते BrahmSūBh. (Śaṅ.) 152. 4 (*on* i. 3. 7); 2 untenability of the difference आत्माज्ञाननिमित्तस्य ह्यन्यत्वानुपपत्तितः। तदाप्यविद्याविध्वस्तावधिकारो न कर्मणि BrĀraUBhVā. (Sambandha.) 255; नावरोहतो जीवस्याकाशादिरूपतापत्तिः ... तत्र सुखदुःखानुभवाभावात्। तदनुभवार्थं हि तत्तच्छरीरसंबन्धः। अन्यस्यान्यत्वानुपपत्तेश्च BrahmSūBh. (Śrī.) ii. 214. 4 (*on* iii. 1. 22)

**अन्यत्वानन्यत्व** (anyatvānanyatva) *n.* difference and non-difference आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् BrahmSūBh. (Śaṅ.) 382. 11 (*on* ii. 2. 18); प्रकाशमानेयमविद्या किं ब्रह्मात्मना प्रकाशते उत तदन्यत्वेन। यद् वा अन्यत्वानन्यत्वसाधारणात्मना ŚatDū. 176.9; जातिव्यक्तिवाच्यत्वविचारस्य लोकवेदगत-

पदतदर्थान्यत्वानन्यत्वविचाराधीनत्वादन्यत्वानन्यत्वमेव प्रथमं विचार्यते MīmāKau. i. 138. 2 (*on* i. 3. 30)

**अन्यत्वापत्ति** (anyatvāpatti) *f*. undesired contingency of difference संबन्धात्तदधिकरणसंबन्धान्यत्वापत्तेरित्येष न पन्थाः। तत्संबन्धिनि व्यवहार इति चेन्न। तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात् KhaṇḍanKhā. 1057. 17-19; न च प्राकृत उपकारे वैकृतानां जनकत्वसंभवः। तथासत्युपकारस्याधिकपदार्थजन्यत्वेनान्यत्वापत्तेः MayūMāli. 697. 21 (*on* x. 4. 1); विज्ञातुर्ग्रहणापेक्षैव नास्ति, स्वयमेव ग्रहीतृत्वेन स्थितत्वात्। न च तस्यैव तद्ग्रहणं युक्तमन्यत्वापत्तेः Bhāsk. i. 73. 11 (*on* i. 1. 4)

**अन्यत्वाभाव** (anyatvābhāva) *m*. 1 absence of otherness अद्वयार्थो हि परमार्थः। तमद्वयार्थम् ... संदर्शयति। न सत्परिकल्पितपरतन्त्रलक्षणाभ्यां न चासत्परिनिष्पन्नलक्षणेन। ... न चान्यया ताभ्यामेवान्यत्वाभावात् MaYānaSū. 22. 17 (6. 1); शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्य-वन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतरामिति चेत्। न LaŚabdeŚe. i. 76. 1; ii. 1106. 16; 2 absence of difference (तदनन्यत्वम्) 'तस्मात् कारणात् परमार्थतोऽनन्यत्वम्' – व्यतिरेकेणाभावः कार्यस्यावगम्यत इति हि तेषां योजना। अतस्तत्पुरुषसामर्थ्यादनन्यत्वमन्यत्वाभावः स्यात् ŚrutaPra. ii. 232. 2 (*on* ii.1.15)

**अन्यत्वाभिमान** (anyatvābhimāna) *m*. notion as being different सत्यभेदे ... वृत्तौ नानात्वाभिमानः। यथा द्रव्यान्तरोपहितस्फटिकद्रव्येऽन्यत्वाभिमानो – नीलो लोहित इति NyāyBh. 200. 2 (*on* iii. 2. 9)

**अन्यत्वायोग** (anyatvāyoga) *m*. untenability of difference भावरूपान्तरेण भावात् भवत एवान्यथाभाव इति चेत् – न, भावरूपेऽन्यत्वायोगात् IṣṭaSi. 231. 1.

**अन्यत्वावगम** (anyatvāvagama) *m*. understanding as being different अत्रमयादीनामन्योन्यमन्यत्वावगमात् NyāySu. (Ja.) 131B. 10 (*on* i. 1. 6)

**अन्यत्वावधि** (anyatvāvadhi) *m*. limit or point of the otherness अन्यत्वा-वधेरात्मन उपलक्षणत्वे अन्यत्वमात्रमुपलक्ष्यमाणमन्यस्मादप्यन्यत्वमादाय पर्यवस्येत् KhaṇḍanKhā. 1303. 15.

**अन्यत्वावभास** (anyatvāvabhāsa) *m*. (erroneous) appearance of the otherness अविद्याकृतं भूतमात्रोपाधिसंसर्गजम् अन्यत्वावभासं तिरस्कृत्य पूर्णमेव अनन्तरमबाह्यम् ... ब्रह्म अवशिष्यते BṛĀraUBh. 686. 11 (*on* v.1.1)

**अन्यत्वावश्यंभाव** (anyatvāvaśyambhāva) *m*. necessity of the diffence वरणस्य दृष्टार्थत्वेन वृतानां पुनर्वरणानुपपत्त्यान्यत्वावश्यंभावे तत एव संज्ञायाः ... अन्यपरत्वं स्वीकार्यम् MayūMāli. 324. 4 (*on* iii. 7. 10)

**अन्यत्वाविशेष** (anyatvāviśeṣa) *m*. 1 absence of particularity, i. e. similarity in being another शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्या असती कार्यं नियच्छेत् ... अन्यत्वाविशेषात् BrahmSūBh. (Śaṅ.) 320. 12 (*on* ii. 1. 18); अयं चागुणोऽप्यपेक्षतां संबन्धत्वे सत्यप्यन्यत्वाविशेषात् IṣṭaSi. 90. 20; अथान्यस्य चेदन्यत् कार्यं कस्मात् सर्वं सर्वस्य न भवति अन्यत्वाविशेषात् TātpaṬ. (Vā.) 166. 3 (*on* i. 1. 5); 560. 3 (*on* iii. 2. 14); प्रागुत्पत्तेः कार्यस्यासत्त्वात् कार्यादन्यत्र कारकव्यापारेण भवितव्यम्। तत्रान्यत्वाविशेषात् तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत BrahmSūBh. (Rā.) 420. 15 (*on* ii. 1. 15); ननु ज्ञानान्यश्चेद् घटादिस्तस्य प्रकाशः कथं ज्ञाने चेत्, तर्हि एकस्मिन् सर्वस्य प्रकाशः स्यात् अन्यत्वाविशेषादिति चेन्न GoviBh. 130. 10 (*on* ii. 2. 28); 2 absence of particularity, i.e. similarity in being different यदपि कर्तृभोक्त्रोरन्यत्वाविशेषेऽपि संतानान्तरजातानां भोक्तृत्वप्रसङ्गपरिहाराय हेतुफलभावकृतो विशेषः परैरुक्तः सोऽपि दुःसाधन एव NyāyRa. 700. 16 (*on* 5 (17). 47)

**अन्यत्वाव्यतिक्रम** (anyatvāvyatikrama) *m*. non-transgression of the otherness स्वभावो हि भावात्र तत्त्वमन्यत्वं वा लङ्घयेत्, रूपस्यातद्भूत-स्यान्यत्वाव्यतिक्रमात् PramāVāSvopVṛ. 49. 7.

**अन्यत्वाशङ्का** (anyatvāśaṅkā) *f*. doubt regarding the difference न ज्ञातत्वा-ज्ञातत्वे वस्तुनस्स्वरूपम्। अतो न तन्मानमेये। न च तयोरन्यत्वाशङ्कास्पदमपि, तथा अस्फुरणात् IṣṭaSi. 371. 15.

**अन्यत्वासंभव** (anyatvāsambhava) *m*. impossibility of the otherness लभते न द्वितीयत्वमन्यत्वासंभवात् तनः BṛĀraUBhVā. iv. 3. 1523; जातिवाचित्वपक्षे जातेरेकत्वेनान्यत्वासंभवात् ... व्यक्तिवाचित्वमेव युक्तम् MīmāKau. i. 143. 13 (*on* i. 3. 32)

**अन्यत्वासिद्धि** (anyatvāsiddhi) *f*. non-establishment of the otherness अन्यस्यैव उपलम्भ इति चेन्न, अथान्यत्वासिद्धेः ŚaṭDū. 147. 18; नापि सर्वनिर्वाच्यासम्यक्त्वमसत्त्वम् ...। अनिर्वाच्यस्यापि स्वत्वेन त्रैकालिकनिषेधेऽसतोऽ-निर्वाच्यादन्यत्वासिद्धेः Nyāyāmṛ. 30A. 8.

**अन्यत्वोपपादन** (anyatvopapādana) *n*. explanation of the otherness उपासितुरुपास्यस्यान्यत्वोपपादनाद् यथावस्थितस्यैवोपास्यत्वाद्यान्यत्वेनोपास्यमिति पूर्वः पक्षः VedāntDī. 221. 10 (*on* iv. 1. 3); नेतरोऽनुपपत्तेरित्यत्र च संसारिजीवा-दन्यत्वोपपादनमयुक्तम् ... ब्रह्मणः संसारित्वशङ्काया अभावात् ŚrutaPra. iB. 236. 9 (*on* i. 1. 20)

**अन्यत्वोपलक्षण** (anyatvopalakṣaṇa) *adj*. indicator of the state of being the latter one पूर्वत्वमन्यत्वोपलक्षणमिति परविधावपीयं संज्ञा न भवति Pradī. ii. 264B. 21 (*on* i. 4. 50)

**अन्यत्वोपलब्धि** (anyatvopalabdhi) *f*. knowledge of difference ननु चान्यत्वोपलब्धौ सत्यां गोर्वाहीकस्य च गौणो निर्देश उपपद्यते 'गौर्वाहीकः' इति Bṛha. 208. 3 (*on* i. 1. 5)

**अन्यत्वोपलम्भ** (anyatvopalambha) *m*. knowledge of difference विरुद्ध-धर्माधिकरणयोश्चान्योन्यमन्यत्वोपलम्भनियमादिति भावेनोक्तम् NyāySu. (Ja.) 199B.3 (*on* i. 4. 6)

**अन्यत्स्थान** (anyat-sthāna) *n*. (irr.) 1 some other case अन्यत्स्थानगतस्य निवर्तेरन् धर्माः LāṭyāŚS. ii. 10. 21 (comm. यज्ञायज्ञीयस्याग्निष्टोमसाम्नोऽन्यस्थाने प्रयुज्यमानस्य); 2 another place ईदृशेन वचनेन लज्जा भवति सन्नृणाम्। इति हेतोर्निगच्छ त्वमन्यत्स्थानं विलोकय CampaŚreKa. 394.

**अन्यथय** (anyathaya-) *denom*. 1 to change or to transform कथमेवं वृत्तम्। भवतु। विधिविलसितं को वान्यथयेत MahāvīC. App. (282. 30); अयथावस्त्वो विकल्पना न वस्तु विकल्पयन्ति वान्यथयन्ति वा Bhām. 70. 10 (*on* i. 1. 2); निर्णीतार्थ उपक्रम उपसंहारमन्यथयेन्न प्रश्नोपक्रमः संदिग्धार्थत्वात् VedāntKa. 118. 19 (*on* i. 1. 22); 318. 17 (*on* ii. 3. 16); अविरुद्धं तु यद् वृत्तं रसादिव्यक्तयेऽधिकम्। तदप्यन्यथयेद् धीमान् SāhiDa. 323.2; न खल्वीश्वरोऽपि वस्तुशक्तिमन्यथयति SiddhāSi. i. 147. 25; 2 to change (the sense), to employ differenty चरममनन्यथा सिद्धं प्रथमावगतमन्यथयति Bhām.190.6 (*on* i. 2. 26); 3A to make otherwise मानान्तरानुसारी चोद्देशो न तदविरोधेनोद्देश्यमन्यथयति Bhām. 671. 13 (*on* iii. 3. 61); भास्करस्त्वस्थूलमित्यादेर्वर्णेष्वप्राप्त निषेधत्वा-नुपपत्तेरधिकरणमन्यथयामास VedāntKa. 154. 15 (*on* i. 3. 10); यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः SāhiDa. 537. 2; ददति च वरं दत्वा सद्यस्तमन्यथयन्ति च द्रुहिणहरगोविन्दाद्या दैत्येषु NīlaVi. 66. 13; 3B to make otherwise, i.e. to contradict संशया न विकल्पयन्ति विपर्यया नान्यथयन्ति VedāntKa. 54. 4 (*on* i. 1. 2); सांख्यादिमतानि ... उक्तार्थमन्यथयन्ति NyāySu. (Ja.) 313B. 3 (*on* ii. 2. 1); 3C to make otherwise, i.e. to avoid कथं मरणमन्यथयत् ŚukaSa. 65. 6; 65. 10; 3D to make otherwise, i.e. to deceive कन्याकरे मृदनति पादपद्मं पुष्पन्ति गात्रे पुलकाङ्कुराणि। हरे हरे माधव माधवेति हरिस्मृतेरन्यथयांचकार BhārCam. 3. 68 (comm. वञ्चयामासेत्यर्थः)

**अन्यथयित** (anyathayita) *adj*. made otherwise, i.e. degraded सांख्यादि-नान्यथयितं श्रुतिमूर्धवर्त्मोद्धर्तुं कथं परशिवांशमृते प्रभुः स्यात् ŚaṅkaDigVi. (Mā.) 7. 46.

**अन्यथयितव्य** (anyathayitavya) *adj*. [*f*.-ā] 1 (sense) to be changed मानान्तराभावे त्वार्थोऽर्थः श्रुत्यर्थेनापबाधनीयो, न तु तद्बलेन श्रुत्यर्थोऽन्यथयितव्यः Bhām. 336. 19 (*on* ii. 1. 4); कार्यान्वितभूतविषयाः ... । ते ... नाध्याहारादिभिः क्लेशेनान्यथयितव्याः VedāntKa. 83. 17 (*on* i. 1. 4); श्रुतिर्लिङ्गान्नान्यथयितव्या VedāntKa. 116. 21 (*on* i. 1. 22); 2 to be changed or transformed पृथिव्यादि-धातुभ्योऽचेतनेभ्यः ... अङ्कुरस्येव कायस्योत्पत्तिः सोऽयं प्रतीत्यसमुत्पादो दृष्टत्वान्नान्य-थयितव्यः Bhām. 419. 20 (*on* ii. 2. 19); 3 to be made otherwise, i.e. to be contradicted सदेकस्वभावं हि ब्रह्म श्रूयते तदसति बाधके नान्यथयितव्यम् Bhām. 477. 2 (*on* ii. 3. 9); मम देह इति प्रत्ययो नान्यथयितव्यः NyāySu. (Ja.) 491A. 6 (*on* iii. 2. 1); अस्तु नामैवं प्रलापः। निदर्शनं तु कथमन्यथयितव्यम् ŚṛṅgāSar. 60 (23); 4 (pred.) A to be made otherwise, i.e. to be amended प्राचीनपाठस्य यथाकथंचिद् गतिश्चिन्त्या स्वयं नान्यथयितव्यम् BālamBha. i. 65. 23 (*on* 1. 14); 4B to be made otherwise, i.e. to be practised wrongly स्वगृह्योक्तं बहल्पं वा यादृशमुक्तं तत्तथैवानुष्ठेयं न तु शास्त्रान्तरापेक्षयान्यथयितव्यम् BālamBha. i. 100. 21 (*on* 1. 24½); i. 253. 18 (*on* 1. 89)

**अन्यथयितुम्** (anyathayitum) *inf*. 1 to change or to transform न च ... आत्मा देहेन्द्रियादिव्यतिरिक्तः शक्य उपनिषदां सहस्रैरप्यन्यथयितुम् Bhām. 3. 13 (*on* i. 1. 0); 80. 7 (*on* i. 1. 4); 104. 23 (*on* i. 1. 4); अयं यत् सृजते विश्वं तदन्यथयितुं पुमान्। न कोऽपि शक्तः PañcDa. 6. 160 (comm. अन्यथाकर्तुम्); न च ... जीवोऽणुरिति ... वाच्यम्। ... देहव्यापिगुणोपलम्भस्यान्यथयितुम-शक्यत्वात् AdvaiSi. 851. 9; जानन्नपि जगदेव निखिलमपलपितुमन्यथयितुं च नैपुण्यं ब्राह्मणस्य NīlaVi. 13. 1; 2 to change (the sense) न तु प्रथमावगतौ ब्रह्मात्मशब्दौ

ŚrutaPra. iA. 18. 16 (*on* i. 1. 1); दोषस्यापि गुणनिरासार्थतयान्यथासिद्धेरप्रामाण्य-हेतुत्वानुपपत्तिप्रसङ्गात् NyāyKu. 18.4; प्रत्यक्षापेक्षायामपि तत्त्वमस्यादिवाक्यव्यतिरिक्त-जन्यत्वेन प्रत्यक्षेण बाधोपपत्तावन्यथासिद्धेः ŚatDū. 72. 12; न्यग्रोधतरौ वर्तमानः कर्मसंयोग इत्यनुभवात् अवच्छेदमात्रेणान्यथासिद्धौ परमाणुवृत्तिरापद्येत Upask. 327. 4 (*on* vii. 2. 9); यत्र निश्चायकस्यान्यथासिद्ध्या क्रमेणापि स निश्चयो प्रत्यन्तेनावसीयते तत्र गृहीतपरां वृत्तिमाह DaṇḍaVi. 84. 19; कोपेन शूद्रेत्यामन्त्रण-स्यान्यथासिद्धिर्वक्तुं शक्या ŚivārkaMaDī. i. 475. 6 (*on* i. 3. 33); जैमिनिमतस्य परस्परविरुद्धतया अनुवादत्वोद्घाटनपरत्वेन अन्यथासिद्धेः PūrvottaVāNaMā. 240. 8; **3A** proving or establishing by another means सर्वत्र भेदप्रत्ययस्य अन्यथासिद्धेर्नान्यविशेषकल्पना TattvVai. 179. 15 (*on* 3. 53); प्रत्यभिज्ञायाः सादृश्य-विषयतयान्यथासिद्धेः TattvPradī. (Ci.) 320. 13; अन्यथासिद्धिमाशङ्क्याह VedāntKa. 17. 6 (*on* i. 1. 1); न च ज्वालान्तरासंभवे दीपसामग्र्यनुवृत्त्यादेरन्यथासिद्धिः सुवचा NyāyPari. 301. 3; किं संस्थानातिरिक्तं सामान्यं विभक्तस्फुटप्रत्यक्षाध्यवसाय-भेदादङ्गीक्रियते उतोपपत्तिबलात् ... नापि द्वितीयः अन्यथासिद्धेः NyāyPari. 500. 10; तत्परत्वमसिद्धत्वात्परत्वं व्यभिचारतः। निर्दोषतान्यथासिद्धेः प्राबल्यं नैव साधयेत् Nyāyāmṛ. 118B. 6; गर्गवंशीयकपिगोत्रव्यक्तिमात्रेण निषेधस्यान्यथासिद्धिः कल्पयितुमपि शक्येत VīraMi. (Saṁskāra.) 612. 24; विधिनिषेधयोः सांकर्यमिति। तत्र। वक्ष्यद्वेषेण तस्यान्यथासिद्धेरुक्तत्वात् VaiyāBhū. 96. 5 (*on* 22); सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि 'तस्मात् ...' इति उपसंहृतं भाष्ये इति भावः LaŚabdeŚe. i. 341. 14; अत एव तत्सूत्रभाष्ये वार्त्तिकोक्तफलानामन्यथासिद्धिं कृत्वापि 'आरभ्यमाणेऽस्मिन् सूत्रे' इत्याद्युक्तम् LaŚabdeŚe. ii. 568. 1; **3B** comprehension otherwise अनुक्तसिद्धिरुक्तार्थस्यान्यथासिद्धिरुच्यते। प्रयोजनाभिधानं यत्कार्यमित्यभिधीयते BhāvPra. (Śā.) 225. 21 (8); 'दध्ना जुहोति' इत्यादौ हवनस्यान्यथासिद्धेर्दध्नि संचार्यते विधिः SāhiDa. 566. 15; रमणीयानामचिरस्थायित्व-स्यौत्सर्गतः सिद्धेस्तस्य च ... शल्यत्वप्रयोजकत्वम्। अतस्तृतीयप्रभेदस्यापि न विषमसंकीर्णत्वेनान्यथासिद्धिः RasGaṅ. 664. 3; **4A** variety of fallacy of probans अत्रापि पूर्ववदनैकान्तान्यथासिद्धौ दोषौ ĀtmaTaVi. 156. 4; व्याप्तिधर्मता स्वरूपाणा-मन्यतमाप्रतीत्या भवन्ती यथासंख्यमन्यथासिद्धिराश्रयासिद्धिः स्वरूपासिद्धिरित्याख्यायते NyāyKuA. i. 188. 1; तदप्यसिद्ध्यन्यथासिद्धिभ्यामाक्रम्यते ŚatDū. 69. 13; लिङ्गराहित्यग्रहणेन ... आश्रयव्यधिकरणसाध्यासिद्ध्यन्यथासिद्धीनां निरासो लभ्यते NyāySu. (Ja.) 265B. 13 (*on* ii. 1. 2); व्यपदेशभेदादिहेतूनां व्यभिचारान्यथा-सिद्धिभ्याम् आभासत्वात् केन हेतुना द्रव्यस्य ... निषेधः करिष्यते NyāySu. (Ja.) 357A. 11 (*on* ii. 2. 6); समुदायिनां वाक्यानां कृतिः पक्षः, न चास्मदादि-बुद्धिपूर्वकत्वेनान्यथासिद्धिः Upask. 256. 12 (*on* vi. 1. 1); **4B** wrong demonstration, false reasoning, wrong argument न चाद्वैतवादिनं प्रति तथा कर्तुं शक्यते तं प्रत्यन्यथासिद्धेरुक्तत्वात् KhaṇḍanKhā. 176. 6 (*on* 1. 124)

**अन्यथासिद्धिचतुष्टय** (anyathāsiddhi-catuṣṭaya) *n.* group of four redundancies अस्ति च ... कुलालपित्रादिष्विव अन्यथासिद्धिचतुष्टयराहित्यविशिष्ट-नियतपूर्ववृत्तितापरपर्यायः प्रयोजकत्वाख्यः MīmāKau. ii. 149. 17 (*on* iii. 1. 10)

**अन्यथासिद्धितस्** (anyathāsiddhi-tas) *adv.* on account of explanation in another way वाक्यादावैक्यबुद्धेस्त्वनुकथितनयादन्यथासिद्धितश्च TattvMu. 4. 90.

**अन्यथासिद्धिदूषित** (anyathāsiddhi-dūṣita) *adj.* refuted by redundancy प्रतिबन्धकसंबन्धः कार्यस्यैव ... (हि वक्ष्य)ते। तदभावो न हेतुः स्यादन्यथासिद्धिदूषितः NyāyKu. 166. 6.

**अन्यथासिद्धिदोष** (anyathāsiddhi-doṣa) *m.* defect of explaining in another way न तावत्सर्वशब्देन स्वतः शब्दः प्रतीयते। अन्यथासिद्धिदोषेण क्वचिद्येन न कल्प्यते NyāyKu. 11. 10.

**अन्यथासिद्धिनिबन्धन** (anyathāsiddhi-nibandhana) *adj.* caused by redundancy एकाकार्यविषयव्यतिरेकेण च तद्बुद्धेरेककार्यत्वैकदेशव्यवस्थानाद्य-न्यथासिद्धिनिबन्धनमपि न किंचिद्वक्तुं शक्यते NyāyMañ. ii. 115. 11.

**अन्यथासिद्धिनिरसनादि** (anyathāsiddhi-nirasanādi) *adj.* refutation etc. of redundancy एवमन्यत्राप्यन्यथासिद्धिनिरसनादिरनुग्रहस्तत्र तत्र दर्शयितव्यः TārkiRa. 203. 2.

**अन्यथासिद्धिनिरास** (anyathāsiddhi-nirāsa) *m.* removal of fallacy of probans न व्याप्तिमत्तया प्रतिसंधीयमानस्य लिङ्गस्यानुमानत्वात् ... तत्प्रतिसंधानस्य प्रसिद्धाविनाभावस्य साधनस्य पक्षधर्मताप्रतिपादनेन स्वरूपासिद्ध्यन्यथासिद्धिनिरासेनापि प्रयोजनवत्वात् TārkiRa. 183. 2; SarvaDaKau. 74. 11.

**अन्यथासिद्धिनिरूपकता** (anyathāsiddhinirūpaka-tā) *f.* the state of being what describes redundancy अन्यथासिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्तिताव-च्छेदकधर्मवत्वर्गकत्वमेव स्वर्गकारणत्वम् VyutpaVā. 207. 24.

**अन्यथासिद्धिनिरूपकत्व** (anyathāsiddhinirūpaka-tva) *n.* the state of being what describes redundancy गोत्वादिजातिस्वीकारेऽपि ... तस्यावाभ्यमन्यथा-सिद्धिनिरूपकत्वस्वीकारात् LaCandr. 317. 24.

**अन्यथासिद्धिपञ्चक** (anyathāsiddhi-pañcaka) *n.* group of five redundancies स च साक्षात् कारणत्वादपि अन्यथासिद्धिपञ्चकराहित्यघटितात्र लघुः तत्र परस्परासंबन्धात् लघुः MīmāKau. ii. 149. 19 (*on* iii. 1. 10)

**अन्यथासिद्धिपरत्व** (anyathāsiddhipara-tva) *n.* the state of being meant to convey the establishment by another means भाष्यस्य प्रेष्ठाद्युदाहर-णविशेषेऽन्यथासिद्धिपरत्वात् SiddhāKau. 451B. 9 (*on* iii. 1. 21)

**अन्यथासिद्धिपरिहार** (anyathāsiddhi-parihāra) *m.* **1** avoidance of (the defect of) fallacy of probans प्रतिज्ञादिवचनानन्तरं हेतोरसिद्ध्यन्यथासिद्धिपरिहारार्थं उपनयः NyāyPari. 161. 2; **2** avoidance of comprehension otherwise निःशेषच्युतचन्दनम् ... इत्यत्र ... वाच्यार्थमुपपादयितुम् ... अन्यथासिद्धिपरिहाराय निःशेषविशेषणं कृतम् CitraMī. 2. 24; RasGaṅ. 15. 1.

**अन्यक्षसिद्धिप्रतिपादक** (anaythāsiddhi-pratipādaka) *adj.* which explains redundancy अविनिगमपरिहारार्थं जीवपरामर्शस्यान्यथासिद्धिप्रतिपादकं सूत्रमवतार्य व्याचष्टे VedāntKa. 163. 2 (*on* i. 3. 14)

**अन्यथासिद्धिप्रदर्शक** (anyathāsiddhi-pradarśaka) *adj.* illustrating redundancy एवमेता भूतमात्रा इति वाक्यस्यार्थत उपादानेन ब्रह्मलिङ्गस्यान्यथासिद्धि-प्रदर्शकं जीवमुख्यप्राणलिङ्गसूत्रसिद्धान्तभाष्यम् VedāntKa. 128. 25 (*on* i. 1. 28)

**अन्यथासिद्धिप्रदर्शन** (anyathāsiddhi-pradarśana) *n.* act of illustrating redundancy 'ष्यङः संप्रसारणम्' इति सूत्रे भाष्येऽस्याः परिभाषायाः प्रयोजनेऽन्यथा-सिद्धिप्रदर्शनेनेयं प्रत्याख्याता PariVṛ. (Nī.) 39. 14.

**अन्यथासिद्धिप्रलाप** (anyathāsiddhi-pralāpa) *m.* lamentation of the establishment by another means रूपाभावप्रतीत्या च नियमेनापेक्षत इत्यापात-मनन्यथासिद्धमैन्द्रिकत्वमभावस्येत्यन्यथासिद्धिप्रलापं गजनिमीलनेनावधीर्य सिद्धवदाह NyāyVārPari. 492. 1.

**अन्यथासिद्धिप्रसङ्ग** (anyathāsiddhi-prasaṅga) *m.* occasion of redundancy अन्यथा भ्रामणादिना दण्डादीनामन्यथासिद्धिप्रसङ्गात् Upask. 198. 14 (*on* iv. 1. 6)

**अन्यथासिद्धिमानतस्** (anyathāsiddhimāna-tas) *adv.* from the proof of establishment otherwise स्वरूपं हि तदेतेषामन्यथासिद्धिमानतः AnuVyā. 51B. 2 (*on* 3.3)

**अन्यथासिद्धियोगिन्** (anyathāsiddhi-yogin) *adj.* associated with redundancy अन्वयव्यतिरेकित्वेऽप्यन्यथासिद्धियोगिनः। हेतुत्वेन न गण्यन्ते NyāyKu. 77. 13.

**अन्यथासिद्धिरहित** (anyathāsiddhi-rahita) *adj.* devoid of (the defect of) fallacy of probans अन्यथासिद्धिरहिताद्धिततमत्वलिङ्गादपि प्राणः परमेश्वरः ŚivārkaMaDī. i. 286. 32 (*on* i. 1. 28)

**अन्यथासिद्धिवर्णन** (anyathāsiddhi-varṇana) *n.* description of redundancy सति संभवेऽवर्जनीयतयान्यथासिद्धिवर्णनमयुक्तम् MayūMāli. 409. 22 (*on* v. 1. 4)

**अन्यथासिद्धिवारणार्थम्** (anyathāsiddhivāraṇārtham) *adv.* for the sake of avoiding redundancy मतान्तरप्रसिद्धप्रधानेन अन्यथासिद्धिवारणार्थं प्रधानात्पर-मित्युक्तम् YuktiSneha. 2. 36 (*on* i. 1. 1)

**अन्यथासिद्धिविचार** (anyathāsiddhivicāra) *m.* title of a work, PW.; pw.

**अन्यथासिद्धिव्युदास** (anyathāsiddhi-vyudāsa) *m.* refutation of explanation in another way व्यापारविशेषशब्देनाभिधायिशब्देन चान्यथासिद्धिव्युदासः ŚrutaPra. iB. 177. 6 (*on* i. 1. 5)

**अन्यथासिद्धिशङ्का** (anyathāsiddhi-śaṅkā) *f.* **1** doubt regarding redundancy उपाधिविधूननद्वारेणान्यथासिद्धिशङ्कानिरसनहेतुस्तर्कः TārkiRa. 232.5; कर्मज्ञानाख्यहेत्वोः समपरिहरणा ह्यन्यथासिद्धिशङ्का TattvMu. 1. 36; **2** doubt regarding the false reasoning or wrong argument विषये यथा संशयस्तथा प्रामाण्ये तन्निश्चयस्यान्यथासिद्धिशङ्कया तं परिभूय भवति संशयः TattvCin. i. 222.6; **3** doubt regarding establishment by other means एवकारेणान्यथा-सिद्धिशङ्कया उक्तस्थलेषु व्यवच्छेदः VīraMi. 733. 15 (*on* 2. 283)

**अन्यथासिद्धिशून्य** (anyathāsiddhi-śūnya) *adj.* devoid of redundancy अन्यथासिद्धिशून्यमनन्यथासिद्धम् TarkKau. 7. 8; अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता। कारणत्वं भवेत् BhāṣāPa. 16.

**अन्यथासिद्धिशून्यत्व** (anyathāsiddhiśūnya-tva) *n.* the state of being devoid of redundancy (कारणता) सा च अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वम् MaṇiKa. 58. 6.

**अन्यथासिद्धिसमर्थन** (anyathāsiddhi-samarthana) *n.* substantiation of redundancy अर्थज्ञानगुणत्वाङ्गीकारे हेतुर्वाच्यः स च विचारेण अन्यथासिद्धि-

समर्थनेन प्रत्याख्यात एव PūrvottaVāNaMā. 279. 1.

**अन्यथासिद्धिसंभव** (anyathāsiddhi-sambhava) *m.* 1 possibility of establishment by other means प्रत्यक्षस्य दोषमूलत्वेनान्यथासिद्धिसंभवान्निर्दोषं शास्त्रमन्यथासिद्धं प्रत्यक्षस्य बाधकम् VedāSaṁ. 102. 16; 2 possibility of redundancy श्रवणकीर्तनस्मरणानाम् ... युगपदपि संभवादन्यथासिद्धिसंभवे विनिगमकाभावादेकेनैव मुक्तिः AṇuBh. 239. 1 (*on* iii. 3. 31)

**अन्यथासिद्धिसंभावना** (anyathāsiddhi-sambhāvanā) *f.* possibility of establishment by other means तासामन्यथासिद्धिसंभावनया निर्णयाभावे तु युक्तिस्वप्न-समर्थासु शपथैरेव निर्णयेत् SmṛtiCan. iv. 720. 2.

**अन्यथासिद्ध्यभाव** (anyathāsiddhy-abhāva) *m.* 1 absence of redundancy जन्यजनकयोर्युगपदन्वयव्यतिरेकग्रहेऽन्यथासिद्ध्यभावात् Upask. 198. 13 (*on* iv. 1. 6); व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावात् BhāṭṭDī. iv. 68. 10 (*on* x. 7. 1); 2 absence of explanation in another way 'एतत्त्रमय'मित्यादिफलवाक्येषु प्रत्येकम् ... उपासनावाक्येषु श्रुतस्यैव ... अन्यथासिद्ध्यभावात् ŚivārkaMaDī. i. 228. 8 (*on* i. 1. 16)

**अन्यथासिद्ध्यसंभव** (anyathāsiddhy-asambhava) *m.* 1 impossibility of redundancy निमित्तनाशनाश्यत्वेनान्यथासिद्ध्यसंभवात् LaCandr. 530. 40; 2 impossibility of being explained in another way 'स एष यज्ञः पञ्चविधः ... पशुः सोम' इति व्यवहारस्य ज्योतिष्टोमनाम्नान्यथासिद्ध्यसंभवेनानर्थक्याभावाद्वेति भावः MayūMāli. 138. 8 (*on* ii. 2. 6)

**अन्यथासिद्ध्यादि** (anyathāsiddhy-ādi) *adj.* 1 establishment by other means etc. अवयवाख्यं भौतिकं द्रव्यम् ... बुद्धिशब्दान्तरादेरन्यथासिद्ध्याद्युपपादनेन निरस्तम् NyāyPari. 507. 7; 2 redundancy etc. वार्तिकप्रत्याख्यानादेरप्यन्यथा-सिद्ध्यादिनिबन्धनत्वेन विवक्षितार्थे भाष्यवार्तिककारयोर्न विगानम् MayūMāli. 48. 11 (*on* i. 3. 9)

**अन्यथासिद्ध्यापत्ति** (anaythāsiddhy-āpatti) *f.* undesired contingency of redundancy घटत्वादेरपि संयोगविशेषविशिष्टनृत्वेवान्यथासिद्ध्यापत्तेः VaiyāBhū. 257.18 (*on* 69)

**अन्यथासिद्ध्युपवर्णन** (anyathāsiddhy-upavarṇana) *n.* description of redundancy ननु विग्रहे सा नास्तीत्येवमभिप्रायं तदितयुक्तमिति चेन्न। समासे तस्याः साधकस्य भाष्यकारैरन्यथासिद्ध्युपवर्णनविरोधापत्तेः VaiyāBhū. 151. 14 (*on* 30)

**अन्यथासिद्ध्युपहत** (anyathāsiddhy-upahata) *adj.* set aside by wrong argument अन्यथासिद्ध्युपहतदुर्बलतर्कं विहाय श्रुतिबलमेव सूत्रयितव्यम् ŚrutaPra. ii. 370. 28 (*on* ii. 3. 32)

**अन्यथासिध्यत्** (anyathā-sidhyat) *adj.* being established, i.e. present without (probandum) हेत्वाभासोऽन्यथासिध्यन्नप्रयोजक इष्यते NyāyPari. 276.6.

**अन्यथास्तोत्र** (anyathā-stotra) *n.* false praise, i.e. ironical statement सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्। क्षेपं करोति चेद्दण्ड्यः YājñaSm. 2. 204; AgniP. 257. 1; Mitā. 283. 7 (*on*. 2. 204) अन्यथास्तोत्रेण वा सातिशयस्तुतिपदैः प्रसिद्धं 'मूर्खं हे चतुर्वेदिन्' इत्येवं वदन् ... दण्ड्यः BālaKrī. i. 274. 2 (*on* 2. 208); अन्यथास्तोत्रमन्ध एव चक्षुष्मानसीत्यादि DaṇḍaVi. 210. 7; अन्यथास्तोत्रं निन्दापर्यायस्तुतिवाक्यमन्धादेः पुण्डरीकचक्षुरसीत्याद्यभिधानम् VīraMi. 681. 16 (*on* 2. 204); अन्यथास्तोत्रं निन्दास्तुतिः VīraMi. (Vyavahāra.) 380. 13 [satire, pw.; Apte]

**अन्यथास्थ** (anyathā-stha) *adj.* occupying a different (*viz.* third, sixth and tenth) position अनुष्णादीधितौ। अतोऽन्यथास्थे शुभपुंग्रहेक्षिते नरेण संयोगमुपैति कामिनी Bṛhajjā. 4. 1.

**अन्यथास्थित** (anyathā-sthita) *adj.* 1 being or existing in one form अन्यथास्थितस्य अन्यथाभिहितस्य अप्रतिपत्तिर्विप्रतिपत्तिश्च NyāyVār. 181. 13 (*on* i. 2. 60); जायन्ते भ्रान्तिबुद्धयः। बुध्यमाना वस्तुरूपमन्यथास्थितमन्यथा PrakaPañ. 47. 10; एष च ज्ञानस्य दोषः यदन्यथास्थितस्यान्यथाप्रकाशनम् Kāśi. i. 93. 25 (*on* 2. 58); अन्यथास्थितस्यान्यथाभानाद् भ्रान्तमेव योगिज्ञानमभ्रान्तपदेन व्यावर्तितं कथं प्रत्यक्षम् Kāśi. i. 123. 16 (*on* 2. 115); यद्यत्र कार्यमुत्प्रेक्षानिमित्तं तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथास्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदेनाध्यवसितौ ज्ञेयौ AlaṅkāSa. 198. 18; यो ह्यन्यथास्थितं वस्तुस्वरूपमन्यथैव प्रतिपद्यमानः ... स्वयं नष्टः परान्नाशयति न खलु तस्मादन्य उपहासपात्रम् SyādvāMañ. 4 (49); अथेन्द्रजालम्। तच्च मन्त्रतन्त्रादिना अन्यथास्थितस्यार्थस्यान्यथावभासः VīraMi. (Rājanīti.) 305. 24; 2 wrongly stated or described रसावेशतः काव्यं विरचयतो न च विवेकी दृष्टिस्तत्सादनुपरीक्षेत। ... अन्यथास्थितस्य परिवर्तनम् KāvyMī. 52. 22; 3 being contrary दुष्टं विज्ञानमन्यथास्थितमाकारं गृह्णाति Kāśi. ii. 174. 22 (*on* 5 (3). 207); 4 being or existing differently शब्देऽर्थे च संबन्धे चान्यथास्थितो यावन्न बोध्यते तावत्सम्यक् समाधिरशक्यः NayaVi. 169. 5 (*on* i. 1. 5)

**अन्यथास्वभाव** (anyathā-svabhāva) *m.* contrary or opposite character अस्याः (अविद्यायाः) ... अन्यथास्वभावे दृढं व्यवस्थितायाः कथमन्यथात्वम् BrahmSi. 9. 25.

**अन्यथास्वभाव** (anyathā-svabhāva) *adj.* of changing nature अविच्छिन्न-जन्मजरामरणशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथास्वभावः ... एष संसारवृक्षः KāṭhUBh. 169. 11 (*on* 6. 1)

**अन्यथास्वर** (anyathā-svara) *adj.* (used as noun) (that) which possesses different accent अन्यथास्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्त्यन्यथास्वरस्याकृते MahāBh. i. 502. 6 (*on* ii. 4. 85); अन्यथास्वरस्य कृत आद्युदात्तत्वे प्राप्नोति MahāBh. ii. 7. 22 (*on* iii. 1. 3); iii. 61. 7 (*on* vi. 1. 85); iii. 390. 2 (*on* viii. 2. 6)

**अन्यथीभाव** (anyathī-bhāva) *m.* alteration, altered state or condition अप्रमाणमनुपमम् ... प्रतीत्यावताराविरुद्धशान्तमत्यन्तोपशमं तत्त्वं तथावितथानन्यथा-नन्यथीभावं सर्वसत्त्वरुतचरणम् LaliVi. 26. 51 (6); विशेषेणावचारो व्यवचारः। अन्यथीभावेन विसंवादनमित्यर्थः Sphuṭā. ii. 85. 12 (*on* 2. 44) [DBHS.]

**अन्यथीभावमात्र** (anyathībhāva-mātra) *n.* merely altered state or condition, mere alteration तस्यैव तु द्रव्यस्यान्यथीभावमात्रं परिणामः AbhidhKoBh. 159. 21.

**अन्यथेच्छाप्रवृत्ति** (anyathecchā-pravṛtti) *f.* appearance of desire to alter (word etc.) अन्यथाकरणेच्छायामपि वर्तेत न ध्वनिः। ... अन्यथेच्छाप्रवृत्तौ तु नाशङ्का विनिवर्तते TattvSaṁ. 2675.

**अन्यथैव** (anyathaiva) *ind.* 1A in one way अन्यथैव हि मन्यन्ते पुरुषास्तानि तानि च। अन्यथैव प्रभुस्तानि करोति विकरोति च MahāBhā. iii. 31. 33; 1B in another way, MahāBhā. iii. 31.33; 2 without तदुक्तम् 'अन्यथैवाग्नि-संबन्धाद्दाहं दग्धोऽभिमन्यते' इत्यादि NyāyMañ. i. 296. 27.

**अन्यथोक्त** (anyathokta) *adj.* stated differently अन्यथोक्तवक्ष्यमाणानेकश्रुति-विरोधप्रसङ्गादिति भावः ŚivārkaMaDī. ii. 145. 28 (*on* ii. 3. 21)

**अन्यथोक्तत्व** (anyathokta-tva) *n.* the state of being stated differently पुंवाक्येऽप्यन्यथोक्तत्वं यावन्नान्येन गम्यते। तावद्यथाश्रुतं मुक्त्वा नान्यथात्वपरिग्रहः TantrVā. 715. 11 (*on* iii. 1. 13)

**अन्यथोक्ति** (anyathokti) *f.* 1 opposite or contrary statement or analysis परिहृत एव प्रायो दोषोऽर्थस्यान्यथोक्तिपरिहारात् Kāvyālaṅ. (Ru.) 11.1; 2 statement in another way स्वाभाविकान्यथानामसहभावान्यथोक्तयः AnuVyā. 38A. 3 (*on* 3.1)

**अन्यथोत्पत्ति** (anyathotpatti) *f.* production in a different form यः कर्मपूर्व उत्तरोत्तरचित्तप्रसवः सा संततिस्तस्या अन्यथोत्पत्तिः परिणामः AbhidhKoBh. 477. 16 (*on* 9. 0)

**अन्यथोत्पाद** (anyathotpāda) *m.* production in a different form संततेरन्य-थात्वमिति। अन्यथोत्पादः Sphuṭā. ii. 67. 10 (*on* 2. 36)

**अन्यथोदाहरण** (anyathodāharaṇa) *n.* counter example सामान्यतो दृष्टपदं व्याख्यायान्यथोदाहरणमाहेति योजना NyāyVārPari. 742. 4 (*on* i. 1. 5)

**अन्यथोदितगुण** (anyathodita-guṇa) *m.* quality which is mentioned otherwise को नामानुबभूव चन्द्रसुरभिं कुन्दोज्ज्वलं कौमुदी सीतां कीर्तिमितोऽन्य-थोदितगुणस्फीतामकीर्तिं च कः HammīMaKā. 14. 30.

**अन्यथोपकारकत्व** (anyathopakāraka-tva) *n.* the state of being auxiliary in another way हन्तेस्तु प्रकृतिवद्वचनादन्यथोपकारकत्वं न संभवति NyāyRaMā. 183. 19.

**अन्यथोपक्रान्त** (anyathopakrānta) *adj.* opened in one way अन्यथोपक्रान्ते वाक्येऽन्यथोपसंहृते उपक्रमोऽप्यनर्थकः स्यादुपसंहारोऽपि ŚābaBh. 966. 2 (*on* iii. 4. 31)

**अन्यथोपक्षेप** (anyathopakṣepa) *m.* mentioning separately पूर्वश्लोकेन सह नात्र पौनरुक्त्यं शङ्कितव्यम्। तस्यान्यथोपक्षेपात् AbhinBhā. i. 54. 14 (*on* 2.22)

**अन्यथोपगम** (anyathopagama) *m.* accepting differently मूलप्रकृतिर-विकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ... इत्यन्यथोपगमात् AṇuBh. 107.13 (*on* i. 4. 11)

**अन्यथोपदेश** (anyathopadeśa) *m.* 1 teaching in another way तेषां च पुनः प्रतानयितृणां कदाचिदधीतविस्मृताध्ययनानामन्येषां वा संभावनाप्रंशभयादिना अन्यथोपदेशसंभवात् PramāVāSvopVṛ. 113. 20; 2 contrary statement or expression तावन्मात्रदोषपरिहारायान्यथोपदेशः स्वप्नादिषु तथा प्रकृतेऽपि AṇuBh. 84. 16 (*on* i. 3. 19)

**अन्यथोपपत्ति** (anyathopapatti) *f.* 1A tenability otherwise अर्थापत्तिर्हि वाच्यान्यथोऽन्यथोपपत्त्या परिहियते नानुमानम् Kāśi. iii. 84. 4 (*on* 5 (4). 138); प्रासादोदरव्यापिप्रभापपत्तिर्वा त्याज्यो वा दृष्टताग्रहः KhaṇḍanKhā. 123. 14; मण्डलादिकार्यभेदस्य तत्तत्सहकारिभेदादन्यथोपपत्तेश्च TattvPradi. (Ci.) 324. 1; न पुनरुपसरणान्यथानुपपत्त्या पूर्वोपदिष्टस्याह्नात्वं कल्प्यम्। पुनरुपसरणस्यान्यथोपपत्तेः NyāySu. (Ja.) 143B. 4 (*on* i. 1. 6); 1B tenability without (appropriate object) अनुभवस्य ... भ्रान्तत्वेनान्यथोपपत्तौ तद्विपरीतानुमानप्रवर्तनेऽग्न्यावनुष्णत्वानुमाने प्रवृत्तिप्रसङ्गात् ĀtmaTaVi. 605. 1; 1C tenability in another way न च द्वित्वप्रतीत्यनुपपत्तिः तन्मानम्, अन्यथोपपत्तेरुक्तत्वात् TarkSam. (Ā.) 3. 20; लौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपि ... अग्न्यादीनां वाच्यत्वं स्यात् TattvPrakā. 41A. 6 (*on* i. 2. 29); न च तद्वाच्यदेवतास्वरूपस्यैव नित्यत्वेनान्यथोपपत्तिः TattvPrakā. 56B. 6 (*on* i. 3. 29); 2 counter argument अन्यथोपपत्त्या बाधितमेवानुमानम् AṇuBh. 130. 2 (*on* ii. 2. 1) 3 different explanation, cf. अन्यथोपपत्त्यभाव2.

**अन्यथोपपत्तिमात्र** (anyathopapatti-mātra) *n.* [Inst.] merely due to the tenability otherwise शब्दप्रत्यभिज्ञानवत् संयोगप्रतीतेरन्यथोपपत्तिमात्रेण बाधकप्रवृत्तिरिति चेन्न ĀtmaTaVi. 604.18.

**अन्यथोपपत्तिसिद्धि** (anyathopapatti-siddhi) *f.* establishment of tenability in another way एवमभ्युपगमे च प्रसिद्धेरन्यथोपपत्तिसिद्धेर्न तद्विरोधः TattvPrakā. 41A. 2 (*on* i. 2. 28)

**अन्यथोपपत्त्यभाव** (anyathopapatty-abhāva) *m.* 1 absence of tenability otherwise तत्राज्ञानादिमूलत्वकल्पनायोगेनान्यथोपपत्त्यभावात् TattvPrakā. 41A. 7 (*on* i. 2. 29); 2 absence of different explanation आनुमानिकं न प्रत्यक्षमिति प्रत्यक्षपाठस्यान्यथोपपत्त्यभावात् MayūMāli. 427. 6 (*on* v. 2. 9)

**अन्यथोपपद्यमान** (anyathopapadyamāna) *adj.* [*f.*–ā] 1 tenable without (any other means) अन्यथानुपपद्यमाना बलवती तैत्तिरीयकश्रुतिः। छान्दोग्यश्रुतिश्चान्यथोपपद्यमाना दुर्बला Bhām. 472. 5 (*on* ii. 3. 6); 2 tenable in another way वक्ष्यमाणरीत्यान्यथोपपद्यमानार्थकत्वेन तदनुरोधेन मन्त्रे लक्षणानीचित्यात् VīraMi. (Paribhāṣā.) 106.5.

**अन्यथोपपादन** (anyathopapādana) *n.* contrary establishment विपरीतज्ञानं तु यथावद्वस्तुनि भासमाने युक्तिभिस्तस्यान्यथोपपादनम् NyāyPari. 56. 10.

**अन्यथोपयोग** (anyathopayoga) *m.* different usage (of a word) अप्रसादस्तु 'उपास्ताम् ...' अत्र विमलमन्यथोपयोगात् पांसुरिव जलेऽत्राप्रसन्नतां करोति AbhinBhā. ii. 335. 27 (*on* 16. 99)

**अन्यथोपसंहृत** (anyathopasaṁhṛta) *adj.* concluded in another way अन्यथोपक्रान्ते वाक्येऽन्यथोपसंहृते उपक्रमोऽप्यनर्थकः स्यादुपसंहारोऽपि ŚābaBh. 966.2 (*on* iii. 4. 31)

**अन्यथोपस्थिता** (anyathopasthitā) *adj.* (*f.*) occurring in one way अन्यथोपस्थिता वृत्तिश्चेतनस्येतरस्य च। अन्यथा मन्यते यत्र तामुत्प्रेक्षां प्रचक्षते AgniP. 343. 24.

**अन्यथोपहृत** (anyathopahṛta) *adj.* accquired against (the rule) न्यायेनाक्रम्य यल्लब्धं रिपुं निर्जित्य पार्थिवैः। तच्छुद्धं तत्प्रदेयं तत्रान्यथोपहृतं क्वचित् KātySm. 23.

**अन्यथोपात्त** (anyathopātta) *adj.* obtained or acquired in another way तेन तन्मात्रे नियमविधानादन्यथोपात्तं द्रव्यं नास्त्येव TantrRa. 21. 18.

**अन्यथोपासन** (anyathopāsana) *n.* 1 worship in another way अन्यथोपासनमपि तमेवमितिवादिनी। निवारयत्यादरेण न प्रतीक इति प्रभुः AnuVyā. 53A. 1 (*on* 3. 3); 2 contemplation in a wrong way न च वाच्यं फलस्यैव प्रयोजकत्वाद्युक्तमुपासनमिति। अन्यथोपासनस्य निष्फलत्वात् TattvPrakā. 201A. 5 (*on* iv.1.4)

**अन्यथोपासनप्रसङ्ग** (anyathopāsana-prasaṅga) *m.* undesired occasion of contemplation in a wrong way न चान्यथोपासनप्रसङ्गादेतदयुक्तम् TattvPrakā. 202A. 5 (*on* iv. 1. 6)

**अन्यद** (anya-da) *adj.* who gives another (daughter) आदावुद्वाहिता वापि तद्विनाशेऽन्यदः पिता BrahmāṇḍP. iii. 8. 22.

**अन्यदक्षिणा** (anya-dakṣiṇā) *f.* additional sacrificial fee दश वैकादश वा चमसाध्वर्यवोऽन्यदक्षिणाभिः परिक्रीता भवन्तीति विज्ञायते BaudhŚS. i. 37.3.

**अन्यदण्ड** (anya-daṇḍa) *m.* 1 another rod or staff आपद्यन्यदण्डग्रहणार्थं द्रष्टव्यम् BālaKrī. i. 46. 18 (*on* 1.29); 2 another rule or punishment दण्डाल्पत्वे अन्यदण्डगुरुत्वे तत्संग्राहमाह BālamBha. ii. 330. 2 (*on* 2. 275)

**अन्यदण्डादि** (anyadaṇḍādi) *adj.* another punishment etc. अन्यदण्डादिनानुपशाम्यतोऽभ्यासविषयमिदम् DaṇḍaVi. 295. 6.

**अन्यदत्त** (anya-datta) *adj.* [*f.*–ā] 1 given (as gift) by another अद्य लोके न रमेऽन्यदत्ते MahāBhā. i. 88. 9; MatsyaP. 42. 9; स्वदत्ता पुत्रिका धात्री अन्यदत्ता सहोदरी ŚatTrayī. 813; नान्यदत्तमभीप्सामि स्थानमम्ब स्वकर्मणा ViṣṇuP. i. 11. 29; माता ... अन्यदत्तेन दोहदान्नपानादिना ... तृप्ता सती ... अपत्यं तर्पयति Mitā. 97. 8 (*on* 1. 270); अन्यदत्तमथवा स्वयं कृतं व्र(ब्र)ह्मदायमिह ... पालयेत् EI. xxii. 191. 30; अन्यदत्तं तु गौरिच्छन् वराकः पशुरुच्यते PārśvC. 5. 182; धरणी जानेऽन्यदत्ता तु जनेऽर्थिनां स्थिरासी मेदिनी SūktiSu. 23; 2 given (in marriage) to ane person अन्यदत्ता तु या कन्या पुनरन्यत्र दीयते। तस्याश्चैव न भोक्तव्यं पुनर्भूः कीर्तिता बुधैः AṅgiSm. 110; BṛParāSm. 7. 358.

**अन्यदन्त** (anyad-anta) *adj.* (used as noun) (portion of the text) ending with the word *anya* (अथैतद्वाचि कल्प्येत वाक्यमन्यत् तथैव च। प्रसङ्गात् तत्र दूरेऽपि नासंबन्धात् प्रमुच्यते) तदिदमाशङ्कते तावत् - अर्थतद्वाचीत्यन्यदन्तेन ... वाक्यान्तरकल्पनायां प्रमाणमेव नास्ति Kāśi. iii. 182.16 (*on* 5 (7). 72)

**अन्यदन्त** (anya-danta) *m.* another tooth हेरम्बो निजपितुराप्य जूटकूटादेणाङ्कं विनिदधदन्यदन्तधाम्नि ŚrīKaC. 17. 13.

**अन्यदन्तिकृतत्रास** (anyadantikṛta-trāsa) *adj.* who has caused fear to other elephants गजात् ... । अन्यदन्तिकृतत्रासाञ्जनो भीत्याकुलोऽभवत् RājTa. (Prā.) 717.

**अन्यदन्तिन्** (anya-dantin) *m.* another elephant ऐरावणो गन्धं सहते नान्यदन्तिनाम् DaśāvaC. 5. 31.

**अन्यदन्य** (anyád-anya) *adj.* different, various शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दः TaiS.V.iv. 12. 2; मनुष्यलोको वा ऋचां मनुष्यलोकादेव न यन्त्यन्यदन्यथ्साम भवति TaiS. VII. v.4.1; एवं छन्दोभिः स्वर्गलोकमेत्यन्यदन्यच्छन्दः समारोहमुपत्याग्ने दिवे दिवा इति MaiS. i. 5. 10 (i. 78. 9)

**अन्यदन्यत्** (anyádanyat) *ind.* 1 differently, separately अयंतन्ता चरतो अन्यदन्यदिद्या चकारं वयुना ब्रह्मणस्पतिः ṚV. ii.24.5; इयम् ... उक्तान्यदन्यत्प्रतिवक्ति शून्या यात्यन्यतोऽन्यत्र गतिस्पृहापि Surath. 13. 86; 2 ever new अन्यदन्यदसुर्यं वसाना नि मायिनो ममिरे रूपम् ṚV. iii. 38.7.

**अन्यदंपतिविषय** (anyadampati-viṣaya) *adj.* referring to other couple अन्यदंपती(?ति)विषय एव कारणानुरोधी प्रेमावेशः सीतारामयोस्तु न तथा KundaMā. 5. 4 (18)

**अन्यदर्थ** (anyad-artha) *adj.* [P. vi. 3. 99-100] 1 meant for another अन्यदर्थपरिणयने प्रतिप्रसवः VīraMi. (Saṁskāra.) 737.1; 2 the adjectival word or form *anyadartha* अर्थे परतोऽन्यस्य दुगागमो वा भवति। अन्यदर्थः अन्यार्थः CāndraVṛ. *on* v.2.118; KāśiVṛ. *on* vi.3.100; JaineVṛ. 313. 32 (*on* iv. 3. 206); PrakriKau. i. 665. 4; SiddhāKau. 217 B. 11 (*on* vi. 3.100)

**अन्यदर्शन** (anya-darśana) *n.* 1 finding, i.e. securing of another, i.e. substitute 2 finding of (another) priest 3 another doctrine or philosophical system 4A perception of anything other (than self) B act of seeing other one (than Jina) 5 knowledge of one 1 finding, i.e. securing of another, i.e. substitute अन्यदर्शनात् MīmāSū. i. 3. 32 (ŚābaBh. यदि पशुरुपाकृतः पलायेत अन्यं तद्वर्णं तद्वयसमालभेत); 2 finding of another (priest) चमसे चान्यदर्शनात् MīmāSū. iii. 5.35; MīmāSū. iii. 7.48 (ŚābaBh. चमसे चान्यं चमसाध्वर्योर्दर्शयति); 3 another doctrine or philosophical system यो वान्यदर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति। ... स्वप्नलब्धधनेनैव धनवान्स भवेत्तदा KulārT. 2. 48; 5.101; सौगतं दर्शनं पथ्यं दोषवत्त्वन्यदर्शनम् BṛĀraUBhVā. iv. 3. 480; शिवत्वादन्यदर्शने दूषणं संप्रसज्येत ŚivDṛ. 6. 116; विभुः। प्राहान्यदर्शनमहासंत्रासजनकं वचः ŚivaP. vi. 14.7 (489 A. 6); 4A perception of anything other (than self) यत्र गणितभेदो निवर्तते अन्यदर्शनश्रवणमननाभावात्, तं परमानन्दं विवक्षन् आह BṛĀraUBh. 590. 11 (*on* iv. 3.33); (यत्र नान्यत्पश्यति ... स भूमा) यत्र नान्यदिति वाक्येऽन्यदर्शनश्रवणादिनिषेधात् द्दश्यमिथ्यात्वशङ्का स्यात् ŚrutaPra. ii. 18. 14 (*on* i.3.7); 4B act of seeing other one (than Jina) श्रेष्ठयपि ... निःशेषान्यदर्शनव्यतिरिक्तान्यस्य समयस्याविदितपरमार्थजनापेक्षया ... आरक्षिकलोकमेवमभणीत् YaśasCam. ii. 303. 25; 5 knowledge of one न चान्यदर्शनेऽन्यकल्पना युक्ता TātpaṬ. (Vā.) 158. 17 (*on* i. 1. 5); VyaktiVi. 15. 21.

**अन्यदर्शननिषेध** (anyadarśana-niṣedha) *m.* refutation of the perception of other thing (than self) केन कं पश्येत इत्यादिनान्यदर्शननिषेधात् ब्रह्मविदः कामोपभोगासंभवश्चेति चेत्। मैवम् AṇuBh. 27. 2 (*on* i. 1. 11)

**अन्यदर्शनभक्त** (anyadarśana-bhakta) *m.* devotee of another doctrine or philosophical system यः समुद्दिश्य ... आगमम् । ... गोपयत्यकृतात्मनाम्। अन्यदर्शनभक्तानां विद्धि तं शास्त्रधारकम् JayāS. 22. 56; 29.185.

**अन्यदर्शनवचन** (anyadarśana-vacana) *n.* injunction of the finding, i.e. securing of another, i.e. substitute अन्यदर्शनवचनं च न स्यात्, अन्यं तद्रूपमिति ŚābaBh. 319.4 (*on* i. 3. 34)

**अन्यदर्शनवर्जित** (anyadarśana-varjita) *adj.* devoid of of, i.e. avoiding the sight of any other दृष्ट्वा च दूरतः सीतामन्यदर्शनवर्जितः। अचिन्तयदसौ PadmP. (Ra.) 53.20.

**अन्यदर्शनविशेष** (anya-darśanaviśeṣa) *m.* specific knowledge of another object अन्यदर्शनविशेषप्रतिषेधेन आत्मानं पश्यतीत्युच्यते, तदैकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत् ChāndoUBh. 459. 18 (*on* vii. 24. 1)

**अन्यदर्शनसंस्थ** (anyadarśana-saṁstha) *adj.* adhering to another doctrine or philosophical system नान्यदर्शनसंस्थस्तु मद्भक्तैस्तत्परायणैः। पवित्रारोहणादीनामर्थनीयो हि देशिकः PauṣkS. 30. 198; अन्यदर्शनसंस्था ये नानुग्राह्या अतोऽब्जज PauṣkS. 38. 70; PāraS. 19.338; मन्त्रसंतर्पणम् ... वाच्यम् ... । नान्यदर्शनसंस्थानाम् JayāS. 15. 263; PāraS. 7. 253.

**अन्यदर्शनसम** (anyadarśana-sama) *adj.* equal to another doctrine or philosophical system पीयूषं विषवत् ... । ज्योत्स्नां ग्रीष्मजयर्मवत् स मनुते ... जैनेन्द्रं मतमन्यदर्शनसमं यो दुर्मतिर्मन्यते SindūPra. 19.

**अन्यदर्शनसंबद्ध** (anyadarśana-sambaddha) *adj.* connected with another doctrine or philosophical system अन्यदर्शनसंबद्धविद्वत्प्रणतितस्तदा। ... सुविमृश्य सः। ... देवबोधः ... असाध्नोत् परं भवम् PrabhāC. 194. 7.

**अन्यदर्शनसिद्धान्त** (anyadarśana-siddhānta) *m.* conclusive view or established theory of another doctrine or philosophical system तस्य शिष्याः ... । अन्यदर्शनसिद्धान्तं नैव जानन्ति तत्त्वतः SaurP. 39. 67.

**अन्यदर्शनसेविन्** (anyadarśana-sevin) *adj.* follower of another doctrine or philosophical system यत् ... । यागानां चैव सर्वेषां प्राधान्येन वर्तते। तदवाच्यमभक्तानाम् ... अन्यदर्शनसेविनाम् PauṣkS. 18. 57; तावन्यदर्शनसेविनौ। देवानां प्रतिमाभङ्गो(?ङ्गं) विन्यवारयताम् RājTa. (Jo.) 777.

**अन्यदर्शनाचार** (anyadarśanācāra) *m.* practice of seeing another वन्धोऽन्यदर्शनाचारो हस्तमात्रे भुवस्तले RājTa. (Śrī.) 2. 96.

**अन्यदर्शनादि** (anya-darśanādi) *adj.* perception or knowledge etc. of anything else यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते, तदा द्वैतसंव्यवहारविलक्षणो भूमेत्युक्तं भवति ChāndoUBh. 459.17 (*on* vii. 24. 1); 460. 3 (*on* vii. 24.1)

**अन्यदर्शनादिक** (anyadarśanādi-ka) *adj.* perception or knowledge etc. of another thing भूमन्यनुभूयमाने सति अनुभवितुस्तदाविष्टस्यान्यदर्शनादिकं निषिध्यते। ... सुषुप्तस्य प्राणिनः भूमरूपत्वं वदन्नुपहासास्पदम् GoviBh. 44. 8 (*on* i. 3.8)

**अन्यदर्शनानुवाद** (anyadarśanānuvāda) *m.* reiteration of knowing something else अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नस्तदभावत्वलक्षणस्य विवक्षितत्वात् नान्यत्पश्यति इति विशेषणम् ChāndoUBh. 460. 15 (*on* vii. 24.1)

**अन्यदर्शनाभाव** (anyadarśanābhāva) *m.* absence of knowing any thing else यद्यन्यदर्शनाभावादीर्ष्यादिविनिवार्यते। अदर्शनादरत्यादिः कथं तेन निवार्यते AnuVyā. 57 B. 10 (*on* 3. 4)

**अन्यदर्शनाभ्यास** (anyadarśanābhyāsa) *m.* practice of another doctrine or philosophical system विचिकित्सा हि नृशिरःकपालाद्यशनेषु या। साप्यन्यदर्शनाभ्यासभावनोपनिबन्धना NyāyMañ. i. 245. 5.

**अन्यदर्शिन्** (anya-darśin) *adj.* A who sees another (than self) सुषुप्ते योऽवशिष्टोऽत्र कौटस्थ्यान्नान्यदर्श्यसौ BṛĀraUBhVā. iv. 3. 1513; B who sees something else, i. e. an individual यदि तु कस्मिंश्चिदेवासाधारणे सामान्येन ज्ञातसंबन्धेऽन्यदर्शिनापि सामान्यमनुमीयते। ... तर्हि सर्व एव सर्वस्य प्रत्ययको भवेत् Kāśi. iii. 93. 6 (*on* 5(4). 165)

**अन्यदल** (anya-dala) *n.* another hemistich पूर्वाशानुक्रमादेवमुद्दिश्यान्यदलान्यपि। अष्टरात्रं जपेद्योगी सर्वप्रत्यूहशान्तये YogŚā. 8. 68.

**अन्यदसदाश्रित** (anyadasad-āśrita) *adj.* who entertains distinct, i.e. particular evil intention देवस्य मायया सृष्टा ये चान्यदसदाश्रिताः। भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ BhāgP. iii. 2. 10.

**अन्यदा** (anyadā) *adv.* [P. v. 3. 15; Kātan. ii. 6. 34; JaineVyā. iv. 1. 80; CāndraVyā. iv. 3. 13; MugdhaBo. 7.101 (77. 9)] **1A** at another time, on another occasion **2A** once upon a time, once, one day **B** at another moment **C** on next day **2A** once upon a time, once, one day **B** any time **3** otherwise, if not, or else **4** in another case **5** at a different time **6** sometimes **7** the word or form *anyadā* **1A** at another time, on another occasion कठोराणि न वाच्यानि अन्यदा प्रमदान्तरे MahāBhā. xiii. App. I. 15 (4558); xii. App. I. 18 (32); अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति Rāmā. ii. 16. 9; ii. 65.18; बहूनि पश्यन्मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः। ... पितुर्महात्मा प्रविवेश वेश्म Rāmā. ii. 65. 28; सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने। अन्यदा पुनरार्येति महाराजेति भूपतिः NāṭyaŚā. 17. 83; स्नानं दानं जपो होमः कर्तव्यो राहुदर्शने। अन्यदा त्वशुचौ रात्रिस्तस्मात् तां परिवर्जयेत् ParāSm. 12. 23; अन्यदा जगति राम इत्ययं शब्द उच्चरित एव मामगात् RaghuVa. 11. 73; अन्यदासौ स्वस्ताङ्गो देवपादान्तिकमागच्छति PañcT. 1. 86 (46) (98. 7); 1. 127 (63) (139. 3); साध्यसाधर्म्यात् तद्धर्मभावित्वे सति ... एकदा धर्मो विशेषणत्वेनान्यदा धर्मी विशेषणत्वेनेति तस्येति धर्मिग्रहणं युक्तम् NyāyVār. 137. 18 (*on* i. 1. 36); अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः। पराक्रमः परिभवे वैयात्यं सुरतेष्विव ŚiśuVa. 2. 44 (but Apte in any other case); Hitopa. 3. 7; SaraKaṇṭhā. 115.14; इदमयुक्तमहो महदेव यद्वरतनोः स्मरयत्यनिलोऽन्यदा ŚiśuVa. 6. 56; (व्यायामः) निषेव्यः ... । शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा AṣṭāSaṁ. i. 10.17 (1. 3); AṣṭāHṛ. i. 2. 11; BhāvPra. (Bhā.) 5. 61; अनन्तरफलत्वं तु चिरादेर्यदि साध्यते। ततः स्यात्सिद्धसाध्यत्वमन्यदा न फलं भवेत् ŚlokaVār. 20. 10 (683. 4); यदा स एक एव व्यापार्यते तदैव प्रतीतिः स्यात् नान्यदा Śarka. 113.1; तत्सामर्थ्यवियोगे तु नैव तज्जनकं भवेत्। अन्यदा शक्तिशून्यत्वाद्वियदम्भोरुहादिवत् TattvSaṁ. 104; इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात् BrahmSūBh. (Śaṅ.) 208. 1 (*on* i. 3. 33); घटसंविदोऽप्यन्यदा विषयता स्यादिति चेत्, न, विषयाकाररहितायाः संविदः कदाचिदपि विषयभावादृष्टेः IṣṭaSi. 16.12; (दूरादाहृत्य समिधः संनिदध्यात्) आहरणं तु तात्कालिकमन्यदा वेच्छया ManuBh. i. 172. 13 (*on* 2. 186); (विषघ्नानि च रत्नानि नियतो धारयेत्सदा) नियतः प्रत्यये नित्यं भोजनकालादन्यदापि धारयेत् (राजा) ManuBh. ii. 67.16 (*on* 7. 218); सा जीवशक्तिस्तु यदा कुण्डलिनीस्थितिम्। विहाय ऋजुतां याति ...। तदा विश्वप्रतीतिः स्यात् प्राणिनामन्यदा पुनः TantrRā. 30. 68; कश्चिद्धि सुकृतोन्मेषात् कदाचित् पुरुषो नृपः। श्रीमता कमलक्षेण जायमानो निरीक्ष्यते। अन्यदा पुरुषोऽन्यश्च LakṣmīT. 11.45; नैकदा नान्यदोत्सेको न कदाचिन्न सर्वदा DvyāśraKā. 19.2; एकदा शब्दाकाशयोरन्यतरत्वादित्यर्थः, अन्यदा शब्दघटयोरन्यतरत्वादित्यर्थः TārkiRa. 223.10; न चैकस्यैकरूपेण ज्ञाने किंचिदेकदा ज्ञातमन्यदा चाज्ञातं कारणमिति युक्तम् NyāyKu. 31.10; (वेदोक्तमायुर्मर्त्यानामाशिषश्चैव कर्मणाम्। फलन्त्यनुयुगं लोके) कृते तदैव फलत्यन्यदा विलम्बेन ManvaVi. 68.24 (*on* 1. 84); 506. 25 (*on* 4. 103); अथान्यदा सर्वाण्यपि दर्शनानि एकत्राहूय मुक्तिमार्गे पृष्टे ... श्लोकमिमम् ... समादिश्य श्रीभारती तिरोदधे PrabaCin. 42. 23; न चान्यदापि करणम्। नियतकालीनतादृशाचारेण फलवत्कर्मारिप्समानस्तत्समाप्तिकालीनं मङ्गलमाचरेदिति श्रुत्या आरम्भसमयकर्तव्यताबोधनात् TattvCin. i. 61.2; i. 841.17; iv(2). 146. 2; दीक्षाजागरणं प्रायणीयादौ तद्भवेत्र वा। अदृष्टार्थं ततस्तत्स्यात्र रक्षार्थं ततोऽन्यदा NyāyMāVi. 670. 20 (*on* xii. 1. 8); न च वाच्यमभुक्तस्याप्येवंविधभोगासंभव इति। अन्यदासंभवेऽपि परमात्मप्राप्तावभुक्तस्यापि तदुपपत्तेः TattvPrakā. 219A.4 (*on* iv. 4. 2); धर्मिविशेषोऽप्यर्थसिद्ध एव। ... नियमकथायामेवास्य दोषत्वम्। अन्यदा विशेषप्रतीत्यर्थमुपयोगात् NyāyPari. 203. 8; अन्यदा आशापत्यां राजीमतीछिपिकया गुरुपार्श्वे आगमोक्तत्तपांसि ...' कृतानि PurāPraSaṁ. 80.3; प्रत्यभिवादनकाले अन्यदा च दीक्षणीयात्प्रभृत्याव-भृथस्नानात्कनिष्ठोऽपि दीक्षितो नाम्ना न वाच्यः ManvaMu. 61.7 (*on* 2. 128); (वृद्धदत्तः) अन्यदा पश्चिमे यामे नास्तो रतिं स्वचेतसि। शब्दमेकं नभोभूतं शुश्राव CampāŚreKa. 17; 64; स्वस्वकाले विहितानामकरणे ... अन्यदापि तत्कृतिसंभवात् सावकाशत्वेन तेषामेव बाधो युक्तः AṇuBh. 247.6 (*on* iii. 3. 40); इच्छायां करोति अन्यदा न करोति ... तथा च यथा वास्तविकरणसंपत्तेऽपि तत्क्षणेच्छायां तत्करोति अन्यदा न करोति ŚivārkaMaDī. ii. 154. 16 (*on* ii. 3. 39); मायापरिणाम एव सर्वविषयः प्रलयेऽन्यदा च भेदेन विद्यमानः ... उपाधिः स्वीकर्तव्यः SiddhāTa. 11. 27 [ŚabdaRa. (Vā.) 4590; KośaKaTa. 2. 3032]; **1B** at another moment अन्यक्षणेऽन्यदा Vaija. 287. 7; **1C** on next day. cf. अन्यदाशार्षम्; **2A** once upon a time, once, one day अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता। वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ Rāmā. ii. 68. 15; अन्यदा त्वात्मभयात्ततस्तैः रक्षिपुरुषैः आगत्य तस्य मृषोक्तम् Tantrākhyā. 3. 22; अथान्यदा तस्य रात्रौ क्षेत्रेषु पर्यटतः कदाचिच्छृगालेन सार्धं मैत्री बभूव PañcT. (Kos.) 5. 40 (3) (248.1); 5.1 (234.8); अन्यदा बन्धुपालः ... शकुन्तवचनानि शृण्वन्नतिष्ठत् DaśKuC. 21. 22; 37. 20; 144. 19; अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः ... कश्मलं महदभिरम्भित इति होवाच BhāgP. v. 8. 15; सः ... ईहांचक्रेऽन्यदा गन्तुं वसन्तपुरपत्तनम् TriṣaŚaPuC. i. 1. 44; i. 2. 6; i. 6. ... विवरीतुं प्रचक्रमे PariPar. 39; सा गवाक्षेऽन्यदा पत्युरासीनस्य कचोच्चयम्। ... विवरीतुं प्रचक्रमे PariPar. 1. 94; 1.226; अन्यदा गोधनं हृत्वा चौरास्तत्क्षेत्रसंनिधौ। आगुः PariPar.

2. 696; 8. 299; ऋषयोऽन्यदाम्येत्य तमित्यवोचन् DvyāśraKā. 12. 3; 13.70; (शान्तनुः) सोऽन्यदानन्यसामान्यवेगमारुह्य वाजिनम्। ... मृगवनं ययौ PāṇḍaC. 1.24; 1.76; आबभाराम्बिका गर्भमन्यदोद्दामदोहदम् PāṇḍaC. 1.350; 1.391; आगतो देवकीं द्रष्टुं कंसः शौरिगृहेऽन्यदा PāṇḍaC. 2. 250; 2. 53; क्रीडाजुषां कुमाराणां पुरीपरिसरेऽन्यदा। ... कूपान्तः कन्दुकोऽपतत् PāṇḍaC. 3. 230; 4. 1; अन्यदायं गदाक्रान्तः ... नोऽमन्यत प्रतीकारं, प्रभिन्न इव वारणः SamarāSam. 1. 250; 2. 23; 2. 362; अन्यदा धनपालश्च प्रोचे धनगिरिम् PrabhāC. 3. 13; 11. 5; 14. 21; अन्यदा स कुरूपः सन्धर्मं व्याख्यानयद्विभुः PrabhāC. 6. 20; 22. 11; 77.8; आययावन्यदा वृन्दं गायनान्तावसायिनाम्। श्रवःस्वादिमहानादरसनिर्जिततुम्बरुः PrabhāC. 100. 27; 112. 19; अन्यदा वर्षाकाले ... कविः कश्चिदागत्य राजानं दृष्टवान् BhojPra. 42. 28; अन्यदापश्यदुत्पश्यः पर्वणि क्वापि बालकः। कदन्नभोजनस्तत्र ŚāliC. 1. 38; 2. 60; अन्यदाभयमन्त्रीन्द्रोऽगमच्छ्रीजिनमन्दिरे RauhiC. 243; 370; अन्यदा तन्नगरवास्तव्यो दान्ताभिधानश्रेष्ठी ... विक्रमार्कम् ... आगत्य ... विज्ञपयामास PrabaCin. 5. 2; 46. 24; अन्यदा ... दण्डनायकं समादिदेश ... अम्बिका EI. ix. 156. 7; (कुम्भकारदारकः) अन्यदातिनिर्बन्धं विधाय पृच्छति सति पितरि ... अचकथत् ViviTiKa. 33. 18; 57. 22; अन्यदा स्वसौधस्योपरितले शयानः सातवाहनः ... रुदितमाकर्ण्य ... गृहान्निरगमत् ViviTiKa. 61. 15; 65. 7; पित्रान्यदा सभाप्राप्तो नैमित्तिकशिरोमणिः (पृष्टः) UttaKuC. 137; 263; अन्यदावन्तिपुरीमगुस्ते KālikāKa. 9; अन्यदा वरदत्तः ... देशान्तरं गच्छन् वनदवेन दग्धः PrabaK. 5. 5; 25. 23; 41. 4; अन्यदा सिद्धराजेन्द्रः पट्टे को भविता मम KumāDeC. (So.) 1. 19; 9. 19; 16. 25; अन्यदा दाशरथिना जानकीशुद्धिहेतवे। आदिष्टो हनुमान् Dhūrtā. 140; अन्यदा वसन्तोत्सवे राजान्तःपुरेण सह आरामे क्रीडनाय गतः VetāPañ. (Śi.) 29. 44; अन्यदा तत्र पुरे विदेशादेकं कलावन्नटपेटकं समागात् Bharaṭ. 10A. 2; धनदत्तेन सोऽन्यदा। निशि ... क्षिप्तः पाथोधिपायसि PālaGoKa. 155; अन्यदा ...। स्वप्नान्तः सुखशय्यायां रत्नराशिं ददर्श सा RatnaCūKa. 18; अन्यदा सिद्धसेनदिवाकरेण गुरुचरणसंवाहनां विधीयमानेन गुरव उक्ताः PurāPraSam. 10. 8; 11.19; अन्यदा तया जालान्तरे चन्द्रकरस्पर्शे इदमपाठि PurāPraSam. 22. 4; 95. 10; तिष्ठतः श्वशुरावासे गते काले कियत्यपि। अन्यदा यामिनीशेषे स्मृतं राज्यं निजं हृदि CitraPaC. 235; अन्यदा तेन व्यवहारिणा लक्ष्मीं चञ्चलं विमृश्य श्रीवीतरागप्रासादः कारितः KathāK. 1. 8 [ŚeṣaNā. 1746 gives *anyadā* as the synonym of *ekadā*]; **2B** any time न युज्यते वधूः स्प्रष्टुं पूज्यानामन्यदापि हि। किं पुनः पतिसहिता शयिता रतवेश्मनि PariPar. 2. 522; **3** otherwise, if not, or else (अपुत्राम् ... देवरः पुत्रकाम्यया। ... ऋतावियात्) ऋतुग्रहणं त्वन्यदा दर्शनाद्यपि कथं न स्यादित्येवमर्थम् BālaKrī. i.72.2 (*on* 1.68); (आचम्य प्रयतो नित्यं जपेदशुचिदर्शने) 'प्रयतो' देवतादिपूजाप्रवृत्तो यदा पश्येत्तदैव कुर्यान्नान्यदेति ManuBh. i. 460. 28 (*on* 5. 85); दीक्षितस्यान्नभोजनप्रायश्चित्तं तु भगवत्क्रीडायामपि ... क्रियते। तदानीं कर्तृत्वस्यारोपात्। अन्यदा कर्तृत्वस्याशास्त्रत्वात् न धर्माधर्मजनकत्वम् AṇuBh. 184. 15 (*on* iii. 2.3); निश्चितमस्य समीपे चिन्तामणिर्वर्तते। अन्यदा कथमीदृशी दानशक्तिः KathāK. 92.27; **4** in another case ध्यानं प्रवक्ष्यामि देव्याः ... पाशाङ्कुशौ ...। करैर्दधानामासीनां पूजायामन्यदा स्थिताम्। ... पूजयेत् TantrRā. 10. 18; 11.59; कैशिक्यामृषभान्येंऽशा निधावंशी यदा तदा। न्यासः पञ्चम एव स्यादन्यदा द्विश्रुती मतौ SaṃgīRa. i. 244. 2 (1 (7). 95); सुषुप्तौ ब्रह्मसंपत्तौ च ब्रह्मधर्माविर्भावो न त्वन्यदा AṇuBh. 49. 8 (*on* i. 1. 29); यदा प्रत्ययलक्षणनिषेधो नास्ति तदा ... गुणो भवति। अन्यदा न भवति Prasā. i. 201. 10; **5** at a different time ज्ञातयश्च कुटुम्बाश्च मिलिताश्च ततोऽन्यदा। भोज्यशालां प्रविविशुः BallāC. 105.1; **6** sometimes संलपैरमृतोपमैः ... । अप्याहूतनिमन्त्रमाणकतिचिल्लोकाः किमेताः स्त्रियो वित्तोपार्जनमन्यदाप्यपरथाकर्तुं समुद्युञ्जते RasSa. 67; **7** the word or form *anyadā* काले वर्तमानेभ्यः सप्तम्यन्तेभ्यो दा वा भवति। ... अन्यदा CāndraVṛ. *on* iv.3.13; KātanVṛ. *on* ii. 6. 34; ii. 6. 37; JaineVṛ. 255. 32 (*on* iv. 1. 80); सप्तम्या इति वर्तते ... सर्वस्मिन्काले, सर्वदा। एकदा अन्यदा KāśiVṛ. *on* v. 3. 15; SiddhāKau. 309B. 12 (*on* v. 3. 15); दाप्रत्यये परे सर्वस्य सो वा स्यात्। सर्वस्मिन् काले। सदा ... अन्यदा PrakriKau. i. 905. 6 [now and then, Apte]

**अन्यदाचरिताहार** (anyadā-caritāhāra) *adj.* who has taken food on different time i.e. alternate days ते तेपुर्दानवास्तपः ... । सेवानाः फलमूलानि पुष्पाणि च जलानि च। अन्यदा(था)चरिताहाराः MatsyaP. 129. 9.

**अन्यदातन** (anyadā-tana) *adj.* belonging to another time कथमन्यदातनताद्दशबुद्धिविषयतया अन्यदा सत्त्वं स्यात् KhaṇḍanKhā. 73. 12.

**अन्यदातननिद्रा** (anyadātana-nidrā) *f.* sleep belonging to, i.e. at another time मुखं व्यादाय स्वपितीत्याद्यप्रयोगः कथम् ... मुखं व्यादायेत्यादौ कालिकादिसंबन्धेन व्याप्यत्वाभिप्रायेणैव प्रयोगादन्यदातननिद्रायास्तथात्वाभावात्र प्रयोगः VaiyāBhū. 234. 17 (*on* 58)

**अन्यदात्व** (anyadā-tva) *n.* [Inst.] at a different time (मूढाः) दोषैः सदिग्विभागाद्यैरन्यदात्वेन यान्ति PauṣkS. 36. 246.

**अन्यदाधार** (anyad-ādhāra) *adj.* having something else as its substratum अव्यक्तं कारणम् ... अक्षय्यं नान्यदाधारम् ... । तेनाग्रे सर्वमेवासीत् ViṣṇuP. i. 2. 20.

**[1]अन्यदान** (anya-dāna) *n.* **1A** another gift दत्त्वा ततोऽन्यदानानि ... स चकार महोत्सवम् BhaviP. 512A. 31 (iii (3). 25. 38); **1B** gift of others कर्णार्धस्थितदानसंततिभृतो यस्यान्यदानाधिकं दानं वीक्ष्य सुर्ल(ज्)जिता इव दिशां प्रान्ते स्थिता दिग्गजाः EI. vi. 243. 8; xxiii. 218. 9; **2** another throw (in the game of dice) आदौ उठां कृत्वा अन्यदानं च खेलयेत्। तदा थोकं भवति CaturDī. 22. 15.

**[2]अन्यदान** (anya-dāna) *n.* another rut धोरः ...। कर्णार्धस्थितदानसंततिभृतो यस्यान्यदानाधिकं दानं वीक्ष्य सुर्ल(ज्)जिता इव दिशां प्रान्ते स्थिता दिग्गजाः EI. vi. 243. 8; xxiii. 218. 9.

**अन्यदानफल** (anyadāna-phala) *n.* fruit of another gift अन्यत्यागेनान्यदानफलावाप्तेरसंभवादाह। यद्यत्प्राप्तमिति BālamBha. i. 468. 19 (*on* 1. 213)

**अन्यदाय** (anya-dāya) *m.* share of inheritance belonging to another person येनान्यदायं(?न्यो) भुज्यते स एवं भवति ManuBh. ii. 137. 10 (*on* 8. 147)

**अन्यदायाद** (anya-dāyāda) *m.* another heir हतानामन्यदायादा भवेयुर्धनभागिनः MahNirvāT. 12. 103.

**अन्यदायादसाहित्य** (anyadāyāda-sāhitya) *m.* association with another heir तुशब्देनान्यदायादसाहित्यमुद्धरणे व्यवच्छिन्नम् VīraMi. 580. 6 (*on* 2. 118-119)

**अन्यदार** (anya-dāra) *adj.* who seduces another person's wife स्वभावे। रोगी मृतस्वयुवतिर्विषमोऽन्यदारो दुःखी परिच्छदयुतो मलिनोऽर्कपुत्रे Bṛhajjā. 21. 8.

**अन्यदार** (anya-dāra) *m.* (pl.) wife of another person अन्यदारेषु च या पुंसोत्पादिता सापि तस्य न भवति ManuBh. i. 494. 8 (*on* 5. 160); जहेऽन्यदारान् स्वपुरीं दशास्यः DvyāśraKā. 2. 82; 7. 46; सुधीः ... अन्यदारान् वा विवर्जयेत् YogŚā. 2. 76; TriṣaŚaPuC. i. 3. 630; KumāPraPra. 72. 10.

**अन्यदारनिरत** (anyadāra-nirata) *adj.* who takes pleasure in another person's wife भूपो भूपसमोऽन्यदारनिरतः शेषैश्च कुम्भस्थिते Bṛhajjā. 19. 3; 19. 5 [KośaKaTa. 2. 7412]

**अन्यदारप्रगमन** (anyadāra-pragamana) *n.* act of approaching the wife of another person अप्रवपनमस्य चान्यदारप्रगमनदुष्परिकामिनः कुकर्म। प्रभवति परिभाव्यमानम् ... भृशं नः DvyāśraKā. 4. 29.

**अन्यदारलाभ** (anyadāra-lābha) *m.* act of getting the wife of another person वधान्यदारलाभादिप्रतिज्ञाराष्ट्रभञ्जनम् BhāvPra. (Śā.) 62. 3 (3)

**अन्यदारसक्त** (anyadāra-sakta) *adj.* attached to the wife of another person ऋतुकाले स्वकां पत्नीं गच्छतां या मनस्विनाम्। न चान्यदारसेवीनाम् (v.l. °सक्तानाम्) तां गतिं व्रज पुत्रक MahāBhā. vii. 55. 28.

**अन्यदारसेविन्** (anyadāra-sevin) *adj.* having intercourse with the wife of another person ऋतुकाले स्वकां पत्नीं गच्छतां या मनस्विनाम्। न चान्यदारसेवीनां तां गतिं व्रज पुत्रक MahāBhā. vii. 55. 28.

**अन्यदारहरण** (anyadāra-haraṇa) *n.* abduction of the wife of another person पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान् SubhāRaK. 40. 5; Pañcā. 127. 3; SūktiRa. 35. 56.

**अन्यदारा** (anya-dārā) *m.* name of one of the fifty positions or points (*sahama*) (that denote ill or good luck) (*lit.* wife of another person) परदेशधनान्यदारा ... पञ्चाशत्सहमानि हि TājiNī. i. 3. 2; i. 3. 16.

**अन्यदारिद्र्यहर** (anyadāridrya-hara) *adj.* removing poverty of another person अन्यदारिद्र्यहराः प्रवालैर्जाता दरिद्रास्तरवोऽमराणाम् NaiṣC. 8. 67.

**अन्यदारुज** (anyadāru-ja) *adj.* produced i.e. made of different (type of) wood (एकतन्त्र्यां वीणायाम्) दण्डः ... भवेत्। ... दधानः ककुभं सारं खादिरं वान्यदारुजम् SaṃgīRa. iii. 234. 1 (6. 32)

**अन्यदाशा** (anyad-āśā) *f.* [P. vi. 3.99; JaineVyā. iv. 3. 205; CāndraVyā. v. 2. 117] **1** wish for another किमन्यदाशीर्वचनान्यदाशान्यदास्थितत्वैरिति न व्यधत्ताम्। तदान्यदुत्सुकमिमौ जयस्यान्यत्कारके स्याद्धि यशोऽन्यदीयम् DvyāśraKā. 6. 91 (comm. स्वादन्यस्मिन्नित्भृत्यादावाशा जयमनोरथोऽन्यदाशा); **2** different direction अन्यदाशान्या भवेत्ककुप् KośaKaTa. 617.1; **3** the word or form *anyadāśā* (*lit.* different, i.e. bad desire or hope) अषष्ठ्यन्तस्यातृतीयान्तस्य

**अन्यपदार्थविशेषण** (anyapadārtha-viśeṣaṇa) *n.* qualifier of the meaning of another word एकत्वसंख्यायुक्तेन अन्यपदार्थविशेषणेन प्रतिवचनं नोपपद्यते Pradī. ii. 453A. 11 (*on* ii. 2. 24); सापेक्षस्य रथन्तरादेः अन्यपदार्थविशेषणत्वे सामर्थ्यभङ्गप्रसङ्गेन समासानुपपत्तेः वैशिष्ट्यानुपपत्तिः MīmāKau. ii. 4. 5 (*on* ii. 3.1); ii. 11.11 (*on* ii. 3.2)

**अन्यपदार्थविशेष्यक** (anyapadārthaviśeṣya-ka) *adj.* having the meaning of another word or third referent as the chief qualificand बहुव्रीहिविग्रहे ... अन्यपदार्थविशेष्यक एव बोधः VaiyāBhū. 176.16 (*on* 32); तत्पदार्थे धर्मितावच्छेदकीकृत्यान्यपदार्थविशेष्यकतत्पदार्थप्रकारकशाब्दज्ञानस्याप्रसिद्धत्वात् AlaṅkāKau. (Vi.) 60.1.

**अन्यपदार्थविषय** (anyapadārtha-viṣaya) *adj.* referring to the meaning of another word अन्यपदार्थविषयस्य अन्तःशब्दस्येदं व्याख्यानम् Pradī. vi. 156. 20 (*on* vii. 2. 91)

**अन्यपदार्थवृत्ति** (anyapadārtha-vṛtti) *f.* signification in the meaning of another word or third referent यदा श्यामाशब्दः शस्त्र्यामेव उपमाने वर्तते, उपमेयं तु समासवाच्यं तदान्यपदार्थवृत्तित्वात् बहुव्रीहिसंज्ञाप्रसङ्गात्तन्निबन्धनः पाक्षिककप्प्रसङ्गः Pradī. ii. 199A.19 (*on* i. 4.1)

**अन्यपदार्थशक्तत्व** (anyapadārthaśakta-tva) *n.* the state of being expressive of the meaning of another word or third referent न च बहुव्रीहेरन्यपदार्थशक्तत्वाभावे अरुणापदात् अविशेषापत्त्या सूत्रे द्रव्यगुणयोरिति निर्देशानुपपत्तिः MīmāKau. ii. 160.4 (*on* iii. 1.12); ii. 160.18 (*on* iii. 1.12)

**अन्यपदार्थशक्ति** (anyapadārtha-śakti) *f.* power of expressing the meaning of another word or third referent अरुणाधिकरणवार्तिके बहुव्रीहेरन्यपदार्थशक्तिरेव न तु लक्षणा MayūMāli. 231. 2 (*on* iii. 2. 20)

**अन्यपदार्थसद्भाव** (anyapadārtha-sadbhāva) *m.* existence of the meaning of another word पञ्चगवमिति यदा समाहारो भावरूपो वाच्यः तदान्यपदार्थसद्भावः Pradī. ii. 199A. 22 (*on* i. 4.1)

**अन्यपदार्थसंपादन** (anyapadārtha-sampādana) *n.* obtainment of the meaning of another word सूत्रे त्वनारब्धेऽन्यपदार्थसंपादनाय दक्षिणपूर्वाशब्दयोः स्वार्थ एव वृत्तिरुपगन्तव्या Pradī. ii. 460A. 26 (*on* ii. 2. 26)

**अन्यपदार्थसंबन्ध** (anyapadārtha-sambandha) *m.* semantic or syntactic relation with the meaning of another word द्वन्द्वगर्भो बहुव्रीहिरयम्। ... प्रथमं तावत् बृहच्च रथंतरं चेति द्वन्द्वः, पश्चादन्यपदार्थसंबन्धः ṬupṬ. 271. 3 (*on* x. 6.4); अन्यपदार्थसंबन्धोत्तरं वर्तिपदार्थप्रकर्षविवक्षया साधुः LaŚabdeŚe. i.150.6.

**अन्यपदार्थसंबन्धित्व** (anyapadārthasambandhi-tva) *n.* the state of being related to the meaning of another word गायत्रस्य केवलस्य छन्दसोऽन्यपदार्थसंबन्धित्वाभावेन नित्यं छन्दोऽन्तरसहितस्यैवान्यपदार्थसंबन्धितया नित्यसापेक्षत्वम् MayūMāli. 230.14 (*on* iii. 2.19)

**अन्यपदार्थसामान्य** (anyapadārtha-sāmānya) *n.* generality of the meaning of another word शब्दशक्तिस्वाभाव्यात् अन्यपदार्थसामान्यमेव अभिधातुं समर्थः समासः Pradī. ii. 447A. 35 (*on* ii. 2. 24)

**अन्यपदार्थसृष्टि** (anyapadārtha-sṛṣṭi) *f.* creation of another object (than Brahman) अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम्। कर्माधीनत्वे त्वनीशता AṇuBh. 15. 22 (*on* i. 1. 3)

**अन्यपदार्थांश** (anyapadārthāṁśa) *m.* part or portion of the meaning of another word or third referent प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धम् ... लक्षणमचरितार्थमिति भावः LaŚabdeŚe. i. 346.14.

**अन्यपदार्थानुपादान** (anyapadārthānupādāna) *n.* non-reference to the meaning of another word or third referent न हि नमः पिनाकपाणय इत्यन्यपदार्थानुपादानं दोषाय Kāśi. iii. 3. 25 (*on* 5 (4). 2)

**अन्यपदार्थान्तर** (anyapadārthāntara) *n.* meaning of another word or third referent अन्यपदार्थान्तरापोहं हित्वार्थे कुर्वती श्रुतिरभिधत्त इत्युच्यते NyāyVār. 324. 21 (*on* ii. 2. 67)

**अन्यपदार्थान्वय** (anyapadārthānvaya) *m.* semantic or syntactic relation with the meaning of another word or third referent किं बहुव्रीहिरुद्देश्यसमर्पकः यूपपदं वा ...। नान्त्यः। अन्यपदार्थान्वये समासानुपपत्तेः MīmāKau. ii. 188. 6 (*on* iii. 1.18)

**अन्यपदार्थापेक्षण** (anyapadārthāpekṣaṇa) *n.* expectancy for the meaning of another word or third referent अन्यपदार्थापेक्षणात् बहिरङ्गो बहुव्रीहिः Pradī. ii. 149A. 12 (*on* i. 3.12)

**अन्यपदार्थापेक्षत्व** (anyapadārthāpekṣa-tva) *n.* the state of having expectancy for the meaning of another word or third referent एकशेषो न शक्यते बाधितुम्। अन्यपदार्थापेक्षत्वात् तस्य बहिरङ्गत्वात् Pradī. ii. 462A. 15 (*on* ii. 2. 28)

**अन्यपदार्थापेक्षा** (anyapadārthāpekṣā) *f.* expectancy for the meaning of another word or third referent चित्रगुरिति। अन्यपदार्थापेक्षयोभयोरपि प्रथमानिर्दिष्टत्वेन एकविभक्तित्वेन वा अनियमे प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपातार्थं विशेषणग्रहणमिति भावः LaŚabdeŚe. ii. 122.15.

**अन्यपदार्थाभाव** (anyapadārthābhāva) *m.* absence of the meaning of another word or third referent उपमानशब्दस्योपमेयवृत्तित्वादन्यपदार्थाभावाद्वा बहुव्रीहेरभावात् सहसुपेत्यनेनैवात्र समासः कार्यः Pradī. ii. 356A. 12 (*on* ii. 1. 3)

**अन्यपदार्थाभिधान** (anyapadārthābhidhāna) *n.* denotation or expression of the meaning of another word or third referent युक्तं देवतातद्धितादावनन्यप्रयोजनत्वाच्छब्दाधिक्यस्यान्यपदार्थाभिधानम् TantrVā. 694. 2 (*on* iii. 1.12); 694.16 (*on* iii. 1.12); निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयम् ŚrutaPra. iA. 117. 24 (*on* i.1.1)

**अन्यपदार्थावगति** (anyapadārthāvagati) *f.* knowledge of the meaning of another word or third referent न चासहविवक्षायां तन्नसत्त्वे 'इदित्' इति गुरुनिर्देशो व्यर्थः अन्यपदार्थावगतये तत्सत्त्वात् LaŚabdeŚe. i. 183.1.

**अन्यपदार्थाश्रय** (anyapadārthāśraya) *adj.* dependant on the meaning of another word or third referent अन्यपदार्थाश्रयो बहुव्रीहिर्भविष्यति MahāBh. i. 382.15 (*on* ii. 1. 20)

**अन्यपदार्थासिद्धि** (anyapadārthāsiddhi) *f.* non-establishment of the meaning of another word or third referent ज्ञानं स्वप्रकाशमित्युक्तिरेवानुपपत्रेति व्याख्यातम्, अन्यपदार्थासिद्धेः NyāyKu. 70.7.

**अन्यपदार्थीभूत** (anyapadārthī-bhūta) *adj.* who has become the meaning of another word or third referent न दण्डः न लोहिता उष्णीषाः प्रचरन्ति किं तु अन्यपदार्थीभूता ऋत्विज एवेति सर्वत्र विशेष्यप्रवणैव मतिः NyāyMañ. i. 80.12.

**अन्यपदार्थोक्त** (anyapadārthokta) *adj.* expressed by the Bahuvrīhi compound अन्यपदार्थोक्तद्वितीयावयवक्रियाविलक्षण इव प्रयोगेण पृथक्पदतया वाक्यकल्पः ... कविभिरुत्प्रेक्षावयव इत्युच्यते SaraKaṇṭhā. 468.18.

**अन्यपदार्थोपसर्जनीभूत** (anyapadārthopasarjanībhūta) *adj.* which has become subordinate to the meaning of another word or third referent बहुव्रीह्यन्तपदे प्रथमोपनिपतितस्य रथन्तरादिशब्दस्य अन्यपदार्थोपसर्जनीभूतस्वार्थप्रतिपादकत्वेन तस्मिन् यदिशब्दोपात्तनिमित्तत्वान्वयानुपपत्तेः MīmāKau. ii. 2.14 (*on* ii. 3.1)

**अन्यपदार्थोपस्थिति** (anyapadārthopasthiti) *f.* recollection of the meaning of another word or third referent अस्तु वा तदाप्यवयवार्थोपस्थितिसापेक्षत्वादन्यपदार्थोपस्थितेर्बहुव्रीहौ गौरवम् MīmāKau. ii. 277.18 (*on* iii. 2. 27)

**अन्यपदोदित** (anyapadodita) *adj.* expressed by another word विधिर्निर्विषयस्तुल्यमिदमन्यपदोदिते। विशिष्टार्थावगत्यान्यपदार्थेऽपि प्रयुज्यते BrahmSi. 102.19.

**अन्यपदोपादान** (anyapadopādāna) *n.* mention of another word (than those constituting Sūtra) अवतारकाले ... कुतो लोकानां पूर्वावस्थातो भगवत्त्वेवाधिक्यमिव प्रतीतं भवतीत्यभिप्रायेणान्यपदोपादानम् AṇuBh. 203.13 (*on* iii. 2. 36)

**अन्यपद्मार्थिता** (anyapadmārthitā) *f.* desire or request for another lotus अन्यपद्मार्थितां तस्य धीमान्विज्ञाय मारुतिः। ययौ सौरभमार्गेण धनदाध्युषितां दिशम् DaśāvaC. 8. 484.

**अन्यपर** (anya-para) *adj.* [*f.* -ā] 1 (used as noun) (verbal root *kṛ*-) which is followed by another (verbal ending than the perfect) 2A referring to another sense (used as noun) (utterence) referring to another sense 2B (used as noun) referring to one sense 3 referring to another person 4 having different aim or purpose (used as noun) (one) having different aim or purpose 5A engaged in another (action) 5B1 (used as noun) (that) which is concerning or devoted to another ii (used as noun) (one) who is devoted to another (deity) 6 subordinate to another (suggested sense) 1 (used as noun) (verbal root *kṛ*-) which is followed by another (verbal ending than the perfect) लिट्परस्यैवानुप्रयोगो यथा स्यादन्यपरस्य मा भूत् MahāBh. ii. 48. 5 (*on* iii. 1. 40); अन्यपरस्य प्रतिषेधो मा भूत् MahāBh. iii. 378.12 (*on* viii. 1. 56); 2A referring to another sense अन्यपरं हीदं वाक्यं वाचो नित्यतामनुवदति ŚābaBh. 91.7 (*on* i. 1.23); वक्तैव कथयति अन्यपरं ममेदमभिप्रेतं

प्रमादेन वा TantrVā. 714. 20 (*on* iii. 1.13); यः पुनरन्यपरेभ्योऽप्यक्षरेभ्योऽर्थावगमः स सामान्यतोदृष्टनिबन्धनानन्यपरत्वभ्रान्त्या भ्रान्तिरेवेति मन्तव्यम् PrakaPañ. 6.15; अन्यपरमपि वाक्यं तदेवार्थलभ्यं स्वीकरोति यत्तेनापेक्षितम् TātpaṬ. (Vā.) 100.18 (*on* i. 1. 2); न ह्यन्यपराच्छब्दादन्यस्यावगमः TātpaṬ. (Vā.) 198. 22 (*on* i. 1. 6); इयं तु अन्यपराद्वाक्यादुपजाता भ्रान्तिरेव NyāyRa. 655.17 (*on* 5 (15). 63); अन्यपरेषु सर्ववाक्येषु केनापि शब्देन प्रतीयमानं तदेवेत्यवगम्यते VedāSaṁ. 136. 5; अन्यपरादेव वाक्यात्सिद्धरूपार्थनिश्चयः VedāntKa. 64. 20 (*on* i. 1. 4); ब्रह्मणः शुद्धत्वान्यथानुपपत्त्यैव तस्य जीवैक्योपदेशो नास्त्येवेति वा सत्रप्यन्यपर इति वा ... कल्पयितुं युक्तम् ŚatDū. 194. 3; नन्वेवं नानार्थादन्यपरतात्पर्यभ्रमे ... यथार्थयोग्यतादिज्ञाने सति संवादपरशक्यज्ञानमपि प्रमेति तत्रापि तद्वाक्यं प्रमाणं स्यात् TattvCin. i. 351.2; शब्दास्तावच्चतुर्विधाः। तत्र ... अन्यपराणां मध्ये लिङ्गात्मकानाम् ... अप्राधान्यात्तत्समन्वयोक्तिर्द्वितीये TattvPrakā. 15B. 9 (*on* i. 1.12); अन्यपरं वाक्यमन्यार्थद्योतकं लिङ्गमित्युच्यते YuktiSneha. 149.2 (*on* i. 1. 6); देवताधिकृतिन्यायात् पदैरन्यपरैरपि। प्रयोजनवदज्ञाताबाधितार्थमतिर्भवेत् BhaktiRa. 3. 29; वेदस्योक्तरीत्यापौरुषेयत्वावगतेः क्वचिदन्यपरे वाक्ये 'मन्त्रकृतां मन्त्रकृदासीद्' इत्यादौ ... व्याख्यानं नानुपपन्नम् MīmāKau. i. 88.18 (*on* i. 3.12); अशक्यार्थविध्यसंभवादन्यपरं वचनम् MayūMāli. 659.5 (*on* x. 2.1); (used as noun) (utterence) referring to another sense अन्यपरेऽपि शब्दबलात्संबन्धी कर्ता गम्यत एव TantrVā. 933.11 (*on* iii. 4.12); यस्मिन्नहनि [परोविप्रकर्षः], परस्संनिकर्षो वा तदवेकमहर्यजनीयम् अन्यपरेभ्योऽध्यवसीयते SaṅkarKāBh. 118.19 (*on* iii. 1.2); अन्यपरानन्यपरविभागोऽपि विलीनः ŚatDū. 245.15; वेदसूत्रात्मकं वाक्यं वाक्यभेददोषादशक्तमन्यपरस्य चान्यार्थप्रतिपादनाशक्तेः YuktiSneha. 32.8 (*on* i.1. 2); **2B (used as noun) referring to one sense** अन्यपरस्य चान्यार्थप्रतिपादनाशक्तिर्वेदवाक्यवत्सूत्रवाक्येऽप्यस्त्येव TātpaṬ. (U.) 117.21 (*on* 2. 276); 3 referring to another person शाकुन्तलादीनितिहासवादान्प्रस्तावितानन्यपरैर्वचोभिः। श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी ... चिन्तास्तिमितत्वमेति MālaMā. 3. 38; ईर्ष्याकोपतात्पर्यादनुनयनमन्यपरं विवक्षितम् Loc. 224.22 (*on* 3.44); इदमन्यपरं वचो जगौ कविता कश्च पपाठ चात्र कः PṛthvīVi. 12. 59; 4 having different aim or purpose अन्यपरेणापि च नियमेन संनिधापितः संनिहित एवेति समासार्थस्याविघातः TātpaṬ. (U.) 304.24 (*on* 5 (4). 2); य एवास्माभिरभिप्रायोऽभिहितः तेनैव प्रश्नमुपक्रम्यान्यपरमपि पूर्वकमेव संबन्धकथनं पारमार्थिकमिति परिहारो दातव्यः Śarka. 111.11; श्रुतिः ... प्रमाणान्तरेण विषयापहारेऽन्यपरा भवितुमर्हति BrahmSūBh. (Śaṅ.) 306.7 (*on* ii. 1.13); ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्मसंबन्धदर्शनानि भवन्ति BrahmSūBh. (Śaṅ.) 719.17 (*on* iii. 4. 3); सृष्ट्यवन्यपरायां तु न चोद्यस्यास्ति संभवः BrĀraUBhVā. ii. 1. 388; न च शब्दो ब्रह्मेति श्रुतिरस्ति। यदि नामास्ति तथापि सा अन्यपरा IṣṭaSi. 174.2; भेदश्रुतिस्त्वन्यपरा समस्ता SaṁkṣeŚā. 3. 284 (ii. 311. 24); 1.469 (i. 340.24); BhedaDhi. 58. 5; आगमस्त्वन्यपर एव NyāyMañ. i. 207. 30; तत्र क्वचिद्वैदिका एव विधयोऽग्निहोत्रादयो भारतादिषु श्रूयन्ते ... तेनान्यपरा एव तत्रापि सृष्ट्यादिवादाः NyāyRa. 656.10 (*on* 5 (15). 65); अन्यपरेण शास्त्रेणोपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात् ŚāstrDī. 68. 3 (*on* i. 4. 4); YuktiSneha. 60. 21 (*on* i. 1. 5); मन्त्रादिप्रामाण्यावष्टम्भेन... पूर्वमधिकारो निरूपितः। तेषां चान्यपराणामविरोधे प्रामाण्यमिष्टम् PrakaVi. 270.18; अन्यपराणामपि मन्त्रार्थवादानां प्रामाण्यमङ्गीकर्तव्यम् ViṣṇuSaBh. 24. 3 (*on* 10); NyayMa. 336. 1; स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा ŚrutaPra. iA. 27.9 (*on* i. 1.1); अन्यपरास्ताः श्रुतय इति चेत् ŚatDū. 198. 8; Nyāyāmṛ. 266B. 7 (*on* 1.27); अन्तर्यामिश्रुतिरपि ब्रह्मपरानान्यपरेत्याह VedāKau. 64.18 (*on* i. 2.19); अधिकृतशास्त्रविरोधेऽनधिकृतं शास्त्रमन्यपरं नेतव्यम् NyāyPari. 351.9; अन्यपरकिंचिन्मन्त्रांशे प्रत्यभिज्ञानमकिंचित्करम् ŚivārkaMaDī. i. 237. 5 (*on* i. 1.17); AṇuBh. 147. 21 (*on* ii. 3. 20); यो ... रागादेवानुतिष्ठति तस्य रागप्राप्तानुवादमात्रेणैवान्यपरमन्त्रार्थवादाद्युपपत्तौ ... न स्वतन्त्रविधिकल्पनम् MīmāKau. i. 70. 2 (*on* i. 3. 9); iii (2). 177.13 (*on* ii. 2. 6); न च ... ब्रह्मणि व्युत्पन्नं शास्त्रमन्यपरं शक्यं कर्तुम् GoviBh. 10.12 (*on* i.1. 3); **(used as noun) (one) having different aim or purpose** न च नियोगतोऽर्थप्राप्तिः अन्यपरेषु प्रयोजनश्रुतेरप्यर्थवादत्वात् BrahmSi. 29.8; TantrVā. 597. 7 (*on* ii. 3. 4); TātpaṬ. (U.) 304. 2 (*on* 5(4).1); BṛĀraVBhVā. (Sambandha.)801; न च बोधस्य बोध्यनिष्ठत्वात् ... अन्यपरेभ्योऽपि बोध्यतत्त्वविनिश्चयः Bhām. 51.10 (*on* i.1.1); 162.19 (*on* i. 2.1); संभवति ह्यन्यपरेभ्योऽपि भ्रान्तिः NyāyRa. 950.12 (*on* 7. 369); अन्यपरस्यालौकिकशक्तितात्पर्यग्राहकत्वकल्पनाप्रमाणाभावेन गौणाभिधानमेव न्याय्यम् MīmāKau. ii. 233.18 (*on* iii. 2. 4); 5A engaged in another (action) अन्यपरेणापि यौगन्धरायणेन मया ... कन्यालाभो वत्सराजस्य कृतः Avalo. 26. 21 (*on* 1. 47); गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वाः ... अङ्गानि ... सीदन्ति Loc. 120.13 (*on* 2.32); Kāvyānu. (He.) (comm.) 126. 5; त्रिधामा ... प्रतिदिनमन्यपरो ... बभूव Yādavā. 24. 34; यजनम् ... अन्यपरस्यातुरस्य ... भोजनात् पूर्वं यदाकदाचिल्लब्धेऽवसरे भवति PāñcRāRa. 167.18; **5Bi (used as noun)** (that) which is concerning or devoted to another अन्यपरमपि तद्भक्त्यानुष्ठितं स्वभावात् संपादयत्येवाखिलमङ्गलानि TattvSaṁkhyā. 5. 4; **5Bii (used as noun)** (one) who is devoted to another (deity) खिन्नवृत्तीनामन्यपराणामपि ... यथावसरम् ... भगवत्स्येवं स्मर्यते PāñcRāRa. 73. 5; 6 subordinate to another (i.e. suggested sense) विवक्षितं चान्यपरं वाच्यं यत्रापरस्तु सः (ध्वनिः) KāvyPra. 83. 8 (comm. व्यङ्ग्योपसर्जनीभूतम्); Ekāva. 3.1 (1) (85.1) [zealous in something else, MW.]

**अन्यपरतन्त्रता** (anyaparatantra-tā) *f.* [Inst.] by way of being dependant on others वेदाख्यं शब्दराशिम् ... यथापूर्वमनुसंधत्ते, न त्वन्यपरतन्त्रतयेत्यर्थः ŚrutaPra. ii. 68.7 (*on* i. 3. 29)

**अन्यपरतन्त्रत्व** (anyaparatantra-tva) *n.* the state of being dependant on others केषांचित् कदाचित् स्वनिष्ठत्वमन्यपरतन्त्रत्वं वा न मन्तव्यम् ŚrutaPra. ii. 510. 23 (*on* iii. 3. 39); पत्न्या धनग्रहणे ... यदा वैशिष्ट्ये नियोगः प्रधानं तदा ... अपत्यं निमित्तमप्यनिमित्तमिव अन्यपरतन्त्रत्वात् Subodhi. 63. 13 (*on* 2.135-136)

**अन्यपरता** (anyapara-tā) *f.* 1 the state of referring to another sense (स एव शब्दार्थचिन्ताव्यवहितोऽधुना। नित्यानित्यविचारार्थम्) व्यवहितः अन्यपरतां नीतः Śarka. 111.15; **[Inst.]** by way of referring to another sense पूर्वत्र शब्दमात्रे संशयः इह तु आनन्दादिके कथंचिद् अन्यपरतया नीते साधकस्य ब्रह्मैकान्तर्यस्य अभावात् GoviBh. 28.4 (*on* i.1. 31); 2 the state of having different aim or purpose वेदेनैव त्वन्यपरतामवगमयताविवक्षितार्थतापद्यमाना न शक्या वारयितुम् PrakaPañ. 3.4; प्रणवेऽपि बहवोऽर्था बहुषु प्रदेशेषु प्रतिपाद्यन्त एव। न चार्थविरोधः, येनान्यपरता स्यात् NyāySiA. 234.7; न च समुदायानुवादप्रयोजनकत्वेन अन्यपरता MīmāKau. iii (2). 197. 22 (*on* ii. 2.16); **[Inst.]** by way of having different aim or purpose मन्त्रार्थवादयोस्त्वन्यपरतयैवामूलत्वम् BāLaKrī. i.17.15 (*on* 1.7); न शास्त्रीयोऽयमर्थो न च लौकिकी व्यवस्थेति, साक्ष्यभाव इत्याद्युक्तेन प्रकारेणान्यपरतया नेया ManuBh. ii. 162. 5 (*on* 8.181); पौरुषेयं तु प्रमाणान्तरबलेनान्यार्थमपि प्रतिभासमानमन्यपरतया प्रतिपाद्यते Kāśi. i. 5. 6 (*on* 1. 11); i. 195. 8 (*on* 2. 275 1/2); पृथक्त्वं भाष्यविरुद्धसत्त्वादिद्रव्यपरिगणनवदन्यपरतया निर्वाह्यम् NyāySiA. 207.1; न च जैमिनेः प्रमाणलक्षणादिषु ... निःशेषानुमतिसिद्धिर्मन्तव्या। अन्यपरतया लोकप्रसिद्धोपजीवनात् NyāyPari. 8. 9; 486. 13; 3 the state of being subordinate to another यद्यप्यर्थवादा विध्युद्देशस्तुतिपरा न स्वार्थस्य विधायकास्तथापि केषांचिदन्यपरतैव नोपपद्यते ManuBh. i. 64.12 (*on* 2. 6)

**अन्यपरताहेतुत्व** (anyaparatā-hetutva) *n.* causality of the state of referring to another sense वादनिरसने तर्काप्रतिष्ठानहेतुः ... यदा न प्रभवति, तदा तदुक्तविरोधस्य श्रुतीनामन्यपरताहेतुत्वाभावात् ब्रह्मकारणत्वमविचाल्यं भवति ŚrutaPra. ii. 228.17 (*on* ii.1.13)

**अन्यपरत्व** (anyapara-tva) *n.* 1 the state of having different aim or purpose अन्यपरत्वमविवेकानां तत्र SāṁkhyaPraSū. 5. 64; उक्ता ह्यर्थवादपदानामन्यपरत्वात् गौण्येवावगतिः Bṛha. 208.7; कर्तव्यनिष्ठा ... वस्तुतत्त्वे प्रमाणं वृत्तान्तेष्वविवार्थवादोत्पन्नानम्, अन्यपरत्वात् BrahmSi. 136. 2; मन्त्रलिङ्गानि ... न च मूलान्तरं न्यायागतं सूचयन्ति अन्यपरत्वात् TantrVā. 70. 22 (*on* i. 3.1); अग्निहोत्रादिविधीनामनुष्ठानस्य ... अन्यपरत्वे सति ... तदर्थनिर्णयार्थं शास्त्रं नारब्धव्यं स्यात् TātpaṬ. (U.) 6.2 (*on* 1.1); 19. 23 (*on* 1. 85); 132.18 (*on* 4. 52); Kāśi. i. 228.12 (*on* 4. 52); NyāyRa. 150.18 (*on* 4. 53); अन्यपरत्वात् स्वाध्यायाध्ययनस्यान्यपरत्वादविवक्षितार्थता PrakaPañ. 18. 9; अन्यपरत्वात् स्वाध्यायास्वाध्यायस्यान्यपरत्वादविवक्षितार्थता ... ; क्रियोद्यतस्यापि क्षराणामविवक्षितः प्रतीयमानोऽप्यर्थः Kāśi. i. 39.13 (*on* 1. 88½); क्रियोद्यतस्यापि ... SaraKaṇṭhā. 500.17; संभवति वारणे कारणानामन्यपरत्वे रोधो न भवति ... । नन्वन्यपरत्वात्तेषां न मुक्तत्वं संभवति चार्थवादानामेव मूलत्वमिति न ...। NyāyRa. 950.11 (*on* 7. 369); BrahmSūBh. (Rā.) 311. 19 (*on* i. 3. 25); अन्यपरत्वं च तत्तदारम्भप्रकारैरवगम्यते VedāSaṁ. 142.16; ननु मुक्तस्य पित्रादिसर्गसापेक्षत्वे ब्रह्मानुभवादन्यपरत्वम् ... स्यात् ŚrutaPra. ii. 646. 19 (*on* iv.4.14); अन्यपरत्वं ह्युच्यमानं कार्यपरत्वं वा स्यात् स्तुतिपरत्वं वा तद्वोभयमपि ... न युज्यते NyāySu. (So.) 18.25 (*on* i. 2. 6); येषु च सूत्रेषु ... जैमिनिमतमुक्तम् ... तेष्वपि ... परब्रह्मसद्भावः ... प्रतीयते, तदपि तदपीतकर्मकाण्डदेवताधिकरणादेरन्यपरत्वं स्थिरीकरोति ŚatDū. 56. 29; 71.4; 227.27; परामर्शस्यान्यपरत्वं समर्थ्य ... निर्देशस्य लाक्षणिकत्वमङ्गीकृत्यापि किमत्रमवादीनां विष्णुत्वग्रहणेन TattvPrakā. 19B. 6 (*on* i.1.16); किं ब्रह्मणि

श्रुतीनामन्यपरत्वं प्रकल्प्य भेदसमवायकल्पनया NyāySu. (Ja.) 170A.11 (*on* i. 2. 6); अन्यपरत्वं च वेदस्य प्रयोजनवदर्थपरत्वात् YuktiSneha. 110. 32 (*on* i.1.5); 'हिरण्यगर्भः समवर्ततात्रे' ... इत्यादिना ह्यन्यपरत्वं प्रतीयते ŚivārkaMaDī. i.70.18 (*on* i. 1.1); 'आग्नेयो वै ब्राह्मणो देवतये'त्यादौ अन्यपरत्वस्यापि दर्शनेनास्याः स्मृतेरनियमकत्वात् MīmāKau. i. 249.11 (*on* i. 4. 14); i. 280.17 (*on* i. 4. 24); i. 296. 21 (*on* i. 4. 29); ii. 76.10 (*on* ii. 3. 24); न चात्रान्यपरत्वम्, स्ववाक्ये फलनिमित्तगुणादिप्रतिपादकशब्दाभावेन तत्परत्वासंभवात् MīmāKau. iii (2). 154. 5 (*on* ii. 2. 3); iii. (2). 167.15 (*on* ii. 2. 3); iii (2). 180. 2 (*on* ii. 2. 6); पण्णां फलसंबन्धसिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि न ... अभ्यासस्वरूपसिद्धिः BhāṭṭDī. i.115. 5 (*on* ii. 2. 3); प्रधानविद्याः... बहुविधाः ... तत्र न तावच्छब्दान्तराद्भेदः। विदिधातोरेकत्वात् ...। मन्वाद्युपासितत्वरूपगुणान्तरविधानेन पुनःश्रुतेरन्यपरत्वाद्य SetuBa. 62. 28; [Inst.] by way of having different aim or purpose न च ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यम् BrahmSūBh. (Śaṅ.) 88.19 (*on* i. 1. 31); बाध्यत्वमन्यपरत्वेन नेयत्वलक्षणम् ŚivārkaMaDī. ii. 2. 5 (*on* ii. 1.1); न च ... कथमव्यभिचरितक्रतुसंबन्ध इति वाच्यम्। मन्त्रार्थवादादेरन्यपरत्वेन स्वर्गादिस्थत्वे प्रमाणाभावात् MīmāKau.ii. 255.22 (*on* iii. 2.20); फलस्य ... कर्मण एव पुनःपुनर्विधानेऽप्यन्यपरत्वेन तादृशस्य पुनःश्रवणस्याभ्यासरूपत्वाभावात् LalitāSaBh. 239. 22 (*on* 319); 2 the state of referring to another sense अर्थागम्यमानमन्यपरत्वाच्छब्दानां न प्राशस्त्यं प्रयोजनं भवति TantrVā. 14. 21 (*on* i. 2. 7); अन्यपरत्वादक्षराणां तेभ्योऽर्थप्रतिपत्तिरेवानुपपन्ना PrakaPañ. 6.13; शब्दानामन्यपरत्वं न प्रतिपाद्यते BrahmSūBh. (Śaṅ.) 225.11 (*on* i. 4. 1); ब्रह्म ... न च सिध्यति, अन्यपरत्वाद्वेदस्य SanatBh. 262.2 (*on* 2.41); श्रुतयस्तावत् सर्वस्य वस्तुनः परमात्मशरीरत्वमुद्घोषयन्ति। प्रमाणान्तराप्राप्तार्थविषयाणां तासां नान्यपरत्वम् NītiMā. 39.22; तात्पर्यमन्यपरत्वम् AlaṅkāSa. 23.2; Ekāva. 7.9 (1) (193.1); श्रुतीनामन्यपरत्वमपि यदि स्यात् तथापि पदसमन्वयबलेन ... तासामन्यपरिभवनात् KhaṇḍanKhā. 145.14; 'मुक्तिकेत्येव सत्य मित्याद्यागमेन प्रपञ्चस्य सत्यतावगमादद्वैतागम एवोपचरितार्थः किं न स्यादिति चेत्। तस्यान्यपरत्वात् TattvPradī. (Ci.) 44. 5; शक्तिगोचरतोऽन्यपरत्वादप्रामाण्यम् PrakaVi. 298.16; असत्त्वमप्रामाण्यादन्यपरत्वाद्वा भवेत् ŚrutaPra. iA. 72. 7 (*on* i.1.1); अन्यपरत्वं तात्पर्याभावः, ब्रह्मणि प्रामाण्याभाव इत्यर्थः ŚrutaPra. iB.139.11 (*on* i.1. 4); iB. 253. 20 (*on* i. 1. 23); ii. 172.18 (*on* i. 4.28); अन्यपरत्वम् अविरुद्धार्थान्तरपरत्वम् ŚrutaPra. ii. 640.16 (*on* iv. 4. 7); प्रमाणान्तरसिद्धस्य तु शब्देना(ब्देन?) बाधमारचयति, अन्यपरत्वात् NyāyKu. 137.13; न च भेदविधायकश्रुतिवलाद्भेदनिषेधकश्रुतीनामन्यपरत्वम् ŚatDū. 129.15; 227. 9; क्षेत्रज्ञशब्दः परमात्मवाची। तत्राप्यतो नान्यपरत्वमस्य वाक्यस्य ŚaṅkaDigVi. (Mā.) 8.119; यत्तु जैमिनीयशब्दाधिकरणे वर्णनित्यत्वसमर्थनं व्याचख्युः स तु व्याख्यातृणामेवापराधः। .:. अन्यपरत्वात्तस्याधिकरणस्य NyāyPari. 21.8; षट्चक्रभेदनमात्रं योग इति यद्युच्येत, तदपि न मानम् ... 'सर्वभूतस्थमात्मानम् ... ब्रह्म परमं याति नान्येन हेतुना' इति निषेधस्यान्यपरत्वात् ŚaṅkaVi. (Ā.) 199.3; वाक्यार्थस्यैवान्यपरत्वे अनन्वितपदार्थकत्वचोद्यानवकाशात् YuktiSneha. 5.37 (*on* i.1.1); भगवद्वाक्यानामन्यपरत्वेऽन्यवाक्यानां च भगवत्परत्वे ... वैपरीत्यं फलमापद्येत AṇuBh. 52.11 (*on* i. 2.1); 55.6 (*on* i. 2.5); अन्यपरत्वे वा स्वातन्त्र्ये वा पदानि नः। व्यञ्जयन्ति परानन्दम् BhaktiRa. 3. 30; मानान्तरेण प्राप्ते बाधिते चान्यपरत्वस्य देवताधिकरणेनापि प्रमापकत्वाव्यवस्थापनात् GuruCandr. i.447.19; [Inst.] by way of referring to another sense सर्वान्तर्गताः प्रकृत्यादिशब्दाः ...। तेषां चान्यपरत्वेन सर्वशब्दाभिधेयत्वं परमात्मनः सिद्ध्यति TattvPrakā. 75A.4 (*on* i.4.24); 'उत्ताना वै देवगवा वहन्ति' इत्यस्य च रोदनार्थवादवदन्यपरत्वेनासाधकत्वात् MīmāKau. i.139.14 (*on* i. 3. 30); ii. 221. 24 (*on* iii. 1. 27); 3 the state of being subordinate to another नन्वन्यपरत्वेऽपि स्वभावो न निवर्तते Loc.166. 24 (*on* 3. 20); किमविवक्षितत्वमनुपादेयत्वमुतान्यपरत्वम् VyaktiVi. 35.11; 35.23.

**अन्यपरत्वतस्** (anyaparatva-tas) *adv.* on account of the state of referring to another sense केचिदध्याहरन्त्यस्य सूत्रस्यान्यपरत्वतः। न वार्यतेऽनधीतत्वं नानन्तर्यं विधीयते ŚlokaVār. 1 (1). 85 (28. 2); व्यर्थतो ब्रह्मजिज्ञासा वाक्यस्यान्यपरत्वतः SarvaSiSaṁ. 12. 9; इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः BṛĀraUBhVā. (Sambandha.) 127.

**अन्यपरत्वनिराकरण** (anyaparatva-nirākaraṇa) *n.* refutation of the state of referring to another sense वेदान्तवाक्यमन्यपरत्वनिराकरणेन तद्विषयत्वं प्रतिपादयदधिकरणं प्रवर्त्यत इत्यर्थः ŚivārkaMaDī. i. 376. 7 (*on* i. 2. 22).

**अन्यपरत्वनिर्णय** (anyaparatva-nirṇaya) *m.* decision regarding the state of having different aim or purpose अग्निः सर्वा देवताः ... इत्यादेः व्याघातकर्मविधिशेषत्वाभ्यामन्यपरत्वनिर्णयात् न तेषामानन्त्यब्रह्मत्वादिसिद्धिः NyāySiA. 225. 9.

**अन्यपरत्वमात्र** (anyaparatva-mātra) *n.* mere state of having different aim or purpose तथाप्यन्यपरत्वमात्रमनया भङ्ग्योच्यते ŚivārkaMaDī. ii.129.7 (*on* ii. 3. 8)

**अन्यपरत्वव्याख्या** (anyaparatva-vyākhyā) *f.* explanation of the state of having different aim or purpose श्रुतेरन्यपरत्वव्याख्योपपत्तेर्यलवद्विरोधाभावेन स्मृतिप्रामाण्याविघातः MīmāKau. i (3). 33.17 (*on* i. 3. 7)

**अन्यपरत्वव्याख्यान** (anyaparatva-vyākhyāna) *n.* explanation of the state of referring to another sense केषांचिच्छब्दानाम् ... अन्यपरत्वव्याख्यानेन ... कतिपयसूत्रारम्भः PrakaVi. 318. 20.

**अन्यपरत्वशङ्का** (anyaparatva-śaṅkā) *f.* A doubt regarding the state of referring to another sense ज्योतिषीत्यादिसूत्रद्वयस्यान्यपरत्वशङ्कापरिहारपरत्वेन व्याख्यानस्य कृतकरत्वं च स्यात् ŚrutaPra. ii. 74.15 (*on* i. 3.32); अन्यपरत्वशङ्कया सङ्कुचकस्य नाश्रद्धामलक्षालनमिति मननमावश्यकम् TattvCin. ii (2). 184. 6; B doubt regarding the state of having different aim or purpose प्रमाणस्यान्यपरत्वशङ्कया लक्षणस्यातिव्याप्तिः NyāySu. (Ja.) 123B.12 (*on* i.1.6); शास्त्रस्यान्यपरत्वशङ्कायां सर्वशब्दानां भगवत्यन्वयः प्रतिज्ञातुमुचितः NyāySu. (Ja.) 145A.5 (*on* i.1.6); एष आत्मेत्यादिसंदर्भस्यान्यपरत्वशङ्कानवकाशात् ŚivārkaMaDī. i. 435.30 (*on* i. 3.13)

**अन्यपरत्वसंभव** (anyaparatva-sambhava) *m.* possibility of the state of referring to another sense वाक्यस्य कालविधिफलकत्वेनान्यपरत्वसंभवात् MīmāKau. ii. 242. 2 (*on* iii. 2. 11)

**अन्यपरत्वस्थापन** (anyaparatva-sthāpana) *n.* establishment of the state of having different aim or purpose न चात्र श्रुतिविरुद्धतया कालात्ययापदेशः ŚatDū. 71.16.

**अन्यपरत्वानभ्युपगम** (anyaparatvānabhyupagama) *m.* non-admission of the state of referring to another sense कथमसौ स्तोमादिशब्दानामन्यपरत्वानभ्युपगमे संभवेत् TattvPrakā. 69B.13. (*on* i. 4.10)

**अन्यपरत्वादि** (anyaparatvādi) *adj.* 1 the state of being subordinate to another etc. एवमन्यपरत्वादिसंस्कारनिरोधकहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदम्, 'न किंचिदवेदिषम्' इति ज्ञानम् ŚrutaPra. iB. 20.27 (*on* i.1.1); 2 the state of having different aim or purpose etc. जगत्सत्यत्वश्रुतेरन्यपरत्वादेः वक्ष्यमाणत्वात् GuruCandr. i. 303.14.

**अन्यपरत्वाभाव** (anyaparatvābhāva) *m.* A absence of the state of referring to another sense न चैवं वाक्यवृत्तिपदत्वाज्ज्ञोऽन्यपरत्वाभावः TattvCin. iv (2). 789. 10; प्रकृते तु तद्विशेषवाक्यस्यान्यपरत्वाभावेन ... सर्वार्थत्वानुपपत्तेः परिहर्तव्यम् MīmāKau. iii. 222.1 (*on* iii. 1.27): फलसंबन्धस्यापि ... प्राप्तत्वेन अन्यपरत्वाभावात् BhāṭṭDī. i.149. 23 (*on* ii. 3. 4); B absence of the state of having different aim or purpose कर्मविध्यपेक्षया प्रयोजनवत्तरत्वेनान्यपरत्वाभावादभ्यासादेव कर्मभेदसिद्धिः MīmāKau. iii (2).173. 6 (*on* ii. 2. 5)

**अन्यपरत्वाभिमान** (anyaparatvābhimāna) *m.* wrong notion regarding the state of referring to another sense किमिदं लक्षणवाक्यस्य दूषणाभिप्रायेणोक्तम्। उतान्यपरत्वाभिमानेन ŚatDū. 164. 28.

**अन्यपरत्वाभ्युपगम** (anyaparatvābhyupagama) *m.* admission of the state of referring to another sense स्तोमादिशब्दानामन्यपरत्वाभ्युपगमे किं ज्योतिष्टोमादिशब्दैरेवविशेषतोऽपराद्धम् TattvPrakā. 69B.13 (*on* i. 4.10)

**अन्यपरत्वावसाय** (anyaparatvāvasāya) *m.* A ascertainment of the state of having different aim or purpose विशेषविहितेनोद्वैस्त्वेन सामान्यविहितस्योपांशुत्वस्य अन्यपरत्वावसायात् BhāṭṭDī. i.103.1 (*on* ii.1.14); B ascertainment of the state of referring to another sense छान्दोग्यस्थम् ... वाक्यम् ... अन्यपरत्वावसायात्र गवादीनां दक्षिणात्वविधायकम् BhāṭṭDī. iii. 255. 2 (*on* x. 3.11)

**अन्यपरत्वाविशेष** (anyaparatvāviśeṣa) *m.* non-distinction of the state of having different aim or purpose मन्त्राणामप्यन्यपरत्वाविशेषेण ... कर्मान्वयिपदार्थस्वसमर्थानीम् ... तद्विशेषणानां मन्त्रेषु बहुलमुपलब्धेश्च ŚivārkaMaDī. i. 320. 21 (*on* i. 2. 3)

**अन्यपरत्वाशङ्का** (anyaparatvāśaṅkā) *f.* A doubt regarding the state of referring to another sense तेषां खल्वन्यपरत्वाशङ्कानिराकरणपूर्वकं ब्रह्मणि प्रामाण्यमुपपादनीयम् ŚivārkaMaDī. i. 38.15 (*on* i.1.1); B doubt regarding the state of having different aim or purpose हिरण्यगर्भमन्त्राणां च कथमप्यन्यपरत्वाशङ्का नावकाशं लभते ŚivārkaMaDī. i. 234. 21 (*on* i. 1.17)

**अन्यपरत्वासंभव** (anyaparatvāsambhava) *m.* A impossibility of the state of referring to another sense सर्वोपाख्यानेष्वन्यपरत्वासंभवात्स्वरूपप्रतिपादनादनित्यसंयोगः TantrVā. 9. 21 (*on* i. 2. 6); B impossibility of the state of having different aim or purpose प्रकृते तु अर्थवादस्थबृहस्पतेरन्यपरत्वासंभवात् ... यागकल्पनोपपत्तेर्युक्ता भेदकता MīmāKau. ii. 52.14 (*on* ii. 3.18)

**अन्यपरत्वोपपत्ति** (anyaparatvopapatti) *f.* A tenability of the state of referring to another sense मनःप्राणयोरुक्तन्यायेन साम्यात्। तत्पदस्याप्यन्यपरत्वोपपत्तेः TattvPrakā. 207A.11 (*on* iv. 2. 3); B tenability of the state of having different aim or purpose तदा त्यागमस्यान्यपरत्वोपपत्तौ ईश्वरस्यानुपादानत्वमेव स्यात् NyāySiA. 232. 20.

**अन्यपरप्रतिषेधार्थ** (anyaparapratiṣedhārtha) *adj.* meant for negation of that (verb) followed by other elements (than *yad, hi, tu*) यद्धितुपरस्य छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः Vār. 1. *on* P. viii.1. 56; MahāBh. iii. 378.12 (*on* viii.1. 56)

**अन्यपरमाणुप्रवेश** (anyaparamāṇu-praveśa) *m.* entrance of another atom चन्मध्ये नास्ति किंचिदिति ब्रुवाणा वैभाषिका मध्य आलोकादि नेच्छन्ति अन्यपरमाणुप्रवेशानवकाशं तु न ब्रुवते Sphuṭā. i. 99. 6 (*on* 1. 43)

**अन्यपरमात्मन्** (anya-paramātman) *m.* Supreme Soul which is other (than the individual soul) विसरगाः ... केचिद् वायुजयादन्यपरमात्मना क्षेत्रज्ञं संयोज्य ध्यायन्त्येव VaikhāDS. i.11.13.

**अन्यपरमार्थत्वशङ्का** (anyaparamārthatva-śaṅkā) *n.* doubt regarding the other being the highest reality परमार्थसारेत्यस्य कर्मधारयत्वादन्यपरमार्थत्वशङ्काविरहात् GuruCandr. ii. 308.10.

**अन्यपरवाक्य** (anyapara-vākya) *n.* sentence referring to another sense मन्त्रार्थवादा न स्वार्थे प्रमाणम्, अन्यपरवाक्यत्वात् PrakaVi. 297. 24; सर्वेषां समाभ्यधिकराहित्ये प्रतीतेऽपि तत् व्याहतम्, अन्यपरवाक्यावगतं चेत्यनादरणीयम् ŚrutaPra. iB.101.16 (*on* i.1. 2); LaCandr. 369. 15; 374. 14

**अन्यपरविध्यन्तर** (anyapara-vidhyantara) *n.* another injunction having different aim or purpose अतो ऽन्यपरविध्यन्तरप्ररोचनारूपोऽर्थो वक्तव्यः YuktiSneha. 109. 29 (*on* i. 1. 5)

**अन्यपरशास्त्र** (anyapara-śāstra) *n.* scientific text having different aim or purpose यदवान्तरशास्त्रार्थस्ततपरमापूर्वान्तर्गतं शेषिणि तस्य शेषता न त्वन्यपरशास्त्रान्तर्गते शेषिणीति MayūMāli. 183. 23 (*on* iii.1.1)

**अन्यपरश्रुत्यादि** (anyapara-śrutyādi) *adj.* Vedic scripture etc. having different aim or purpose न चाद्दश्यत्वलिङ्गेनान्तस्थो विष्णुः। श्रुत्यादिभ्यो लिङ्गमात्रस्य दुर्बलत्वात्। अतोऽन्यपरश्रुत्यादिवलादन्तस्थोऽन्य एव TattvPrakā. 21B. 9 (*on* i.1. 20)

**अन्यपरसृष्ट्यादिवाक्य** (anyapara-sṛṣṭyādivākya) *n.* sentence of creation etc. referring to another sense अन्यपरसृष्ट्यादिवाक्यादुपजातायाः प्रसिद्धेः भ्रान्तित्वपत्त्वेनाप्रमाणत्वात् YuktiSneha. 110. 31 (*on* i.1. 5)

**अन्यपराक्रम** (anya-parākrama) *m.* attack on enemy देशत्यागमुवाचैकः कालहारं तथापरः। बलिना संधिमन्योऽथ तूर्णमन्यपराक्रमम् BṛKathāMañ. 16.440.

**अन्यपराङ्मुख** (anya-parāṅmukha) *adj.* turning away from another i.e. not expecting help from another सहायं खड्गमेकं च जग्राहान्यपराङ्मुखः। अन्तरङ्ग स एवैकः संग्रामे वीर्यशालिनाम् PadmP. (Ra.) 9. 30.

**अन्यपरामर्श** (anya-parāmarśa) *m.* 1 knowledge of another entity (than the Self) जागरितावस्थायामेवाज्ञानानुभवोऽयमिति संप्रदायः अन्यं च न जानामीत्युक्तेः। न हि स्वापेऽन्यपरामर्शः ŚrutaPra. iB. 8.19 (*on* i.1.1); 2 recollection of or reference to another 'स वा एष' इत्यन्यपरामर्शो नात्रातुरुप इत्युक्तपरामर्श इति तदुक्तम् TattvPrakā. 19A.1 (*on* i.1.15)

**अन्यपरार्थवाद** (anyaparārthavāda) *m.* explanatory passage having different aim or purpose अद्यत्वेऽपि अन्यपरार्थवादविवचनेभ्योऽपि प्राप्यन्तः पुरुषा दृश्यन्ते TantrVā. 71. 3 (*on* i. 3. 1); फलस्य विधिवाक्यगतत्वामावेऽपि अन्यपरार्थवादोक्तफले विध्यपेक्षिते तात्पर्यमस्ति ŚrutaPra. iB. 91. 30 (*on* i. 1.1); विषयेषु यत्र विज्ञानमात्रक्षणभङ्गनैरात्म्यादिबाह्यग्रन्थानामपि अन्यपरार्थवादौपनिषन्मूलत्वम् ... अर्थवत्ता MīmāKau. i.11. 26 (*on* i. 3. 2)

**अन्यपरिगृहीत** (anya-parigṛhīta) *adj.* 1 obtained in another (body) इन्द्रियाणि ... मुक्तपरित्यक्तानि अन्यपरिगृहीतानि अपरिगृहीतानि वा यावत्प्रलयमवतिष्ठन्ते इत्यादिकं द्रष्टव्यम् NyāySiA. 196. 26; 2 (used as noun) (material) owned by other द्विजः तृणोदकादीनि सर्वतोऽटव्यादिदेशासंभवेऽन्यपरिगृहीतादप्यात्मीयवदाहरेत् DīpKa. 60. 30.

**अन्यपरिग्रह** (anya-parigraha) *m.* 1 wife of another person, married woman दृष्टपूर्वा मया काचिद्रूपेणानेन शोभिता। सदृशीयं मम भवेद्यदि नान्यपरिग्रहः Rāmā. vii. 88.15; नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहे। न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते ManuSm. 5.162; 2 acceptance or recognition by another (scholar) अङ्गनावद्विरोऽगण्याः प्रायेणान्यपरिग्रहात्। स्वयम् ... रज्यते जनः YaśasCam. i. 9.7(comm. विद्वज्जनस्वीकारात्); 3 property or wealth of another person एकोतीव कृती स एव हि दयापालव्रती यन्मनस्यास्तामन्यपरिग्रहग्रहकथा स्वे विग्रहे विग्रहः EI. iii. 193.111; 4 inclusion of the rest आदिनाऽन्यपरिग्रहः तथा हि गौतमः "अभ्रदर्शने चापर्त्तोरन्यत्र सोदकमेघस्य दर्शने नाधीयीत मूत्रितउच्चारितः" BālamBha. i. 410.13 (*on* 1.151)

**अन्यपरिग्रहा** (anya-parigrahā) *f.* wife of another person, married woman नान्योत्पन्ना प्रजास्तीह न चाप्यन्यपरिग्रहा। न द्वितीयश्च साध्वीनां कश्चिद्भर्तोपदिश्यते ViṣṇuDhaP. ii. 34.17.

**अन्यपरिच्छिन्न** (anya-paricchinna) *adj.* A restricted, i.e. applied to the particular case विशेषस्य चान्यपरिच्छिन्नस्य, एकावसायिनस्तदसंभवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं मा भूदिति ŚābaBh. 2280. 6 (*on* xii. 4. 20); B apprehending (the perfection) of the last ततो गुणपरिच्छेदिप्रमाणान्तरमिच्छतः। तस्याप्यन्यपरिच्छिन्नगुणायत्ता प्रमाणता TattvSaṁ. 2857.

**अन्यपरिजनसमवृत्ति** (anyaparijan-samavṛtti) *adj.* having equal behaviour towards other servants अनयोरुपरि भवद्भ्यामपि नान्यपरिजनसमवृत्तिभ्यां भवितव्यम् इत्युक्त्वा तयोराह्वानाय प्रतीहारमादिदेश HarṣaC.196. 5.

**अन्यपरिजल्पित** (anya-parijalpita) *n.* another speech यो वक्ता यद्य वक्तव्यम् ...। श्रूयते यद्य वै श्राव्यं यद्यान्यत्परिजल्पितम् PadmP. v. 36.25.

**अन्यपरिणामिन्** (anya-pariṇāmin) *adj.* (used as noun) other transforming cause ब्रह्म न परिणमते अन्यपरिणामिना सह एककार्यरूपेण परिणमते LaCandr. 757. 27.

**अन्यपरिणीता** (anya-pariṇītā) *adj.* (*f.*) married to another person (आधिः ... स्त्रियः। ... न भोगेन प्रणश्यति) स्त्रियोऽन्यपरिणीता दास्यश्च ManvaVi. 965.14 (*on* 8.149)

**अन्यपरित्याग** (anya-parityāga) *m.* [Inst.] by leaving out the rest तदेवमागमेनास्य सर्वोत्तमप्रामाण्यप्रतीतिर्ग्रहणार्थत्वाद्योपपन्नम् अन्यपरित्यागेनास्यैव व्याख्यानम् NyāySu. (Ja.) 3B.11 (*on* i.1.1)

**अन्यपरित्राणरहित** (anyaparitrāṇa-rahita) *adj.* deprived of other protection तस्मादन्यपरित्राणरहितस्यास्य सन्मतेः। क्षिप्रं कुरु परित्राणम् PadmP. (Ra.) 33. 210.

**अन्यपरिधानार्थम्** (anyaparidhānārtham) *adv.* for the sake of wearing by other person रजकः ... न चान्यवासांस्यन्यपरिधानार्थं दद्यात् ManvaMu. 359. 26 (*on* 8. 396)

**अन्यपरिभवन** (anya-paribhavana) *n.* refutation of another (contradictory meaning) पदसमन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनात् KhaṇḍanKhā. 145. 15.

**अन्यपरिमाण** (anya-parimāṇa) *n.* another measure or dimension सर्वमूर्तसंयोगित्वे सर्वगतत्वस्य मूर्तसापेक्षत्वात् ... विधान्तरेण सर्वगते च परिमाणायोगात्, तत्कल्पने च ततोऽन्यपरिमाण(स्य) वक्ष्यमाणरीत्या वक्तुमशक्यत्वात् TarkSaṁ. (Ā.) 29. 16.

**अन्यपरिवर्जनवत्** (anyaparivarjana-vat) *adv.* like the act of giving up or abstaining from (the meat of) the rest पञ्चनखापञ्चनखभक्षणयोरन्यतः प्राप्तौ अन्यपरिवर्जनवत् VivaPraSaṁ. 4. 2.

**अन्यपरिवार** (anya-parivāra) *adj.* (manifesting) as retinue of other (diseases) ते च रोगाः स्वप्रधाना भवन्त्यन्यपरिवारा वा क्रमादननुबन्धानुबन्धाख्याः AṣṭāSaṁ. i. 117. 19 (1. 22)

**अन्यपरिवीक्षण** (anya-parivīkṣaṇa) *n.* act of looking upto any one else पङ्गुरन्धामिगमनेऽस्यन्धोऽन्यपरिवीक्षणे SkandP. iv. 63. 64.

**अन्यपरिशिष्टा** (anya-pariśiṣṭā) *adj.* (*f.*) left out by others, remaining दुष्टोद्देशसमुद्भवान्यपरिशिष्टा ... वर्ज्या शिला TantrSa. 1. 132 (comm. अन्यत्रगृहीतया अवशेषिता)

**अन्यपरिसंख्यान** (anya-parisaṅkhyāna) *n.* exclusive specification of other तत्रश्चान्यपरिसंख्यानादिन्द्रियालम्बनादिनिवृत्तिः BālaKrī. i. 40. 9 (*on* 1. 21)

**अन्यपरिसंख्यानार्थ** (anyaparisaṅkhyānārtha) *adj.* meant for the exclusive specification of other व्रीहयः ... न यागसंबन्धेनान्यपरिसंख्यानार्थाः ŚābaBh. 2052. 20 (*on* x. 7. 64); तद्यदिदं यज्ञो बभूवेति पुनस्संकीर्तनमन्यपरिसंख्यानार्थम् SaṅkarKāBh. 81. 4 (*on* ii. 2. 11)

**अन्यपरिसंख्याफलक** (anyaparisaṅkhyāphala-ka) *adj.* having exclusive

specification of other as the fruit अतः तत्रागत्या अन्यपरिसंख्याफलकत्वाङ्गी-कारेऽपि न प्रकृते तदाश्रयणम् MīmāKau. iii (1). 92. 21 (*on* i. 2. 44)

**अन्यपरिसंख्यार्थ** (anyaparisaṅkhyārtha) *adj.* meant for exclusive specification of others विशेषविधीनां तत्प्राशस्त्यमात्रपरत्वेनान्यपरिसंख्यार्थत्वाभावात् VīraMi. (Saṁskāra.) 369.18.

**अन्यपरिसंख्यार्थम्** (anyaparisaṅkhyārtham) *adv.* for the sake of exclusive specification of other तेनान्यपरिसंख्यार्थं सूत्रं मूढेन वोच्यते ŚlokaVār. 4. 8 (135. 6)

**अन्यपरिसमाप्ति** (anya-parisamāpti) *f.* completion of another (action) अपरेऽन्यपरिसमाप्तिं व्यपदिशन्ति ŚābaBh. 633. 4 (*on* ii. 4. 8)

**अन्यपरिहार** (anya-parihāra) *m.* A abandonment of another (activity) बालानामपि येयमन्यपरिहारेण स्तनादौ प्रवृत्तिः सा न इदम् इत्यनिश्चितवतां भवितुमर्हति BrahmSi. 18. 13; B avoidance of another (thing) तथा चान्यपरिहारेणास्यैव व्याख्यानं युक्तम् NyāySu. (Ja.) 8A. 8 (*on* i. 1.1); प्रवेशत्वं गृहादिप्रवेशेऽन्यपरिहारेण वर्तते SarvaDaKau. 60. 4.

**अन्यपरोक्ति** (anyaparokti) *f.* statement referring to another (sense) अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं चेदं (पठति पराशरशब्दम्) ŚrutaPra. iA. 227. 14 (*on* i. 1. 1); अन्यपरोक्ति[प्र]सिद्धपरिग्रहातिशयत्वात् ... श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम् ŚrutaPra. iA. 230. 27 (*on* i. 1. 1); प्रतिक्षेपस्तु क्वाचित्कोऽन्य-परोक्त्या ... क्षुद्रप्रमादमात्रस्याप्युद्धारार्थो वेति न प्रधानविरोधकल्पनलिङ्गम् NyāyPari. 403.12.

**अन्यपर्णपात्र** (anyaparṇa-pātra) *n.* vessel (made) of other (kind of) leaves पलाशासंभवेऽन्यपर्णपात्राणि नैत्याहात्रिः BālamBha. i. 516. 16 (*on* 1. 234-235)

**अन्यपर्याय** (anya-paryāya) *m.* 1A another alternative आदिशब्दोऽन्य-पर्यायद्योतनार्थः AbhidhKoBh. 40. 5 (*on* 2. 4); 1B synonym of the word *anya* परशब्दोऽन्यपर्यायः LaŚabdeŚe. ii. 214. 3; 2 other state आधारो स एवान्यपर्याया-णामित्यर्थेनाभेदवृत्तिः SyādvāMañ. 23 (194)

**अन्यपर्वतवासिन्** (anyaparvata-vāsin) *adj.* inhabiting or staying in another mountain येऽन्यपर्वतनिवासिनः परे तेऽपि शङ्कितभयाश्चकम्पिरे Rāṣṭrau. 4. 27.

**अन्यपल** (anya-pala) *m., n.* flesh or meat of another ये भक्षयन्त्यन्यपलं स्वकीयपलपुष्टये। त एव घातकाः YogŚā. 3. 23.

**अन्यपल्ह** (anya-palha) *m.* any other Palha अन्यपल्ह (अन्यस्य पल्हजातीयस्य) कस्यचि(कस्यचिद्)कामकारो नास्ति EI. iii. 313.7.

**अन्यपशु** (anya-paśu) *m.* 1 another animal or beast संदितानामन्यपशूनां तद्विरोधाचरणबुद्ध्या मोक्षकः ManvaVi. 1075. 14 (*on* 8. 342); 2 rest of the animals अन्यपशुनिन्दाद्वारा स्तुतिः BhāṭṭCin. ii. 72. 27 (*on* i. 4.15)

**अन्यपश्वादि** (anyapaśv-ādi) *adj.* another animal etc. तदभावोऽन्यपश्वादी नञ्समासेन कथ्यते TantrVā. 326. 8 (*on* i. 4.21)

**अन्यपाक** (anya-pāka) *m.* 1 act of cooking by another, i.e. inferior person द्विजोत्तमः ... देवोच्छिष्टं न जग्राह अन्यपाकाभिशङ्कया SkandP. ii (2). 38. 57; 2 act of cooking of other things यत्तु ... । मांसपाकप्रतिषेधोऽन्य पाकाभ्यनुज्ञानार्थं इति BhāṭṭDī. iv. 244. 7 (*on* xii. 2.1)

**अन्यपाचित** (anya-pācita) *adj.* cooked by another, i.e. person परान्नं नैव भुञ्जीयात् स्वकीयं चान्यपाचितम् LaghvāśvaSm.1.174.

**अन्यपाठ** (anya-pāṭha) *m.* recitation of any other text श्रीकृष्णरूप-गुणवर्णनशास्त्रवर्गबोधाधिकार इह चेदलमन्यपाठैः PadmP. iv. 80. 67.

**अन्यपाठक** (anya-pāṭhaka) *m.* another reciter वैदग्ध्यातिशयादन्यपाठकानां पुरोऽपि यत् ख्यातं तदपि गृह्णाति PrabhāC. 29.7.

**अन्यपाठ्य** (anya-pāṭhya) *n.* another recitation (than that of benedictory verse) अन्यपाठ्यानामुत्थापनादीनां प्रयोगवशादन्यथात्वोपपत्तिर्दृश्यते AbhinBhā. i. 217. 13 (*on* 5. 22)

**अन्यपाणि** (anya-pāṇi) *m.* another, i.e. right hand अन्यपाणिसंतन्य-मानमतिलटहडमरुडात्कारकन्दलं परिच्छेदयतेव परं परशयसरसिजेन विरचिताभीति-मुद्राभिनीतिमादिनटमद्राक्षीत् YātrāPra. 5.10 (11)

**अन्यपाणिग्रह** (anya-pāṇigraha) *m.* act of taking (the bride) by the hand by another person, i.e. marriage to another person अन्यपाणिग्रहं प्रयाताया:। मदनासिपुत्रिकाया इवाङ्गशोभां कदर्थयति ĀryāSaŚa. 585.

**अन्यपाणिधृतकीर** (anyapāṇidhṛta-kīra) *adj.* holding a parrot in another, i.e. right hand अन्यपाणिधृतकीरम्। किमपि करुणापयोधेरधिदैवतमाविरस्तु मम चित्ते YātrāPra. 5.87.

**अन्यपातक** (anya-pātaka) *n. m.* other, i.e. minor sin महां वै ब्राह्मणावेदं मया विज्ञप्तकामिकम्। दद्यात् ब्रह्मभ्रूणवीरहत्याद्याश्चान्यपातकैः BilvU. 305. 21; महापातकयुक्तो वा युक्तो वाप्यन्यपातकैः। सकृत् प्रसादग्रहणात् मुच्यते नात्र संशयः MahNirvāT. 3. 86.

**अन्यपातकिन्** (anyapātak-in) *adj.* (used as noun) (one) who commits (any) other sin दृष्ट्वा मधुपुरीं नरः। ब्रह्महापि विशुध्येत किं पुनस्त्वन्यपातकी SkandP. ii (5). 17. 8; iv (1). 27.133.

**अन्यपातालगृह** (anya-pātālagṛha) *n.* other house of lower world ततो महल्लिकावोचन्ममैतद्गृहमत्र तु। त्वमन्यपातालगृहात्प्राप्ता प्राघुणिकाद्य मे KathāSaSāg. viii. 2. 267.

**अन्यपात्र** (anya-pātra) *n.* A another sacrificial utensil दर्शनाद्यान्यपात्रस्य MīmāSū. viii. 4. 7; B another vessel अन्यपात्रेण वोदकं पितृतीर्थे स्पृशन् दद्यात् ŚaṅkhaSm. 13. 9; दृढे चतुर्गुणे वस्त्रे क्षिप्त्वाधः पीडनाद्रसः। निपतत्यन्यपात्रे तु सर्वोऽपि यदि पारदः RasPraSū. 1.100.

**अन्यपाद** (anya-pāda) *m.* 1 another foot or leg एवमेकपादं सुस्थितं स्थापयित्वा अन्यपादमीषत्संकुचितं तस्योपरि निधाय ... पादसिरां व्यधेत् AṣṭāSaṁ. i. 178. 14 (1. 36); सश्लीपदं निजपदं सिकतासु गूढं कृत्वा निरीक्ष्य पुनरीदृशमन्यपादम्। उद्वेहंसन्ति मनुजाः RasSa. 85; 2A another quarter (of a verse) वत्स श्लोकस्यैकपादं व्याख्यातंच यथागमम्। व्याख्यां करोम्यन्यपादं यथाज्ञानं निशामय PāncaRā. (Nā.) i. 2. 26; 2B another quadrant (of a circle) भिनत्ति वेधकृद्ग्रहो न चान्यपादमादरात्। असंभवाच्छशीनयोर्दृशोः समत्वमत्र वै VasiS. 32. 74; 2C another quarter, i.e. one of the four parts (of injustice) दुर्व्यवहारदर्शनादधर्मसम्बन्धी ... परश्चतुर्थभागः साक्षिणमसत्यवादिनम्। अन्यपादः सभासदः सर्वान् ... व्याप्नोति ManvaMu. 291. 28 (*on* 8. 18).

**अन्यपादप** (anya-pādapa) *m.* i any other tree अन्यपादपानुपयोगेन पलाशेष्वारामः स्थितः Sphuṭā. i. 12.9 (*on* 1.3); ii another tree वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः। वर्धितो नरकाद्रक्षेत् स्पृष्टोऽरिष्टानि हन्ति यः ŚārṅgaPa. 1033.

**अन्यपाप** (anya-pāpa) *n.* other sin वेदाभ्यासादिरतं पञ्चमहायज्ञानुष्ठानपरं महापातकजान्यपि पापानि इह रहसि अकामकृतानि न स्पृशन्ति किमुतान्यपापानि तादृशानि VīraMi. 1074. 13 (*on* 3. 310)

**अन्यपारतन्त्र्य** (anya-pāratantrya) *n.* subservience to another भगवन्तं गुरुं चर्ते ह्यात्मनोऽन्यपारतन्त्र्याभिमानः VedāntRaMañ. 4. 10 (134. 17)

**अन्यपार्थिव** (anya-pārthiva) *m.* another king (युवराजममन्यत) विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः। शिष्टैरपरिमेयैश्च लोके लोकोत्तरैर्गुणैः Rāmā. ii. 26* (1); तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः RaghuVa. 19. 48; तथापि चान्यपार्थिवकुलपुत्रको न क्वचित्कश्चिदात्मनः श्रियमधिप्रवेशयितुं विश्रम्भ-विषयीकृतो भीत्या UdaySuKa. 8. 19; शशिबिम्बताम् ... परितापसंपदमिवान्य-पार्थिवैर्जनितां न्यपोहितुमृतस्य तिष्ठतः PṛthvīVi. 9. 56.

**अन्यपार्वणवत्** (anyapārvaṇa-vat) *adv.* like the oblations offered at new and full moon अन्यपार्वणवदर्घ्यदानादि कृत्वा नान्दीमुखा मातर इदं वो अर्घ्यमिति ... अर्घ्यं दद्यात् BālamBha. i. 578. 30 (*on* 1. 250)

**अन्यपार्श्व** (anya-pārśva) *m., n.* [Loc.] 1A on another extreme side अङ्गुष्ठसीम्नि कलयोत्तरितर्धतोन्यपार्श्वेऽङ्गुलैः प्रपददैर्घ्यमुतुप्रमाणैः TantrSa. 2. 104 (comm. कनिष्ठचति पार्श्वे); 1B on another side लक्ष्मणमन्यपार्श्वे। अग्रे ... समीरसुनुं मध्ये स राघवमलोकयदभ्रनीलम् Rāṣṭrau. 12. 29; 2 [Loc.] near another person पृष्टोऽन्यपार्श्वे भ्रान्त्या तत्कोऽप्यन्यो निहतो भवेत् SamarāSaṁ. 5. 576; 3 one side or neighbourhood, cf. **अन्यपार्श्ववर्तिन्.**

**अन्यपार्श्वक** (anyapārśva-ka) *m., n.* another, i.e. left side अन्यपार्श्वके वामपार्श्वे। ... न्यस्तव्याः SetuBa. 290. 1.

**अन्यपार्श्वग** (anyapārśva-ga) *adj.* being on the other, i.e. back side यत्पार्श्वसमबाहुज्याकृतिकर्णज्यकाकृतेः। विशोध्य मूलं तद्यापं नियतं चान्यपार्श्वगः। भवेत् स विषमो बाहुः SiddhāTaVi. 159. 21.

**अन्यपार्श्वगत** (anyapārśva-gata) *adj.* (line) going through another side (of body) अन्यपार्श्वगतं सूत्रं क्रमेणैव निरूपितम्। Mānaso. iii. 1. 426; iii. 1. 483.

**अन्यपार्श्ववर्तिन्** (anyapārśva-vartin) *adj.* (used as noun) (Vassal) present in one side or in neighbourhood ननु तत्रापि अन्यपार्श्ववर्तिनोऽन्य-सीमानिर्णायकत्वं कथम् BālamBha. ii. 273. 32 (*on* 2. 150-151)

**अन्यपार्श्वसम** (anyapārśva-sama) *adj.* equal to (one that is related to) another side कोटिमौर्व्याथ तद्यापमन्यपार्श्वसमो भुजः। सदेत्थं गणितं प्राज्ञैर्ज्ञेयमे-तादृशस्थले SiddhāTaVi. 159. 24.

**अन्यपावनकारण** (anyapāvana-kāraṇa) *n.* cause of purifying or

TattvSaṁ. 271; 1C contrary form, i.e. object प्रतिषेधविकल्पादेः संबन्धश्च विरुध्यते। अन्यरूपपरिच्छेदात् ŚlokaVār. 7. 96 (872. 5); 1D different, i.e. disguised form सैवाहम् ... । कृतान्यरूपा भवता परिज्ञातास्मि नाधुना KathāSaSāg. v. 2.192; [Inst.] in different, i.e. disguised form पार्वतीहरयोः बोधम् ... । कुरु गत्वान्यरूपेण GaṇeP.i. 85.23; इहायातो वसन्तकः। द्वारि स्थितोऽन्यरूपेण KathāSaSāg.ii. 4. 65; साथ धीरान्यरूपेण तद्यक्षायतनं निशि। ... ययौ KathāSaSāg.ii. 5.172; 1E form of another अपवारितकं तच्च परिवर्तकमुच्यते। स्वरूपादन्यरूपत्व-मन्यरूपात्वरूपता NāṭaLaRaK.2270; 2A different nature इदमपि वस्तुस्वरूपं गृह्णाति नान्यरूपं निषेधति NyāyMañ.ii.96.26; 2B nature of another स्वरूपमन्यरूपं च मुक्ता देवाः समस्तराः। जानन्ति AnuVyā.57A.7 (3.4); [Inst.] in the nature of another प्रपञ्चनिवृत्तिरूपेण साध्यत्वमिति चेत्, न ह्यन्यरूपेणान्यः साध्यः स्यात् ŚatDū. 188.28; विषयिणो रूपेण विषयस्य रञ्जनं रूपकम्। अन्यरूपेण रूपवत्त्वकरणात् Kuval.20(2); 3 another colour, cf. अन्यरूपादि; 4 other symptom इत्येतदन्यरूपाणामभावे विपलक्षणम्। स्थावरस्य विषस्यैतद्रूपं भवति Hastyāyur. 180.21(2.10); 5 the word *anyarūpa* तथान्यरूपमिति तु व्यतिरेकव्यभिचारोदाहरणम् YuktiSneha. 156.12 (*on* i.1.7)

**अन्यरूपता** (anyarūpa-tā) *f.* Ai the state of having different form या एता बुद्धिवृत्तय उक्ता एतदौपाधिकयेव पुरुषस्यान्यरूपता न स्वतः Sāṁkhya-PraSūBh.84.31 (*on* 2.34); प्रत्यगज्ञानमात्रैकनीडत्वात्रान्यरूपता BṛĀraUBhVā. i. 4. 671; अभ्यासेन स्थिरं चित्तम् ... अभ्यासेनान्यरूपता ŚārṅgaPa. 4187; [Inst.] as having another form अन्यस्यान्यरूपतया संभावने AlaṅkāRa. 32 (115); Aii the state of (word) having different nature प्रत्यक्षप्रत्यभिज्ञाते वेदशब्देऽन्यरूपता TantrVā. 266.13 (*on* i.3.26); B the state of having changed or altered form अहो कालस्य सूक्ष्मोऽयम् ... क्रमः। यत्पाकपरिणामेन सर्वं यात्यन्यरूपताम् DarpDa.4.65; C the state of being different, difference भवान्तरे शिक्षितराक्षसवधयोऽन्यरूपतामेत्ययमर्कभूर्हरिः PṛthvīVi.2.11.

**अन्यरूपत्व** (anyarūpa-tva) *n.* 1Ai the state of having another form न चान्यस्यान्यरूपत्वं विकृतत्वेऽपि दृश्यते AnuVyā. 15B. 5 (*on* 1.4); 1Aii the state of having any other form एवम् ... द्वैविध्यमेव कालस्य नान्यभावो नान्यरूपत्वम् CaturCin. iii(1). 166. 19; 1B the state of having changed or altered form अन्यरूपत्वम् अन्यविकारत्वम् NyāySu. (Ja.) 199A. 8 (*on* i. 4. 6); 2 the state of having the form of other परिवर्तकमुच्यते। स्वरूपादन्यरूपत्वमन्य-रूपात्वरूपता NāṭaLaRaK. 2270.

**अन्यरूपत्वासंभव** (anyarūpatvāsaṁbhava) *m.* impossibility of the state of having another form न च तस्य मुख्यं रेतःसिगूरूपत्वम्। अन्यस्यान्य-रूपत्वासंभवात् GoviBh.193.12 (*on* iii.1. 27)

**अन्यरूपनिषेध** (anyarūpa-niṣedha) *m.* A negation or prohibition of the form of the other अन्यरूपनिषेधोऽयं स्वरूपेणैव तिष्ठति। इत्यन्यथा निरर्थं स्यात्प्रयुक्तमवधारणम् TattvSaṁ. 1149; B negation or prohibition of any other form अन्यरूपनिषेधमन्तरेण तत्स्वरूपपरिच्छेदस्याप्यसंपत्तेः NyāyMañ.ii. 96. 26; SyādvāMañ.13 (56)

**अन्यरूपनिष्पत्ति** (anyarūpa-niṣpatti) *f.* origination of the form of another 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तम्, अन्यरूपनिष्पत्तौ स्वशब्दानुपपत्तेः BrahmSi.121.15.

**अन्यरूपप्रकाशिका** (anyarūpa-prakāśikā) *adj.* (*f.*) manifesting another form अविद्यात्वं यतोऽन्यस्य सान्यरूपं[ °प]प्रकाशति[ °शिका] VibhraVi.149.

**अन्यरूपप्रतीति** (anyarūpa-pratīti) *f.* cognition of another form न तु कदाचिदपि सर्वेषाम् अन्यरूपप्रतीतिः NyāyRa.199.16 (*on* 4. 220)

**अन्यरूपव्यतिभिन्नात्मन्** (anyarūpavyatibhinnātman) *adj.* having the nature delimited by the form of another न खल्वन्यरूपव्यतिभिन्नात्मा कुतश्चिन्निमित्तादवबोधः SphoṭSi.178. 6.

**अन्यरूपसंवित्ति** (anyarūpa-saṁvitti) *f.* cognition of another form अभावलक्षणं मानं ततश्चेत्तन्निरूप्यते। किमन्यरूपसंवित्तिः किमभावस्य तस्य वित् PramāVāBh. 6.9.

**अन्यरूपसंवेद्य** (anyarūpa-saṁvedya) *adj.* A knowable in another form यो ह्यन्यरूपसंवेद्यः संवेद्येताथ वा पुनः ŚlokaVār. 4.155 (182.6); B knowable in the form of another नान्यरूपसंवेद्यतामात्रेण मिथ्यात्वम् Kāśi. i. 265. 23 (*on* 4.155); YuktiSneha. 39. 34 (*on* i.1.4)

**अन्यरूपसंत्याग** (anyarūpa-santyāga) *m.* abandonment of the form of another अप्यन्यरूपसंत्यागे स्वरूपस्य तथास्थितौ। नैव स्यादन्यथाभावः IṣṭaSi. 224. 21.

**अन्यरूपसमुद्भव** (anyarūpa-samudbhava) *m.* appearance of another form एकरूपतिरोभावे ह्यन्यरूपसमुद्भवे। मृदादाविव संसिध्येत्परिणामस्तु नाक्रमे TattvSaṁ. 139.

**अन्यरूपसंबन्धादि** (anyarūpasambandhādi) *adj.* connection with the form of another etc. योऽन्यरूपसंबन्धादिरितित्यक्षितः न तस्यापि तथाभावे अन्यथाभावः IṣṭaSi.224.17.

**अन्यरूपागत** (anyarūpāgata) *adj.* approached in different, i.e. disguised form अन्यरूपागतश्चात्र लक्ष्यस्ते दिव्यकामुकः। स्वापकाले यतो दिव्याः सुप्ताः स्वे रूप आसते KathāSaSāg.vi.6.30.

**अन्यरूपादि** (anyarūpādi) *adj.* another colour etc. अन्यसंबन्धात्तत्र अन्य-रूपादिप्रतिभाससंभवात् TarkSaṁ.(Ā.)63.3.

**अन्यरूपानुवेध** (anyarūpānuvedha) *m.* intermixture of the form of the other (word) अन्यरूपानुवेधेन चाप्रतिभासनमयुक्तम् SphoṭSi.237.1.

**अन्यरूपापत्ति** (anyarūpāpatti) *f.* undesired contingency of, i.e. changing into another form तस्यैव वस्तुनो विषयान्तरयोजनादन्यरूपापत्तिर्विपय-परिवर्त्तः KāvyMī. 71.16.

**अन्यरूपारोप** (anyarūpāropa) *m.* imposition of the form of another अथान्यरूपारोपः कल्पना, योगिज्ञानमपि अजातादिषु वर्तमानरूपारोपेणैव वर्तत इति न कल्पनापोढम् Kāśi.i.123. 15 (*on* 2.115)

**अन्यरूपाश्रयत्व** (anyarūpāśraya-tva) *n.* the state of being the substratum of other form, i.e. matter महत्त्वमेषां सर्वान्यरूपाश्रयत्वेनौदारिकत्वात् AbhidhKoBh. 8. 13 (*on* 1. 12)

**अन्यरूपिणी** (anya-rūpiṇī) *adj.* (*f.*) being in different, i.e. disguised form मातुर्मुखाच्छ्रुत्वा पद्मावत्यन्यरूपिणीम्। तत्र वासवदत्तां तां सुतरां बह्वमन्यत KathāSaSāg. iii. 2. 44.

**अन्यरूपीकृत** (anyarūpī-kṛta) *adj.* which is made to possess another form रूपकम्। तस्य द्वौ भेदौ तुल्यैरवयवैः सर्वैरेवान्यरूपीकृतैर्युक्तं यदि वा किंचित् साहश्ययुक्तं रूपितम् AbhinBhā.ii.325.18 (*on* 16.56)

**अन्यरूपोच्चारण** (anyarūpoccāraṇa) *n.* utterance of another form तथा शब्दानृतमप्यन्यरूपे वाचके सत्यन्यरूपोच्चारणम् ŚāstrDī. 47.3 (*on* i.3.9)

**अन्यरूप्य** (anya-rūpya) *n.* A silver which is other (than shell) नातोऽन्यथा भवेच्छुक्तिर्नान्यरूप्यात्मतां गता IṣṭaSi.235.10; B another silver न चान्यरूप्यजा बुद्धिर्जाता तत्रेत्यसन्मतिः IṣṭaSi.286. 3.

**अन्यरूप्यवत्** (anyarūpya-vat) *adj.* like the other silver अदुष्टाक्षोऽपि तत्पश्येत्सति रूप्येऽन्यरूप्यवत् IṣṭaSi.152.20.

**अन्यरेखा** (anya-rekhā) *f.* A rest or remaining line तथान्यरेखालोपेन लताः स्वुर्विदिगायताः ĪśānŚiPa. i. 6. 77; ii. 8. 80; B other (than the straight) line तिर्यगन्योऽन्यरेखाभिर्गोमूत्री द्विपदी द्वये VidaMuMa.3.17.

**अन्यरेतस्** (anya- retas) *adj.* born of another's seed बन्धुविरोधिनम्। पुत्रं पितुरसंस्निग्धं जानीयादन्यरेतसम् RājTa.(Ka.)7.435; यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम् ŚārṅgaPa.1484; Subhāṣi.2992.

**अन्यरेफ** (anya-repha) *m.* A other letter *r* (than the letter with the indicatory letter *n*) रङो विः स्यात्सुपि न त्वन्यरेफस्य MugdhaBo.3.110(27.9); B other letter *r* (than what is substituted for *visarjanīya*) सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य PrakriKau. i. 217.5; SiddhāKau. 80B.11 (*on* viii. 3.16)

**अन्यरै** (anya-rai) *m.* wealth of others हिंसानृतान्यरैरामारत्यारम्भपरिग्रहैः। मया संचितम् ... एनः MahāP. 2. 23.

**अन्यरोग** (anya-roga) *m.* other diseases औषधशेषे भुक्तम् ... औषधं हि शेषेऽन्ने। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च SiddhYo.1.86; साम्यं प्रतीत्य सखि सांप्रतमन्यरोगैः ... सोऽयं पुनः स्मरगतो विपरीतवृत्तिः BhikṣāKā. 29.8.

**अन्यरोगक्षपित** (anyaroga-kṣapita) *adj.* (used as noun) (one) weakened by other diseases निहन्ति ... । तृष्णान्यरोगक्षपितम् AṣṭāHṛ.ii.5.78.

**अन्यरोध** (anya-rodha) *m.* A interruption by other (element) न भावे नापि धात्वर्थे काष्ठैरिति समागमः। ... अन्यरोधात् BhāvanāVi. 28. 5; Bi act of stopping by another तं न प्लवंगपतयो रुरुधुर्वृतैकवीरे भटे न हि घटेत मृधेऽन्यरोधः RāmC. (App. 2) 37. 60; Bii obstruction from another स्वगत्या चलितस्यैवमूर्ध्वस्थस्य कथं चन। नाधःस्थगतितस्तस्य चलनं त्वन्यरोधतः (गोलस्य) SiddhāTaVi. 25. 2.

**अन्यरोष** (anya-roṣa) *m.* anger of another अन्यरोषादात्मघातार्थिनां हतानाम् ... अशौचं न भवति ViraMi.805.6 (*on* 3.27)

**अन्यर्क्ष** (anyarkṣa) *m.,n.* 1 next house or zodiac sign बली राश्यन्तगोऽन्यर्क्षगामी दीप्तांशकैर्महः। दत्तेऽन्यस्मै TājiNī. i. 2.66 (124); 2 another planet or star तदैक्यात्पूर्वभुजान्तरे त्वन्यर्क्षम् SiddhāTaVi.(ŚeṣaVā.) 43.1.

**अन्यर्क्षशर** (anyarkṣa-śara) *m.* versed sine of an arc of another planet or star कदम्बादन्यर्क्षशरचापकोटितुल्यकर्णान्तरे तयोरेव ... अन्तरं भुजः SiddhāTaVi.(ŚeṣaVā.)42.17; 42. 20.

**अन्यर्क्षसंस्थित** (anyarkṣa-saṁsthita) *adj.* occupying next house or zodiac sign ऊर्ध्वचन्द्रस्तु नावार्धः प्रोक्तस्त्वन्यर्क्षसंस्थितैः Bṛhajjā.12. 8.

**अन्यर्क्षस्थ** (anyarkṣa-stha) *adj.* occupying next house or zodiac sign इन्दुः कन्यायाम् ... । स स्वोच्चगेन शशि(?नि)नान्यर्क्षस्थेनेत्यशालकृत् गौरिकम्बूलम् TājiNī.i. 2.60 (121)

**अन्यर्ण** (a-nyarṇa) *adj.* not harrased कपिः ... अव्यर्णो (v. 1. अन्यर्णो) गिरिकूटाभानभ्यर्णानार्दिदर्द्दतम् Bhaṭṭi.9.19.

**अन्यर्तु** (anyartu) *m.* **Ai** season which is other (than the rains) अशुभाकृतिघनगन्धर्वनगरनीहारपांशुधूमयुता । प्रावृषि करोत्यवग्रहमन्यर्तौ शस्त्रकोपकरी BṛSaṁ.30.1; **Aii** season which is other (than spring) ग्रीष्मार्कं घौरिवान्यर्तुन्नाज्ञोऽतीत्य बहून्महीं । ध्रुवमापञ्चयापीडम् RājTa. (Jo.) 417; **B** other season (personified) अन्यर्तवो मान्मथपुस्तकेपु न ग्रन्थिमुन्मोक्तुमपि क्षमन्ते ŚrīKaC.6.4.

**अन्यर्तुकाल** (anyartu-kāla) *m.* time of the season which is other (than the rains) अन्यर्तुकाल इति प्रावृट्कालादन्यत्रेति AdbhuSāg.33.11.

**अन्यर्तुपराङ्मुख** (anyartu-parāṅmukha) *adj.* averted to, i.e. excepting the season which is other (than the spring) दुराग्रहश्चन्दनमारुतस्य सदा यदन्यर्तुपराङ्मुखोऽयम् VikraDeC.7.12.

**अन्यर्हि** (anyarhi) *ind.* at another time किमादिभ्योऽनद्यतनवृत्तिभ्यः सप्तम्यन्तेभ्योर्हिल्वा भवति । ... अन्यर्हि । अन्यदा CāndraVṛ. *on* iv. 3.15; KātanVṛ.ii.6.37.

**अन्यलक्षण** (anya-lakṣaṇa) *adj.* **A** having any other characteristic तस्माच्चोदनालक्षण एव धर्मो नान्यलक्षणः ŚabaBh. 58. 8 (*on* i. 1. 5); **B** having different characteristic सलिले मग्नतनुर्ददर्श तौ । ... पुरुषौ किंचिदिवान्यलक्षणौ Yādavā. 9.118.

**अन्यलक्षण** (anya-lakṣaṇa) *n.* **1A** indicatory mark in any another object 'असत्यर्थे नाभाव इति' चेत् नान्यलक्षणोपपत्तेः NyāySū.ii.2.9; तस्मात्तु लक्षणाभावोऽनुपपन्न इति । नान्यलक्षणोपपत्तेः NyāyBh. 129.11 (*on* ii. 2. 9); **1Bi** other characteristic अथवा यस्यानावरणमेव लक्षणं नान्यल्लक्षणं तदाकाशम् । तयोश्चान्यलक्षणमस्तीति न तौ निरोधावाकाशं प्राप्नुतः Sphuṭā. i.17.10 (*on* 1. 5); **1Bii** characteristic of another स्वलक्षणज्ञानेऽपि अन्यलक्षणाज्ञानात् IṣṭaSi. 355.14; **1C** other sign or indication यद्यन्यलक्षणं चान्यभक्तं लक्ष्येत सञ्जनैः SātvT. 4. 84; **1Ci** indication of another किंचिन्निपेधेनान्यलक्षणे यथा श्रुतेन तत्सिद्धेः VedāntKa. 446.12 (*on* iii. 3. 33); **2** reference to (the things in) the next (chapter) शेषधीसिद्ध्यपेक्षत्वादन्यलक्षणवाग्धियाम् TantrVā.660.11 (*on* iii.1.1)

**अन्यलक्षणसंसिद्धि** (anyalakṣaṇa-saṁsiddhi) *f.* establishment of any other characteristic अन्यलक्षणसंसिद्धौ प्रमाणं न च किंचन । ज्ञातेनापि न तेनार्थो रूपात्तत्कार्यसिद्धितः TattvSaṁ.1611.

**अन्यलक्षणा** (anya-lakṣaṇā) *f.* other (types of) indication जहल्लक्षणास्थल एव ... तत्तच्छक्यस्वरूपात् अन्यत् नान्यलक्षणास्थले LaCandr. 674. 40.

**अन्यलक्ष्यता** (anyalakṣya-tā) *f.* the state of having differrent aim or target मौनं वदननिकूणनमूर्ध्वेक्षणमन्यलक्ष्यता चाक्ष्णोः । ... रूपं मदस्यैतत् KalāVi. 6. 3.

**अन्यलग्न** (anya-lagna) *m., n.* other point of contact or intersection ऊनाधिके खरसहत्खलु लम्बनं वा प्राग्वत् स्फुटं सकृदतो नतिरन्यलग्नात् KaraṇaKu. 5. 5 (23)

**अन्यलग्न** (anya-lagna) *adj.* connected with, i.e. existing in another thing परनिष्ठत्वानुपपत्तेः अन्यलग्नतायोगात् Bhāsk.i.198. 20 (*on* i. 5. 2)

**अन्यलब्ध** (anya-labdha) *n.* another quotient पूर्वफलेन निहत्याद्युपरि ततोऽन्त्यं ततोऽन्यलब्धेन ĀryaSi.15. 46 (157)

**अन्यलभ्य** (anya-labhya) *adj.* **1A** which is to be obtained or known by other (means) अन्यलभ्यं विशेषांशं यं कंचिदभिकाङ्क्षति ŚlokaVār. 7. 251 (915. 4); व्रीहीशास्त्रम् ... व्रीहिणां प्राप्तिं कुर्वत् तन्निर्वापायान्यलभ्यपुरोडाशप्रकृतिद्रव्यनियमावतरणेऽपि यागाङ्गत्वापरित्यागात् व्रीहीणाम् ... उपादानं प्रापयति VidhiRa.10 (65.24); 26 (137.17); अनेन विधिनाग्निहोत्रस्यान्यलभ्यस्वर्गार्थत्वप्राप्तिर्नान्तरीयकतया विश्वजदधिकरणपूर्वपक्षन्यायप्रसक्तस्य फलान्तरस्य परिसंख्या VidhiRa.10 (67.16); तत्रान्यलभ्यानन्यलभ्यपरिसंख्याफलसंकर उदाहर्तव्यः VidhiRa.10 (68. 7); एवमन्यलभ्ययोरन्योरुदाहृतशास्त्रद्वयाधीनसिद्धिकत्वेऽपि न तयोरिदं शास्त्रद्वयं प्रमाणम् ŚivārkaMaDī.i.168. 6 (*on* i.1. 4); **1B** (used as noun) (that) which is to be obtained or known by other (means of knowledge than word) अन्यलभ्यस्य च शब्दार्थताया अस्वीकृतेः RasGaṅ.17.15; **1C** which is to be obtained from other (source), cf. अन्यलभ्यत्व **B**; **2** which is to be obtained from the place which is other (than what is prescribed) एवम् ... अन्यलभ्यस्योदकस्य परिहरणं च दृष्टम् ŚivārkaMaDī. ii. 401. 31 (*on* iii. 4.28)

**अन्यलभ्यता** (anyalabhya-tā) *f.* [Inst.] by way of being what is to be obtained or known by another (means of knowledge) तथा सत्यन्यलभ्यतया शब्दगोचरभावानुपपत्तेः NyāyMa.183.13; गोत्वस्यैव शक्यत्वे जातिशक्त्यैव व्यक्तिलाभसंभवेनान्यलभ्यतया गवादिपदवद् व्यक्तिशक्त्युच्छेदप्रसङ्गः ŚaktiVā.78.15; वैश्वदेविकधर्मप्राप्तेर्वचनम् विना संभवात् अन्यलभ्यतया तद्विषयत्वे वचनमनर्थकं स्यात् MayūMāli. 530. 2(*on* vii.1.5)

**अन्यलभ्यत्व** (anyalabhya-tva) *n.* **A** the state of being obtained or known by other (means of knowledge) लक्ष्यमाणा अन्विताबस्था नात्मनि पदसामर्थ्यं प्रमाणयति अन्यलभ्यत्वात् TattvBi.133.4; न तु विशिष्टज्ञाने शक्तिरन्यलभ्यत्वात् इति वाच्यम् TattvCin. iv(2). 472. 4; न तु कार्यत्वांशेऽपि गौरवादन्यलभ्यत्वाच्च TattvCin.iv(2). 494.7; छिद्रेतरत्वस्यानन्यलभ्यत्वे शब्दतात्पर्यविषयत्वेऽपि न व्यावृत्तेस्तथात्वम्, हानोपादानादिवत् फलत्वेनान्यलभ्यत्वात् AdvaiSi.680. 26; स्वर्गसंबन्धस्याङ्गसंबन्धस्य चान्यलभ्यत्वेऽपि केचन ... स्वर्गकामवाक्ययोः ... अङ्गसंबन्धबोधनार्थत्वमित्याहुः VidhiRa.7 (36. 19); यद्यपि व्रीहिशास्त्रे व्रीहिनियमार्थं न स्यात् तस्यान्यलभ्यत्वात् ... यवेषु प्रोक्षणादिप्राप्त्यर्थम् ... स्यात् VidhiRa. 10 (63. 3); न तु तत्र शक्तिलक्षणान्यतरवृत्तिरूपपदव्यापारकल्पना अन्यलभ्यत्वात् MīmāKau.i.121.26 (*on* i.3.24); दध्यादिवाक्येषु त्वन्यलभ्यत्वादाश्रयत्वस्यागत्या गौरवाङ्गीकरणम् MīmāKau. iii (2). 283.17 (*on* ii. 2. 26); बाध्यतावच्छेदकं चोभयसाधारणं व्यापरत्वम् । न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि तस्यान्यलभ्यत्वात् BhāṭṭDī.i.22.4 (*on* i. 2.1); एतदधिकरणन्यायस्यान्यलभ्यत्वस्य अभावात् BhāṭṭDī. ii. 346.16 (*on* vii.1. 5); iii. 291. 2 (*on* x. 4.13); चैत्रः पचतीत्यादौ तिङादिना कत्रादिरुक्तत्वेनान्यलभ्यत्वाच्च LaCandr. 834. 19; एतदनुरोधेनान्यलभ्यत्वेऽपि ... व्यक्तौ शक्तिस्वीकारात् ŚaktiVā.78.18; अपदार्थत्वेऽपि ... सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमासादयति । विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेः VyutpaVā. 150.21; कृतिसाध्यताज्ञानस्य ... अन्यलभ्यत्वात्र तत्र लिङः शक्तिः BhāṭṭCin. i. 88. 19 (*on* i. 1. 4); न विभक्तीति । अन्यलभ्यत्वादिति भावः MayūMāli. 153. 33 (*on* ii. 2. 11); तस्यान्यलभ्यत्वेनाशब्दार्थत्वात् VaiyāBhū. 78.3 (*on* 22) तच्च लौकिकप्रमाणेनापि संभवतीति न विधेस्तत्र शक्तिरन्यलभ्यत्वात् VaiyāBhū. 78. 15 (*on* 22); अन्यलभ्यत्वान्नात्र विधेः शक्तिः न वा विधिनिषेधयोः साङ्कर्यम् VaiyāBhū. 96.4 (*on* 22); अन्यलभ्यत्वेन नात्र तद् अनोर्थैत्यम् LaŚabdeŚe. i.540.16; तं विनापि प्रतीयमानतयान्यलभ्यत्वात् LaŚabdeŚe.ii.380.1. प्रतियोगितांशस्य संसर्गतया भानसंभवे न तत्र नञादेः शक्तिः अन्यलभ्यत्वात् AlaṅkāKau. (Vi.) 51.3; **B** the state of being what is to be obtained by other (means) मोक्षादेरन्यलभ्यत्वस्य शङ्कितत्वात् NyāySu.(Ja.)18A.12 (*on* i.1.1)

**अन्यलभ्यत्वतर्क** (anyalabhyatva-tarka) *m.* reason or argument of the state of being what is to be obtained from other (source) साक्षादुपपादककार्यान्विताज्ञाने शक्तिः कल्प्यते ... अन्यलभ्यत्वतर्कस्याप्यभावात् TattvCin. iv (2). 473. 2; इष्टत्वात् अन्ययासिद्धिमपश्यतो हि बालस्य स भृत इति तस्याबलवत्त्वात् गौरवान्यलभ्यत्वतर्कसहकृतप्रमाणजन्यत्वेनोत्तरस्य बलवत्त्वात् TattvCin. iv (2). 495.3.

**अन्यलभ्यत्वप्रतिसंधान** (anyalabhyatva-pratisandhāna) *n.* recollection of the state of being what is to be obtained or known by other (means of knowledge) अन्यलभ्यत्वप्रतिसंधानादनन्यलभ्यस्यैव शब्दार्थत्वात् TattvCin. iv(2). 534. 3; iv (2).534.7; अन्यलभ्यत्वप्रतिसंधानात्र गवादिपदानाम् ... कल्पना प्रसक्तिः ŚivārkaMaDī.i.170. 18 (*on* i.1.4); पश्चादन्यलभ्यत्वप्रतिसंधानेन कार्यांशपरित्यागात् सिद्धार्थेऽपि शब्दानां व्युत्पत्तिसिद्धिः ŚivārkaMaDī. i.175. 24 (*on* i.1.4)

**अन्यलभ्यत्वाविशेष** (anyalabhyatvāviśeṣa) *m.* non-distinction of the state of being what is to be obtained or known by other (means of knowledge) वचनेन निर्णयाभावे अन्यलभ्यत्वाविशेषात् अयमपि पक्षम एव चिन्त्यः स्यादित्यर्थः MayūMāli. 291.34 (*on* iii. 5.12)

**अन्यलभ्यनियम** (anyalabhya-niyama) *m.* rule obtained or known by other (means of knowledge) व्रीहिशास्त्रं व्रीहिनियमार्थं न स्यात् तस्यान्यलभ्यत्वात्तथाप्यन्यलभ्यनियमद्वारा यवेषु प्रोक्षणादिप्राप्त्यर्थम् ... स्यात् VidhiRa.10 (63. 4); 10(64.20)

**अन्यलभ्यपरिसंख्या** (anyalabhya-parisaṅkhyā) *f.* exclusive specifications to be obtained or known by other (means of knoweledge) एकादशपञ्चोरवदानानि तानि द्विर्विरवद्यतीत्यत्रान्यलभ्यपरिसंख्यामूलो नियमः VidhiRa.10 (66.12); 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यत्रान्यलभ्यपरिसंख्यापूर्विका परिसंख्या VidhiRa. 10 (67.3); 10 (67.22)

**अन्यलभ्यप्रथन** (anyalabhya-prathana) *n.* act of spreading which is to be obtained or known by other (means of knowledge) 'उरु प्रथस्वेति पुरोडाशं प्रथयती'त्यत्रान्यलभ्यप्रथनप्राप्तिमूलस्तस्याध्वर्युकर्तृकत्वनियमः VidhiRa. 10 (55. 25); 27 (142. 15)

**अन्यलभ्यप्राप्ति** (anyalabhya-prāpti) *f.* knowledge to be obtained by other (means of knowledge) वाग्वा एषा ... इत्यत्रान्यलभ्यप्राप्तिपूर्विका परिसंख्या VidhiRa.10 (56.6); न चैवं सत्यन्यलभ्यप्राप्तिनियमपरिसंख्याद्वारा तत्तदर्थप्राप्तिनियमपरिसंख्यानां लाभं प्रागदर्शितान्युदाहरणानि प्रत्युद्धृतानि स्युः VidhiRa.30 (172.13)

**अन्यलभ्यफल** (anyalabhya-phala) *n.* fruit or result to be obtained from other (source) इत्यमनुनिष्पादिफलसंकरो दर्शितः। अन्यलभ्यफलसंकरो यथा VidhiRa.10(55. 20); 10 (68. 8)

**अन्यलभ्यश्रपण** (anyalabhya-śrapaṇa) *n.* act of baking which is to be obtained or known by other (means of knowledge) तस्मादन्यलभ्यश्रपणविधानेन ... व्रीहिनियमव्यावर्त्तनार्थोऽयं विधिः VidhiRa.10 (60.11)

**अन्यलभ्यसंकर** (anyalabhya-saṅkara) *m.* co-mingling to be obtained or known by other (means of knowledge) अनुनिष्पादिसंकर एवैतदुदाहरणं युक्तं न त्वन्यलभ्यसंकरे VidhiRa.10 (57. 22)

**अन्यलभ्यस्वर्ग** (anyalabhya-svarga) *m.* heaven which is to be obtained or known by other (mens of knowledge) अतोऽग्निहोत्रस्यान्यलभ्यस्वर्गसंबन्धबोधनद्वारा तत्संनिधिसमाम्नातानामनिर्दिष्टफलानां कर्मणां फलवदफलन्यायेन तदङ्गत्वप्राप्त्यर्थम् VidhiRa. 10 (67. 11)

**अन्यलम्ब** (anya-lamba) *m.* another complement of latitude or co-latitude भुजैक्यकोणात्क्षितिगं भुजैक्यं स्वात्यल्पकर्णो न सदान्यलम्बः SiddhāTaVi. 79.15.

**अन्यलम्बनभेदतस्** (anyalambanabheda-tas) *adv.* due to the difference of parallax at the second place आद्यलम्बनभेदेन दृग्योगे लम्बनं यथा। तद् प्रनाप्राशितं तेन चान्यलम्बनभेदतः SiddhāTaVi.301.8.

**अन्यलय** (anya-laya) *m.* other dissolution or absorption श्रेष्ठश्चित्तलयोऽयं सत्स्वन्यलयेष्वनेकेषु PraboSu.149.

**अन्यललनारत** (anyalalanā-rata) *adj.* attached to the woman who is other (than one's own wife) पूर्वभार्यां परित्यज्य ... त्वमन्यललनारतः। दुःखकारणमेतन्मे BṛKathāMañ. xiii.1.101.

**अन्यलवन्य** (anya-lavanya) *m.* rest of the Lavanyas (particular tribe's men) भोजः ... । अनास्थोऽन्यलवन्येषु दिन्नाग्रामं पुनर्ययौ RājTa.(Ka.)8.2951.

**अन्यलाभापेक्षा** (anyalābhāpekṣā) *f.* desire for another attainment or gain रत्नादल्लाभे ... । ननु तल्लाभे किमन्यलाभापेक्षा न भवेदित्याशङ्क्याह Bhāsk.i.33. 20 (*on* i.1.1); i.34.9 (*on* i.1.1)

**अन्यलिखित** (anya-likhita) *n.* writing of another person वाचयति नान्यलिखितम् ŚārṅgaPa. 4042; Subhāṣi. 2344.

**अन्यलिङ्ग** (anya-liṅga) *adj.* 1A having other characteristic कृष्णमृत्तिकालिङ्गेऽप्यन्यं न कुर्वन्ति तथान्यलिङ्गेऽपि कुर्वन्ति। तस्मान्न देशतो व्यवस्था ŚābaBh.252.3 (*on* i. 3. 23); 1B following the gender of another (i.e. substantive) ऊधवानूपरो द्वावप्यन्यलिङ्गौ स्थलं स्थली AmaK. 566; 2602; (used as noun) (substance or base) of any other gender स्त्रीप्रत्ययोऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गान्निवर्तेत TantrVā. 306.23 (*on* i.4.11); 1C having different indicatory mark, cf. अन्यलिङ्गत्व; 2 (used as noun) (devotee) belonging to the other (sect than that of Śiva) कापालिकान्नभोजने ... जातीश्वरमण्डलेऽन्यलिङ्गेश्वरमभिपूज्य ... शुध्यति ĪśānŚiPa. ii.20.35 (17)

**अन्यलिङ्ग** (anya-liṅga) *n.* 1 different probans तत्र चानवस्था लिङ्गग्राहिणोऽपि अनुमानस्य तदन्यलिङ्गबलेनोत्पत्तेः HetuBiṬ. 23.16; 2 another phallus (especially of Śiva) तपसा प्रीणयित्वा ... वृषभवाहनम्। प्राप्तलिङ्गः ... (अहम्) समुपागतः। अन्यलिङ्गं त्वमधुना प्रतिष्ठाप्यतु सैकतम्। ... पूजयसे विभो SkandP. iii (1). 45.12; 3A gender of another क्रियाविशेषणम् ...। आभ्यन्तरं तु विशेषापरिग्रहादविष्टलिङ्गसंख्यं कथमिवान्यलिङ्गं गृह्णीयात् SaraKaṇṭhā. 514. 19; 3B other gender, cf. अन्यलिङ्गसंख्या; 4A other characteristic mark अन्यलिङ्गानि तदनुगुणतया नेतव्यानि VedāntDī. 73. 21 (*on* i. 4.17); महावाक्ये दृष्टानां अन्यलिङ्गानाम् ... पूर्वाधिकरणेऽपि स्थापितत्वात् ŚivārkaMaDī. i. 546. 34 (*on* i. 4.19); 4B other indicatory mark or factor तत्रान्यलिङ्गं च यदि भवेत्तदपि तदन्तरात्मनि ... योज्यम् VedāntKau. 47.4 (*on* i.1.32); अन्यलिङ्गानां तदन्तर्यामिविवक्षयोपपत्तेः विष्णुरेवायं प्राणः TattvPrakā. 28B. 5 (*on* i.1.31); आश्रयमेदं विनेतिविवक्षायामपि ... पृतिकान्यलिङ्गमन्त्रउत्करपरिध्यादिनियमाव्याप्तिश्च VidhiRa.24(128.11); अतः प्रमाणभूतलिङ्गलक्षणेनान्यलिङ्गानामसंग्रहो न दोषाय ŚivārkaMaDī. i. 81. 5 (*on* i.1. 1); 5 apparel as the distinguishing mark of wandering ascetic which is other (than that of Jains), JainaL.

**अन्यलिङ्गक** (anyaliṅga-ka) *adj.* following the gender of another word or the substantive, i.e. an adjective तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः AmaK. 183; शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम् MediK. 130.109.

**अन्यलिङ्गता** (anyaliṅga-tā) *f.* the state of having different gender नपुंसकलिङ्गतायां फलजातावेव भवितव्यम्। न अन्यलिङ्गतायाम् Nyās. ii. 290. 24 (*on* vi.1.143)

**अन्यलिङ्गत्व** (anyaliṅga-tva) *n.* the state of being different probans नापि कस्यचित्सह संबन्धग्रहणेनान्यलिङ्गत्वम् TātpaṬ. (U.) 418.17 (*on* 5 (8). 34)

**अन्यलिङ्गनिदर्शन** (anyaliṅga-nidarśana) *n.* exhibition of other characteristic mark साधारणदन्यतरत्वादन्यलिङ्गनिदर्शनेन हि गुणाभिधाने साधारणानां विपर्यये दोषादौ ... वैरूप्यादयो दौर्बल्यादयश्च JayaMa. 310.18 (*on.* 6.1)

**अन्यलिङ्गसंख्या** (anya-liṅgasaṅkhyā) *f.* other gender and number लिङ्गान्तरसंख्यान्तरयोगे अन्यलिङ्गसंख्यापरित्यागात् Pradī.ii. 450A.15 (*on* ii. 2.24)

**अन्यलिङ्गसिद्ध** (anyaliṅga-siddha) *m.* soul who has attained perfection still being in the apparel as the distinguishing mark of wandering ascetic which is other (than that of Jains) एतेषामेव ... स्वलिङ्गसिद्धानां रजोहरणाद्यपेक्षया अन्यलिङ्गसिद्धानां एका वर्ग्गणा SthānṬ. 34A. 3.

**अन्यलिङ्गसिद्धकेवलज्ञान** (anyliṅgasiddha-kevalajñāna) *n.* highest possible knowledge obtained by the soul who has attained perfection still being in the apparel as the distinguishing mark of wandering ascetic which is other (than that of Jains), JainL.

**अन्यलिङ्गानाश्रयण** (anyaliṅgānāśrayaṇa) *n.* non-resorting to or non-admission of another indicatory factor सिद्धान्तेऽपि चान्यलिङ्गानाश्रयणात्तद्वैवं लिङ्गेनेत्येतदस्त्येव TantrVā. 796. 3 (*on* iii. 2. 22)

**अन्यलिङ्गिन्** (anya-liṅgin) *m.* A devotee belonging to the cult which is other (than heretic) तच्छेपाशीर्वचः ... अन्यलिङ्गिनाम्। पार्थिवैः परिहर्तव्यम् MahāP. 42. 23; विलोक्य रौद्रव्रतिनोऽन्यलिङ्गिनः प्रकुर्वतः कन्दफलाशनादिकम्। इमेऽपि कर्मक्षयकारकव्रता विचिन्वतेऽतिप्रतिहन्यते रुचिः SubhāRaSaṁ. 177; B devotee belonging to the sect which is other (than that of Śiva) अन्यलिङ्गी तु तत् त्यक्त्वा पुनः शैवे तु दीक्षितः ĪśānŚiPa. ii.11.10 (23); अदीक्षितैश्च विप्राद्यैः सृष्टेवाप्यन्यलिङ्गिभिः। ... अभिषिच्य ĪśānŚiPa.ii.63.76.

**अन्यलिङ्गिप्रशंसा** (anyaliṅgi-praśaṁsā) *f.* praise of devotee belonging to the cult which is other (than heretic) अन्यलिङ्गिप्रशंसेयं सम्यक्त्वक्षयकारिणी BṛKathāK. 7. 101.

**अन्यलिङ्गिसंसृष्ट** (anyaliṅgi-saṁsṛṣṭa) *adj.* connected with the devotee belonging to the sect which is other (than that of Śiva) अन्यलिङ्गिसंसृष्टान्नभोजने त्रिलक्षजपं चान्द्रायणं कुर्यात् ĪśānŚiPa.ii.20. 35 (18)

**अन्यलिप्त** (anya-lipta) *adj.* connected with other किं त्वन्यलिप्ताप्रमितेस्तु बिम्बं कृत्वाथ तद्यत्ययतः स्वबुद्ध्या। बिम्बस्य लिप्ता युगभागजीवेत्यनेन मानैक्यदलं कृतं तैः SiddhāTaVi. 212. 20.

**अन्यलीला** (anya-līlā) *f.* another (divine) sport शिवायाः ... अन्यलीलां प्रवक्ष्येऽहम् ŚivaP. ii(3).7. 25 (131A.10)

**अन्यलुप्त** (anya-lupta) *adj.* stolen by another person मत्वान्यलुप्तं स्वर्णं ते जग्मुश्चौरा यथागतम् KathāSaSāg. xii. 5. 267.

**अन्यलेख्यधारक** (anyalekhya-dhāraka) *adj.* holding another's document तेनान्यलेख्यधारकेणैतल्लेख्यागमनकारणमुद्भावनीयमित्याह व्यासः SmṛtiCan. iii.150. 8.

**अन्यलेप** (anya-lepa) *m.* other unguent शिवाय ...। सुगन्धं चन्दनं दद्यादन्यलेपानि(?न्) यत्नतः ŚivaP.ii(1).13. 58 (55A.14)

**अन्यलोक** (anya-loka) *m.* 1Ai next world यदाहवनीय उपर्वपेदन्यलोकेऽस्य पर्शून् दध्यात् MaiS. iii. 7. 7 (iii. 84. 5); वर्तमानलोकादन्यलोकेऽपि यो देहः स जन्मान्तरे स्यात् JayaMa. 320. 21 (*on* 6. 2); उर्व्यां पुनर्यत् खलु रत्नमग्र्यं तदन्यलोकेष्वपि निःसपत्नम् Rāgh.13. 24; 1Aii other worlds अपरवशो जायते जीवलोकः शोकेनेवान्यलोकानुदयकृति गते SūryaŚ. 85; त्रातुं यातेऽन्यलोकान् दिशतु ... हितं वः SūryaŚ. 95; त्वल्लोकादन्यलोकः क्व नु भयरहितः ... पद्मनाभ Nārāy. xi.94.4; 1B another region or province ततस्त्वं चालितो राज्यादन्यलोके वसिष्यसि VarāP.10. 24; 2 other people or person स्वकृत इह विसृष्टापत्यपत्न्यन्यलोकाः UjjvaNīMa.492.1; पूर्वोद्धृतां व्यवस्थां नरपतितिलकः स्थापयित्वा स्वराज्यं शास्ति

प्राज्ञैरमात्यैः कथितबहुगुणामन्यलोकैश्च शुद्धैः VīraBhā. 5.164

**अन्यलोक** (anya-loka) *adj.* leading to other world गोलोकबीजं गोलोकं नान्यलोकं कदाचन KālīViT. 28.15.

**अन्यलोकज्ञातार्थ** (anyalokajñātārtha) *m.* thing or object known by the people who are other (than disciples) सर्वशिष्यैरपि ज्ञातानर्थानसंवादयन्नपि। न सर्वज्ञो भवेदन्यलोकज्ञातार्थवर्जनात् TattvSaṁ. 3194.

**अन्यलोकतस्** (anyaloka-tas) *adv.* from other people तस्य प्रिया भार्या पुंश्चली (v.l. तां चान्यपुरुषासक्तां तक्षा बुध्वान्यलोकतः) एवम् ... प्रतिबोधितः PañcT. 3.69 (4) (333.4); KathāSaSāg. x. 6.105; दारस्तनयतोऽन्यलोकतो निर्धनः पुरुष एत्य गर्हणाम् VidvanMo. 7. 29.

**अन्यलोकबाला** (anyaloka-bālā) *f.* young girl belonging to other person येनान्यलोकबालानां नितान्तं मूढचेतसाम्। श्रमणोऽयं गताचारो न करोति प्रतारणम् BṛKathāK. 126. 153.

**अन्यलोकवत्** (anyaloka-vat) *adv.* like other people मदस्थानानि तस्यासन् न मदावान्यलोकवत् TriṣaŚaPuC.iii.1.10.

**अन्यलोकव्यवधान** (anyloka-vyavadhāna) *n.* intervention by other world तल्लोकस्थितानां नान्यलोकव्यवधानं परप्राप्तौ AṇuBh.338.21 (*on* iv.3.10)

**अन्यलोकशास्त्र** (anya-lokaśāstra) *n.* other popular science अत एवाभिमुख्यनयनहेतुत्वादन्यलोकशास्त्रप्रसिद्धेनाभिनयशब्देन व्यपदेश्या: AbhinBhā. i. 44. 17 (*on* 1.119)

**अन्यलोकस्थिति** (anyaloka-sthiti) *f.* the state or condition of other people सख्यस्तत्सुरतं भणामि सततं शेषान्यलोकस्थितिः VetāPañ. (Śi.)14. 23.

**अन्यलोक्य** (anyalok-ya) *adj.* belonging to, i.e. designed for another world तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः ViṣṇuP. iii.7. 34.

**अन्यलोडादेश** (anya-loḍādeśa) *m.* other substitute of imperative affix तेन यथा अन्यलोडादेशस्य स्वशब्दस्य सेग्रहणेन ग्रहणादिड् भवति Pradī. vi. 150.12 (*on* vii.2.78)

**अन्यलोप** (anya-lopa) *m.* act of leaving of the subsequent items तस्मादाद्योपादानमन्यलोपः ŚāstrDī.717.14 (*on* x. 5.1)

**अन्यलोभ्यमान** (anyal-lobhyamāna) *adj.* being tempted by something else कामात् क्रोधाद् भयादन्यल्ला(?लो)भ्यमानो न मुह्यति Mānaso.ii. 9.721.

**अन्यलोह** (anya-loha) *m., n.* other metalic alloy (containing five metals, i.e. copper, tin, lead, iron and brass), black brass न चान्यलोहेष्वपि तस्य कौण्ट्यम् BṛSaṁ. 50. 26; लोहेन वा साधितमन्यलोहम् RasRaSa. 8.15; 8.23; क्षारे कदल्या मथितेन युक्तं दिनोपिते पायितमायसं च यत्। सम्यक् स्थितं चाश्मनि नैति भङ्गं न चान्यलोहे क्षपितस्य कौण्ट्यम् YogYā.12. 26. [पञ्चलोहं गुरुज्येष्ठं निष्ठुरं दारुकण्टकम्। अन्यलोहं सिंह(v.l.॰धु)मलं मलिकासरटी स्त्रियाम् ŚabdaRa. (Vā.) 837]

**अन्यलोहक** (anyaloha-ka) *n., m* other metalic alloy (consisting of copper, tin, lead, iron and brass), black brass मीलिकायां तु सरटी निष्ठुरं दारुकण्टकम्। गुरुज्येष्ठं सिंहमलं पञ्चलोहान्यलोहके Vaija. 43. 28.

**अन्यवंश** (anya-vaṁśa) *m.* **Ai** family which is other (than the royal), ordinary family पश्चादिभिरन्यवंशजाता हीनैर्वित्तयुता न भूमिपालाः Bṛhajjā. 11.13; **Aii** family which is other (than that of father or mother) (रजस्वला च या नारी व्यङ्गिता कर्णयोस्तथा। निवपि नोपतिष्ठेत संग्राह्या नान्यवंशजा) अन्यवंशजा मातृपितृवंशव्यतिरिक्तवंशसंबन्धा VīraMi. (Śrāddha.)183.10; **B** race or dynasty which is other (than that of the Kurus) भिदैलिमा हि प्रकृतिः कुरुवंशान्यवंशयोः। भवेत्स्वभावो न ह्येकः कलहंसबकोटयोः PāṇḍaC.1.191.

**अन्यवंशभव** (anyavaṁśa-bhava) *adj.* born in another race or dynasty अन्यवंशभवा भूपाः पश्चाद्यैरपि च द्विजः। त्रिकोणोद्यगतैरेव विशेषेण द्विजोत्तम ViṣṇuDhaP.ii.167 (295A. 3)

**अन्यवंशोद्भव** (anyavaṁśodbhava) *adj.* born in another race or dynasty अस्मद्वंशजभूपतिर्यदि पुनर्भूवपो(?)न्यवंशोद्भवो मद्दत्तां परिपालयेदिह महीं तस्मै धृतोस्म्यञ्जलिम् EI. xviii. 299. 40.

**अन्यवक्त्र** (anya-vaktra) *n.* face of the man who is other than the husband (पतिव्रता) नान्यवक्त्रं निरीक्षेत नान्यैः संभाषणं चरेत् MahNirvāT. 8.105.

**अन्यवक्त्रा** (anya-vaktrā) *adj.* (*f.*) facing another side स चेतुना रागजतुप्रसक्तस्तीव्रावमानैरपि न प्रयाति। तदा तमुत्क्षिप्तभुजान्यवक्त्रा दासी वदेद्धित्तवियोगदीनम् SamaMā. 5. 83.

**अन्यवक्त्रावलोकिनी** (anyavaktrāvalokinī) *adj.* (*f.*) A looking at the face of any other स जातः प्रथिता यस्य पुण्याः संतोषसंपदः नान्यवक्त्रावलोकिन्यस्तरुण्यो वा विभूतयः RāmāMañ. 216. 6; **B** (*fig.*) dependent on others, RāmāMañ. 216.6.

**अन्यवचन** (anya-vacana) *n.* **1A** mention of other अन्यवचनात् चकाराकरणात् प्रकृतापवादो विज्ञायते MahāBh. i. 44. 9 (*on* i.1.3); i. 457. 11(*on* ii. 3. 32); ii. 372. 15 (*on* v. 2.4); **1B** statement of any other thing यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति निग्रहस्थानप्राप्तत्वापरिज्ञानात्। नान्यवचनादित्यन्ये NyāyVār.567.15 (*on* v.2.22); **1Ci** denotation or expression of some other sense तस्मादनेकार्थत्वाद्धातूनामन्यवचनमात्र एवाख्यातेनानुव्याख्येयः ManuBh.251. 23 (*on* 9. 37); **1Cii** denotation of some other thing or object विवक्षितघटादेरन्यः पटादिस्तस्य वचनं तदन्यवचनम् घटापेक्षया पटवचनवत् SthānṬ. 141A.8; **2** word of another person मूर्खजनसंनिकर्षे हितमपि प्रभाषते यत्र विद्वान्। न च गृह्यतेऽन्यवचनम् Rāmābhyu. 270.17.

**अन्यवचन** (anya-vacana) *adj.* **A** expressive of another गौणो हि गुणादेव अन्यवचनः शब्दोऽन्यत्र कल्पते यथाग्निर्माणवक इति Kāśi. i. 28. 27 (*on* 1.58); नापि चान्तरशब्दोऽन्यवचनः तथासति कस्मादन्यदिति विशेषानिर्देशे करणादिति समभिव्याहाराल्लभ्येत KhaṇḍanKhā. 454.10; **B** expressive of the sense ‹other› इन्द्रियेभ्यः परा इत्यादिमन्त्रे परशब्दस्तावन्नान्यवचनः ... परशब्दः प्रकर्षपरः ŚrautaPra.ii.99. 16 (*on* i. 4.1)

**अन्यवचनार्थम्** (anyavacanārtham) *adv.* for the sake of expressing different, i.e. for misleading अन्यवचनार्थमन्योऽन्यसंप्रतिपत्तिर्हस्तचातुर्याद्यथाभिमतपातनादि वोपधिः Aparā.804.23 (*on* 2.202)

**अन्यवचोलेश** (anya-vacoleśa) *m.* part or bit of expressions of other (poets) केचिदन्यवचोलेशानादाय कविमानिनः। छायामारोपयन्त्यन्यां वस्त्रेष्विव वणिग्व्रवाः MahāP.1.66.

**अन्यवञ्चक** (anya-vañcaka) *adj.* deceiver of other जालपादोऽपि विधिना मुक्त्वा तद्गर्भमात्मना। विद्याधरपदं प्राप देव एवान्यवञ्चकः BṛKathāMañ. v. 1. 243.

**अन्यवञ्चन** (anya-vañcana) *n.* act of deceiving other तीर्थवासी महापापी भवेत्तत्रान्यवञ्चनात्। तत्रैवाचरितं पापमानन्त्याय प्रकल्पते DevīBhāP. iv. 8. 35.

**अन्यवणिगपेक्षा** (anyavaṇig-apekṣā) *f.* [Inst.] in comparision with other merchant प्रकरणे हि तादृश एव नायकः केवलमन्यवणिगपेक्षया स उत्तमोऽस्तु AbhinBhā.ii.432.15 (*on* 18.50)

**अन्यवत्** (anya-vat) *adv.* **1A** as different (from the previous one) पूर्वस्मादन्यवद्भाति भावाद्धाशरथिं स्तुवन् । क्रते क्रौर्यात्समायातो मां विश्वासयितुं नु किम् Bhaṭṭi.8.105; **1B** as different (linguistic element) अनन्यवदित्यस्य अन्यवत्प्रत्ययः LaŚabdeŚe.i.76.1; **2Ai** like ordinary person अन्यवत्किमिदं राजन्मां स्तौसि(?षि) नरपुङ्गव VṛGautaSm. 622. 21 (18); **2Aii** like other person न वै जनो जातु कथंचनाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् BhāgP. i. 5.19; पुरुषाः ... न जायन्ते स्वतन्त्रत्वात्र नश्यन्ति लयेऽन्यवत् SkandP.ii(9). 4. 28; चीननरेश्वरः। सोऽप्यन्यवद्‌द्रुतमुखेनार्थयामास पार्थिवः KathāSaSāg. viii.1.173; असुरेश्वरः।... स्वरसात्तलम्। तत्र सूर्यप्रभाय स्वां नाम्ना स कुमुदावतीम्। प्रादादन्यवदातिथ्यहेतोर्विविधवदात्मजाम् KathāSaSāg. viii. 2. 326; व्याहरन्ति स्म ते स्मेरभुजाहंकारकोरकाः। त्वमेवं युध्यसे पार्थ किमु सामूहिकोऽन्यवत् PāṇḍaC. 13.303; **2Aiii** like other thing, i.e. diviating यदि सत्त्वादनेकान्तं विमतस्यान्यवन्मतम्। तस्यैकान्ते त्वनैकान्त्यमनैकान्त्ये न नः क्षतिः NyāySiA. 229.13; **2B** as (identical with) other अहमन्यवदाभामि ह्यहमेव शरीरवत् TejoBiU. 3. 17; **3A** like the former, i.e. predecessor दण्डाधिपोऽपि तत्रैव तावत्कञ्जलमर्दनैः। अन्यवद् विप्रलब्धोऽभूच्चेलखण्डैककर्पटः KathāSaSāg. i. 4. 61; सा यौवनोन्मत्ता तृतीयं पतिमाददे। सोऽपि तस्या विपन्नोऽभूत्पतिरन्यः पतिरन्यवत् KathāSaSāg.x.10.85; **3B** like the previous case सहजस्तु निसर्गे ना सहोक्ते पुनरन्यवत् MediK.33.28; 6.64; अनिरुद्ध उषानाथे पुंसि चाबन्धनेऽन्यवत् MediK. 86. 42; 130.118.

**अन्यवत्स** (anya-vatsa) *m.* calf of another (cow) प्रोषितश्चेत् प्रेयात् ... अन्यां दुग्ध्वा दक्षिणतोऽग्निरुपगोद्वासने। ... अन्यामिति अन्यवत्सेन प्रस्नावितामित्यर्थः। अथवा अन्यधेनुमेव अन्यवत्सेन तद्धेनुदोहाशक्तौ व्यवस्थितविकल्पः HārLa.139.5.

**अन्यवत्सा** (anya-vatsā) *adj.* (*f.*) (used as noun) (cow to be milked) with the calf of another (cow) अनिर्दशाहसंधिनीक्षीरमपेयम्। विवत्सान्यवत्सयोश्च BaudhDS.i.5.136; अन्यवत्सा अन्यस्या वत्सेन या दुह्यते VīraMi. (Āhnika.) 525. 23; BālamBha.i. 434. 8 (*on* 1.170) [अभिवन्यान्यवत्सा गौः NāmaMāli. 299.]

**अन्यवदन** (anya-vadana) *adj.* who has turned his face to the other side सविड्विषु निकृष्टमङ्घ्रयुगलं स्त्रीणां तदुक्तं तयोराद्यं विड्विरं प्रसिद्धमितरत्प्रत्रावरन्ध्रं

पुनः। तन्मध्ये यदपत्यरन्ध्रमसकृद्विस्तस्रवच्छोणितं ये तस्मादधुनापि नान्यवदनात्तेभ्योऽपि निन्द्योऽस्तु कः HammīMaKā.8.47.

**अन्यवदान्य** (anya-vadānya) *m.* other liberal giver चित्रं तद्वनदानवृष्टिपयमस्तत्तस्य किं ब्रूमहे यस्मिन्नन्यवदान्यकीर्तिरतुला धत्ते तृणश्रेणिताम् CaturCin. i. 3. 17; iii(2).4.18.

**अन्यवध** (anya-vadha) *m.* act of slaying of that (beast) which is other (than the consecrated) अहो महामते न युज्यतेऽत्रान्यवधः प्रचोदितात् BhāgP. iv. 19. 27.

**अन्यवधू** (anya-vadhū) *f.* **Ai** bride of another person नृपं तम् ... सा व्यत्यगादन्यवधूर्भवित्री। महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव RaghuVa.6.52; अन्यवधूर्भवित्री सागरगामिनीत्यनयोर्बिम्बप्रतिबिम्बभावः CitraMī. 21. 5; **Aii** wife of another person दशास्यस्येव शापोऽस्ति तस्याप्यन्यवधूरते BṛKathāMañ. xiii. i.52; यशश्चन्द्रमहीपते। पाल्यः कुलध्वजेनेव नियमोऽन्यवधूजने MalliC.8.542; पाञ्चालीं प्रति काङ्क्षितेन निभृतं भीमान्मृतः कीचकः तस्मादन्यवधूर्नरैर्न मनसाप्यालपनीया भुवि PañcSā.4.17; **B** another woman or maid या न ययौ प्रियमन्यवधूभ्यः सारतरागमना यतमानम्। तेन सहेह बिभर्ति रहः स्त्री सा रतरागमनायतमानम् ŚiśuVa. 4. 45; अभ्यर्थनीयः स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम्। प्रियास्यदाक्षिण्यबलात्कृतो हि तदोदयेदन्यवधूनिषेधः NaiṣC. 3. 92.

**अन्यवधूकथा** (anyavadhū-kathā) *f.* talk regarding the wife of another person परिहासेऽप्यनौचित्यं स्वप्नेऽप्यन्यवधूकथाम्। ... काकतीन्द्रो न मृष्यति PratāYaBhū.16.6.

**अन्यवध्य** (anya-vadhya) *adj.* to be slain by any other (than Kārttikeya) तारकः ... अन्यवध्यो न चैवायम् ... शंकरात्मज ŚivaP. ii. (4).9.9 (203A.11)

**अन्यवन** (anya-vana) *n.* another forest स गत्वान्यवनं दिव्यं ददर्श रुचिरं सरः RāmāMañ. 498. 8; अहम् अन्यवन (v.l. °नम्) आगन्तुम् अशक्ता ... प्राणांस्तत्याज VetāPañ.(Jam.)120.14.

**अन्यवनिता** (anya-vanitā) *f.* **Ai** another woman, i. e. co-wife अन्यथान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या। पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ŚiśuVa. 10. 28; Subhāṣi. 2010; **Aii** another woman कस्याश्चिदन्यवनिताकर्णाभरणसक्तः। विच्छिन्नपतितो हारः कुसुमाञ्जलितां गतः PadmP.(Ra.)103.94; लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः AmaŚ. 72; KāvyPra. 278.3; SūktiMu. 67.7; कर्णोत्तंसितपद्मरागशकलप्रत्यर्पितश्शोणिमा फालेऽस्मिन् सुभगस्य नान्यवनितापादाम्बुजालक्तकः SūktiMu. 88. 8; मन्ये तयान्यवनितासहद्वोपगूढसाशङ्कया वसति तत्र कृताभ्युनुज्ञः BhikṣāKā. 7. 10; **Aiii** any other woman, cf. अन्यवनितादुर्लभ; **B** wife of another person यत् कृष्णमन्यवनिताकपटापहारवीरं विपाट्य वितरामि रणे शिवाभ्यः RukmiHa. 4.16.

**अन्यवनितागम** (anyavanitā-gama) *m.* sexual intercourse with the wife of another person वरमात्मा हुतो वह्नौ वरं गरलमाशितम्। न परं नरकप्राप्तिहेत्वन्यवनितागमः PālaGoKa. 158.

**अन्यवनिताजन** (anya-vanitājana) *m.* other ladies or women वैरूप्यमेव सखि तस्य चिराय काङ्क्षे येनायमन्यवनिताजनवर्जनीयः BhikṣāKā. 25. 2; 35.14.

**अन्यवनितादुर्लभ** (anyavanitā-durlabha) *adj.* unobtainable by any other woman अन्यवनितादुर्लभेन ... महादेवीशब्देन परं प्रीतः प्रसादमकरोत् Kād. 177. 4.

**अन्यवनिताव्यसन** (anyavanitā-vyasana) *n.* passion for the wife of other person तस्य ...। हिंसानृतान्यवनिताव्यसनम् ... बभूव दूरे EI. viii. 19. 55.

**अन्यवनितासक्त** (anyavanitāsakta) *adj.* attached to another woman, i.e. co-wife अथान्यवनितासक्तमवमत्यस्ववल्लभम्। ईर्ष्यावशेन वैमुख्यमेष मान उदाहृतः AlaṅkāŚe. 20.13; RasiJī. 6.905.

**अन्यवनितासङ्ग** (anyavanitāsaṅga) *m.* **A** attachment to or passion for another woman, i.e. co-wife मानोऽन्यवनितासङ्गादीर्ष्या विकृतिरुच्यते Vāgbhaṭā. 5. 19; **B** attachment to the wife of another person अन्यवनितासङ्गादशास्यो महान् एकैकव्यसनाद्धता इति नराः सर्वैर्न को नश्यति SimhāDvā.197.12.

**अन्यवनोपम** (anyavanopama) *adj.* resembling other forest or wood देशाल्लुब्धकतुल्येन पित्रा कोपात्प्रवासितः। अवन्तिदेशादुद्भूतां ख्यातिमन्यवनोपमात्। शाङ्खवत्याः ... श्रुत्वा प्रधावितः KathāSaSāg.xii. 3.123.

**अन्यवन्यफल** (anya-vanyaphala) *n.* other wild fruit अन्योऽन्यं कलहायन्ते न शाश्वतिकवैरिणः। दधते रससौन्दर्यमन्यवन्यफलान्यपि PāṇḍaC.8.129.

**अन्यवपुस्** (anya-vapus) *n.* body of another person न हि दोषकृत्तदपि शिष्टसरण्यवनार्थमन्यवपुरेत्य यते ŚaṅkaDigVi.(Mā.)9.100.

**अन्यवयस्क** (anyavayas-ka) *adj.* (used as noun) (one) of the age which is other (than that of prescribed age) द्वादशाब्दिकं प्रायश्चित्तमुपदिश्यते 'तदा प्राणा विपद्येरन्निति' ततोऽन्यवयस्के तत्प्रायश्चित्तं कल्प्यम् Mitā.501.11 (*on* 3.293)

**अन्यवर** (anya-vara) *m.* **1** other bridegroom अन्यवरसंकथासु विषण्णा भवति। तत्पक्षैकैश्च सह न संसृज्यते KāmSū. 215. 22(3.3) (JayaMa. तत्पक्षैरिति अन्यवरपक्षैः); **2** another boon न काङ्क्षेऽन्यवरं कंचित् GaṇeP.ii.80.15.

**अन्यवरकोटी** (anya-varakoṭī) *f.* other millions of boons सर्वे नमस्कृत्य महेश्वरम् । ... सर्वात्मना प्रपन्ना वै याचामहे वरोत्तमम्। किमन्यवरकोटीभिरेष नो दीयतां वरः SkandP.v(1).5.43.

**अन्यवरवैमुख्य** (anyavara-vaimukhya) *n.* aversion for other boon तस्यान्यवरवैमुख्यात्प्रवृद्धे जपिनः फले। भीताः शतक्रतुमुखास्तद्विघ्नं समचिन्तयन् BṛKathāMañ. vi. 1. 83.

**अन्यवर्ग** (anya-varga) *m.* **1** square of the second आद्यन्त(v.l. °द्यान्य)वर्गयोगान्मूलं पूर्वापरात् भुजात्कोटिः BrāhmSphuSi.7.9; **2** other class or type (of limbs) जराज्वरादतिपराभूतस्य जन्तोरियं तृष्णा निःशरणान्य(णांस्त)वर्गविभवानाश्रित्य संमाद्यति BhartṛNi.4.18.

**अन्यवर्जन** (anya-varjana) *n.* **A** exclusion of other thing अपोहकल्पनायां च वरं वस्त्वेव कल्पितम्। इत्येतद्व्याहतं प्रोक्तं नियमेनान्यवर्जनात् TattvSaṁ. 1179; **B** exclusion of other person गुरुवाक्ये च द्विजानामन्यवर्जनात् ... तदाक्षिप्तेन गुरुवाक्यैकवाक्यतां भजता निषेधेन विप्रोपनयने स्पष्ट एव षोडशर्क्षनियमः BālamBha.i.66.27 (*on* 1.14)

**अन्यवर्ण** (anyá-varṇa) *adj.* [*f.* -ā] **1A** of another colour तुन्दं स्वर्गो बहुधा विचक्रे यथा विद आत्मन्नन्यवर्णाम्। अपाजैत्कृष्णां रुशतीं पुनानो या लोहिनी तां ते अग्नौ जुहोमि AV. xii.3.54; AV. (P.)xvii. 41. 4; इतरान् पीडयेत् केतुरन्यवर्णो यदा भवेत् AVPari. 54 (1). 4; कार्तिकी कृत्तिकायुता चेत्यात्तस्यां सितमुक्षाणमन्यवर्णं वा ... ब्राह्मणाय दत्त्वा कान्तारभयं न पश्यति ViṣṇuSm. 90.16; श्वेतगुणस्याभावेऽन्यवर्णस्यापि च्छागस्यालम्भनात् Nyās.i.368.6 (*on* ii.1.57); मध्योऽन्यवर्णो यस्य स्याच्छुक्लस्य कुसुमस्य च। पुष्पं शुक्लं तु तद्विद्यान्मनोज्ञं केशवप्रियम् ViṣṇuDhaP.ii.91.13; नैव धन्यः प्रकीर्तितः। अन्यवर्णं शिरो यस्य पुच्छं वा यस्य वाजिनः। पुच्छेन शिरसा वापि नानावर्णेन निन्दितः AśvaVai. 3. 123; ŚārṅgaPa.1655; स्कन्धे वक्षसि बाह्वोश्च अंसदेशे तथैव च। अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्तितः AśvaVai. 3.147; 3. 148; 3.149; अग्निदग्धनिभाः स्फोटाः ... असाध्यान्निर्दिशेत्तान् ...। अन्यवर्णास्तु मर्मस्था व्रणवत्तांस्तु साधयेत् Hastyāyur.190. 26 (2.11); विष्णुरूप द्विजश्रेष्ठ ...। ततुं वैतरणीमेनां कृष्णां गां ते ददाम्यहम् ... कृष्णाया अभावे अन्यवर्णापि देया BālamBha. iii. 214.11 (*on* 3. 327); **1B** of one colour वृषभदोषाः ...। पूर्वार्धमन्यवर्णं तु परार्धं चान्यवर्णकम्। ... विवर्णः कुलनाशनः YuktiKa.209.7; **2** of another sound or letter पकारवर्गोपहिताद्य रक्तादन्यं यमं तृण्गुतान्योनमौभ्नात्। अनुस्वारमुपध्मां वान्यवर्णां स्वरोपधात्सोष्मयमोदयश्चेत् ṚPrāti. 14. 22; **3** of another class or caste दशैताः कपिलाः प्रोक्ताः ... । ब्राह्मणो वाहयेत्तांस्तु नान्यवर्णः कथंचन VṛGautaSm. 571.7(9)

**अन्यवर्ण** (anya-varṇa) *m.* **1** other class or caste चतुर्थे त्वाश्रमे धर्मो मयायं ते निवेदितः। सामान्यमन्यवर्णानामाश्रमाणां च मे शृणु MārkP. 28. 31; 'शूद्रो वा ब्राह्मणं हत्वा प्रायश्चित्तचतुष्टयमिति' चाङ्गिरोभविष्यत्पुराणाभ्यां विप्रापेक्षयान्यवर्णानाव(?म)धिकप्रायश्चित्तविधानात् BālamBha. iii. 136. 13 (*on* 3. 243); **2A** other vowel except *a*, i.e. vowel *u* or *ū* पापं विलोमपूर्वे चाकार्यं कार्यात्तदादिषु। स्वरभक्तिं विजानीयान्नान्यवर्णोऽत्र संभवेत् BhārŚi. 5; **2Bi** other letter (than that constitutes Prakrit) अन्यवर्णसंसर्गः सङ्गः। तद्विनिवृत्तौ स्वरूपस्य अन्यरूपतिरस्कृतस्यापत्तिः प्राप्तिः परिवर्तकः KāvyālaṅSū. iv. 1. 6; **2Bii** letter which is other (than those constituting the formula) (मन्त्राः) अन्यवर्णैस्तु कीलिताः। रुद्धा विसंधिकाः प्राप्तदुःखा वैरिसमन्विताः TantrRā. 1. 78 (comm. मन्त्राक्षरेभ्यो बहिर्भूतैः); **2C** letter or word of others, i.e. former poets अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः ... । सतां मध्ये कविश्चौरो विभाव्यते HarṣaC. 4. 1; ŚārṅgaPa. 196; **2D** one letter or sound अन्यार्थं प्रेरितो वायुर्यथा नान्यं करोति सः। तथान्यवर्णसंस्कारशक्तो नान्यं करिष्यति TattvSaṁ. 2195; ŚlokaVār. 22. 81 (751. 3); **2E** other letter or sound, cf.अन्यवर्णप्रपत्त्B;**3** other colour or complexion (of body) HarṣaC. 4.1; ŚārṅgaPa.196; **4** other, i. e. unknown quantity (in a line) 'वर्गाद्यं चेत्तुल्यशुद्धौ कृतायां पक्षस्यैकस्योक्तवद्वर्गमूलम्'। ... वर्गप्रकृत्या विषयो न चेत्स्यात्तदान्यवर्णस्य कृतेः समं तम्। कृत्वा BījGa.10.149; हरभक्ता यस्य कृतिः शुध्यति सोऽपि द्विरूपपदगुणितः। तेनाहतोऽन्यवर्णो रूपपदेनान्वितः कल्प्यः BījGa.10.176; रूपैर्युक्तश्चोनितो वान्यवर्णो

**अन्यस्वर** (anya-svara) *m.* 1 another accent or tone यत्रैवान्यस्वरस्तत्रैवायमुच्यते MahāBh. i. 6.15 (*on* iii. 1. 3); नाप्राप्तेऽन्यस्वरे तिसृस्वर आरभ्यते MahāBh.iii.104.17 (*on* vi.1.166); तेषां नान्यस्वरः प्राप्नोति ṬupṬ.192.20 (*on* ix.1.25); 2 another vowel अपरो लोप्योऽन्यस्वरे यं वा Kātan.i.5.9.

**अन्यस्वरान्त** (anyasvarānta) *adj.* ending with another vowel एवमन्यस्वरान्तैरपि सामान्यशब्दैः श्लेषः। यथा सदा-रो-पचितो युवा धनुर्धरवत् KāvyKaVṛ.49.2 (3.1)

**अन्यस्वरापादक** (anyasvarāpādaka) *adj.* effecting another accent यत्रापि नानावेदस्थत्वं तत्रापि प्रयोगविधेः प्रधानांशेऽन्यवेदीयत्वेन अन्यस्वरापादकत्वात् MīmāKau. ii. 321. 13 (*on* iii. 3. 9)

**अन्यस्वरूप** (anya-svarūpa) *n.* 1A one form अन्यस्वरूपेण प्रतिपन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात्परतन्त्रम् YogBh. 80. 2 (*on* 2.17); 1B another form, YogBh.80.2 (*on* 2.17); कुड्यादिषु ह्यन्यस्वरूपस्यावरणं भवति Sphuṭā.i.17.12 (*on* 1.5); किं कृत्स्न एवान्योऽन्यश्च ... नाप्यन्यदा अन्यस्वरूपस्य भावे IṣṭaSi.222.13; TātpaṬ.(Vā.) 457.15 (*on* ii.2.32); 2A nature of another भिन्नस्य हेत्वन्तरादुत्पादे च भावस्योपलब्ध्यादिप्रसङ्गः अन्योत्पादादन्यस्वरूपप्रच्युतेरभावात् घटो नष्ट इति च भावकर्तृको व्यपदेशो न स्यात् NyāyKa.78.19; 2B another nature (न पुनर्व्यवहारः) पुनः अन्यस्वरूपग्रहणकाले Bhāsk.i. 87.14 (*on* i.2.1)

**अन्यस्वरूपतस्** (anyasvarūpa-tas) *adv.* in another form यदेव चेह संबन्धं वृद्धेभ्यः प्रतिपद्यते। तदेव गमकोऽस्यायमिति नान्यस्वरूपतः ŚlokaVār.5 (10). 21 (503. 7); ममापि च तदेव स्यात्सुखं नान्यस्वरूपतः DevīBhāP.v.16.8.

**अन्यस्वरूपावच्छिन्न** (anyasvarūpāvacchinna) *adj.* (used as noun) (that) which is delimited by another nature यत्तु तादात्म्येन ब्रह्मणो दृश्यसंबद्धत्वाद्यघ्यबाध्यस्वरूपं ब्रह्म वियत्त्वादितुल्यं तथापि तेनैवाभावो निवेश्यः अन्यस्वरूपावच्छिन्नाभावस्य बाध्यत्वात् GuruCandr.i.64.12.

**अन्यस्वस्वीक्रिया** (anyasva-svīkriyā) *f.* appropriation of the properties or belongings of other person अदत्तादानमन्यस्वस्वीक्रिया बलचौर्यतः AbhidhK. 4.73.

**अन्यस्वहृति** (anyasva-hṛti) *f.* act of taking away of the properties or belongings of other person दशापतिर्नष्टबलो महीजः ... जनयेत् ... अन्यस्वहृतिं च स्वर्जुम् TājiNī.2(6).22.

**अन्यस्वामिक** (anyasvāmi-ka) *adj.* [*f.*-ā] A having another owner अन्यस्वामिकपश्वादिविषयत्वर्थः ManvaVi.1140.16 (*on* 9.48); अस्तु वा प्रणष्टाधिगतस्थलवदन्यस्वामिकस्यैव विनियोगः DaṇḍaVi. 291.7; Bi having the master who is other (than Brahmin) दासेष्वपि ब्राह्मणस्वामिकेषु चौरदण्डः शारीरमार्थं वाधिकं वाच्यमन्यस्वामिकेष्वल्पमिति प्रतिभाति DaṇḍaVi. 128. 16; Bii having another master अस्वामिकान्यस्वामिका वा परिणीता सती (दासी) वरस्वामिनः स्वीभवति VīraMi. 662. 2 (*on* 2. 182-183)

**अन्यस्वामिकत्व** (anyasvāmika-tva) *n.* the state of having another master न हि प्राकृतोऽपि संकल्पयन् अन्यस्वामिकत्वम् ... संकल्पयति BrahmSūBh. (Śaṅ.) 854. 4 (*on* iv. 4. 9)

**अन्यस्वामिन्** (anya-svāmin) *m.* 1 another lord or master एवं स्थितेऽपि यद्यन्यस्वामिना श्रीरधिष्ठिता। तदा हृगस्ति नीरोगा तारैव पुनरावृता ŚāliC. 5.7; जात्यं तेजस्विनं प्रौढं भोगाभोगं तरंगमम्। अन्यस्वामीति नाम्नापि शृङ्गेणैव त्यजाम्यहम् ŚāliC.5.102; 2 word or expression *anyasvāmin* लक्ष्मीमें लक्षणालीव सर्वसौख्यावहापि हा। मूर्ध्नि काकपदेनान्यस्वामिशब्देन निष्फला ŚāliC. 5.101.

**अन्यस्वामिनामन्** (anyasvāmi-nāman) *n.* name or sign of another lord or master नात्रान्यस्वामिनामापि तदवस्थीयतामिति। शालिमस्थापयल्लक्ष्मीर्निरुत्तरमनुत्तरा ŚāliC. 7.140.

**अन्यस्वाम्य** (anya-svāmya) *n.* A any other authority or control यस्यान्यस्वाम्यशून्यं क्रमसमुपनतं क्षेत्रमाहुः EI.xii.191.40; B ownership of another person विभागशब्दो हि भावव्युत्पत्त्या रूढ्या चान्यस्वाम्यसहभावेन विभजनीयार्थसामान्यस्थितस्य स्वस्वाम्यस्य तदसहभावेन तदेकदेशे व्यवस्थापनमभिधत्ते BālamBha. ii.141.5 (*on* 2.117)

**अन्यस्वीकार** (anya-svīkāra) *m.* admission of another (sense) अत्र प्रसिद्ध्यादिसद्भावेऽपि तत्परित्यागेनान्यस्वीकारे किं बाधकम् TattvPrakā. 8A.1 (*on* i.1.1)

**अन्यहत** (anya-hata) *adj.* killed by others मांसं चान्यहतस्याहं मृगादेर्वृत्तये परम्। स्वधर्मनिरतो भूत्वा विक्रीणे नार्थगर्धतः KathāSaSāg. ix.6.188.

**अन्यहनन** (anya-hanana) *n.* act of striking another (pawn), i.e. mutual clash प्रवेशेऽन्यहननं नास्तीति भावः CaturDī.14.17.

**अन्यहरघ्न** (anyahara-ghna) *adj.* multiplied by the denominator of another प्रमितफलेऽन्यहरघ्ने विच्छिदि वा सकलवद्य भागहृतौ GaṇiSāSaṁ.2.8.

**अन्यहर्ष** (anya-harṣa) *m.* delight or pleasure of others योऽन्यहर्षेण हर्षितः। स एव जगतामीशः ... हरिः BṛNāraP.7.83.

**अन्यहविष्क** (anyahaviṣ-ka) *adj.* having another oblation material अथ कर्मान्तरमन्यहविष्को यागः ŚābaBh. 620. 2 (*on* ii. 3. 26); तद्धविरित्यनुवादः। अनुवादश्चेदन्यहविष्केऽपि कर्मणि संस्थिते प्रायश्चित्तमिति गम्यते ŚābaBh.1437. 25 (*on* vi.4.5); प्रयोजने तु चोदयन्ति ... आग्नेयादीन्येव हवींषीति कथमन्यहविष्को याग इति TantrVā. 625.12 (*on* ii.3.26)

**अन्यहविष्ट्व** (anyahaviṣ-ṭva) *n.* the state of being (mentioned as) another oblation material तच्छ्रुतौ चान्यहविष्ट्वात् MīmāSū. x.1.40.

**अन्यहविस्** (anya-havis) *n.* another oblation material प्रकृतहविर्विकारत्वेऽपि ... अन्यहविः प्राप्त्यभावेन मध्ये निधानानुपपत्तिः MīmāKau.ii.22.24 (*on* ii. 3. 3)

**अन्यहस्त** (anya-hasta) *m.* 1 one person तथान्यहस्तविक्रीतं योऽन्यस्मै संप्रयच्छति NāraSm.159.8; [Loc.] to one person अन्यहस्ते विक्रीतं पुनरन्यहस्ते विक्रीतं दुष्टमेवादुष्टवद्विक्रीयते DīpKa. 69.25 (*on* 2.257); 2A another hand प्राचलद्दण्डनाथा ... । एकयैव कराङ्गुल्या घूर्णयन्ती हलायुधम्। मुसलं चान्यहस्तेन भ्रामयन्ती BrahmāṇḍP.iii.28.19; हस्तेनादाय यन्ता सृणिम् ... अन्यहस्तेनैवं तोत्रम् ... प्रेरयेच्चारु नागम् MātaLī.12.11; 2B hand of another person अन्यहस्तात्परिभ्रष्टमकामादुद्धृतं भुवि। चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात् परीक्षयेत् KātySm.811; Mitā.304.18 (*on* 2. 268); Aparā. 841. 26 (*on* 2.268); Subodhi.102.1(*on* 2.268); प्रतिग्रासमेवान्यहस्तेन दत्तमेव भोक्तव्यम् HārLa.159.1; 3A [Abl.] from the other person एतत् सर्वमन्यहस्तादादाय प्रयोगनिषेधपरम् SmṛtiCan.ii.471.11; [Loc.] i to another person अन्यहस्ते च विक्रीय दुष्टं वा दुष्टवद्यदि। विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् YājñaSm.2.257; DīpKa. 69.25 (*on* 2.257); ii through another person मुनिप्रभावादाप्राणि संजातानि ...। इति मत्वान्यहस्ते च कान्तायै प्रजिघाय सः BṛKathāK.12.24; [Inst.] through another person राजकीयं लौकिकं च द्विविधं लिखितं स्मृतम्। स्वहस्तलिखितं वान्यहस्तेनापि विलेखितम् ŚukraNī.4(5).170; वेश्याद्रव्यस्याप्रतिग्राह्यत्वादन्यहस्तेन दानम् JayaMa.347.11 (*on* 6.5); 3B [Loc.] in the possession or to the ownership of another person निक्षेपोऽन्यहस्त एव यदन्यस्मै देयत्वेन निक्षिप्तम् BālaKrī. i. 225.16 (*on* 2. 69); चौरैर्वान्यहस्ते दासत्वेन विक्रीतः स मोक्तव्यः BālaKrī. i.265.23 (*on* 2.186); यद्द्रव्यादुपनिधिरन्यहस्ते न्यस्तः तद्रव्यातीते काले स ग्राह्यः SmṛtiCan.iv.422.11; अन्यस्वमन्यहस्तेषु चौर्याद्यैः किं न दृश्यते ŚukraNī. 4 (5).291; 3C [Loc.] with another person मुक्तः क्षुभ्यंत मधुकेषु लभते नैवान्यहस्ते रतिम् YaśasCam. i.232.9.

**अन्यहस्तगत** (anyahasta-gata) *adj.* 1 gone to the hand of any other, i.e. unskilled person वास्यादयः ... पुरुषाश्रयाः कार्यविशेषं कुर्वन्ति न अन्यहस्तगताः ChāndoUBh. 25.4 (*on* i.2.8); 2 gone to the hands of, i.e. fallen in the possession of another person आगमेन लेख्यादिना प्रकाशमस्खलितचिरभोगेन वा नष्टं द्रव्यमन्यहस्तगतं मदीयमित्येवं भाव्यम् BālaKrī. i. 262.15 (*on* 2.175); महारत्नम् ... अबुद्धिमान्। अन्यहस्तगतं दृष्ट्वा पश्चात्स परितप्यते Subhāṣi.892.

**अन्यहस्तद्वार्** (anyahasta-dvār) *f.* [Inst.] through another person अन्यहस्तद्वारा तेषां (चण्डालश्वपचानाम्) भक्तादि देयम् BālamBha. i. 290.13 (*on* 1.94)

**अन्यहस्तलिखित** (anyahasta-likhita) *n.* document (prepared) by another person तत्रान्यहस्तलिखितस्य साक्षिबहुत्वापेक्षा लेखकापेक्षा कर्त्रपेक्षा च लिखितसामग्री शास्त्रनियमसिद्धा VyavaNi.81.11.

**अन्यहस्तस्थ** (anyahasta-stha) *adj.* existing, i.e. held in the hands of another person भूमिष्ठे पात्रेऽन्यहस्तस्थे वा दत्वा तत्पात्रं भूमौ स्थितं ते गृह्णीयुः ManuBh. ii. 346. 2 (*on* 10.51)

**अन्यहस्ताङ्गुलि** (anyahastāṅguli) *f.* finger of another hand (कृष्णम्) अन्यहस्ताङ्गुलिव्यक्तस्वरवंशार्पिताननम्। ध्यायन् जपन् हरिं मन्त्रैरेकं छत्रं विना PañcaRā. (Nā.) iii. 14.43.

**अन्यहान** (anya-hāna) *n.* abandonment of another (rite) वैकल्पिकत्वादेकोपादानेऽन्यहानात् प्रयोगपरिमाणसाम्ये सति बह्वल्पं वेत्यनुपयोगात् CaturCin. iii (1). 758. 8.

**अन्यहानि** (anya-hāni) *f.* 1 absence of another परेणाप्यन्यतो गन्तुमयुक्तं परकल्पितेः। प्रसङ्गे द्वयसंबन्धादेकाभावेऽन्यहानये PramāVār. 4. 12; TarkBhā. (Mo.) 27.5; 2 loss (of the property) of another person यथात्मवसुनाशेन क्षोभो मनसि वर्तते। तथा न चान्यहानौ ĀdiP. 28. 35

**अन्यहासिनी** (anyahāsinī) *f.* name of one of the Mātṛ deities (created by Lord Śiva for drinking the blood of descendents of Andhakāsura) मांसान्यहासिनी लम्बा ... । एताश्चान्याः सः ... ससृजे मातरः ... अन्धकानाम् ... पपुस्तद्रुधिरम् VisnuDhaP. i. 226. 29.

**अन्यहिंस्र** (anya-hiṁsra) *m.* another savage animal मयि नान्तकोऽपि प्रभुः प्रहर्तुं किमुतान्यहिंस्राः RaghuVa. 2. 62.

**अन्यहित** (anya-hita) *n.* welfare or benefit of the person who is other (than oneself) न च स्वान्यहितं वामाः पश्यन्ति मदनान्धलाः PālaGoKa.34.

**अन्यहितप्रवर्तक** (anyahita-pravartaka) *adj.* striving for the welfare of others जनमन्यहितप्रवर्तनं (v. l. अन्यहितप्रवर्तकम्) स्वयमेवाभिसरन्ति संपदः JānaHa. 4. 35.

**अन्यहितप्रवर्तन** (anyahita-pravartana) *adj.* striving for the welfare of others जनमन्यहितप्रवर्तनं स्वयमेवाभिसरन्ति संपदः JānaHa.4.35.

**अन्यहीन** (anya-hīna) *adj.* A devoid of any other (extraneous nature) अन्यहीनस्वभावात्मा अन्यहीनस्वयंप्रभः ... वैदेही मुक्त एव सः TejoBiU. 4.71; B not dependent on any other (lumination), TejoBiU.4.71.

**अन्यहुत** (anya-huta) *adj.* 1 offered by one यद्यन्यहुताश्चमसा अन्यहुतैः संसृज्येरन् सोमे वा सोममभिगृह्णीयात् BaudhŚS. iii.374.16; 2 (used as noun) (that) which is offered by another, BaudhŚS. iii. 374.16.

**अन्यहृत** (anya-hṛta) *adj.* seized or taken away by another (king) राजमातुः ... पुत्रनाशनम्। अभूदन्यहृते राज्ये वृजिनाय RājTa. (Ka.) 7. 137.

**अन्यहृदय** (anya-hṛdaya) *n.* heart or mind of another person अर्थेन ... संवादितमन्यहृदये दोषाः AbhinBhā. ii. 320.10 (*on* 16.39)

**अन्यहृदया** (anya-hṛdayā) *adj.* (*f.*) having mind engaged in something else, absent-minded वन्धुरे! कथमन्यहृदयासि Hāsyārṇa. 1. 16 (1)

**अन्यहेतु** (anya-hetu) *m.* **1Ai** any other reason or cause यो हि प्रवृत्तिं नियतामवैति नैवान्यहेतोरिह नाप्यहेतोः Saund. 17. 31; ईशानं परमं विद्यात् ... आदावन्ते च मध्ये च भाससे(?ते) नान्यहेतुना PañcBraU. 18; **1Aii** another reason, cf. **अन्यहेतुकृत**; **1B** another motive देशनैवं परैवेयं नान्यहेतूपकल्पना। हेत्वन्तरकृतायां हि वृत्तौ तत्राम शङ्क्यते TattvSaṁ. 3456; **1C** another purpose विमुष्टमतयस्तव मायया ते ये त्वां भवाप्ययविमोक्षणमन्यहेतोः। अर्चन्ति BhāgP. iv. 9. 9; अप्यन्यहेतुनायातानष्टापदतलान्नरान्। प्रभुं प्रथयतः पूर्वं स पूर्ववदमन्यत TriṣaŚaPuC. i. 6. 685; **1D** another means or probans अथवाध्यापनात्सिद्धे- नैवास्त्यध्ययने विधिः। तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः NyāyMāVi. 13. 13 (*on* i.1.1); **2** cause of another thing अन्यहेतुव्यवहारोऽन्यहेतुतयावगतः NyāyKu. 51.7.

**अन्यहेतु** (anya-hetu) *adj.* A having other (extraneous) cause अन्यहेतुः स्वतो वा स्याद्वयं नोभयथापि हि TaiUBhāVā. 157. 19 (2); स्वाभाविकी हि वियदन्वितता घटादेः क्षीरादिवस्तुघटना पुनरन्यहेतुः SaṁkṣeŚā. 3.79 (ii.194.3); B causing one thing अन्यहेतुव्यवहारोऽन्यहेतुतयावगतः NyāyKu.51.7.

**अन्यहेतुक** (anyahetu-ka) *adj.* A having any other reason or cause चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः। कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः GauḍKā. 2.14; तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ŚlokaVār. 2. 87 (72.1); न वक्त्रभिप्रायाच्छब्दार्थत्वं प्रकल्पते। शब्दसामर्थ्यतो यस्मात्तदर्थ्यं नान्यहेतुकम् BṛĀraUBhVā. (Sambandha.) 594; इतश्च नान्यहेतुकः संघातः PrakaVi.517.25; B having another reason or cause अप्रामाण्यं पुनस्तासामप- वादोऽन्यहेतुकः NyāyKu.23. 6; द्वेधा निगदितः स्त्रीणां रोषः पुरुषगोचरः। सपत्नीहेतुराद्यः स्यादन्यः स्यादन्यहेतुकः RasāSu. 161.14 (2.139); मित्ररूपयोश्च संबन्धोऽन्यहेतुको दृष्टः Śarka.10. 3.

**अन्यहेतुकता** (anyahetuka-tā) *f.* [Inst.] by way of having other reason or cause अन्यहेतुकतयोत्पन्नस्य हेत्वभावेऽपि कार्यान्तरार्थं स्थितौ दृष्टान्त उक्तः ŚrutaPra. ii. 493.20 (*on* iii.3.30)

**अन्यहेतुकत्व** (anyahetuka-tva) *n.* the state of having any other reason or cause कारणाभावेऽपि कार्यस्य भावे अहेतुत्वमन्यहेतुत्वं वा भवेत्। ... अन्याभावेऽपि दृष्टाद्भवतो नान्यहेतुकत्वम् PramāMī. 44.3 (*on* i.2.12)

**अन्यहेतुकृत** (anyahetu-kṛta) *adj.* caused by another reason द्वेधा निगदितः स्त्रीणां रोषः पुरुषगोचरः। सपत्नीहेतुः ... स्यादन्यहेतुकः। ... विप्रलम्भे ... अन्यहेतुकृते त्वत्र क्रियाः पुरुषरोषवत् RasāSu. 161.16 (2. 140)

**अन्यहेतुज** (anyahetu-ja) *adj.* resulting from another reason or cause यदपीतादिजन्यं स्यात् क्षीबत्वाद्यन्यहेतुजम्। अहेतुकं च Kāvyāda. 2.202.

**अन्यहेतुतस्** (anyahetu-tas) *adv.* from another cause न च नास्ति पदार्थानां लोकेऽसाधारणः क्वचित्। स्वभावोऽन्यादिकानां हि नोष्णत्वाद्यन्यहेतुतः BṛĀraUBhVā. iv.3.152.

**अन्यहेतुता** (anyahetu-tā) *f.* the state of having another cause ये तु सत्सु भवद्दृष्टमसत्सु न कदाचन। तस्यान्यहेतुताक्लृप्तावनवस्था कथं न ते TattvSaṁ.90.

**अन्यहेतुत्यजन** (anyahetu-tyajana) *n.* abandonment of another cause एकत्यागेऽन्यहेतुत्यजनमिति च न TattvMu.3.21.

**अन्यहेतुत्व** (anyahetu-tva) *n.* the state of having another cause तुल्यजाताश्रयत्वे हि प्रतिष्ठा नोपपद्यते। विजातेस्त्वन्यहेतुत्वादृढमूलप्रतिष्ठिता TattvSaṁ. 2865; न च परिमाणान्तरारम्भे ... स्वसमानजातीयं परिमाणान्तरं नारभन्ते परिमाणान्तरस्यान्यहेतुत्वाभ्युपगमात् BrahmSūBh. (Śaṅ.)366.10 (*on* ii.2.11); आत्मनोऽन्यो भवेद्येषामीश्वरः कारणान्तथा। कार्यं भयानिवृत्तिः स्यादन्यहेतुत्वसंश्रयात् TaiUBhāVā.156.23(2); भूकम्पेन व्यभिचार इति चेन्न तस्यान्यहेतुत्वावगमात् NyāyKa.47.2; कारणाभावेऽपि कार्यस्य भावे अहेतुत्वमन्यहेतुत्वं वा भवेत्।'... अन्यहेतुत्वे दृष्टादन्यतोऽपि भवतो न दृष्टजन्यता PramāMī. 44.2 (*on* i.2.12)

**अन्यहेतुप्रतिक्षेप** (anyahetu-pratikṣepa) *m.* rejection of another cause अन्यहेतुप्रतिक्षेपादहेतुत्वे च संस्थिते। अन्यथा नियतो धर्मो नायं तस्य प्रसज्यते TattvSaṁ. 1898.

**अन्यहेतूक्ति** (anyahetūkti) *f.* expression of another cause व्याजोक्तिरन्य- हेतूक्त्या यदाकारस्य गोपनम् Kuval. 153; AlaṅkāMaṅ. 207. 2.

**अन्यहेत्वनपेक्षण** (anyahetv-anapekṣaṇa) *n.* absence of expectancy for another cause चित्स्वभावं सदा तत्स्यादन्यहेत्वनपेक्षणात् BṛĀraUBhVā. iv.4.929.

**अन्यहेलन** (anya-helana) *n.* contempt for others इष्टलाभादिना चान्यहेलनं गर्व ईर्यते BhaktiRaSi. ii. 4.19.

**अन्यहोम** (anya-homa) *m.* rite of offering oblation (performed) by another person किं तर्ह्यन्यहोमे फलमित्यपेक्षिते स (दक्षः) एवाह SmṛtiCan. ii.422.19.

**अन्यह्रद** (anya-hrada) *m.* another lake पद्मिनीव सुतेयं ते ह्रदादन्यं ह्रदं (v.l. ॰ह्रदम्) गता MahāBhā. i.187.10.

**अन्या** (anyā) *f.* **1A** one of the three types of heroine स्वान्या साधारणस्त्रीति ... नायिका त्रिधा DaśRū.2.15; BhāvPra.(Śā.)94.20(4); SāhiSā.4.4; ... प्रथमायामवस्थायामन्या स्यादिरहोन्मनाः। ततोऽभिसारिका भूत्वा संकेते पश्यति प्रियम् BhāvPra.(Śā.)95.11(4); स्वीया ... सैवान्या भवेद्भर्तृव्यतिक्रमे। व्यतिक्रमे तु कन्यायाः साप्यन्या न कुलाङ्गना BhāvPra.(Śā.)96.12(4); **1B** another woman, cf. अन्याकर; **2** name of a medicinal plant घृतक्षीरगुडान्याईक्कायैः सिद्धेन चूर्णिता। ... सेवेत शोफपित्तानुत्तये RasRaSa.22.85; **3** female attendant of harem, cf. अन्याहूति; **4** co-wife, cf. **अन्याभिद्यग्रहण.**

**अन्यांश** (anyāṁśa) *m.* **1** another numerator इष्टगुणांशोऽन्यांशप्रयुतः शुद्धं हृतः फलांशेन GaṇiSāSaṁ. 2.87; **2** different type (of heroine) या त्वक्षतयोनिः पुनरुह्यते सान्यांश एव JayaMa.62.23 (*on* 1.5); **3** rest of the parts or aspects परमार्थसत्त्वस्यैव तादात्म्येन हेतुत्वसंभवादन्यांशवैयर्थ्यम् इति वाच्यम् GuruCandr.i.436.11; LaCandr.421.17; **4A** another part or aspect (of sacrifice) अग्निप्रक्षेपतत्त्यागयोरुभयोरपि सहितयोर्होमत्वेन एकांशेऽध्वर्युकर्तृकत्वेऽपि अन्यांशे यजमानकर्तृकत्वेन होमं करिष्य इत्यभिलापसंभवात् ViraMi.(Tirtha.)61.9; **4B** part or aspect of another ननु स्वांशवदन्यांशस्यापि प्रविष्टत्वात्परस्परसांकर्याद्वैगुण्यम् MayūMāli. 837.6(*on* xi. 4.9); **5** [Loc.] in respect of other thing or action द्विरावननिमित्तान्याह। ... रोदनांशे मानमाह। ... अन्यांशे मानमाह Bālam-Bha.i.459.14 (*on* 1.196)

**अन्यांशक** (anyāṁśa-ka) *m.* other part or division (of Tantric figure) (पुत्तल्यः) अन्यांशकेषु सर्वाश्च चतुर्दश समीरिताः TantrRā.31.25.

**अन्यांशद्वयहीन** (anyāṁśadvaya-hīna) *adj.* less by the two parts of the other स्वार्धपञ्चांशनवमैर्युक्ताः के स्युः समास्त्रयः। अन्यांशद्वयहीना ये षष्टिशेषाश्च तान् वद BījGa.7.103.

**अन्यांशधी** (anyāṁśa-dhī) *f.* knowledge of another part or aspect अविवेकोऽशबोधाद्येकांशेऽन्यांशधीर्भवेत् IṣṭaSi.285.18.

**अन्यांशप्रत्यक्ष** (anyāṁśa-pratyakṣa) *n.* perception of another part as aspect एकांशर्धप्रतिबन्धकदोषसत्त्वे तदविरोधितया अन्यांशप्रत्यक्षेऽपि तत्संभवात् GuruCandr.i.35.14.

**अन्यांशवृत्तित्व** (anyāṁśa-vṛttitva) *n.* occurrence in another part केवलमव्याप्यवृत्तिता नामान्यांशवृत्तित्वात्। स्वाभावसमानाधिकरणत्वमिति चेन्न NyāySu. (Ja.)367A.13 (*on* ii.2.6)

**अन्यांशुक** (anyāṁśuka) *n.* garment of another person अन्यांशुकमतिरभसादविमृश्यविधायिना मयाकृष्टम् KundaMā. 4.19.

**अन्यांशोदाहरण** (anyāṁśodāharaṇa) *n.* illustration or example of another part or aspect तस्य हैतस्येत्यादेरेवात्रोपयुक्तत्वेऽप्येतान्येतेभ्य इत्यस्यार्थप्रतीत्यर्थमन्यांशोदाहरणम् TattvPrakā.39A.1 (*on* i. 2. 23); 110A.10 (*on* ii. 3.9)

**अन्याकर** (anyā-kara) *m.* hand of another woman अन्याश्चान्याकरे कृत्वा भूषणम् ...। बलादाकृष्य जग्राह SkandP.vi.111.52.

**अन्याकरण** (anyākaraṇa) *n.* non-production of different (effect) अस्यापि हेत्वर्थः सत्यन्याकरणात् NyāyVār.230.16(*on* ii.1.31)

**अन्याकाङ्क्षा** (anyākāṅkṣā) *f.* 1 syntactic expectancy for another (word) अन्याकाङ्क्षानिष्पाद्यत्वेन वा प्रधानाकाङ्क्षा न विद्यत इति अध्याहारः TantrVā. 358. 15 (*on* ii. 1. 3); 2 expectancy for another (act) न यागापूर्वफलानां स्वयमित्यमन्याकाङ्क्षास्ति ṬupṬ.153.11 (*on* vii.1.1); निविदां परप्रकरणस्थत्वावसायात् ... तत्पूर्वभाव्युपवीतस्य च मध्ये अन्याकाङ्क्षया ग्रहणोपपत्तिः MīmāKau. ii. 199. 18 (*on* iii.1.21); 3 desire for any thing else अन्याकाङ्क्षारहित एव हि तृप्त उच्यते Bhāsk.i.7.21 (*on* i.1.1)

**अन्याकार** (anyākāra) *adj.* [*f.* -ā] 1 of one form ननु अप्रत्यक्षज्ञानपक्षेऽन्याकारमालम्बनमन्यथैव ज्ञानस्योत्पत्तिर्नोपपद्यते Bṛha.58.4 (*on* i.1.5); अन्याकारस्य विज्ञानस्यान्याकारमालम्बनमिति नोपपद्यते Bṛha. 60.7 (*on* i.1.5); 64. 6 (*on* i.1.5); अन्याकारमपि ज्ञानं कथमन्यस्य वेदकम्। सर्वः स्यात्सर्वसंवेद्यो न हेतुश्च नियामकः TattvSaṁ. 2040; स्वप्ने ... अन्याकारवस्तुगोचरोऽन्याकारो युक्त एव Kāśi. ii.159.15 (*on* 5 (3).160); विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवत् इत्यनुमानात्, अन्यथान्याकारस्य प्रत्ययस्य अन्यालम्बनतायामनुभवविरोधात् TattvPradī.(Ci.)61.4; अन्याकारं ज्ञानमन्यथाख्यातिः NyāySu.(Ja.) 42B. 2 (*on* i.1.1); 2 of another form Bṛha.60.7 (*on* i.1.5); 65.2 (*on* i.1.5); कथमन्यसंप्रयुक्तमिन्द्रियम् अन्याकारस्य ज्ञानस्य हेतुः Kāśi. ii. 80. 8 (*on* 5.19); ह्विचन्द्रादिविभ्रमेष्वन्यथार्थे व्यवस्थितेऽन्याकारा बुद्धिरुपजायते Kāśi. ii.116.17 (*on* 5(3). 57); स्वप्ने ... अन्याकारवस्तुगोचरोऽन्याकारो युक्त एव Kāśi. ii.159.15 (*on* 5(3).160); 3 of different nature यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानैकाकारादन्याकारोऽस्ति तदाहमेवमाकारोऽयम् ... शक्यते व्यपदेष्टुम् BrahmSūBh.(Rā.)76.15(*on* i.1.1); 4 of different type or kind अन्याकारं मननं तु परेषां दुर्वलम् SāṁkhyaPraBh. 35. 15 (*on* 1. 65)

**अन्याकार** (anyākāra) *m.* 1 another form अन्यथा चं तमेवार्थं वेत्तीति व्याहतं वचः। अन्याकारस्य संवित्तौ स ह्यर्थो विदितः कथम् TattvSaṁ. 2490; [Inst.] in another form सदेवान्याकारेण कल्प्यते TātpaṬ. (U.) 204.11 (*on* 7. 39); 2 form or aspect of another thing तत्र चान्याकारस्यासतः सत्त्वेन प्रतिभासाङ्गीकारात् तस्यानिर्वचनीयत्वं भ्रम इति चेत्र Vādā. 11.1; [Inst.] in the form or aspect of another thing शुक्तौ रजतमिति। सा खलु दोषवशादन्याकारेण अवभासते Kāśi.ii.17. 20 (*on* 5.19); 3 form of one अन्याकारस्यान्यत्र समर्पयितुमशक्यत्वात् ŚatDū.101.11.

**अन्याकारज्ञान** (anyākāra-jñāna) *n.* knowledge of the form of another thing कथमन्यसंयुक्तमिन्द्रियमन्याकारज्ञानस्य हेतुः YuktiSneha. 49.35 (*on* i.1.5)

**अन्याकारणत्व** (anyākāraṇa-tva) *n.* the state of not being the cause of any other thing अस्यापि हेत्वर्थः सत्यन्याकरणात् (v.l. अन्याकारणत्वात्) NyāyVār. 230.16 (*on* ii.1.31)

**अन्याकारता** (anyākāra-tā) *f.* [Inst.] in the form, i.e. under the aspect of another thing मिथ्यारूपत्वम् ... किमत्यन्तासत्त्वम् उतान्यस्यान्याकारतया प्रतीतत्वमाहोस्विदनिर्वाच्यत्वम् SyādvāMañ.13 (40); अन्यदन्याकारतया प्रसक्तं बाध्यते YuktiSneha. 49. 34 (*on* i.1. 5)

**अन्याकारत्व** (anyākāra-tva) *n.* the state of having the form of another thing एष च ज्ञानस्य दोषो यद्यन्यगोचरस्यान्याकारत्वम् Kāśi.ii. 20.13 (*on* 5(1).19)

**अन्याकारधी** (anyākāra-dhī) *f.* cognition of the form of another thing तद्रूपव्यतिरिक्तश्च नापरात्मोपलभ्यते। न चान्याकारधीवेद्या युक्तास्तेऽतिप्रसङ्गतः TattvSaṁ. 565.

**अन्याकारपरिणाम** (anyākāra-pariṇāma) *m.* transformation into the form of another दर्पणद्रव्यस्यान्याकारपरिणामे कारूकर्मापेक्षायामपि प्रतिबिम्बपरिणामे पुनः स्वरूपपरिणामे वा न तदपेक्षा, इति चेत्, एवमपि न मुखप्रतिबिम्बाकारपरिणामो युक्तिसहः VivaPraSaṁ. 81.7.

**अन्याकारप्रकाश** (anyākāra-prakāśa) *m.* 1 cognition having one form अन्याकारप्रकाशोपहितं च भावनाबीजं कथमन्याकारप्रकाशप्रादुर्भावनिमित्तं स्यात् SphoṭSi.135.1; 2 cognition having another form, SphoṭSi.135.1.

**अन्याकारवद्वस्तु** (anyākāravad-vastu) *n.* object having one form अन्याकारवद्वस्तुग्राहि नाकारान्तरवति वस्तुनि प्रमाणम् NyāyBi.25.3.

**अन्याकारवाचिन्** (anyākāra-vācin) *adj.* expressing one form अन्याकारवाचिनामिन्द्रादिशब्दानां प्रवृत्तौ आकारान्तरस्य निमित्तत्वायोगात् अर्थशून्यत्वमवर्जनीयम् ŚrutaPra.ii.62. 29 (*on* i. 3. 27)

**अन्याकारार्थ** (anyākārārtha) *m.* object in another form युगपत्र हि सर्वेषामन्याकारार्थवेदनम् ŚlokaVār. 4. 219 (199. 3)

**अन्याकारोपलब्धि** (anyākāropalabdhi) *f.* perception (of an object) in another form तस्यैव प्रतिपत्तिः स्याद्यदीक्ष्येत तथास्थितम्। अन्याकारोपलब्धौ तु तस्य दृष्टिः कथं भवेत् TattvSaṁ. 2582.

**अन्याकारोल्लेखिन्** (anyākārollekhin) *adj.* describing the form of another thing अन्याकारोल्लेखिज्ञानमन्यालम्बनमन्यथाख्यातिः इति तु विरुद्धम् NyāySu. (Ja.) 42B. 3 (*on* i.1.1)

**अन्याकूत** (anyākūta) *adj.* having different purpose अन्याकूतैर्नमस्यादिभिरपि न परः स्यादनैकान्त्यदुःस्थः TattvMu. 3. 9 (comm. अन्याभिप्रायकैः भीतिपरिहारादिकार्यान्तरसिद्ध्युद्देश्यकैः)

**अन्याकृति** (anyākṛti) *f.* 1 another figure पद्मपुष्पाकृतिर्यत्र दृश्यते मधुसर्पिषि। ... अन्याकृतिषु वाप्येतद्ये स्थाने शान्तिकारकाः। तेषामथाक्षयं विद्यादायुषार्थधनेन वा AVPari.70 (7).1; 2 different figure or sign नक्षरायाताः प्रोक्ताः शशकप्लुतसंज्ञया ... अन्याकृतीरपि तथा कुर्यात् KandaCū. ii. 4. 23; 3 another form एकस्य द्वित्वे परस्य तदभावोऽनुचित इति न वाच्यम्, सार्थकानेकविषये तन्न्यायाङ्गीकारात्, यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयत्वाद्य LaŚabdeŚe. i. 87.11.

**अन्याकृति** (anyākṛti) *adj.* of different form सैवासौ वनिता, स एव तनयस्ते चैव मे बान्धवाश्चित्रं केवलमेक एव हि कथं जातोऽहमन्याकृतिः YaśasCam. ii. 181. 4 (comm. अन्यादृशः)

**अन्याक्रमण** (anyākramaṇa) *n.* act of crossing of other thing अन्याक्रमणेष्वपि ... तन्त्रमस्कारमन्त्रं विधाय ŚivārkaMaDī.i.551.33 (*on* i. 4. 22)

**अन्याक्रान्त** (anyākrānta) *adj.* encroached or overtaken by another person अचिरेण ऋणी स्वापराधादिनान्याक्रान्तं यदि नाधिमर्पयति तदास्माभिराधिस्समर्प्यते SmṛtiCan.iv. 350.1.

**अन्याक्ष** (anyākṣa) *m.* perpendicular side of another latitude मध्याह्नार्कमयूखं प्रवेश्य ... मध्यावलम्बिसूत्रात्तलान्तरां शास्तदन्याक्षः PañcSi.14.22; अन्याक्षभुजकोटिभ्यामनुपातात्सुबुद्धिना। क्रान्तिज्यका कर्णगुणा कोट्या दोष्णा च संहता SiddhāTaVi.181.8.

**अन्याक्ष** (anyākṣa) *n.* 1 eye of another person शोधितं तिमिरेणास्य व्यक्तं चक्षुरतीन्द्रियम्। पश्यतोऽन्याक्ष्य(v.l.॰क्ष)दृश्येऽर्थे तदव्यक्तं कथं पुनः PramāVār. 3.405; 2 another sense organ or faculty अन्याक्षग्राह्यताद्दग्विधगुणविरहो ह्यन्यदक्षं न रुन्धे TattvMu.51.

**अन्याक्षरनिवेश** (anyākṣara-niveśa) *m.* insertion, i.e. using of one letter अन्याक्षरनिवेशेन अन्यार्थगमनेन च। आकुलं च क्रियादानम् NāraSm.30.17

**अन्याक्षिप्त** (anyākṣipta) *adj.* 1 implied or indicated by another क्वचिदन्याक्षिप्ते वस्तुनि लब्धे सति तत्राप्रयोजको विधिर्भवति NyāyMañ. i. 325. 17; 2 implied by one लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वयः LaŚabdeŚe.i.188.1.

**अन्याक्षुण्ण** (anyākṣuṇṇa) *adj.* not practised or attempted by other (poet) अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महाकाव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः NaiṣaC.20.162.

**अन्याक्षेप** (anyākṣepa) *m.* implication of other (determinant or condition which develops a particular state of mind) अन्याक्षेपेऽप्यूह्यम् SāhiDa. 89. 5 (comm. विभावाक्षेपे)

**अन्याख्या** (anyākhyā) *f.* name of other (god) नान्यं नमामि गौरीश नान्याख्यामाददे शिव SkandP.iv.63.63.

**अन्याख्यात** (anyākhyāta) *n.* another verb यत्रैकाख्यातार्थे अन्याख्यातार्थः प्रकारो यथा पश्य मृगो धावतीत्यादौ तत्रैकवाक्यत्वम् BhāṭṭCin.i.48.9 (*on* i.1.4)

**अन्यागतार्थ** (anyāgatārtha) *adj.* sense of which is not known through other means लिङाद्यन्यथा योजनीयं विध्यर्थासंभवेन स्फुटमुदितनयादेतदन्यागतार्थम् SaṁkṣeŚā.1.63 (i. 65.18)

**अन्यागति** (anyāgati) *f.* absence of any other way or means क्लृप्तिरन्यागती(?ति)श्चैव सिद्धान्तस्यैव साधकाः AnuVyā.38A.5(3.1)

**अन्यागद** (anyāgada) *m.* particular minor disease विवृतान्यागदेऽपि DharK.817.

**अन्यागन्ध** (anyāgandha) *n.* red lotus कुमुदं कुमुत्। शालुक। तदल्पगन्धम् (v. l. तदन्यागन्धम्) सोमाख्यं सुरक्तं रक्तकैरवम्। रक्तशालुक ParyāMu.13.25; cf. अन्यगन्ध.

**अन्यागम** (anyāgama) *m.* 1A act of bringing or inclusion of other नान्यस्यातो नान्यागम: ŚāstrDī.472.22 (*on* vi.3.4); प्रयमोत्तमयोरभ्यस्तयोर्मेलनेन पञ्चदशर्चत्वस्य षष्ट्यधिकत्रिशताक्षरकत्वस्य चोपपत्तेर्नान्यागम: BhāṭṭCan.101.6 (*on* xvi.1.4); विकृतावपि यावत्संख्यापूरणं तयोरेवाभ्यासो नान्यागम: MayūMāli.722.13 (*on* x.5.8); 1B act of bringing of another person, cf. अन्यागमोपपत्ति; 2 other, i.e. non-Vedic scripture अधिकारो हि सुलभ: कथितोऽन्यागमेष्वलम् AnuVyā.18A. 5 (*on* 2.1)

**अन्यागमन** (anyāgamana) *n.* act of bringing or inclusion of other (*rc*) वार्हते तृचे भवत: इति तृचश्रवणादन्यागमनम् ŚāstrDī.606.7 (*on* ix. 2. 6); भाष्यकारेणान्यागमनस्यैव पूर्वपक्षितत्वेन पठितयोर्गानमिति पूर्वपक्षशङ्काया भाष्यविरुद्धत्वात् MayūMāli.607.9 (*on* ix. 2.6)

**अन्यागमाङ्गता** (anyāgamāṅga-tā) *f.* the state of being subsidiary to other, i.e. non-Vedic scripture वेदस्यैव षडङ्गानि ... नान्यागमाङ्गता तेषां न क्वाप्युक्ता परैरपि SarvaSiSaṁ. 5.17.

**अन्यागमोपपत्ति** (anyāgamopapatti) *f.* tenability of bringing of another person तदभावेऽपि वचनेनैवान्यागमोपपत्ते: BhāṭṭDī.ii.260.17 (*on* vi.3.8)

**अन्यागरु** (anyāgaru) *m., n.* aloe, Agallochum अन्यागरु पीतकं च लोहं वर्णप्रसादनम्। अनार्यकमसारं च कृमिजग्धं च काष्ठकम् RājNi.99.16.

**अन्यागामित्व** (anyāgāmi-tva) *n.* the state of not going to other person (for recovery of loans) (पुत्रे सति) तस्य सत्त्वे तस्यान्यागामित्वात्तद्यर्थम् BālamBha. ii.65.10 (*on* 2.51)

**अन्याग्नि** (anyāgni) *m.* 1 fire of another योऽन्याग्निषु यजेत यस्य वा अन्येऽग्निषु यजेरन् सोऽन्यये वैश्वानराय द्वादशकपालं [पुरोडाशं] निर्वपेत् MānŚS.99.17; 2 other fire अनुगते त्र्यहेऽतीतेऽन्याग्निनापि संसर्गे च ... पतिरेकोपवासं कृत्वा पुनराधानं कुर्यात् VaikhāGS.6.15 (99. 8)

**अन्याग्र** (anyágra) *adj.* having other (deity than Indra and Vāyu) as the first एंति वा एषं यज्ञमुखांद्यं ऐन्द्रवायवाग्रेभ्यो ग्रहेभ्योऽन्याग्रान्ग्रहान्गृह्णीते MaiS. iv. 8. 9 (iv.117.13)

[1]**अन्याग्रह** (anyāgraha) *m.* non-grasping or non-perception of something else नन्विदमंशग्रहेऽपि ... अग्रहो अर्थयानेव, न, अन्याग्रहत्वात् IṣṭaSi.268.9; अन्याग्रहे न तु भ्रान्तिशुक्तौ शुक्त्यग्रहेऽपि च IṣṭaSi.271.23.

[2]**अन्याग्रह** (anyāgraha) *m.* strange insistance पुंसोऽन्याग्रहनालापस्मित-विप्रेक्षितानि च। ... वर्जयेत् BhaviP.31B. 5 (i.10.18)

**अन्याग्रहण** (anyāgrahaṇa) *n.* non-mention or non-inclusion of other एकप्राण्याद्यङ्कद्वन्द्वासंभवेनान्याग्रहणस्यावश्यकत्वे प्रत्यासत्त्या तत्तद्वाक्योपस्थितप्राण्यङ्गस्यैव द्वितीयं गृह्यते LaŚabdeŚe.ii.131.4.

**अन्याङ्क** (anyāṅka) *n.* other mark or sign ब्राह्मण्याङ्केन समम‍न्याङ्कं न विद्यते ŚaṅkaVi. (Ā.) 108.16.

**अन्याङ्ग** (anyāṅga) *n.* 1Ai other limb or part (of body) ii rest of the parts (of the body) B other limb or part (of sacrifice) C other limb (of enunciation) 2A subsidiary to another act or rite B subordinate to another thing C another subsidiary (act) 3 other architectural unit 4 body of others thing C another subsidiary (act) 3 other architectural unit 4 body of others 1Ai other limb or part (of body) उत्सृज्य सोऽन्याङ्गमतोऽग्रहीत् RāghPāṇ. (Dha.) 18.97; 1Aii rest of the parts (of body), cf. अन्याङ्गदिदृक्षा; 1B other limb or part (of sacrifice), cf. अन्याङ्गानन्वय; 1C other limb (of enunciation), cf. अन्याङ्गनिरूपण; 2A subsidiary to another act or rite अन्याङ्गत्यान्यशब्दोक्त-फलसाधनरूपत्वात् ŚivārkaMaDī.i.40.3 (*on* i.1.1); अयं च स्वतन्त्रैकभक्तनिर्णय:। अन्याङ्गे उपवासप्रतिनिधौ च तदनुसारेण निर्णय: NirṇaSi.15.5; 2B subordinate to another thing, cf. अन्याङ्गता A; 2C another subsidiary (act), cf अन्याङ्गमध्य; 3 other architectural unit cf. अन्याङ्गदर्शन; 4 body of others, cf. अन्याङ्गविमर्दित.

**अन्याङ्ग** (anyāṅga) *adj.* having limbs, i.e. auxiliary elements which are other (than Kalā) कलाङ्गा उत्तमा ज्ञेया अन्याङ्गा मध्यमा: स्मृता:। ... मन्त्रा: LakṣmīT. 22.37.

**अन्याङ्गता** (anyāṅga-tā) *f.* A the state of being subordinate to another thing (विधौ विरुद्धसमावेशस्य दुष्टत्वं नानुवादे) अनुवाद इत्यन्याङ्गतायामित्यर्थ: Loc. 167.10 (*on* 3. 20); न ह्यत्र विधि: ... अपि त्वन्याङ्गतालक्षणोऽनुवाद: Kāvyānu. (He.) 139.2; समृद्धेश्वरितं यत्र ... वर्ण्यते अन्याङ्गतापत्रं तत्रोदात्तमुदाहृतम् AlaṅkāMaṅ. 216.13; 217. 8; B the state of being subsidiary to another (act) किंचित्फलसाधने स्वयं प्रधानभूतस्यापि फलान्तरसाधने अन्याङ्गतायां न तावदर्थविरोध: PūrvottaVāNaMā.17.6; पदार्थस्य तत्संबन्धित्वेन रूपणे तादृशोपकारद्वारैवान्याङ्गता-बोधकं प्रमाणम् BhāṭṭDī. ii. 337.8 (*on* vii.1.1)

**अन्याङ्गत्व** (anyāṅga-tva) *n.* A the state of being subordinate to another thing प्राधान्यम् ... वाच्यस्य व्यङ्ग्यान्तरस्य वा। ... न द्वितीयो व्यङ्ग्यान्तरा-ङ्गत्वेऽन्याङ्गत्वादेव गुणत्वसिद्धे: AlaṅkāRa.45.29; B the state of being subsidiary to another (act) न हि आधानस्यैव उपनयनस्य अन्याङ्गत्वमवधृतम् PūrvottaVāNa-Mā. 286.17; क: प्रसङ्ग अन्याङ्गत्वे MīmāKau.ii.143. 2 (*on* iii.1.7)

**अन्याङ्गत्वकल्पना** (anyāṅgatva-kalpanā) *f.* assumption of the state of being subsidiary to another (act) पूर्वं विहिताया: पूजाया: ... भाव्यान्तरा-काङ्क्षाभावेऽन्याङ्गत्वकल्पनानुदयात् SetuBa. 200. 31.

**अन्याङ्गत्वग्राहक** (anyāṅgatva-grāhaka) *adj.* which proves the state of being subsidiary to another (act) अन्यसंबन्धिनो अन्याङ्गत्वग्राहकप्रमाणाभाव इत्युक्तौ ... प्रकृतिविकृतिपदोपादानम् BhāṭṭDī.iii.186.8 (*on* x.1.1)

**अन्याङ्गत्वाभाव** (anyāṅgatvābhāva) *m.* absence of the state of being the subsidiary to another (act) अनुमत्यादीनामन्याङ्गत्वाभावात्सोमयागवत्सर्वासामङ्गत्वे-नोपक्रमसंभवात्तद्वारेणारम्भणीयास्ति NyāyMāVi.483.5 (*on* x.1.3)

**अन्याङ्गत्वावधारण** (anyāṅgatvāvadhāraṇa) *n.* ascertainment of the state of being subordinate to another (act) उपनयनस्यान्याङ्गत्वं नावधृतमित्यसिद्धं तस्यान्याङ्गत्वावधारणात् PūrvottaVāNaMā.286.19.

**अन्याङ्गत्वासंभव** (anyāṅgatvāsambhava) *m.* impossibility of the state of being the subsidiary to another (act) उपवीतस्यान्याङ्गत्वासंभवात् महाप्रकरणात् दर्शपूर्णमासाङ्गत्वम् MīmāKau.ii.204. 24 (*on* iii.1.21)

**अन्याङ्गदर्शन** (anyāṅga-darśana) *n.* act of seeing other architectural unit अभियोगो द्विधा ज्ञेय: शङ्कया प्रत्ययेन वा। असत्संसर्गत: शङ्का प्रत्ययोऽ-न्याङ्गदर्शनात् Mānaso.ii.20.1264.

**अन्याङ्गदिदृक्षा** (anyāṅga-didṛkṣā) *f.* desire to see the rest of the parts (of body) विपन्नश्च तदन्याङ्गदिदृक्षाव्यसनेन स: KathāSaSāg. xiv. 2. 65.

**अन्याङ्गन** (anyāṅgana) *n.* other land or area अन्यत्र वञ्चितनिशं परिलेहिताङ्गमन्याङ्गनागतमिवागतमुष्णरश्मिम्। प्रातर्निरीक्ष्य Hāsyārṇa. 2.1.

**अन्याङ्गना** (anyāṅganā) *f.* 1 other woman इन्दौ स्रष्टुमुपागतेऽपि सहसा नि:शङ्कमन्याङ्गनां मा मा मा स्पृश मा स्पृशेति ... रोहिणी जल्पति BhāvŚ. 14; 97; 2 wife of other person अन्याङ्गनां गत्वा तदुक्तार्थं समाचरेत् BrahmāṇḍP. iii. 8. 16; उन्मादो मरणम् ... तद्विनिवारणाय पुरुषैरन्याङ्गना चात्मभिर्द्रष्टव्येति वदन्ति काश्यपमरुक्षेमेन्द्रवात्स्यायना: PañcSā. 4.19; नान्याङ्गनासु च मन:, शर। सप्त तालान् भित्त्वा तदा प्रविश भूतलमव्यगाधम् MahāN. 4. 65; 5. 51; 3A type of Abhisārikā (woman who goes to meet her lover) कुलजान्याङ्गना वेश्या त्रिधा स्यादभिसारिका ŚṛṅgāTi.(Ru.)1.151; 3B type of heroine ऊढा च कन्यका चेति द्विविधान्याङ्गना भवेत् । ... त्रयोदशविधा स्वीया द्विविधान्याङ्गना मता BhāvPra.(Śā.)95.3 (4); 4 ordinary woman, cf. अन्याङ्गनासह्य.

**अन्याङ्गनागत** (anyāṅganāgata) *adj.* who has come from other woman (after meeting), अन्यत्र वञ्चितनिशं परिलेहिताङ्गमन्याङ्गनागतमिवागतमुष्णरश्मिम्। प्रातर्निरीक्ष्य Hāsyārṇa. 2.1.

**अन्याङ्गनाङ्गप्रसङ्गिन्** (anyāṅganāṅga-prasaṅgin) *adj.* attached to or fond of the body of other woman (पुंस:) ताभिराश्लिष्यमाणाश्च ... घृतवत्प्रविलीयन्तेऽन्याङ्गनाङ्गप्रसङ्गिन: VarāṅgaC.5.63.

**अन्याङ्गनाजन** (anyāṅganājana) *m.* another group of women अशक्यं ध्यातुमप्यस्या: सुतपोऽन्याङ्गनाजनै: PadmP.(Ra.)65.53.

**अन्याङ्गनाप्रणय** (anyāṅganā-praṇaya) *m.* affection or love for other woman चक्रे ध्रुवं स पुनरर्धशरीरदानादन्याङ्गनाप्रणयसंगमनाभ्यनुज्ञाम् BhikṣāKā.25.6.

**अन्याङ्गनारति** (anyāṅganā-rati) *f.* sexual intercourse with other woman (said to be a sin) अन्याङ्गनारति:। कर्म पञ्चविधं प्राहुर्दुष्कृतं धरणीपते: BrahmāṇḍP. iii.6.37.

**अन्याङ्गनावीक्षणविभ्रम** (anyāṅganāvīkṣaṇa-vibhrama) *m.* amorous gesture of the eyes of other woman जरैव धन्या वनिताजनानां यस्या: समाश्लिष्टभाजि पुंसि। अन्याङ्गनावीक्षणविभ्रमाणां न जातु जायते समागमश्री: YaśasCam.ii.84.4.

**अन्याङ्गनासंगम** (anyāṅganā-saṅgama) *m.* sexual intercourse with other woman कान्त: कुचादिककरेण वेणीमेणीदृश: कर्षति कौतुकेन। अन्याङ्गना-संगमशुद्धिहेतो: श्यामां भुजङ्गीमिव हेमकुम्भात् RasiJī.7.1124.

**अन्याङ्गनासह्य** (anyāṅganāsahya) *adj.* unendurable or intolerable by ordinary woman पुरा तु मत्वामिनि निर्गतेऽस्मिन्नन्याङ्गनासह्यमवापि दु:खम् (मया) VarāṅgaC.22.23.

**अन्याङ्गनिराकृत** (anyāṅga-nirākṛta) *adj.* rejected by other limbs अयम् ... चन्द्रमन्याङ्गनिराकृतस्याकरूयेव(?अकरुणयेव) काश्यस्यावकाशं ददाति AvantiKa.79.17.

**अन्याङ्गनिरूपण** (anyāṅga-nirūpaṇa) *n.* exposition of other limb (of enunciaion) काकुरेवात्र प्रधानम्। ... अन्यथाङ्गषट्कमध्यपतितस्योपसंहारोऽन्याङ्गनिरूपणं चाभिधानमिति सर्वमसमञ्जसं स्यात् AbhinBhā. ii. 386. 24 (*on* 17.103)

**अन्याङ्गभाव** (anyāṅgabhāva) *m.* subordination to another न हि स्वातन्त्र्येण पुरुषार्थसाधने शक्तः तत्साधनार्थमन्याङ्गभावं भजते PūrvottaVāNaMā. 16.18.

**अन्याङ्गभूत** (anyāṅga-bhūta) *adj.* which has become a subsidiary to another (act) अन्याङ्गभूतानुयाजोत्तरत्वस्यापि संभवेनोत्कर्षे प्राप्ते न तावद्विकृतावेव क्रमक्लृप्तिः BhāṭṭDī. ii.173.3 (*on* v.1.15); निषेधोऽपि चात्र न विधेयक्रियाङ्गभूत एव विवक्षितः अपि त्वन्याङ्गभूतोऽप्यविशेषात् BhāṭṭDī. ii. 298. 15 (*on* vi.5.12)

**अन्याङ्गमध्य** (anyāṅga-madhya) *m., n.* [Loc.] in the middle of another subsidiary (act) गीतकविधिः प्रथमाङ्गानन्तरमन्याङ्गमध्येऽपि च वर्धमानप्रयोगस्य चित्रेऽपि भावात् ... न पुनर्गणनार्हमिति न दोषः AbhinBhā. i. 217.18 (*on* 5. 22)

**अन्याङ्गलोप** (anyāṅga-lopa) *m.* loss of another subsidiary (act or rite) विशसनादिपदार्थलोपेऽप्यन्याङ्गलोपे प्रमाणाभावात् शेषं यत् स्विष्टकृत्प्रयाजादि तदान्येन संस्थापयति BhāṭṭDī. iii. 183. 19 (*on* ix. 4. 13)

**अन्याङ्गविकल** (anyāṅga-vikala) *adj.* deficient in other limb (of body) (खञ्जमन्यं वापि ... ब्रुवन्दाप्यो दण्डम्) खञ्जं पादविकलम्। अन्याङ्गविकलमपि वा BālamBha. ii. 300. 5 (*on* 2. 204)

**अन्याङ्गविमर्दित** (anyāṅga-vimardita) *adj.* touched by the limbs of others नरान्तरमुखक्लेदपूर्णेऽन्याङ्गविमर्दिते। उच्छिष्टभोजने वक्तुं भद्रे वाञ्छति को नरः PadmP.(Ra.)12.126.

**अन्याङ्गविषय** (anyāṅga-viṣaya) *adj.* referring to another subsidiary (act or rite) यद्यप्यशक्तिकृतं हापनं तदपि एको यथा शक्नुयादित्युपबन्धादन्याङ्गविषयं विज्ञायते TantrVā. 887.17 (*on* iii. 3.19)

**अन्याङ्गसंस्थित** (anyāṅga-saṁsthita) *adj.* put on other part (of body) अन्याङ्गसंस्थिताः सर्पाः तदङ्गाभरणानि च। बभूवुः ŚivaP. ii(3). 39 40 (170A.4)

**अन्याङ्गसङ्ग** (anyāṅga-saṅga) *m.* contact with other part (of body) सांमुख्यं वस्तुजातं नयति ननु चिदीशस्य यद्दर्शनाढ्यं नेत्रद्वंद्वम् ... विमलमिति ततोऽन्याङ्गसङ्गं विहाय Subhāṣi. 1013.

**अन्याङ्गानन्वय** (anyāṅgānanvaya) *m.* absence of connection or relation with other limb or part (of sacrifice) आज्यभागान्वयात्पूर्वमन्याङ्गानन्वयात् ... अतिदेशपरिलोपकत्वम् BhāṭṭDī. iv. 82. 21 (*on* x. 7. 9)

**अन्याङ्गानुष्ठान** (anyāṅgānuṣṭhāna) *n.* performance of another subsidiary (act or rite) यदि तु प्रधानान्तरसंनिधावन्याङ्गानुष्ठानं तदा तेनैव ... अङ्गानि विप्रकृष्येरन् VedāntKa. 34.11 (*on* i.1.1)

**अन्याङ्गुलद्वय** (anyāṅgula-dvaya) *n.* two remaining fingers (i.e. thumb and little finger) सपादवेदभागं तु दीर्घमन्याङ्गुलद्वये ŚilpaRa. ii. 5. 31.

**अन्याङ्गुलान्तर** (anyāṅgulāntara) *n.* (distance of) another finger-breadth अन्याङ्गुलान्तरं चैकं ततः सप्ताङ्गुलं भवेत् BhaviP. 373A. 22(ii (2).14 (?13).16)

**अन्याङ्गोपाङ्गादि** (anyāṅgopāṅgādi) *adj.* other limb and minor or sub-limb etc. तत्त्वकल्पन इन्द्रियसंख्या न व्यवतिष्ठते। अन्याङ्गोपाङ्गादीनामपि इन्द्रियत्वप्रसङ्गात् SyādvāMañ.15(123)

**अन्याङ्घ्रि** (anyāṅghri) *m.* foot of other, i. e. untouchable person उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः। जानन्त्यन्याङ्घ्रिसंवृत्तशिरस्ताडनसंनिभम् RājTa. (Ka.) 7. 439...

**अन्याचार** (anyācāra) *m.* 1 behaviour or conduct of another person कार्यार्थिनो हि लोकस्य किमन्याचारचिन्तया YaśasCam.i.446. 5; 2 practice or duty of other (family or caste) कुलाचारं परित्यज्य अन्याचारं व्रजन्ति ये। एतत्पातकसंचारं कथितं तत्त्ववेदिभिः PadmP. ii. 67. 6; ब्राह्मण्यादिव्रतसंत्यागश्चान्याचारनिषेवणम् ... स्वकर्मत्यागिनश्च ये ... एतैः स्त्रीनराः पापैरुपपातकिनः स्मृताः ŚivaP. v. 6. 11(412A. 9)

**अन्याचार्य** (anyācārya) *m.* other teacher (of grammar) फिषिति प्रातिपदिकस्यैव पुनरन्याचार्यकृता संज्ञा Nyās. i (2). 839.15 (*on* iv.1. 37)

**अन्याचार्यसंज्ञा** (anyācārya-sañjñā) *f.* technical or conventional term (made) by other teacher (of grammar) श्वस्तनीति। लुट इयमन्याचार्यसंज्ञा Nyās. i(2). 684. 5 (*on* iii. 3.15)

**अन्याचिद्रूप** (anyācidrūpa) *n.* other insentient form (विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते) चिदेव घना अन्याचिद्रूपव्यामिश्रणशून्या यस्य रूपम् PratyabhiVi.ii.246.12 (*on* iii.2.2)

**अन्याचेतनपञ्चद्रव्य** (anyācetana-pañcadravya) *n.* other insentient five substances अन्याचेतनपञ्चद्रव्याणामसंभवत्सच्छुद्धबुद्धैकस्वभावं परमात्मद्रव्यं निश्चिनोति TātpaVṛ.189.10 (*on* 2. 42)

**अन्याच्छादन** (anyācchādana) *n.* act of covering other thing तार्प्यादिना कौपीनाच्छादनस्यापि कर्तुं शक्यत्वात् ... अन्याच्छादनेऽपि ... परिदधातिपदप्रयोगात् यद्यपि न कौपीनाच्छादन एव तद्विधानं, तथापि ... तार्प्यादिरुभयत्रैव विधानादुभयत्रैवाहतनिवृत्तिः BhāṭṭDī.iii.281.18 (*on* x.4.8)

**अन्याजादिप्रत्यय** (anyājādipratyaya) *m.* other suffix with vowel as its initial (letter) अजादीनां मध्ये प्रथमौ यावजादी अन्याजादिप्रत्ययापेक्षया लब्धप्रथमव्यपदेशौ Pradī.vi.109B.29 (*on* vi.1.102)

**अन्याज्ञा** (anyājñā) *f.* A command of another person ममाज्ञा प्रभवेदत्र नान्याज्ञा प्रभवेदिह SkandP.iv.26.101; B command of one person अन्याज्ञादिनान्ये हते आज्ञादिकर्तुरेव वधफलं पूर्णं युक्तम् BālamBha. iii. 134. 4 (*on* 3. 243)

**अन्याज्ञान** (anyājñāna) *n.* 1 nescience of another व्यावृत्तिज्ञानस्यान्याज्ञाने द्वारत्वापत्त्या ब्रह्मज्ञाने द्वारत्वायोगात् Nyāyāmṛ. 457A. 6; द्रव्यघटजातिमदादीनां विषयाणां भेदादेकज्ञानादन्याज्ञानं न निवर्तते LaCandr.678.28; 2 another nescience वृत्तिज्ञानम् ... अन्याज्ञानप्रयुक्तस्य घटो न भातीति व्यवहारस्यानुत्पत्तौ प्रयोजकम् LaCandr. 488.19; GuruCandr.ii.152.17.

**अन्याटवी** (anyāṭavī) *f.* another forest हित्वारविन्दमकरन्दमधो मिलिन्दाः। अन्याटवीं कुमतितः ... ते भ्रमन्ति PadyāTa.259.

**अन्याट्टहास** (anyāṭṭahāsa) *m.* loud laughter of others व्यात्युक्षीभिर्निर्जितान्यात्(?ट्ट)हासं पर्यष्वञ्जिव्यञ्जितप्रेम सुभ्रूः HarVi.18.45.

**अन्यातक** (anyāta-ka)(= ajñataka) *adj.* not known सो सत्वो स्वकं शालिभागं परिरक्षन्तो अदिन्नमन्यातकं शालिभागमादियेय MaVastuAva.i.346.11.

**अन्यातिक्रम** (anyātikrama) *m.* [Inst.] by transgressing other बहुष्वासीनेष्वन्यातिक्रमेण लोकेर्गृह्यते LaŚabdeŚe. ii. 398. 5.

**अन्यातिशायिगुण** (anyātiśāyi-guṇa) *m.* quality excelling that of other अन्यातिशायिगुणगीतमपि प्रसह्य वैरङ्गिकं जनयते जडिमैक एव VasaViKā.7.69.

**अन्यातिसंधान** (anyātisandhāna) *n.* act of overreaching or outwitting other चेष्टयान्यातिसंधानं वदन्त्यधिबलं बुधाः BhāvPra.(Śā.) 211.5(7)

**अन्यात्तहास** (anyāttahāsa) *m.* loud laughter of others व्यात्युक्षीभिर्निर्जितान्यात्तहासं पर्यष्वञ्जिव्यञ्जितप्रेम सुभ्रूः HarVi.18.45.

**अन्यात्मक** (anyātma-ka) *adj.* having the nature or form of another साक्षात्फलमिति ... अन्यात्मकमिति मतिराहार्या तत्त्वं क्वचिदपि न तिरोदध्यात् NayaMañ. IV.i.5.10.

**अन्यात्मकता** (anyātmaka-tā) *f.* the state of having the nature or form of another तस्य च प्रतिबिम्बस्य गतावेवानुगम्यते। सामर्थ्यादन्यविश्लेषो नास्त्यान्यात्मकता यतः TattvSaṁ. 1019.

**अन्यात्मता** (anyātma-tā) *f.* the state of having the nature or form of another नान्यस्यान्यात्मता यस्माद्ध्वंसे वाध्वंस एव वा TaiUBhāVā. 153. 8 (2); IṣṭaSi.234.19; अन्यस्यान्यात्मतायाः साधकत्वेनोपन्यसिष्यमाणैः प्रत्यक्षादिभिर्न मिथ्यात्वमनुभवितुं शक्यते VivaPraSaṁ. 30. 4; नन्वन्यस्यान्यात्मता सती उतासती NyāySu. (Ja.) 46A. 5 (*on* i.1.1)

**अन्यात्मतानुपपत्ति** (anyātmatānupapatti) *f.* untenability of the state of having the nature or form of another परिच्छिन्नस्यापरिच्छिन्नेन तादात्म्यमिति चेत्, न। पूर्वरूपे स्थिते नष्टे वान्यस्यान्यात्मतानुपपत्तेः SiddhāTa. 3.19.

**अन्यात्मताप्राप्ति** (anyātmatā-prāpti) *f.* obtainment of the state of having the nature or form of another अन्यस्यान्यात्मताप्राप्तौ न क्वचिद्धेतुसंभवः NaiṣkaSi. 40. 8.

**अन्यात्मतावभास** (anyātmatāvabhāsa) *m.* appearance of the state of having the nature or form of another बाधनिमित्तमितरेतरविवेकमन्तरेण अन्यस्यान्यात्मतावभासोऽयमित्यवगन्तुमशक्यत्वादस्त्येव बाधः, इति चेत्, मैवम् VivaPraSaṁ. 30.7; 31.3.

**अन्यात्मताविभ्रम** (anyātmatā-vibhrama) *m.* wrong notion or illusion of the state of having the nature or form of another अन्यस्य अन्यात्मताविभ्रमः लोकसिद्धः Bhām.19. 3 (*on* i.1.1)

**अन्यात्मत्व** (anyātma-tva) *n.* the state of having the nature or form of another न च विषयस्य सुखादिरूपत्वाभावे तज्ज्ञानादान्तरसुखोदयो न स्यादिति

वाच्यम्। ... सुखदुःखमोहात्मत्ववल्लाघवादिकार्यवशादन्यात्मत्वस्यापि कल्पनाप्रसङ्गेन त्रैगुण्यव्यवस्थाभङ्गप्रसङ्गात् ŚivārkaMaDī.ii.57. 25 (*on* ii.2.1)

**अन्यात्मत्वादि** (anyātmatvādi) *adj.* the state of having the nature or form of another etc. स्वरूपेण भावोऽन्यात्मत्वादिनाभावः NyāySu.(Ja.)412A.2 (*on* ii. 2.10)

**अन्यात्मन्** (anyātman) *adj.* **1** having mind in one who is of another kind धृतराष्ट्रस्य सोऽस्यात्मा (v. 1. Lakṣābha. अन्यात्मा विवृतान्तरः)... वच्यः स्यादन्यथा ब्रुवन् MahāBhā. v. 70. 7 (Lakṣābha. अन्यादृशे स्वपुत्रे आत्मा चित्तं यस्य सः); **2** having the nature or form of another, cf. अन्यात्मता.

**अन्यात्मन्** (anyātman) *m.* **1**[Inst.] in the nature or form of another अन्यात्मनापरख्यातिः स चाभावोऽस्य तन्मृषा VibhraVi. 132; योऽन्यात्मास्य सत्त्वेऽपि बाधे रूप्यात्मनास्ति न IṣṭaSi.158. 6; 269. 8; स दुष्टोऽन्यदन्यात्मना भासयति Kāśi. i.222.11 (*on* 4. 39); अन्यस्यान्यात्मना प्रतीतिः तथा (विपर्ययः) इति निराकृतम् TarkSaṁ. (Ā.) 81. 10; उपाधिभेदस्तु स्वात्मना सत्त्वमन्यात्मना पुनरसत्त्वम् ŚatDū. 220.7; प्रकृतादन्यात्मना प्रतीतेरेव भ्रान्तित्वात् Vādā.11.1; न चैतदात्मनास्याक्षेपो न त्वन्यात्मनान्यस्येति नियमहेतुरस्ति SiddhāSi. i. 14. 22; **2A** different soul नित्यानित्येऽनित्यनित्याभिमानं भित्त्वान्यात्मन्यात्मनानात्मवत्ताम्। याति ... सौख्यम् Kapphiṇā. 20. 21; **2B** another person, cf. अन्यात्मविदित; **3** other than the soul, i.e. non-soul or non-self अन्यात्मन्यात्मभावेन देहमात्रास्थयानया। पुत्रदारकुटुम्बेश्च चेतो गच्छति पीनताम् YogVā. v.50.57.

**अन्यात्मप्रतिषेध** (anyātma-pratiṣedha) *m.* negation or prohibition of different soul 'सुखितोऽहं' 'दुःखितोऽह'मित्येवमादि प्रत्यक्षविज्ञानम् ... 'नान्यदतोऽस्ति द्रष्टृ' इत्यन्यात्मप्रतिषेधात् BṛĀraUBh.100.10 (*on* i. 4. 7)

**अन्यात्मभाव** (anyātmabhāva) *m.* notion of the soul or self in non-soul or non-self अन्यात्मभावनिवृत्तौ आत्मभावः स्वात्मनि स्वाभाविको यः स केवलो भवति BṛĀraUBh. 639.10 (*on* iv. 4. 20); अन्यात्मभावोऽस्त्विति चेत्, न IṣṭaSi.240.15.

**अन्यात्मलाभ** (anyātma-lābha) *m.* **1** knowledge of another, i.e. non-self as the self आत्मलाभः परो लाभः इतिशास्त्रोपपत्तयः। अलाभोऽन्यात्मलाभस्तु त्यजेत्तस्मादनात्मताम् UpadeSā. 286. 44; **2** obtainment of the nature of another अपरेभ्यस्तु सिद्धे कर्तरि अन्यात्मलाभविषयव्यापारप्रतीतिः TantrVā. 342.11 (*on* ii.1.1)

**अन्यात्मविदित** (anyātma-vidita) *adj.* known by another person अन्यात्मविदितं बाह्यमस्मदभ्यर्चनादिकम् ŚivaP. vii(2).10. 49(555B.7)

**अन्यात्मविषय** (anyātma-viṣaya) *adj.* referring to different soul प्राकृतसंबन्धापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविषया फलहेतुभ्यान् अन्यात्मविषयदर्शनेऽपि सति इष्टफलहेतौ प्रवर्तितोऽस्मि ... इति GītāBh. (Śaṅ.) 365.18 (*on* 13.2)

**अन्यात्मस्फुरण** (anyātma-sphuraṇa) *n.* manifestation of different soul न शवत्वं शरीरे स्यादन्यात्मस्फुरणस्थितेः ŚivDṛ.6.103.

**अन्यात्माधिष्ठित** (anyātmādhiṣṭhita) *adj.* occupied by different soul क्रमेण मनुष्यादिजातीयसर्वदेहपरिग्रहेऽपि नान्यात्माधिष्ठितदेहगतत्वं समुद्रान्तःपातिवालुकादिगतत्वं वा LaCandr. 854. 27.

**अन्यादर्शन** (anyādarśana) *n.* **1** non-finding of any other (deity) वनस्पते यूप एव आहोस्विदन्या काचिद्देवतेति संदिह्यते। ... यूप एवेति। कथम्। अन्यादर्शनात् SaṅkarKāBh. 78. 22 (*on* ii. 2. 4); **2** non-perception of any other thing (धर्माः) अन्यादर्शनादयो भगवति न विरुध्यन्ते AṇuBh.77.8 (*on* i. 3. 9)

**अन्यादान** (anyādāna) *n.* **1** act of accepting from other अन्ना(?ना)दान- (v.1.अन्यादान) विसर्गाभ्यामीषन्नास्ति क्रिया मुनेः ViveCū. 284; **2** act of producing other (cognition) अशक्तिरनुपादानादन्यादानादनन्तता ĀtmaTaVi. 780. 4; **3** act of taking away or snatching by other अन्यादानाकुलान्तःकरणवशविपद्धाधितप्रेतरङ्कम् ... अपरमिव व्योम्नि वृत्तं श्मशानम् SubhāRaK. 44.13.

[1]**अन्यादि** (anyādi) *adj.* **1** (word) having (consonant which is) other (than *y* or *v*) at the beginning अन्याद्यपि तथायुक्तमावोऽन्तोपहितात्सतः ṚPrāti. अन्यादेस्तु तुः Kātan. ii. 2. 2. 15; **2** (class of words) beginning with *anya* अन्यादेस्तु तुः Kātan. ii. 2. पञ्चतोऽनेक- 8 (Vṛ. अन्यादेर्गणान्नपुंसकलिङ्गात्परयोः स्यमोर्लोपो भवति तुरागमश्च); तोऽन्यादेर्मोऽनेकतरात् तरस्यान्यादेर्दक् स्वमोः ŚākaṭāVyā. i. 2. 2; SiddhaHe. i. 4. 58; **3** the word or expression *anyādi* अन्यादि- MugdhaBo. 3. 88 (23. 20); भेदनिमित्ता अन्यादिशब्दा पदपदार्थतत्संबन्धासिद्धेरन्यतः शास्त्रासिद्धेः IṣṭaSi. 236. 8; अन्यादिशब्दार्थभेदादेः क्रियात्वाभावेन भेदशब्दाः NyāySu. (Ja.) 131B. 13 (*on* i. 1. 6); अन्यादिपद- कारकत्वासंभव इति मुनिः सूत्रान्तरं प्रणिनाय VyutpaVā.182.26; अन्यादिपद- समभिव्याहारे तु पञ्चम्युपपदविभक्तिः BhāṭṭCin. i. 105. 9 (*on* i. 1. 4); अन्यादिपदकदम्बेनैवैतादृशार्थलाभात्र तद्वैयर्थ्यम् AlaṅkāKau. (Vi.)16.16; **4** another etc., cf. अन्यादिबुद्धि.

[2]**अन्यादि** (a-nyādi) *adj.* (Gr.) (elements which are) other than the augment *nī* etc. आगुणावन्यादेः (न्याद्यागमवर्जस्य) SiddhaHe. iv. 1. 48.

**अन्यादिबुद्धि** (anyādi-buddhi) *f.* notion of another etc. नानुकार इति प्रमितव्यम्। अनेन भाण्डेन राजपुत्रस्य वानुकृतेऽन्या(कृतावन्या)दिबुद्धेरभावात् AbhinBhā.i.36.20 (*on* 1.107)

**अन्यादियोग** (anyādi-yoga) *m.* [Loc.] in connection with the word or expression *anya* etc. अन्यादियोगे पञ्चमीं बाधित्वा षष्ठी स्यात् Pradī. iv. 369A. 24 (*on* v. 3. 28)

**अन्यादृक्ता** (anyādṛk-tā) *f.* [Inst.] as being other type (बिम्बं यादृग्वि दर्पणे। तादृङ्मुखादि बुध्यन्ते न चात्राननुमानता) मुखमप्यादर्शगतं बिम्बानुरूपमनुमिनोति। इतरथा त्वङ्गुलिसंनिकर्षेऽप्यन्यरूपमन्यादृक्तया बोधयतीति संभावयेत् Kāśi.iii.113.16 (*on* 5(4).27)

**अन्यादृक्त्व** (anyādṛk-tva) *n.* the state of being different, i.e. difference or distinction (भद्रवकानाम्) अयनांशवशादेषामन्यादृक्त्वं च जायते GrahaGa.161.4 (17.18)

**अन्यादृक्ष** (anyādṛkṣa) *m.* name of a Marut (*lit.* extraordinary) ईदृक्च पुरुषश्चैव अन्यादृक्षश्च चेतसः। ... प्रतिदृक्षश्च वै गु(ग?)णाः। एते ह्येकोनपञ्चाशन्मरुतः नामतो स्मृताः VāyuP. ii. 6. 128.

**अन्यादृक्ष** (anyā-dṛkṣa) *adj.* [*f.* –ā] [P.iii.2.60; CāndraVṛ. *on* i. 2. 51; KāśiVṛ. *on* iii. 2. 60; JaineVṛ.107. 31 (*on* ii. 2. 58); KātanVṛ. *on* iv. 3.75; MugdhaBo. 26. 83 (159. 2); PrakriKau. ii. 531. 4; SiddhāKau. 99A.1 (*on* iii. 2. 60); 497A. 7 (*on* iii. 2. 57); AltGr. III. 592] **1** excellent, extraordinary यान्यादृक्षेव साक्षात्कृतनयनपथातीतवस्तुस्वरूपा दैवी वर्तिः कुवृत्तीरपहरतुतरामर्हतां वागसौ वः JinaŚ. 4. 18; **2A** incongruent, dissimilar सुतं नृपः शक्रसदृग्न्यधित्सत्। स्वर्गादनन्यादृश आत्मराज्येऽन्यादृक्षमेतद्धि तादृशानाम् DvyāśraKā. 6.103 (comm. नान्यादृक्षं नासदृशम्); **2B** different, distinct नान्यादृक्षां सदृक्षीं किं त्वाद्यानामुद्वहन्स्थितिम्। ... विप्रादीन् रक्षिता भव DvyāśraKā. 11.109 (comm. पूर्वपुरुषस्थितिसकाशात्र विपरीताम्); तमेव चूतमद्राक्षमन्यादृक्षमिव व्रजन् MalliC. 1. 204; अन्यादृक्षेव वामाक्षि कार्श्येनानेन लक्ष्यसे ParamāKā. 57.13; **2C** of different kind, अन्यादृशं विलक्षणमन्यादृक्षं तथान्यादृक् KośaKaTa. 2. 647.

**अन्यादृक्षप्रमाण** (anyādṛkṣa-pramāṇa) *n.* different kind of means of knowledge अन्यादृक्षप्रमाणस्य न च नास्त्यत्र संभवः BṛĀraUBhVā. (Sambandha.) 858.

**अन्यादृग्गुण** (anyādṛg-guṇa) *adj.* **1** possessing one kind of attribute एकस्यापि प्राणस्य तत्र तत्र उपास्यस्य अभेदेऽपि अन्यादृग्गुणोऽन्यत्र उपासितव्यः अन्यादृग्गुणश्चान्यत्र BrahmSūBh. (Śaṅ.) 708. 9 (*on* iii. 3. 58); **2** possessing other kind of attribute, BrahmSūBh. (Śaṅ.) 708. 9 (*on* iii. 3.58)

**अन्यादृङ्मुखराग** (anyādṛṅ-mukharāga) *m.* distinct facial colour (due to feeling of love) न प्रमाददेव नायिकान्तरसंगमनं तव, अपि तु गाढानुरागादेव। अन्यादृङ्मुखरागगोत्रस्खलनादि च Loc. 21.19 (*on* 1. 4)

**अन्यादृश्** (anyā-dṛś) *adj.* [P. iii. 2. 60; Vār. 1 *on* P. iii. 2. 60; MahāBh. ii. 107. 7 (*on* iii. 2. 60); KāśiVṛ. *on* iii. 2. 60; JaineVṛ. 107. 31 (*on* ii. 2. 58); KātanVṛ. *on* iv. 3. 75; *on* iv. 6. 69; BhāṣāVṛ. vi. 3. 91; PrakriKau. i. 273. 5; ii. 531. 3; SiddhāKau. 497A. 5 (*on* iii. 2. 57); AltGr. III. 592; Debru. 724] **1A** like another, resembling another, appearing like another **B** of another type or kind **2** looking (at oneself) as another **3Ai** different, distinct **ii** changed **iii** changed, i.e. lost **B** dissimilar (effect) **4** (**used as noun**) (that) which is contrary **5** of one type or kind **6** unique, excellent, extraordinary **7** the word *anyādṛś* **1A** like another, resembling another, appearing like another अन्य इवायमन्यादृक् MahāBh. ii. 107.12 (*on* iii. 2. 60); बाहुबलिः ... आगतः। तं वीक्ष्येऽन्यादृशमिव भूयान् कालोऽत्र कारणम् TriṣaŚaPuC. i. 5. 464; स्वच्छस्वभावोऽपि भवत्यवश्यमन्यादृगन्यायिजनाश्रयेण Surath. 1.60; किं पुनरद्य भगवन्तमन्यादृशमिव विभावयामि TripuDi. 4. 1 (8); **1B** of another type or kind न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य संभवतः BrahmSūBh. (Śaṅ.) 176. 15 (*on* i. 3. 19); श्रोतारः ... अन्यादृशोऽपि सन्त्येव MahāP. 1.140; अज्ञानहेतोरन्यादृक्स च ज्ञानान्निवर्तते BṛĀraUBhVā. i. 4. 1018; क्रोधेन यातुधानः पुनरन्यमन्यादृशा प्रहारोपक्रमेण शाखिनं व्यमुञ्चत् UdaySuKa. 80. 1; व्याकरणादधिगतमपि कविवदने शब्दवृन्दमन्यादृक् SūktiMu. 4. 20; अनिवर्तमाने (पूर्वप्रतीतविपरीतविध्यनुवादभावे) हि तस्मिन्नन्यादृशं विध्यनुवादभावमाश्रित्यैव वाक्यार्थं

प्रतिपादयन्ति CaturCin. iii. (1). 114. 12; आमर्दितैकद्विशरासमासीदन्यादृगूष्मायितमङ्गजस्य ŚivLī.20.34 [अन्यादृशं विलक्षणमन्यादृक्षं तथान्यादृक् KośaKaTa. 2. 647]; 2 looking (at oneself) as another अन्यमिवेमं पश्यन्ति जनाः सोऽयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति। अन्यादृगिति MahāBh. ii.107. 15 (*on* iii. 2. 60); **3Ai** different, distinct कृत्वान्यं देहमन्यादृक् तादृक् कृत्वा पुनर्हरिः। कुरुते जगतः कृत्यमुत्तमाधममध्यमम् MatsyaP.154.357; न चान्यरूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम् TattvSaṁ. 949; करोति भावयतीत्येताभ्यामपि श्रुत्या तावदन्यादृगेवार्थः प्रतीयते TantrVā.352.11 (*on* ii.1.1); अन्यादृग्वाक्यश्लेषो विरोधोऽसौ Kāvyālaṅ. (Ru.)10.5; लौकिके वैदिके चैव तस्य (हरसिंहदेवस्य) कार्ये विनिश्चयः। भवत्यन्यादृशस्तस्य कुतश्चन्द्रामलं यशः PuruṣPa.64.22. **3Aii** changed कामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि MālaMā.1.188; अन्यादृशं भावमुपलक्ष्य तयोर्द्वयोः। सुदर्शनोऽब्रवीत् KathāSaSāg. ix. 2. 303; वानरश्चकिताकुलम् (शिशुमारम्)। सखेऽन्यादृशमद्य त्वां पश्यामीति स पृष्टवान् KathāSaSāg. x. 7.114; **3Aiii** changed, i.e. lost न तस्याश्चित्तमन्यादृक् KathāSaSāg. xviii. 4. 147; **3B** dissimilar (effect) नान्यो विलक्षणो हेतुर्येनान्यादृक्फलं भवेत् ŚlokaVār.5 (2).198 (266.1); **4** (**used as noun**) (that) which is contrary नातीन्द्रिये हि युज्येते सदसत्ताविनिश्चयौ। निश्चयो वेदवाक्याच्चेदन्यादृग्न किमन्यतः TattvSaṁ. 2390; हस्ततलार्पितामलकवत् तात्पर्यसंवेदने सत्यन्यादृगुदीरयन्ति SaṁkṣeŚā.1.262 (i. 201.13); **5** of one type or kind नास्त्यन्यादृशि स्वलक्षणे प्रतिपन्नेऽन्यादृशस्य सामान्याकारस्य ज्ञानस्य वासनातः प्राप्तिः Śarka.55.10; **6** unique, excellent, extraordinary नित्यं विधिः सततसंनिहितो विभूतिमन्यादृशं सृजति ... धनंजयाय RāghPāṇ.(Dha.)1.52; (विष्णुम्) तं ददृशुर्देवाः शेषपर्यङ्कमास्थितम्। अधिरूढशरन्मेघमन्यादृशमिवाम्बुदम् Yādavā. 1. 66 (comm. अन्यादृशं विलक्षणं लोकोत्तरम्); (तन्वी) जनयत्यानन्दमन्यादृशम् ŚṛṅgāBhū. 36; अन्यादृशं चमत्कारमात्मानन्दैकसाक्षिणम्। दर्शयन्तीं प्रतिव्यक्ति देवीं वाचमुपास्महे AdbhuDa. 1. 2; (रामावतारो रघुनाथभूपः) नीलोत्पलान्येव नितम्बिनीनां नेत्राणि ... आमोदमन्यादृशमाप्नुवन्ति कलानिधेर्यस्य कलाविलासैः Raghunā. 3. 16; **7** the word *anyādṛś* वायुरसजातः समुद्रमहोरात्रे ... ईदृङ् चान्यादृङ् शूघनासः ... सुरभिर्नरिष्ठायै VājaPrāti.5.37.

**अन्यादृश्** (anyā-dṛś) *m.* name of particular Maruts (*lit.* extraordinary) ई॒दृङ् चा॒न्या॒दृङ् चै॒ता॒दृङ् च॑ प्र॒ति॒दृङ् च॑ मि॒तश्च॒ संमि॑तश्च॒ सभ॑राः TaiS. I. viii. 13. 2 (Sāy. ईदृङ्ङित्यादीनि मरुद्विशेषाणां नामधेयानि); TaiS. IV. vi. 5. 5; KāṭhS. 18. 6 (i. 270. 10); KapiKaS. 28. 6 (126. 4); VājaS. 17. 81; VājaS. (K.) 18. 7; पर्युपस्तारं दर्विहोमाकारमीदृङ् चान्यादृङ् चेत्यनुद्रुत्य ... चित्रज्योतिश्चेति जुहोति BaudhŚS. ii.55.16; ii.56.4; ईदृङ् चान्यादृङ् चेति सप्तभिर्गणैरासीनो हस्तेन गणेन गणमनुद्रुत्य मारुतान् जुहोति ĀpaŚS. xvii. 16.15; HirŚS. xii. 5. 28 (101.30); अरण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधाति। ईदृङ् चान्यादृङ् चेत्येताभ्याम् ĀpaŚS. xviii. 12. 12; मरुतो वै ... अन्यादृक् यादृक् च प्रतिकृत्तथा। ... संरभश्च तथा गणः VāyuP. ii. 6.127; BrahmāṇḍP. ii. 5.96.

**अन्यादृश** (anyā-dṛśa) *adj.* [*f.* -ī; -ā (irr.)] [P.iii.2.60; vi.3.91; iv.1.3; Vār.1 *on* P.iii.2.60; MahāBh.ii.107.8 (*on* iii.2.60); KāśiVṛ *on* iii.2.60; JaineVṛ.107.31 (*on* ii.2.58); KātanVṛ.*on* iv.3.75; BhāṣāVṛ.vi.3.91; MugdhaBo.26.85(159.4); PrakriKau.ii.531.2; SiddhāKau.497A.5 (*on* iii.2.57); AltGr. III.592; DEBRU. 724] **1A** like another, resembling another, appearing as another **Bi** of another type or kind **ii** of any other kind (used as noun) (means) of any other kind **C** (used as noun) another **2A** (used as noun) (that) which is dissimilar **Bi** different (used as noun) (that) which is different **ii** changed **3** unique, extraordinary (used as noun) (that) which is unique or extraordinary **4** of one type or kind **5** contrary, opposite **1A** like another, resembling another, appearing as another इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे ChāndoU. iv. 14. 2; देवता सर्वा विभान्त्यन्यादृशा इव BrahmāṇḍP. iii. 9. 37; (मदम्बा) उत्कम्पिताङ्गयष्टिरन्यादृशीव क्षणमजनिष्ट DaśKuC. 88. 4; अन्येद्युश्च प्रविष्टेन दृष्टा सान्यादृशी मया KathāSaSāg. vi. 6. 150; तं वीक्ष्येऽन्यादृशमिव भूयान् कोऽत्र कारणम् TriṣaŚaPuC. i. 5. 464; किं पुनरद्य भगवन्तमन्यादृशमिव विभावयामि TripuḌi. (8); नायमभेदो भेदाभावात्मा ... अपि त्वन्यादृश इति चेन्न ŚatDū. 84. 3; कथमद्य अन्यादृश इव दृश्यसे DhūrtaSa. 72. 8; ज्वाला ... द्वितीया त्वन्यादृशी TantrRaha. 23. 16; न ह्येकं वस्तु प्रतिक्षणमन्यादृशं भवति निमित्तभेदव्यतिरेकेण AṇuBh. 198. 3 (*on* iii. 2. 26); किं तादृशमिदं ज्ञानं उतान्यादृशमिति संशयो भवति MānaMe. 185. 1; (निलीनामिव निश्चेष्टामिवान्यत्वं गतामिव ... भ्रमन्तीमानयेन्नारीम्) अन्यत्वं गतामिव अन्यादृशीमिव SetuBa.115.10; तन्नामश्रवणात् प्रभृति मम हृदयमन्यादृशमिव वर्तते MadaKeC. 20(4); नृपतिः ... विशिष्टचिह्नयुक्तः स्यात् समयेऽन्यादृशो भवेत् ŚukraNi. 5.15; **1Bi** of another type or kind समादिष्टोऽहमार्येण ... सीताया रावणभवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां पौराणामन्यादृशाः प्रलापाः प्रवर्तन्ते KundaMā. 1. 4 (10); तस्मादन्यादृशाद् भवन्नन्यादृशो एव ततो न व्यभिचारः HetuBiṬ. 156. 15; 157. 23; 158. 16; नान्यादृशे सार्थे करोत्यन्यादृशीं मतिम् ŚlokaVār. 5 (13).101 (592. 5); न त्वन्यादृशीं प्रधानासत्तिं शक्नोति कल्पयितुम् प्राकृतबाधेन ṬupṬ.,58. 2 (*on* v. 1.24); सर्वसंपादनेऽन्यादृशः क्रमोऽन्यादृश इतरत्र ṬupṬ.71.17 (*on* v. 3. 2); 100.16 (*on* vi.1.37); 152.16 (*on* vii.1.1); नास्त्यन्यादृशि स्वलक्षणे प्रतिपन्नेऽन्यादृशस्य सामान्याकारस्य ज्ञानस्य वासनातः प्राप्तिः Śarka. 55. 10; न हि वृक्षसमुच्चयनिबन्धनो वनप्रत्ययोऽन्यस्मिन् वृक्षसमुदायेऽन्यादृशो भवति तेषां वृक्षाणां विद्यमानत्वात् Śarka. 104. 8; न त्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य संभवतः BrahmSūBh.(Śaṅ.)176.15 (*on* i.3.19); उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासंभवात् BrahmSūBh. (Śaṅ.) 191.18 (*on* i. 3. 28); न हि उपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति BrahmSūBh. (Śaṅ.) 582. 16 (*on* iii. 2. 11); ईदृश एव संबन्धः न अन्यादृशः BrahmSūBh. (Śaṅ.) 610.1 (*on* iii. 2. 35); सुकविपरंपरया चिरमविगीततयान्यथानिबद्धं यत्। वस्तु तदन्यादृशमपि बध्नीयात्तत्प्रसिद्ध्यैव Kāvyālaṅ. (Ru.) 7.8; 'अग्निहोत्रं जुहोति यवागूं पचति' इति पाठादन्यादृशेऽपि क्रमेऽवगम्यमाने अर्थात् क्रमनियमविपर्ययः Kāśi. ii. 29. 5 (*on* 5 (2). 4); 'पूर्ववत्प्रयाजशब्दत्यागेन ग्रन्थं व्याचक्षाणाः पूर्वपक्षरूपमन्यादृशमाहुः TantrRa. 100. 11; पुनरन्यादृशी जिज्ञासा जायते NyāyRaMā. 7. 4; आचार्यस्य तु ... अन्यादृशं विधितत्त्वम् अभिमतं लक्ष्यते NyāyRaMā. 47. 4; स हि विप्रलिप्सया तथाभूतेऽप्यर्थेऽन्यादृशीं हस्तचेष्टाम् ... करोति NyāyRa. 412. 8 (*on* 5 (5). 21); 935. 6 (*on* 7.316); सुभटकलितस्त्वन्यादृश एव UdaySuKa. 79.12; घटशरावादिरूपेणावस्थितायास्तस्या एव मृत्तिकाया अन्यानि नामधेयानि व्यवहाराश्चान्यादृशाः VedāSaṁ. 89. 10; अन्यादृशीयमाशीः परिपाटी (v. 1. अन्यादृशा) PrasaRā.3.36 (12); चन्द्रो मुञ्चति केशरारुणकरान्वृक्षेषु नान्यादृशान् GopāKeCan.146. 29; न तु अन्यादृशम् आनन्त्यं तत्र युक्तम् TarkSaṁ. (Ā.)129.18; यद्गुणैरवयवैर्योऽवयव्यारभ्यते तद्गुण एवासौ नान्यादृशः NyāyKu. 111. 9; अनिवर्तमाने हि तस्मिन्नन्यादृशं विध्यनुवादभावमाश्रित्यैव वाक्यार्थं प्रतिपादयन्ति CaturCin. iii(1).114.12; स एव पूज्यो न त्वन्यादृशः ManvaVi. 1055.4 (*on* 8.303); वार्त्तिककारास्त्वन्यादृशीं परिभाषां पठन्ति PariVṛ.(Sī.)134.19; आदत्ते पवनोऽपि सौरभमयीमन्यादृशीं वासनाम् ŚṛṅgāBhū. 8; उत्तरत्र ... पादचतुष्टयस्यापि गायत्र्यां, भूतपृथिवीशरीरहृदयरूपस्य प्रतिपादनमिहान्यादृशस्य ŚivārkaMaDī. i. 278. 13 (*on* i. 1. 26); अन्यादृश्या अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शित° ... °अप्रयोजकत्वात् VyutpaVā. 30.1; आखण्डलस्य तु मतिरन्यादृशी NīlaVi. 67. 7; तार्किकास्तु उपमानमन्यादृशमन्वेषयन्तो गोगतसादृश्यज्ञानमनुमानीकुर्वन्ति MānaMe. 110. 6; आशङ्के तव मन्दहासलहरीमन्यादृशीं चन्द्रिकाम् MūkaPañ. 2. 46; MayūMāli.415.13 (*on* 1.11); वक्रोक्तिरुक्तवाक्यार्थस्वीकारोऽन्यादृशः स्मृतः SāhiSā. 2. 131; [अन्यादृशं विलक्षणम् KośaKaTa. 2.647]; **1Bii** of any other kind अद्यत्ववदेव कालान्तरेऽपि प्रमाणस्वभावो नान्यादृशः NyāyRa. 80.15 (*on* 2.113); वाक्यार्थविमर्शः प्रवर्तमानो वक्त्रभिप्रायप्रतिरूप एव प्रवर्तते नान्यादृशः VyaktiVi.67.9; यद्वरणं स्वीयत्वेनाङ्गीकाररूपं तदेव न त्वन्यादृशमपीति AṇuBh. 253. 24 (*on* iii. 3. 47); औत्पत्तिकशब्देनेदमेव नित्यत्वं वक्तुं शक्यं नान्यादृशम् VaiyāSiMañ. 223.1; कर्कशात्वं च नान्यादृशं किं तु दुरूहदुरभिप्रायकत्वम् BālamBha.ii.200. 20 (*on* 2. 135-136); (**used as noun**) (means) of any other kind उपायसत्यतां मुक्त्वा नान्यादृश्युपयुज्यते BṛĀraUBhVā. i. 4. 993; यादृगवस्थितैः पदैरन्वयो वृद्धव्यवहारे दृश्यते तादृशान्येवान्वयं प्रतिपादयन्ति नान्यादृशानि ŚāstrDī.155.13 (*on* i.1.7); **1C** (used as noun) another अन्यादृशस्य (स्त्रीप्रत्ययस्य) वाचकत्वं नावधार्येत तस्मादीकारान्तः स्यात् TantrVā. 306. 24 (*on* i. 4. 11); क्रत्वर्थस्य प्रत्यासन्नफलेनान्यादृशस्य बाधः NyāyRaMā. 186. 12; दुष्करसंधिः पूर्वो निर्धनः ... अन्यादृशस्तु रक्तो भवति सुखेनेति केऽप्याहुः KandaCū. vi. 4. 31; किं ब्रूमः सहकार तावकगुणानन्यादृशैर्दुर्लभान् सौरभ्येण यदध्वगानपि मुहुः प्रीणासि दूरादपि PadyaVe. 673; **2A** dissimilar, unlike अन्यादृशस्तु पिताप्याचार्यादूनः BālaKrī.i.50.4 (*on* 1.34); (**used as noun**) (that) which is dissimilar, unlike अन्यादृशादपि तादृशो भावे तच्छक्तिनियमाभावात् न हेतुभेदः भेदकः इति अकारणं विश्वस्य वैश्वरूप्यं स्यात् PramāVāSvopVṛ. 14.16; **2Bi** different योऽयं युवा कोऽपि ब्राह्मणाकृतिरस्यावलोकयतो वदतश्चान्यादृश एवाभिप्रायो मयोपलक्षितः Kād. 309. 8; न चान्यरूपमन्यादृक्कुर्याज्ज्ञानं विशेषणम्। कथं चान्यादृशे ज्ञाने तदुच्येत विशेषणम् TattvSaṁ. 949; विषयोऽन्यादृशस्तावद्दृश्यते लिङ्गशब्दयोः ŚlokaVār. 5(5).55 (420. 7); न ह्यर्थाध्यवसानादन्यादृशं नामज्ञानं व्यवहाराङ्गं भवति TantrVā. 321.13 (*on* i. 4. 22); विन्ध्यवासिनोऽपि ... नायमभिप्रायः ... भ्रान्तैस्तु तदीयमभिप्रायमजानानैरन्यादृशमेव तद्व्याख्यातम् Śarka. 23.10; वेदवचसस्तात्पर्यमन्यादृशम् SaṁkṣeŚā. 1. 464 (i. 336. 21); एतेषां स्मृत्यन्तरेऽन्यादृशः क्रम उक्तः ManuBh. ii.297.16 (*on* 9. 180); प्रधानस्य अन्यादृशी कर्तव्यता

NyāyRaMā. 204. 16; धूमस्य तु वस्तुत एव तादृशस्य संबन्धग्रहणम् अन्यादृशाद्वाष्पादग्निप्रतीतिर्भ्रान्तिः NyāyRa.522.22 (on 5(11).53); भवतः साधनं नातित्वरितापेक्षया अन्यादृशं भवति NyāyRa. 687. 13 (on 5 (16). 24); अन्यादृशस्तु शब्दो ब्रह्मणि न दृश्यत इति चेत् ŚatDū. 185. 20; अन्यादृशी च कृतिसाध्यता न दृष्टा TattvCin. ii(2). 40. 15; वर्णः स्वाभाविकवर्णादन्यादृशो मुखकालिमादिः ManvaMu. 293. 10 (on 8.25); लोलाक्ष्या गुरुसंनिधौ मम कृतं नो वक्त्रमन्यादृशम् Subhāṣi. 1055; एकान्ते वनतो गृहं शशिमुखोऽप्यन्यादृशो दृश्यते Subhāṣi. 2239; रहस्यमालाभिन्नमालायां तु अन्यादृशः संस्कारः TantrSā.(K.)26.14; यत्र तु न्यायेन अन्यादृशं बलाबलम् ... तत्र तन्मूलभूतश्रुतिरूपवचनातिदेशेन न्यायकल्प्यातिदेशस्य बाध इत्येव द्रष्टव्यम् BhāṭṭDī. iii. 14. 3 (on viii.1. 8); असच्छब्दस्यान्यादृशास्वातन्त्र्यार्थकत्वकल्पनं भ्रान्तिः GuruCandr. ii. 306. 18; परं त्विदं बिम्बजगोलजखण्डं संदृश्यतेऽन्यादृशमम्बरे तत् SiddhāTaVi.210.13; 3.65; **2Bii** changed किमन्यादृशीव गतिरस्य विमानराजस्य MahāvīC.7.20 (1); माधव अद्य ... कामदेवोद्यानयात्राप्रतिनिवृत्तमन्यादृशं भवन्तमवधारयामि MālaMā.1.188; करोमि क्षणात् वस्तुव्यत्ययविभ्रमेण झगिति त्रैलोक्यमन्यादृशम् UdaySuKa.86. 28; तच्छ्रुत्वान्यादृशं भावमुपलक्ष्य तयोर्द्वयोः। सुदर्शनोऽब्रवीत् KathāSaSāg.ix. 2.303; x.7.114; 3 unique, extraordinary, excellent स्मरति चासौ ... अन्यादृशोदारपुरुषस्यादीयसः संप्रहारपरिचयस्य AvantiKa.55.12; RāghPāṇ. (Dha.)1.52; काव्यस्याम्रफलस्येव ... रसोऽप्यन्यादृशो भवेत् NalaCam.1.17; किं वक्ष्यन्त्यपकल्मषाः कृतधियो रेखैव सान्यादृशी SaraKaṇṭhā. 127. 18; ततस्तं ददृशुर्देवाः ... अन्यादृशमिवाम्बुदम् Yādavā.1.66; परिक्रमप्रेक्षितभाषिताद्यैरन्यादृशैराप्तविभावनीयैः। मदोपपन्ना मदलालसा वा जितश्रमा वेति जनैश्शशङ्के Yādavā. 2. 20; 8.91; प्राप्तं चौरतया पटीरतरुणा यत्सौरभं तद्गिरामक्षय्यं महि तस्य तस्य महिमा धन्योऽयमन्यादृशः ŚaṅkaDigVi. (Mā.)4.92; अन्यादृशानामदसीयनानाकुशेशयाक्षीकिलकिंचितानाम् ... साक्षित्वमप्याश्रयितुं समीहे ŚaṅkaDigVi. (Mā.) 9. 78; 13.24; (तन्वी) नो पूरयत्यञ्जसा मद्वाञ्छामधुना तथापि जनयत्यानन्दमन्यादृशम् ŚṛṅgāBhū. 36; अन्यादृशं रूपमतोऽपहेतुः CaitaCa.124.15 (5); अन्यादृशं चमत्कारम् ...। दर्शयन्तीं प्रतिव्यक्ति देवीं वाचमुपास्महे AdbhuDa. 1. 2; 7. 15 (18); नीलोत्पलान्येव नितम्बिनीनां नेत्राणि ... आमोदमन्यादृशमाप्नुवन्ति कलानिधेर्यस्य कलाविलासैः Raghunā.3.16; शब्दा यद्वदनं प्रपद्य मृदुतामाशासतेऽन्यादृशीम् ŚivLī.1.81; रूपेणैव महीपते तव धनुःपाण्डित्यमन्यादृशम् PadyaVe. 60; जानामि भवतो मयि प्रीतिमन्यादृशीम् NīlaVi.107.11; किं चाधः पुलिनाद्य यस्य कदलीकाण्डाववाग्रोपितौ। तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः JānaPa.5.22; शाहनृपेऽनुशासति महीं माहात्म्यमन्यादृशं द्रष्टुं चारु वसुंधरेति च पदं पृथ्व्या अभूत् सार्थकम् ParamāKā. 2.14; 8.52; धीर श्रीसुरनीरपण्डित घनश्याम त्वमन्यादृशः Damaru.7; **(used as noun)** (that) which is unique or extraordinary तस्यैतस्य ... विनेयतामुपगता धन्याः किलान्यादृशाः ŚaṅkaDigVi. (Mā.)6.17; 4 of one type or kind तस्मादन्यादृशाद् भवन्नन्यादृश एव ततो न व्यभिचारः HetuBiṬ.156.15; 157. 23; भेदे ह्यन्यादृशस्यान्यादृशाद्भावे विवादायोगात् HetuBiṬ.158. 16; नान्यादृशे सार्थे करोत्यन्यादृशीं मतिम् ŚlokaVār. 5 (13). 101(592. 5); सर्वसंपादनेऽन्यादृशः क्रमोऽन्यादृश इतरत्र ṬupṬ.71.17 (on v. 3. 2); न हि उपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः BrahmSūBh. (Śaṅ.) 582. 16 (on iii. 2.11); एतावद्य विपर्यस्य तत्त्वं यदन्यादृशस्यान्यथाप्रकाशनम् Kāśi. ii. 159. 20 (on 5 (3).162); द्व्यहकालत्वे त्वन्यादृशः क्रमः सद्यःकालत्वे चान्यादृशः MayūMali. 415.13 (on v.1.11); 5 contrary, opposite यः प्रागव्यापकः सोऽन्ते कथमन्यादृशो भवेत् MṛgendraT.i.2.21.

**अन्यादृश** (anyā-dṛśa) *m.* name of a sage (*lit.* extraordinary) अन्यादृशो मुनिः KalpaK. 371.15.

**अन्यादृशकर्तृत्व** (anyādṛśa-kartṛtva) *n.* another kind of agenthood भावनायाः प्रत्ययार्थतावादिनामन्यादृशकर्तृत्वस्य दुर्वचत्वात् VaiyāBhū.46.7 (on 9)

**अन्यादृशक्रमत्व** (anyādṛśakrama-tva) *n.* the state of having different order मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात् MīmāNyāPra. 236. 27.

**अन्यादृशग्रह** (anyādṛśa-graha) *m.* act of knowing in another way छलयुक्त्या त्वन्येषामभिसंधानाभिभावकं कपटम् (v.l. छलोक्त्याकथितार्थस्य कपटोऽन्यादृशग्रहः) NāṭyaŚā.16.30; SāhiSā. 3.14.

**अन्यादृशतदाचार** (anyādṛśa-tadācāra) *m.* conduct like others एकः इत्यनेनान्यादृशतदाचारेऽस्वरसः सूचितः VīraMi. 25. 2 (on 1.9)

**अन्यादृशता** (anyādṛśa-tā) *f.* the state of being different सरूपस्योपलक्षणेऽप्यन्यादृशतैवेति सर्वस्तादृशस्तथाविधजन्येति सिद्धम् HetuBiṬ.165.20.

**अन्यादृशत्व** (anyādṛśa-tva) *n.* 1 the state of being different कुतश्चित् साम्यात् सरूपतयावसीयमानस्याप्यन्यादृशत्वात् HetuBiṬ. 156. 1; तुल्याकारत्वे सति कथमन्यादृशत्वम् HetuBiṬ.161.14; देवर्षिशरीरापेक्षयास्मदादिशरीराणामन्यादृशत्वात् प्रयाजक्रमो Upask. 213. 6 (on iv. 2. 5); न च मन्त्रपाठस्यान्यादृशत्वात् ब्राह्मणपाठक्रमादेवेति वाच्यम् MīmāNyāPra.236.19; [Loc.] in different case अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात् MīmāNyāPra.236.20; 2 the state of appearing like another यद्यन्योऽस्ति परः कोऽपीत्यत्रान्यशब्देनान्यादृशत्वमेवोच्यते ŚatDū.151.1.

**अन्यादृशदोष** (anyādṛśa-doṣa) *m.* other kind of defect or disqualification अन्यादृशदोषशून्यत्वस्य प्रकृतेऽनुपयोगादाह। अंशेति BālamBha. ii.251.19 (on 2.141)

**अन्यादृशप्रत्यक्ष** (anyādṛśa-pratyakṣa) *n.* other kind of perception अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः VyutpaVā.77.5.

**अन्यादृशप्रपञ्चा** (anyādṛśa-prapañcā) *adj.* (*f.*) of unique behaviour, i.e. incomparable अन्यादृशप्रपञ्चेव दृष्टा वेगवती मया BṛKathāŚloSaṁ.15.28.

**अन्यादृशप्रयोग** (anyādṛśa-prayoga) *m.* another kind of use or employment निपातनं नाम अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम् LaŚabdeŚe.i.290. 9.

**अन्यादृशबोधोत्पत्ति** (anyādṛśabodhotpatti) *f.* origination of another kind of cognition अन्यादृशबोधोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात् ŚaktiVā. 50.19.

**अन्यादृशम्** (anyādṛśam) *adv.* in any other way, differently पठन्नन्यादृशं तत्र तं विनाशयति ध्रुवम् TantrVā. 786. 9 (on iii. 2. 19); मर्यादानिरतस्त्वमेव जलधे ब्रूतेऽत्र कोऽन्यादृशम् ŚṛṅgāTi.(Ru.)3.65.

**अन्यादृशमणिधर** (anyādṛśamaṇi-dhara) *adj.* who wears another kind of jewel पदाभ्यां तव धृते पदावन्यावन्यादृशमणिधरे प्रेयसि हरेः JānaCaCā.64.

**अन्यादृशविषयता** (anyādṛśa-viṣayatā) *f.* objectness of another kind अन्यादृशविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्यकत्वात् VyutpaVā. 77.7.

**अन्यादृशवेद** (anyādṛśa-veda) *m.* another kind of Veda अन्यादृशवेदैस्तन्नामरूपानुसंधानासंभवात् ŚivārkaMaDī. i. 466.12 (on i.3.29)

**अन्यादृशाकार** (anyādṛśākāra) *adj.* of different form or character अहमेवमाकारोऽयं चान्यादृशाकार इति शक्यते व्यपदेष्टुम् BrahmSūBh. (Rā.) 76.15 (on i.1.1)

**अन्यादृशसत्तासंबन्ध** (anyādṛśa-sattāsambandha) *m.* different relation of existence न त्वन्यादृशसत्तासंबन्धः GuruCandr. i.251.13.

**अन्यादृशसुख** (anyādṛśa-sukha) *n.* extraordinary happiness स वस्तन्यादन्यादृशसुखमपाङ्गो मृगदृशाम् ŚṛṅgāSar. 4.

**अन्यादृशोद्वाहमङ्गल** (anyādṛśodvāhamaṅgala) *n.* unique auspicious rite of marriage अन्यादृशोद्वाहमङ्गलसमुचितनैपथ्यसमुज्ज्वलतराङ्गविजयानन्दरङ्गदिदृक्षयेव सरभसमनुरागिणीम् ... कमलिनीं गाढानुरागतयाश्लिष्य ĀnandRa. 5. 0 (2)

**अन्यादृश्यत्व** (anyādṛśyatva) *n.* invisibility of others जडस्य चामोहित्वादजडस्य चान्यादृश्यत्वादन्यत्वासिद्धेः IṣṭaSi. 338. 23.

**अन्यादृश्यरूप** (anyādṛśya-rūpa) *n.* form invisible to any other कायरूपे चित्तसंयमादन्यादृश्यरूपम् (भवति) ŚāṇḍU. 417. 27 (1. 69)

**अन्यादृष्टि** (anyādṛṣṭi) *f.* absence of knowledge of another अन्यादृष्टावदृष्टेऽपि क्वचिद्भ्रमो न दृष्टः IṣṭaSi. 272. 2; तत्रेन्द्रियान्तरदृष्टमात्रान्यादृष्टौ भ्रम इति चेत् IṣṭaSi. 272. 4.

**अन्यादोडी** (anyādoḍī) *f.* name of a medicinal herb अन्या दोडी (v.l. अन्यादोडी, Āyurvedamahākośa) तु जीवन्ती शाकश्रेष्ठा सुखालुका RājNi. 338.16.

**अन्याद्भुत** (anyādbhuta) *n.* other strange event ज्वालाद्भुतान्यथ प्रोक्तानि यानि ... अपि वान्याद्भुतानि ...। एतेषु शान्तिं कुर्वीत AVPari. 69(6).1.

**अन्याद्यामन्त्र्य** (anyādyāmantrya) *adj.* (used as noun) (vocative word) preceded by the word in other (than vocative case) नाविशेष्यान्याद्यामन्त्र्यात्। विशेष्यपूर्वमनामन्त्र्यपूर्वं च हित्वान्यस्मादामन्त्र्यादेते न स्युः (आदेशाः) MugdhaBo.3.145 (33.16)

**अन्याधार** (anyādhāra) *adj.* [*f.* -ā] **1A** occurring in or belonging to another person क्रिया धात्वर्थमात्रं स्यादन्याधारेऽपि कर्तृता ŚlokaVār. 5 (17). 75 (708. 1); अन्याधारेऽपि कर्मणीत्यर्थः NyāyRa.708.10 (on 5 (17).75); **1B** subsisting or occurring in another substratum वध्यघातकभावो विरोधः, तत्रापि नाजात एकोऽन्यं हन्ति नाप्यन्याधारम् NyāyMa. 18. 2; नाजात एकोऽन्यं हन्ति नाप्यन्याधारः Nyāyāmṛ. 574B. 7 (comm. योऽन्याधारः अन्यप्रदेशस्थः वध्यसमानाधिकरणो न भवति वध्यापेक्षया भिन्नाधिकरणस्थित इति यावत् सोऽप्यन्यं न हन्ति); 2 having any other as the substratum, i.e. supported by another वसुधा नान्याधारा तिष्ठति गगने स्वशक्त्यैव ĀryaSi. 16. 4 (184); भूमेः पिण्डः ... नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे Golā. 180.13; भूगोलः ... नान्याधारोऽथ मूर्तश्चेत्तस्याधारोऽथ तस्य च। अन्यः SiddhāTaVi.

धारणात् ... न किं चिदप्यन्यानन्यत्वादिकं बाधितम् NyāyRa.633.12 (*on* 5 (14).79)

**अन्यानन्यप्रमेय** (anyānanya-prameya) *adj.* knowable as different and (yet) not different ज्ञानसाध्यत्वं ब्रह्मणः संप्रसज्यते। अन्यानन्यप्रमेयेऽपि दोषोऽयं दुर्निवारणः BṛĀraUBhVā. i. 4.1118.

**अन्यानन्यप्रमेयत्व** (anyānanyaprameya-tva) *n.* the state of being knowable as different and (yet) not different अन्यानन्यप्रमेयत्वे तथापीष्टं न सिध्यति BṛĀraUBhVā. i.4.1116.

**अन्यानन्यभूत** (anyānanya-bhūta) *adj.* being different and (yet) not different अनेकान्तस्वभावत्वे चान्यानन्यभूतयोरवस्थातद्वतोर्वर्तमानानामुत्पत्तिस्थिति-विनाशानां को विरोधः इति NyāyRa. 844. 7 (*on* 6. 440)

**अन्यानन्यभेदादि** (anyānanyabhedādi) *adj.* distinction etc. as being different and (yet) not different यदा तु शबलं वस्तु युगपत्प्रतिपद्यते तदान्यानन्यभेदादि सर्वमेव प्रलीयते TattvSaṁ. 1746; ŚlokaVār. 5(12).63 (562.7)

**अन्यानन्यविकल्प** (anyānanya-vikalpa) *m.* option, i.e. objection based on being different and (yet) not different अन्यथात्वे स्थितौ नाशे चान्यानन्यविकल्पयोः। जरादिविषया दोषा एत एवानुषङ्गिणः TattvSaṁ. 1828; अन्यानन्यविकल्पविशेषाः प्रलीयन्ते Śarka.19.14; अन्यानन्यविकल्पश्च सर्वत्रा-नेकान्तवादाश्रयणेन परिहर्तव्यः NyāyRa. 694.16 (*on* 5 (17). 22)

**अन्यानन्यवृत्ति** (anyānanya-vṛtti) *adj.* existing in both different and (yet) not different तत्रान्यानन्यवृत्तीनामनेकान्तस्वभावतः। उत्पत्तिस्थितिनाशानां विरोधः प्राङ्निराकृतः ŚlokaVār.6.440 (843. 5)

**अन्यानन्यानिरूपण** (anyānanyānirūpaṇa) *n.* absence of description of (what is) different and (yet) not different वाक्यवाक्यार्थयोर्नापि वस्तुत्वमुपपद्यते स्पष्टं पदतदर्थाभ्यामन्यानन्यानिरूपणात् ŚlokaVār.7.6 (847.10)

**अन्यानन्योभय** (anyānanyobhaya) *n.* both different and (yet) not different अन्यानन्योभयात्मत्वकल्पने ह्यसदेव तत् BṛĀraUBhVā.iv.3.637.

**अन्यानन्वयित्व** (anyānanvayi-tva) *n.* the state of not being construed with another करणत्वादिनान्यानन्वयित्वं लिङ्गानन्वयित्वं वा तदिति भावात् VaiyāBhū. 59. 16 (*on* 14)

**अन्यानन्वित** (anyānanvita) *adj.* not semantically related to another तदिदमन्विताभिधानमन्यानन्वितनिष्कृष्टस्वार्थपर्यवसायित्वे हि सति न सर्वेषां वाक्यार्थव्यापारः स्यात् NyāyMañ. i. 366.14.

**अन्यानपेक्ष** (anyānapekṣa) *adj.* [*f.* –ā] **1Ai** independent of another ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण ... अन्यानपेक्षा GītāBh.(Śaṅ.)84.5 (*on* 3.4); NyāyRa.534.8 (*on* 5(14).93); (एकत्वदर्शनम्) अन्यानपेक्षं तद्भूदिति चेन्नैवमिष्यते BṛĀraUBhVā. i. 4. 72; स्वफलेऽन्यानपेक्षाणां साधनानां समुच्चयः BṛĀraUBhVā. i. 5. 228; अन्यानपेक्षं सन्मानं प्रमेयार्थसमर्पकम् BṛĀraUBhVā. iii.3.81; स्योनं ते सदनं करोमीत्यस्य हि सदनकरणसामर्थ्यमन्यानपेक्षं स्वरूपत एव प्रत्यक्षमवगम्यते ŚāstrDī. 245.1 (*on* iii. 3. 7); चेतश्चान्यानपेक्षं मतिषु न हि भवेत् TattvMu. 2. 6; **(used as noun)** (one) independent of another कथं ह्यन्यानपेक्षस्य विपरीतात्मसंभवः ŚlokaVār. 2. 36 (55. 3); स्वाभाविकत्वमुभ-योर्विरोधान्नोपपद्यते। कथं ह्यन्यानपेक्षस्य विपरीतात्मसंभवः NyāyKu. 17. 10; ज्ञानस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यानपेक्षस्यैव निवर्तकत्वात् Nyāyāmṛ. 607. 8; **1Aii** independent of another, i. e. self-dependent or sovereign सर्वमन्यानपेक्षं सदीक्ष्यमाणं स्वमात्रया BṛĀraUBhVā.i.4. 434; अन्यानपेक्षं यद्यस्य वृत्तं तत्पारमार्थिकम् BṛĀraUBhVā. i. 6. 74; स्वार्थमन्यानपेक्षं सच्चैतन्यं नाक्षमानगम् BṛĀraUBhVā. iv. 3. 242; सर्वमन्यानपेक्षं सत्स्वात्ममात्रतयेक्षितम् BṛĀraUBhVā. iv. 3. 1326; ननु बोधस्वभावः पुरुषोऽन्यानपेक्ष एव NyāyRa.187. 8 (*on* 4. 167); ब्रह्मणोऽन्यानपेक्षस्यैव कारणत्वं संभवति VedāntDī. 92. 8 (*on* ii. 1. 24); **1B** independent of another, i. e. not being produced by or based on another हेतूपनिबद्धं कार्यं तदन्यानपेक्षं हेतुमात्राधीनोत्पादत्वादुत्पद्यतां नाम Bhām. 421. 2(*on* ii. 2. 19); ननु प्रत्यक्षादेरन्यानपेक्षं प्रामाण्यं संभवति ŚāstrDī. 19. 16 (*on* i. 1. 2); यद्यस्यावश्यंभावि तत्तस्यान्यानपेक्षं यथा संविदः स्वप्रकाशत्वमवश्यंभावि PrakaVi. 529. 15; **2** indifferent to others, i.e. innate स्वभावो नामान्यानपेक्षः PañcPā. 78. 26 (*on* i. 1. 2); अस्तु तर्हि वह्निसंबन्धः स्वाभाविकतया अन्यानपेक्षोऽव्यभिचारी गमकत्वाङ्गम् TātpaṬ. (Vā.) 161. 15 (*on* i. 1. 5); **3** not expectant of any other यस्यैवान्यानपेक्षस्याख्यातोपात्तव्यापारसमवायसंभवः स एव कर्ता ŚāstrDī. 671. 9 (*on* x. 2. 19); बहुव्रीहिरन्यानपेक्षोऽन्यपदार्थं प्रतिपादयति Pradī. ii.410B. 24 (*on* ii. 1.68); 'सत्यं ज्ञानम्' ... इत्यादाव(न्यो)न्यानपेक्षाणामेव सत्यादिपदानां ब्रह्मलक्षकत्वदर्शनाद्य Nyāyāmṛ. 460B.7; **4** irrespective of others, cf. अन्यानपेक्षत्व2.

**अन्यानपेक्षकर्तृत्व** (anyānapekṣa-kartṛtva) *n.* agenthood independent of another न चेतनत्वहेतुना जीवस्यान्यानपेक्षकर्तृत्वं साध्यम् TattvPrakā. 89A.11 (*on* ii.1.24)

**अन्यानपेक्षण** (anyānapekṣaṇa) *n.* **i** absence of dependence on another नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां कादाचित्कस्य संभवः PramāVār.1.36; TattvSaṁ.1823; ṢaḍdarSa.(Rā.)173; अवबोधस्व-त्वादवबोधस्य। तस्य च स्वगोचरप्रकाशनेऽन्यानपेक्षणात् Kāśi. ii. 21.27 (*on* 5 (1). 22); अशेषविशेषग्राहिप्रत्यक्षप्राप्ते तद्दार्ढ्यार्थमन्यानपेक्षणात् AdvaiSi.426.7; परिशेषार्थमन्यानपेक्षणात् SiddhāLeSaṁ. 303. 4; **ii** absence of dependence on other (basis or cause in the production) कथं तर्हीदानीमहेतुको विनाश उक्तः? जातस्य तद्भावेऽन्यानपेक्षणात् PramāVāSvopVṛ. 66.11; विक्रियाविक्रिया त्वस्य तत्त्वमन्यानपेक्षणात् TaiUBhāVā. 156.11 (2); सिद्धस्यान्यानपेक्षणात्। पारतन्त्र्याद्य-योगाद्य तेन कर्तापि कल्पितः ĪśvaPraSū.i. 2.11; अन्यदङ्गं नो कार्यं कार्यं वान्यानपेक्षणात् NyāyMāVi.591.18 (*on* x. 7.10)

**अन्यानपेक्षतस्** (anyānapekṣa-tas) *adv.* **A** because of being independent of another असामान्यत्वमेवैति शौक्ल्यमन्यानपेक्षतः BṛĀraUBhVā. i. 4. 447; अज्ञाते न विरोधोऽस्ति ज्ञाते चान्यानपेक्षतः BṛĀraUBhVā. i. 4. 1296; **B** because of being independent on another, i.e. not being produced by or based on another ऐकात्म्यस्यागमार्थत्वाच्छ्रुतेश्चान्यानपेक्षतः BṛĀraUBhVā. iv.4. 482.

**अन्यानपेक्षता** (anyānapekṣa-tā) *f.* **1** the state of being independent of another अथ मानान्तरापेक्षं तन्मानं मेयबोधकम्। द्वयोरेकक्रियावेशात्तथाप्यन्यान-पेक्षता BṛĀraUBhVā. (Sambandha.) 683; विधिर्ह्यन्यानपेक्षतया पूर्वो भवति ŚatDū. 200. 1; तेजः पराभिभवनसामर्थ्यमन्यानपेक्षता वा NyāyPari. 504. 18; **2** the state of being indifferent to others, i.e. innate तत्र हि यदन्यानपेक्षतया झगिति पदार्थस्वरूपमवभासते तत्पारमार्थिकम् NyāyMañ. ii. 94. 9.

**अन्यानपेक्षत्व** (anyānapekṣa-tva) *n.* **1A** the state of being independent of another, i.e. not being produced by or based on another अथादिसर्ग ईश्वरहेतुकः। तस्याप्यन्यानपेक्षत्वादीश्वरवदनादित्वप्रसङ्गः AbhidhKoBh. 102. 14 (*on* 2. 64); न च स्वयंदृष्टेः कदाचिदपि अदृष्टिस्संभवति, स्वरूपभूताया दृष्टेरन्यान-पेक्षत्वात् IṣṭaSi.4. 5; **1B** the state of being independent of another, i. e. being self-dependent, sovereignty चैतन्यस्वरूपस्य तु आत्मनः स्वतःसिद्धं अन्यानपेक्षत्वं न केनचित् वारयितुं शक्यम् UpadeSā. 85. 91; तेजस्त्वन्यानपेक्षत्वम् अनिरुद्धत्वमप्युत LakṣmīT. 4. 17; अन्यानपेक्षत्वात्प्रधानस्य सर्वदैव सृष्टिः प्रसज्येत VedāntDī. 99. 1 (*on* ii. 2. 3); सर्वात्मकं सद्द्रव्यं ब्रह्म। स्वव्यवहारेऽपि स्वसत्ता-तिरेकेणान्यानपेक्षत्वात् स्वयंप्रकाशं च NītiMā. 31.13; स्वतन्त्राख्यं तन्त्रम् ... यस्याः। स्वतन्त्रस्यान्यानपेक्षत्वान्महत्त्वम् LalitāSaBh.71.17 (*on* 107); **1C** the state of being independent of another यद्वैशेषिकाः प्रागभावमेव कार्योत्पत्तिनियामकं कल्पयन्ति, तदप्यपास्तम् अभावकल्पनापेक्षया भावकल्पने लाघवात् भावानां दृष्टत्वात् अन्यानपेक्षत्वाद्य SāṁkhyaPraBh. 54.29 (*on* 1.115); अनुव्यवसायज्ञानस्य स्वसिद्धा-वन्यानपेक्षत्वे पूर्वज्ञानस्यापि तथात्वसंभवात् SarvaMaSaṁ. 37. 23; **2** the state of being irrespective of others तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते Śloka-Vār. 2.37(56. 2); **3** the state of not being expectant of others अभेदो-पादानैव भेदकल्पना ... एकत्वग्रहस्य चान्यानपेक्षत्वात् Bhām. 89. 25 (*on* i. 1. 4); विधिज्ञानमात्रेण प्रवृत्तिसिद्धेरन्यानपेक्षत्वात्कथमित्यपेक्षाप्रदर्शनमयुक्तम् Nyāy-Su.(So.) 33. 32 (*on* i.2.7)

**अन्यानपेक्षत्वदर्शन** (anyānapekṣatva-darśana) *n.* observation of the state of being independent of another क्षीरस्य दधिभावेऽन्यानपेक्षत्वदर्शनात् अनेककारकोपसंहारनियमो न दृश्यते VedāntDī. 92. 7 (*on* ii.1. 24)

**अन्यानपेक्षत्वप्रतीति** (anyānapekṣatva-pratīti) *f.* knowledge of the state of being independent of another न विद्यायाः फलसिद्धावुपकारकत्वम् अशाब्दत्वात् ... इत्यादिभिरुत्पन्नस्य वेदनस्य मोक्षसाधनत्वे अन्यानपेक्षत्वप्रतीतिस्वारस्याद् तदनुपपन्नम् ŚrutaPra. ii. 551. 27 (*on* iii. 4. 26)

**अन्यानपेक्षध्वनि** (anyānapekṣa-dhvani) *m.* sound not dependent on another अन्यानपेक्षध्वनिभिः श्रोत्रसंस्कारभेदाद्धीभेदे भेदाग्रहाच्छब्दभेदभ्रमः NayaVi. 240. 2 (*on* i.1. 8)

**अन्यानपेक्षम्** (anyānapekṣam) *adv.* **1A** without dependence on another, independently पुरुषकर्मोद्भूतिकानीन्द्रियाणि स्फुटमवगमयन्ति स्वं स्वमन्यानपेक्षम् SaṁkṣeŚā.3.250 (ii. 295.2); अधीहि भगवन्वेदसारमुद्धृत्य त्रिपुण्ड्रविधिं यस्मादन्यानपेक्षमेव मोक्षोपलब्धिः BhasmJāU. 561. 12; **1B** without dependence on another, i.e. without being based on another श्रुतिश्चान्यानपेक्षमेव प्रपञ्चतापत्ति-माचष्टे NyāySu.(Ja.)196B. 6 (*on* i.4. 6); **2** without consideration for others.

irrespectively of another घटादिकमेव यदान्यानपेक्षं वीक्ष्यते तदा घटादिकमित्येव प्रतीयते KhaṇḍanKhā. 193. 22.

**अन्यानपेक्षा** (anyānapekṣā) *f.* [Inst.] 1 without expectancy for another वाक्यरूपस्य वाक्यार्थे वृत्तिरन्यानपेक्षया VākyaPa.2.264; पाठक्रमेणानुष्ठानं स्वाध्यायेनैव विशिष्टक्रमेणान्यानपेक्षयावगतत्वात् प्रत्यक्षम् TantrRa. 262. 6; 2A [Inst.] without dependence on another, independently प्रत्यक्तान्यानपेक्षा हि तदन्यत्तदपेक्षया BṛĀraUBhVā. i.4. 1042; सर्वत्र सत्तासत्ता वा नियमेऽन्यानपेक्षया KhaṇḍanKhā. 635. 7; 2B [Inst.] without respect or consideration for others, irrespectively शृणु कादिमतं तन्त्रं पूर्णमन्यानपेक्षया TantrRā.1. 4; 2C [Inst.] without any other basis or cause (of the production) गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्। मानसं नास्तिताज्ञानं जायतेऽन्यानपेक्षया SarvaDaKau. 98. 8.

**अन्यानपेक्षितविधि** (anyānapekṣita-vidhi) *adj.* having activity not dependent on another अन्यानपेक्षितविधौ न खलु प्रधानवाचां भवत्यवसरः सति भव्यभूत्ये NaiṣC. 11. 34.

**अन्यानपेक्षिन्** (anyānapekṣin) *adj.* [*f.* -iṇī] 1 not expectant of others प्रक्रान्तरूपोऽपि विधिस्तावत्प्रतीक्षते। यावद्योग्यत्वमापन्ना भावनान्यानपेक्षिणी ŚlokaVār. 7. 276 (922. 2) ; 2 indifferent to others बुद्धीन्द्रियशरीरेभ्यो भिन्न आत्मा ... भेदश्चास्यान्यानपेक्षि स्वरूपमेव SarvaMaSaṁ. 34.1; 3 independent of others चिन्ता सदैव तल्लग्ना बुद्धिरन्यानपेक्षिणी SāhiSā.5.85.

**अन्यानपोहकत्व** (anyānapohaka-tva) *n.* the state of not negating, i. e. not excluding another अन्यानपोहकत्वमिति कोऽर्थः Śarka.75.14.

**अन्यानभिभूतसार** (anyānabhibhūta-sāra) *adj.* having the strength not overpowered or surpassed by others भाति प्रतापेन महामहीशः श्रीमाधवोऽन्यानभिभूतसारः AlaṅkāMañ. 62.14.

**अन्यानयनासह** (anyānayanāsaha) *adj.* not tolerating the act of bringing another person अतृप्यन्तं च वेतालं तमन्यानयनासहम्। तर्पयिष्यन्स्वमांसानि छेत्तुमारभते स्म सः KathāSaSāg. v.3.239.

**अन्यानर्थक्य** (anyānarthakya) *n.* 1A uselessness of other (rites or actions) अन्यानर्थक्यात् MīmāSū.i.2.4; न तावत्फलविधित्वावसरः। यदि पुनरिष्यते ततोऽन्यानर्थक्यम् TantrVā.8.19 (*on* i. 2. 4); अन्यानर्थक्याभागिप्रतिषेधोरप्येवम् NyāySu.(So.)18. 20 (*on* i. 2. 6); यद्यपि च पूर्णाहुत्यादेस्सर्वफलसाधनत्वं स्यात्, तथापि नान्यानर्थक्यम्, कर्मतारतम्येन फलतारतम्योपपत्तेः MīmāKau.iii(1).37. 10 (*on* i.2.17); पूर्णाहुतेरवश्यापेक्ष्यायाः सर्वकर्माप्तिफलत्वे स्यादन्यानर्थक्यम् SiddhāSi. i. 43. 16; यत्र त्वन्यानर्थक्यं तत्र विध्युद्देशगतमपि फलपदमर्थवाद एव ViraMi. (Paribhāṣā.) 67. 22; 1B uselessness of other (parts of speech) बलवदनिष्टानुबन्धित्वम् ... तद्य वाक्यार्थ इव सर्वैः पदैरन्यपदेन वा लक्ष्यते, नचान्यानर्थक्यम् BhāṭṭCin. ii. 5.16 (*on* i. 2.1); 2 the word *anyānarthakya* अन्यानर्थक्यवाक्ये उदाहरणं पूर्णाहुत्या सर्वान् कामानवाप्नोति ŚābaBh. 129.10 (*on* i. 2.16); 3 uselessness, i.e. futility of other (option) पितृतस्तु सप्तमात् पञ्चमाद् वेति विकल्पः। पञ्चमादित्यनुकल्पोऽयम्, अन्यानर्थक्यात् BālaKṛ. i. 62. 12 (*on* 1. 53); अतो विषयव्यवस्थयैव श्रौतस्मार्तानां परस्परव्याख्यानमुपदेशबलेनैवानुसर्तव्यं न त्वन्यानर्थक्येन इत्येषा दिक् BālaKṛ.ii.106.8 (*on* 3.243(?9))

**अन्यानर्थक्यकरत्व** (anyānarthakyakara-tva) *n.* the state of rendering other (rites) as useless समानफलान्यपि कर्माणि यानि परस्परानपेक्षाणि क्रियन्ते तेषां यथारुच्यनुष्ठानान्नान्यानर्थक्यकरत्वम् TantrVā. 8.20 (*on* i. 2. 4)

**अन्यानर्थक्यचोद्य** (anyānarthakya-codya) *n.* question or objection of the uselessness of other (rites) उपासनाविधिफलार्थवादा अपि विषया भवेयुः तुल्यं हि तेष्वपि अन्यानर्थक्यचोद्यम् PūrvottaVāNaMā. 246. 5.

**अन्यानर्थक्यदोष** (anyānarthakya-doṣa) *m.* fault of the uselessness of other (rites) केचित्तु यात्रायाः प्रधानत्वम् ... सिध्यतीत्याहुः। न चान्यानर्थक्यदोषः कर्मानुसारेण फले तारतम्यकल्पनात् ViraMi. (Tīrtha.) 33.17.

**अन्यानर्थक्यन्याय** (anyānarthakya-nyāya) *m.* maxim or law of the uselessness of other (rites) अग्निहोत्रेणाल्पेन स्वर्गावाप्तावग्निष्टोमाद्यानर्थक्यस्याप्यन्यानर्थक्यन्यायविषयत्वात् SiddhāSi. i. 43.19.

**अन्यानर्थक्यप्रसङ्ग** (anyānarthakya-prasaṅga) *m.* A undesired occasion of the uselessness of other (rites) ब्रह्मयज्ञनिमित्तानि फलानि क्रत्वधिकृतपुरुषेभ्यो अन्यानर्थक्यप्रसङ्गाद् व्यावृत्तानि TantrVā. 113.8 (*on* i. 3.4); परमार्थतस्त्वन्यानर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात्फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते TantraVā. 240. 3 (*on* i. 3. 25); B undesired occasion of uselessness of other (options) ... अन्यानर्थक्यप्रसङ्गाद्य नापि ज्ञानफलानित्यत्वसंभावनातुषोऽपि कल्पयितव्यः ... इत्यादिरर्थवादः न तु गुणवादत्वात् SiddhāSi. i. 13. 22; अत्र च वर्षे वर्षे फलविधिः। अन्यानर्थक्यप्रसङ्गात् ViraMi.(Āhnika.)534.3.

**अन्यानर्थक्ययुक्ति** (anyānarthakya-yukti) *f.* reasoning or argument of the uselessness of other (options) अन्यानर्थक्ययुक्त्याद्यपि हि विफलतोक्त्यादिसाधारणं ते PūrvottaVāNaMā. 258. 3.

**अन्यानर्थक्यशङ्का** (anyānarthakya-śaṅkā) *f.* doubt regarding the uselessness of other (rites) अपापश्लोकश्रवणादिवत् तत्फलार्थवादा अविवक्षितार्थाः इत्यभिप्रेत्य अन्यानर्थक्यशङ्का तत्परिहारश्च तेषु न प्रवर्तिताः PūrvottaVāNaMā. 249.13.

**अन्यानर्थक्यसूत्र** (anyānarthakya-sūtra) *n.* aphorism consisting of the word *anyānarthakya* अष्टाफलविधिरन्येषामानर्थक्यमित्यनेन अन्यानर्थक्यसूत्रं योजितम् NyāySu.(So.)16.12 (*on* i.2.4); अन्यानर्थक्यसूत्रस्य सर्वविषयत्वे च सर्वसाधारणेन परिहारेण सूत्रितेन भवितव्यम् PūrvottaVāNaMā. 247.13.

**अन्यानर्थक्यादि** (anyānarthakyādi) *adj.* 1 (aphorism) containing the word *anyānarthakya* etc. अन्यानर्थक्यादिसूत्राणामवर्जनीये तत्तदुपासनाविधिफलार्थवादसाधारण्ये ... अभिसंधिनिगूहनम् PūrvottaVāNaMā. 249. 7; 2 uselessness of other (actions) etc.(आत्मोपासनेषु) न तेषु जैमिनिना अन्यानर्थक्यादिदोषपरिहाराश्चिन्तिताः PūrvottaVāNaMā. 252.19.

**अन्यानर्थक्योपपत्ति** (anyānarthakyopapatti) *f.* tenability of the uselessness of other (rites) समानफलकर्माल्पत्वमहत्त्वमात्रेणान्यानर्थक्योपपत्तेः NyāySu. (So.) 16. 18 (*on* i. 2. 4)

**अन्यानर्थक्योपपादनार्थम्** (anyānarthakyopapādanārtham) *adv.* for the sake of explaining the uselessness of other (rites) अन्यानर्थक्योपपादनार्थं पौर्वापर्यमुपन्यस्तम् NyāySu.(So.)16.17 (*on* i. 2. 4)

**अन्यानललक्षणा** (anyānala-lakṣaṇā) *adj.* (*f.*) characterised by another type of fire सावित्री च यतीनां वै त्वाराधन° ... षट्कर्मसक्तानां वाकी-(? कि)मन्यानलक्षणा(?अन्यानललक्षणा) PauṣkS. 28. 35.

**अन्यानवगम्या** (anyānavagamyā) *adj.* (*f.*) not cognized by any other (means of knowledge) अन्यानवगम्यापि संख्या स्यात् सूर्ययानवत् ŚlokaVār. 5 (14). 65 (629. 3)

**अन्यानवबुद्ध** (anyānavabuddha) *adj.* not perceived by any other person यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना। तथा अन्यानवबुद्धार्थप्रामाण्याभावसाधनम् ŚlokaVār. 2.124 (83. 8)

**अन्यानवभास** (anyānavabhāsa) *m.* non-cognition of any other thing पूर्वानुभूतदेशकालाग्रहो भ्रान्तिरिति चेत् न। अन्यानवभासोऽवभासान्तरं मिथ्याकरोति Kāśi. ii. 18. 23 (*on* 5 (1).19)

**अन्यानवभासन** (anyānavabhāsana) *n.* non-appearance of any other, i. e. gross body अभाने स्थूलदेहस्य स्वप्ने यद्भानमात्मनः। सोऽन्वयो व्यतिरेकस्तद्भानेऽन्यानवभासनम् PañcDa.1.38 (comm. अन्यस्य स्थूलदेहस्यानवभासनम् प्रतीतिः व्यतिरेकः)

**अन्यानवभास्य** (anyānavabhāsya) *adj.* not to be illuminated by any other thing, i.e. self-illuminated तद्धि परं ज्योतिर्यदन्यानवभास्यमात्मज्योतिः MuṇḍUBh.340.10 (*on* ii. 2.10); योऽन्यानवभास्यः सर्वावभासकः स्वयमेवावभासते तं भगवन्तं योगिन एव पश्यन्ति SanatBh. 290.13 (*on* 4. 2)

**अन्यानवभास्यत्व** (anyānavabhāsya-tva) *n.* the state of being what is not to be illuminated by any other thing, i.e. self-illumination निरतिशयं च अस्य स्वयंज्योतिष्ट्वम्, सर्वावभासकत्वात् स्वयमन्यानवभास्यत्वाच्च BṛĀraUBh. 528.13 (*on* iv. 3. 7)

**अन्यानवयवत्व** (anyānavayava-tva) *n.* the state of not being component part of any other (syllogism) हेतुस्तद्व्यतिरेकेणान्यानवयवत्वात् न तन्त्वस्तन्तुनामवयवा इति विरुद्धः NyāyVār. 229. 7 (*on* ii.1. 31)

**अन्यानवयवित्व** (anyānavayavi-tva) *n.* the state of not being any other composite or whole तद्व्यतिरेकेणान्यानवयवित्वं हेतुरस्यापि प्रसङ्गः पूर्ववत् NyāyVār. 230.11 (*on* ii.1.31)

**अन्यानवशेषतस्** (anyānavaśeṣa-tas) *adv.* without being attached to anything else अविद्यातत्कार्याभ्यामात्मान्यानवशेषतः। संबध्यते BṛĀraUBhVā. iv.3. 1177.

**अन्यानाक्षिप्त** (anyānākṣipta) *adj.* [*f.* –ā] 1 not implied by any other (element) विधायिका हि श्रुतिरन्यानाक्षिप्ता धात्वर्थभावनयोरेव संनिरुद्धा TantrVā. 454.15 (*on* ii. 2. 2); 2 not known or ascertained by any other (means) अन्यानाक्षिप्तविधिशक्तिकत्वात् आधाराग्निहोत्रवाक्ययोः कर्मचोदनैव प्रत्येतव्या MīmāKau.iii(2).197.18 (*on* ii. 2. 16)

**अन्यानाक्षेपकत्व** (anyānākṣepaka-tva) *n.* the state of not being what points to any other (act) न च निर्वापार्थमुपात्तानां तद्धुपादानलाघवेन ग्रहणोपपत्तेर-

वधातस्यान्यानाक्षेपकत्वम् MīmāKau. iii (2). 69.14 (*on* ii.1. 9)

**अन्यानात्मादिधर्म** (anyānātmādidharma) *m.* other property such as non-sentient etc. तस्यानित्यत्वादन्यानात्मादिधर्मवति अर्थे कृतकत्वादिवृत्तेः हेत्वभावप्रसङ्गः HetuBiṬ. 75.14.

**अन्याराधित** (anyānārādhita) *adj.* not worshipped by any other person अन्याराधितो देवो वसुधिष्णो विवस्वसु: VāyuP. ii.1. 27.

**अन्यानाहित** (anyānāhita) *adj.* 1 not imposed by any other thing एवं चान्यानाहितस्वभावविशेषेण पुण्यहेतुर्भूमिर्जलं वा तीर्थमिति सिध्यति ViraMi. (Tirtha.)10. 24; 2 the word or expression *anyānāhita* अन्यानाहितेत्यत्रान्यपदेन शालग्रामसांनिध्यादीनां विशिष्योपादानादभावसमुदायप्रवेशान्न दोषः ViraMi. (Tirtha.)11.15.

**अन्यानिमित्तकत्व** (anyānimittaka-tva) *n.* the state of not being caused, i. e. not being indicated by any other thing अथ गौरवेण अन्यानिमित्तकत्वे सति सनिमित्तकत्वादिति व्यतिरेकिण एव गवयत्वप्रवृत्तिनिमित्तकत्वधीरिति चेत् न TattvCin. iii. 87. 3.

**अन्यानिरुक्ति** (anyānirukti) *f.* absence of explanation in any other way अपरोऽक्षार्थविषयत्वं ज्ञानस्य अपरोऽक्षत्वं नाम। अन्यानिरुक्तेः SiddhāLeSam. 400. 8.

**अन्यानिवेश्यङ्ग** (anyāniveśy-aṅga) *n.* subsidiary part not to be related to any other (rite) उत्तेजकं चान्यानिवेश्यङ्गसंबन्धानुपपत्तिः MīmāKau.ii.195.8 (*on* iii. 1. 20)

**अन्यानिषेध** (anyāniṣedha) *m.* non-rejection of any other (act) अन्यानिषेधान्नान्यथोपासनम् TattvPrakā.183B. 8 (*on* iii.3.60)

**अन्यानिषेधकत्व** (anyāniṣedhaka-tva) *n.* the state of not rejecting any other (view) मुनिमतयोश्चान्यानिषेधकत्वेनाविरोधात् TattvPrakā. 216B. 8 (*on* iv.3.15)

**अन्यानिष्टि** (anyāniṣṭi) *f.* non-admission of any other (constituent) एवं समूहशब्दार्थे समुदायिव्यपोहतः। अन्यानिष्टेश्च सर्वेऽपि प्राप्नुवन्ति निरर्थकाः TattvSam. 984.

**अन्यानीतपुस्तक** (anyānīta-pustaka) *n.* book brought by another person यदा चान्यानीतपुस्तकेन देवदत्तहस्तः संयुज्यते तदा देवदत्तेनापि कथं न युज्येत NyāySiA. 254. 8.

**अन्यानुकरणरूपा** (anyānukaraṇa-rūpā) *adj.(f.)* of the form of imitation by other person जीवगतापहतपाप्मत्वाद्यभिव्यक्तिरवश्यमन्यानुकरणरूपा वाच्या ŚivārkaMaDi. i.11.32 (*on* i.1.1)

**अन्यानुकल्प** (anyānukalpa) *m.* another secondary alternative procedure अन्यानुकल्पः विवाहश्च पाणिग्रहणादिसंस्कारः स च भार्यात्वोत्पादकः BālamBha.i.190.1 (*on* 1.53)

**अन्यानुक्तचतुर्मास** (anyānuktacaturmāsa) *m.* other non-mentioned or omitted (period of) four months अन्यानुक्तचतुर्मासे सर्वहर्म्यात्र कारयेत् MānaSā. 35.93.

**अन्यानुगतभोजन** (anyānugata-bhojana) *n.* act of eating by following another, i. e. act of eating without proper invitation कृमिकीटवयोहत्यामन्यानुगतभोजनम् ... एतान्येनांसि सर्वाणि ViṣṇuDhaP.ii.73.67.

**अन्यानुत्पत्ति** (anyānutpatti) *f.* non-origination of any other thing तेजस उत्पत्तिमात्रं हि श्रुतं नान्यानुत्पत्तिः ŚrutaPra.ii.343.16(*on* ii.3.6)

**अन्यानुनिष्पादित्व** (anyānuniṣpādi-tva) *n.* the state of being produced following another प्राप्तपरिसंख्यानेऽपि न त्रैदोष्यमन्यानुष्पा(?नुनिष्पा)दित्वेन शब्दव्यापारा-विषयत्वात् VidhiRa.10 (50.17)

**अन्यानुपकारकता** (anyānupakāraka-tā) *f.* the state of not being conducive or contributory to any other (living being) औदुम्बरत्वादयस्त्वन्यानुपकारकतया साकाङ्क्षाः MīmāNyāPra. 220. 33.

**अन्यानुपजीवकत्व** (anyānupajīvaka-tva) *n.* the state of not being dependent or subsisting on any other thing न चानयोरङ्गाङ्गिभावः एकस्यान्यानुपजीवकत्वात् AlaṅkāKāu.(Vi.)415. 23.

**अन्यानुपजीव्य** (anyānupajīvya) *adj.* which does not produce any other thing अन्यानुपजीव्यसर्वविभवे कर्मेकलभ्ये पदेऽप्यायास्यन्ति ... दुर्मेधसः NīlaVi.5.14.

**अन्यानुपदिष्टार्थत्व** (anyānupadiṣṭārtha-tva) *n.* the state of referring to what is not taught by any other (speech) as the meaning सहसिद्धत्वे भयानुपपत्तिरिति चेत् ... न, अन्यानुपदिष्टार्थत्वात्सहसिद्धवाक्यस्य BṛĀraUBh. 83.14 (*on* i. 4.2)

**अन्यानुपदेश** (anyānupadeśa) *m.* absence of mention of any other way or method (अनेनैव विधिना दीयमाना विशेषतः) नित्येऽपि चायमेव प्रकारः अन्यानुपदेशात् BālaKrī. i.141. 2 (*on* 1. 203)

**अन्यानुपभुक्ता** (anyānupabhuktā) *adj. (f.)* (used as noun)(woman) not enjoyed by any other person अनन्यपूर्वाशब्दश्च कन्याशब्दसमानार्थत्वाद्तत्पर एव। न त्वन्यानुपभुक्तापरोऽपि गर्भिणीसंस्कारानुपपत्तिप्रसङ्गात् BālamBha. iii. 33.22(*on* 3.16)

**अन्यानुपरक्त** (anyānuparakta) *adj.* not (adventitiously) qualified by any other thing वाचकानामपि लक्षकत्वमन्यानुपरक्तस्वरूपभानाय AdvaiSi.692.26.

**अन्यानुपस्थिति** (anyānupasthiti) *f.* absence of any other (Smṛti text) एवं च तद्वति वर्णशब्दो रूढः "चातुर्वर्ण्यं चरेद्भैक्षम्" इत्यादिषु नियमेन ततत्तदुपस्थितेरन्यानुपस्थितेश्च BālamBha. i.275.11 (*on* 1.90)

**अन्यानुपहित** (anyānupahita) *adj.* not conditioned by, i.e. independent of any other (light) स एव हि स्वात्मना सन् वक्तव्यो यस्यान्यानुपहितं रूपं चकास्ति PratyabhiVi. i.64.3 (*on* i.1.3) (Bhāsk. ग्राहकतया स्थितेनान्येन न विच्छिन्नीकृतम्)

**अन्यानुप्रवेश** (anyānupraveśa) *m.* inclusion of other matter स्वर्गादीनां पुरुषेणार्थ्यमानत्वात् तत्र न नैराकाङ्क्षे कथमन्यानुप्रवेशः BrahmSi. 28.19.

**अन्यानुबन्ध** (anyānubandha) *m.* 1 other consequence (रोमाञ्चः) अस्यापि सात्त्विकत्वादन्यानुबन्धादयो न जायन्ते SaraKaṇṭhā. 581.6; 2 another indicatory letter लण् इति सूत्रेऽन्यानुबन्धे कर्तव्ये पुनर्णकारानुबन्धद्वियं परिभाषा ज्ञाप्यते PariVṛ.(Nī.) 1. 5.

**अन्यानुबन्धक** (anyānubandha-ka) *m.* another indicatory letter केवलोपादानेऽनुबन्धसहितस्यान्यानुबन्धकग्रहणे व्यनुबन्धविशिष्टस्य च ग्रहणं नेत्यर्थः PariVṛ. (Nī.) 32. 15.

**अन्यानुभव** (anyānubhava) *m.* A experience of another thing or object अन्यानुभवरूपप्रदेशभेदाभावाच्चेति एकशब्दाभिप्रायः ŚrutaPra. iB. 16. 29 (*on* i.1.1); B experience of another person स्वानुभवस्वभावस्याविद्यया विनाप्यन्यानुभवरूपत्वविरोधात् ŚrutaPra. ii. 635. 20 (*on* iv. 4. 3); C act of relishing by another person नायकनिष्ठस्य स्थायिप्रकर्षलक्षणस्य रसस्य सामाजिकानुभवयोग्यता नोपपद्यते अन्यभवस्य तस्यान्यानुभवायोगादिति चेत् RasāSu.173. 4 (2.166)

**अन्यानुभाव** (anyānubhāva) *m.* other indication of feelings by gesture or ensuants रसभावतदाभासवृत्तेः प्रशमबन्धनम्। अन्यानुभावनिःशून्यरूपं यत्तत्समाहितम् KāvyālaṅSāSam. 4. 7; VakroJī.173.14.

**अन्यानुभाव्य** (anyānubhāvya) *adj.* which is to be experienced or cognized by other (sentient being) मूर्तानां विरुद्धानां च समावेशस्तु तेष्वन्यानुभाव्यमूर्तद्रव्यान्तरावस्थितिप्रतिघातकत्वाभावान्यानुभाव्यविरुद्धत्वाभावकल्पनेन उपपद्यते PūrvottaVāNaMā. 345.16.

**अन्यानुभाषित** (anyānubhāṣita) *adj.* pointed out by other (teachers) अत एव व्यवस्थितत्वमन्यानुभाषितमप्रयोजनकम् AlaṅkāSa. 204.1.

**अन्यानुभूत** (anyānubhūta) *adj.* (used as noun) (object) experienced by one अन्यानुभूतं न ह्यन्यो जनो जानाति जातुचित् TriṣaŚaPuC.i.1.681; आत्मनि तूपलब्धरि अन्यानुभूतेऽन्यस्मृत्यसंभवात् GoviBh. 128. 5 (*on* ii. 2. 25)

**अन्यानुभूति** (anyānubhūti) *f.* experience of one person विमतं स्मरणम्, अन्यानुभूतौ अन्यस्य वा संभवति PrakaVi.527.18.

**अन्यानुमति** (anyānumati) *f.* consent of other person अभ्युद्धृतं त्वमेव गृहाणेति अन्यानुमतिमन्तरेणाभ्युद्धृतभूम्यादिसर्वद्रव्यविषयमेतद्वचनम् SmṛtiCan. iv. 643. 2; अग्निहोत्रशब्दोऽग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः तेष्वप्यन्यानुमत्यैवाधिकारेण न्यायसाम्यात् NirṇaSi.357.6.

**अन्यानुमा** (anyānumā) *f.* inference of other things धूमभासोरपि प्राप्ता शब्दतान्यानुमां प्रति Kāvyālaṅ.(Bh.)6.7.

**अन्यानुमान** (anyānumāna) *n.* inference, i. e. supposition of another (injunction) आलभेतेत्यनेन अन्यानुमानप्रतिबन्धः TantrVā.21.16 (*on* i.2.7)

**अन्यानुमिति** (anyānumiti) *f.* inference of the other (of the two) प्रमेयापहारनिबन्धनो बाधः, स च परस्परात्यन्ताभावसमानाधिकरणयोरन्यतरनिर्णयेनान्यानुमित्यसंभवरूपः BhaṭṭCin. ii. 20. 6 (*on* i.3.2)

**अन्यानुमीयमान** (anyānumīyamāna) *adj.* (used as noun) (other thing) that is being inferred 'संयोगात्' गम्यगमकभावरूपात् अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमानविलक्षणः ... रसः इति श्रीशङ्कुकः KāvyPra. 90.1(comm.अन्यो योऽनुमीयमानः); अन्यानुमीयमानविलक्षणः ... भावः ... रसः Kāvyānu. (He.) 70.2; वस्तुसौन्दर्यतः सोऽपि रसनीयत्वमेष्यति। अन्यानुमीयमानेन स्थायित्वेन विभावितः BhāvPra.(Śā.)51.6(2)

**अन्यानुयायिन्** (anyānuyāyin) *adj.* following, i. e. supporting other (sentiments) (स्तम्भश्चेष्टाप्रतीघातः) अयं च पुष्टोऽपि सात्त्विकत्वात् सदैवान्यानुयायीति नानुभावादिभिरनुबध्यते SaraKaṇṭhā. 580.18.

**अन्यानुयुक्त** (anyānuyukta) *adj.* (used as noun) (one) questioned or asked by other person अन्यानुयुक्तस्य प्रौढप्रज्ञस्य ... सत्प्रतिपक्षीकरणदर्शनात् KhaṇḍanKhā. 904. 9.

**अन्यानुरक्त** (anyānurakta) *adj.* [*f.* -ā] 1A syntactically connected or construed with another (word) विशेषणं हि स्वानुरक्तं प्रत्ययं विशेष्ये जनयति न त्वन्यानुरक्तम् TātpaṬ.(Vā.)624.10 (*on* iv.1.50); 1B semantically connected with another (meaning), cf. अन्यानुरक्तस्वार्थ; 2 attached to another person कन्यामन्यानुरक्तां कथममृतभुजो मानुषीं कामयन्ते NalaCam.7.26; किं वाधुना तव तया पापयान्यानुरक्तया KāthāSaSāg. ix. 2. 236; अन्यानुरक्ता ह्यैषा त्वयि प्रीतिं कथं भजेत् KathāSaSāg.xii.5.250.

**अन्यानुरक्तस्वार्थ** (anyānurakta-svārtha) *m.* one's (i.e. word's) own meaning semantically connected with another (meaning) तदपि पदमन्यानुरक्तस्वार्थवाचि NyāyMañ.i.365.15.

**अन्यानुरक्ता** (anyānuraktā) *f.* one of the twentyseven types of girls not fit to be married (*lit.* girl in love with other person) अन्यानुरक्ता विगता नष्टा संस्पृष्टमैथुना ... नोद्वाह्याः कन्यकासप्तविंशतिः Vaija. 87. 48.

**अन्यानुराग** (anyānurāga) *m.* attachment with another person अनिष्टोत्प्रेक्षा शङ्का ... परस्मिन्यथा - समुद्रदत्तस्य नन्दयन्त्यामन्यानुरागशङ्का Kāvyānu. (He.)109.9.

**अन्यानुरागविरस** (anyānurāga-virasa) *m.* [Inst.] with disgust or indifference due to attachment to another person अन्यानुरागविरसेन विलोकनाद्वा जानामि सम्यगविलोकनमेव रम्यम् NaiṣC.11. 93.

**अन्यानुरागिता** (anyānurāgi-tā) *f.* the state of being attached to another person काचित् वसतिं प्रार्थयमानं पथिकयुवानमुद्दिश्योत्पन्नमन्मथव्यथादेशा तस्यान्यानुरागितामाशङ्कमाना ... पूर्ववृत्तान्तम् ... वक्तुमुपक्रमते VyaktiVi.123. 27.

**अन्यानुरोध** (anyānurodha) *m.* [Inst.] 1 by one consideration बहुषु पानकेषु सत्सु यद्यन्यानुरोधेन न अन्यत्र रससात्म्यमापादयेत् ManuBh. i. 295. 20 (*on* 3. 195); 2A by following another न चानुवृत्तिसामर्थ्यम्, अन्यानुरोधेनाप्यनुवृत्तिसंभवात् PadMañ. *on* KāśiVṛ. *on* P. i. 1. 12 (110. 17); 2B in conformity or accordance with another एवमन्यानुरोधेन प्रवृत्तत्वादपि पाठक्रमोऽर्थक्रमेण बाध्यते ŚivārkaMaDī. ii. 191. 13 (*on* iv. 4. 18); दृष्टश्च लोके अन्यानुरोधेनाप्यवश्यापेक्षितविषये स्वकार्यसंकोचेन अकाल एव तदवकर्षः BhāṭṭDī. ii. 116. 11 (*on* iv. 2. 6)

**अन्यानुरोधाभाव** (anyānurodhābhāva) *m.* absence of the act of following another मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वात् ... मायामात्रमेव स्वप्नः AṇuBh. 184.11 (*on* iii. 2. 3)

**अन्यानुरोधिन्** (anyānurodhin) *adj.* following, i.e. depending on another न स्थितिः साप्युक्तैव भेदाभेदविवेच[ने]। विज्ञानोत्पत्तियोग्यत्वाद्य[त्त]न्यन्यानुरोधि यत्। तत् व्यङ्ग्यं योग्यतायाश्च कारणं कारणं मतम् PramāVār.1.147.

**अन्यानुल्लेख** (anyānullekha) *m.* absence of reference to any other thing अहंकारविगमात् विषयानुभवाभावाच्च तत्प्रतिसंधानमिति चेत् ... अन्याभावस्यान्यानुल्लेखस्य च दृष्टमात्रस्मृतिप्रतिबन्धकत्वायोगात् ŚatDū. 81. 24.

**अन्यानुविद्धबोध** (anyānuviddha-bodha) *m.* cognition connected with, i. e. based on something else अन्यानुविद्धबोधेऽपि नान्यत्वमुपरुध्यते SphoṭSi.178.4.

**अन्यानुविधान** (anyānuvidhāna) *n.* i act of following or acting in conformity with another चलत्वाद्यालोकवत्तमो द्रव्यान्तरम्, अन्यानुविधाननियमात्र स्वाभाविकं चलनमस्य घटरूपादिवदिति चेत् TattvPradī. (Ci.) 31. 6; ii any other accordance न च कृपाणान्वयव्यतिरेकानुविधानात् कृपाणे मुखदीर्घत्ववत् औपपत्तिकमौपाधिकत्वम् अन्यानुविधानाभावात् TattvCin. iv(1). 435. 7.

**अन्यानुविधायित्व** (anyānuvidhāyi-tva) *n.* the state of being in accordance with other (condition) अन्यानुविधायित्वेऽपि स्वधर्म एव ते AṇuBh. 195.1 (*on* iii. 2. 20)

**अन्यानुशासन** (anyānuśāsana) *n.* 1 rule of another (king) पृथिवीम् ... तामेवाद्य महाबाहो पश्याम्यन्यानुशासनात्। हीनां हस्तिगवाश्वेन MahāBhā.xi.17.21; 2 advice of another प्राक्प्रजापतिनियोगवशात्साध्वसाधु वा स्वयमन्यानुशासननिरपेक्षोऽनुतिष्ठति ManuBh. i.22.27 (*on* 1.28)

**अन्यानुषक्त** (anyānuṣakta) *adj.* attached to another woman अन्यानुषक्तेऽपि हरौ वियातां प्रायुङ्क्त दूतीमिव दृष्टिमन्या Yādavā.13.54.

**अन्यानुषङ्ग** (anyānuṣaṅga) *m.* other consequence or ensuant अत्रापि पूर्ववदन्यानुषङ्गो न भवति SaraKaṇṭhā. 581.18.

**अन्यानुष्ठितकर्मन्** (anyānuṣṭhita-karman) *n.* action, i.e. diet observed by someone else आरोग्यसिद्धिर्दृष्टास्य नान्यानुष्ठितकर्मणा ViveCū.55.

**अन्यानुसंधान** (anyānusandhāna) *n.* 1 recollection of one यत्रोत्तरे दीयमाने अन्यानुसंधानपूर्वकोऽप्यन्यत्कार्यं सिध्यति तदान्यकार्यावलगनादवलगितम् AbhinBhā. ii. 454. 22 (*on* 18. 116); 2 meditation on any other thing ईश्वरार्पितमनस्त्वेन समाहितस्यान्यानुसंधानाभावात् ... सुखदुःखसाम्यम् JīvanVi. 24. 6.

**अन्यानुसारिणी** (anyānusāriṇī) *adj.* (*f.*) following, i. e. obeying (the rules of) another (king) पृथिवीम् ... तामेवाद्य महाबाहो पश्याम्यन्यानुशासनात् (v. l. अन्यानुसारिणीम्) हीनां हस्तिगवाश्वेन MahāBhā. xi. 17. 21.

**अन्यान्तरप्रदेश** (anyāntara-pradeśa) *m.* region of other corridor अन्यान्तरप्रदेशे तु क्षुद्रनासीम(सि)(?सी) प्रभूष्यते MānaSā.33. 271.

**अन्यान्तर्गतिस्थिति** (anyāntargati-sthiti) *f.* existence, i.e. possibility of the inclusion of other (part) अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम्। तद्विशेषप्रपञ्चत्वात्तत्रान्यान्तर्गतिस्थितेः TantrVā. 655. 3 (*on* iii.1.1)

**अन्यान्तर्भाव** (anyāntarbhāva) *m.* inclusion of other thing असमानाभिधानेनान्यान्तर्भावः PrakaVi. 506. 23.

**अन्यान्तविशेषण** (anyānta-viśeṣaṇa) *n.* qualifier or adjective ending with the word *anya* अजन्येति। अन्यान्तविशेषणम् GuruCandr. i. 425.19.

**अन्यान्तिकस्थ** (anyāntika-stha) *adj.* existing in the possession of the person who is other (than the owner) परकीयस्यापि (धनस्य) चौर्यादिनान्यान्तिकस्थस्य दर्शने तस्यैव स्वामित्वापत्तेः SmṛtiCan. iv. 601.1.

**अन्यान्तिकस्थता** (anyāntikastha-tā) *f.* [Inst.] by way of existing in the possession of the person who is other (than the owner) अन्वाहितं स्वस्मिन् स्थितं परधनमन्यान्तिकस्थतया कृतम् SmṛtiCan. iv. 425. 14.

**अन्यान्त्य** (anyāntya) *adj.* (used as noun) last (knowledge) of the other (patron) स्यादनैकान्तिको हेतुरन्यान्त्येष्वसमीक्षणात् BṛĀraUBhVā. i.4.75 (comm. अन्यस्य यजमानस्य अन्त्येषु ज्ञानेषु)

**अन्यान्य** (anyā́nya) *adj.* [*f.* –ā] [repitition of the word *anya* is optionally regarded as compound with the first member in nom. sg., Vār.11 *on* P.viii.1.12] 1 each other 2 one after another 3 different (used as noun) (regions) which are different 4 different and different, i.e. various 5 excluded from different 6 other 1 each other कृष्णेभिर॒क्तोषा रुश॑द्भि॒र्वपु॑र्भि॒रा च॑रते अ॒न्या॒न्या RV.i.62.8 (Sāy. परस्परव्यतिहारेण); स॒मा॒नो अध्वा॒ स्वस्रो॑रन॒न्तस्तम॒न्यान्या च॑रतो दे॒वशि॑ष्टे ... नक्तो॒षासा॑ RV.i.113.3; SV.(Kau.)1751; प्रजा असृजत ... ता अशनायन्तीः अन्यान्यामादन् JaimiBr.1.117; 3.148; ता अन्यान्यस्यै लोकम् अभिध्यायन्तीः कामं गमयन्ति JaimiBr.3.280; ता अन्यान्यस्यै भागाय धेनुपरिसारम् अतृप्यन् JaimiBr. 3.313; शिरसी। निजनिजकबन्धे योजय। तयोत्सुकयान्यान्यकबन्धयोर्न्यस्ते PrabaK.81.7; PurāPraSam.8.15; 2 one after another द्वे विरू॑पे चरतः॒ स्वर्थे॑ अ॒न्यान्या॑ व॒त्समुप॑ धापयेते RV.i.95.1 (*but* Sāy. परस्परव्यतिहारेण); AV.(P.) viii.14.1; VājaS.33.5; VājaS.(K.)xxxii.1.5; 3 different अन्योन्याश् (v.l. अन्यान्याश्)चैव तनवो यथेष्टं प्रतिपद्यते MahāBhā. xiv.19.24; न चान्यान्यकुशलत्वविशिष्टविषयीकरणात् अनधिगतार्थगन्तृता TarkBhā. (Ke.)32.4; (used as noun) (regions) which are different अन्यान्यवृत्तयः शब्दाः सर्वेरग्रहणादङ्गुलिस्पर्शादिवदिति NyāyVār. 298.10 (*on* ii.2.18); 4 different and different, i.e. various अन्यान्यानि नु तन्त्राणि भगवन्मुखनिर्गतम्। सारं समुपजीव्यैव ... व्यापितानि JayāS.1 (App.).4; 5 excluded from different thing, cf. अन्यान्यत्व1; 6 other, cf. अन्यान्यदिन.

**अन्यान्यकर्तृ** (anyānya-kartṛ) *adj.* having various agents द्रव्याण्यन्यान्यकर्तृणि सर्वाणीत्यार्हतं मतम् VarāṅgaC.26.44.

**अन्यान्यक्रिया** (anyānya-kriyā) *f.* various acts आकाश इव लोकक्रियाणाम् विच्छेदेऽपि चान्यान्यक्रियोदयव्यस्तथैव MaYānaSū. 37.19 (9.21)

**अन्यान्यता** (anyānya-tā) *f.* the state of being different, difference करणान्यान्यता दृष्टा कर्तुः कर्ता स एव ... करणैर्युक्तः कारणम् CaraS. iv.1.49 (1941 Ed.)

**अन्यान्यत्व** (anyānya-tva) *n.* 1 the state of being excluded from different thing अन्यान्यत्वेन ये भावा हेतुना करणेन वा। विशिष्टा भिन्नजातीयैरसंकीर्णा विनिश्चिताः TattvSaṁ. 1069; हिंसादिफलञ्च कर्तरि न स्यात् शरीरस्यान्यान्यत्वात् Upask. 173. 4 (*on* iii. 2. 4); तत्रैषामीश्वरत्वं सर्वेषामुत संकर्षणस्य जीवत्वम्। अन्यान्यत्वम् AṇuBh. 138. 21 (*on* ii. 2. 42); 2 the state of being different

प्रतिसर्गं तेषामन्यान्यत्वकल्पने गौरवमित्येकस्यैव नित्यसर्वज्ञस्य कल्पनात् TattvCin. iv(1). 508. 5; 3 [Inst.] as being each other, i. e. mutually सामान्यलक्षणसिद्धयर्थं च व्यक्तिवृत्यन्तरयोरन्यान्यत्वेन क्रोडीकृतयोर्ग्रहणम् CitraMī.39. 7.

**अन्यान्यदिन** (anyānya-dina) *n.* day which is other (than that of sacrifice) मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव VyutpaVā. 149.17.

**अन्यान्यधर्मविधान** (anyānyadharma-vidhāna) *n.* prescription of different properties धर्म्यनुवादेनान्यान्यधर्मविधानादेकमेवोच्यते TattvPrakā. 164A.9 (*on* iii. 3. 2)

**अन्यान्यपातानुगतम्** (anyānyapātānugatam) *adv.* following the discharge of each other ते ... नान्यान्यपातानुगतं व्यमुञ्चन्विमार्गसंपातभियेव बाणाः RāghPāṇ. (Dha.)16. 51.

**अन्यान्यप्रादुर्भाव** (anyānya-prādurbhāva) *m.* 1 manifestation of different, i. e. new (organs) यद्यपक्रामति किं नात्यन्तायापक्रामति। संततत्वात्। अथवान्यान्यप्रादुर्भावात् MahāBh. i. 455. 21 (*on* ii. 3. 28); 2 the word *anyānyaprādurbhāva* अन्यो(न्या)न्यप्रादुर्भावादिति अपादान इति सूत्रस्थभाष्यप्रयोगे कर्मव्यतिहार स्पष्ट एव LaŚabdeŚe. ii. 416.14.

**अन्यान्यफलभक्षिन्** (anyānyaphala-bhakṣin) *adj.* who eats different fruits अन्यान्यफलभक्षिणः। असंहता विनश्यन्ति। भारुण्डा इव पक्षिणः Pañcā. 127. 16.

**अन्यान्ययोगिता** (anyānya-yogitā) *f.* connection or association with another (quality) एकहान्या प्रधानेन शुद्धेनान्यान्ययोगिता। स्यादुणस्य यथा राज्ञः पुरुषो ब्राह्मणस्य च SambaSi. 3.17.

**अन्यान्यरत्नरूप** (anyānyaratna-rūpa) *adj.* of the form of different and different, i. e. various jewels तत्रान्तर्दर्शितान्योऽन्यमूर्तिभेदं क्षणे क्षणे। अन्यान्यरत्नरूपं च लिङ्गमभ्यर्च्य शूलिनः KathāSaSāg. xvii. 2. 115.

**अन्यान्यराग** (anyānya-rāga) *m.* love for or attachment to each other उर्वीपतेश्च स्फटिकाश्मनश्च शीलेज्झितस्त्रीहृदयस्य चान्तः। असंनिधानात्सततस्थिती-नामन्यान्यरागः कुरुते प्रवेशम् Ind. Spr. 3810.

**अन्यान्यरूप** (anyānya-rūpa) *n.* 1 different and different, i.e.various forms अन्यान्यरूपसंभूतौ तस्मादेकस्वरूपतः। विवृत्तमर्थरूपेण कथं नाम तदुच्यते TattvSaṁ. 141; 2 different forms, cf. अन्यान्यरूपतस्.

**अन्यान्यरूप** (anyānya-rūpa) *adj.* [*f.* –ā] of different and different, i. e. various forms यदियं संकोचात्मिका शङ्केव ... अत एव वैचित्र्यकल्पनादेव सा बहुविधमर्यादिशब्दनिर्देश्या प्रतिशास्त्रं प्रतिदेशं चान्यान्यरूपा ParāTri. 235.5; सोऽपि तथैव क्षणे क्षणे अन्यान्यरूपः स्रष्टव्यः (प्रमाणाभासः) PratyabhiVi.ii. 72. 4 (*on* ii.3.1)

**अन्यान्यरूपतस्** (anyānyarūpa-tas) *adv.* by way of different forms संस्कारसूत्रपातेन चतुर्धा हृदयात्मनाम्। वपुर्मनोवचःकार्यजातेष्वन्यान्यरूपतः। ... इत्येवमूहापोहेन संबन्धो नार्पितस्तदा PrabhāC. 177. 25.

**अन्यान्यरूपता** (anyānyarūpa-tā) *f.* the state of having different and different, i. e. various forms यश्च ईश्वरः प्रमाता आत्मा शिव इत्यादिः अनन्तप्रकारः परामर्शः तस्य यद्यपि भेदोऽन्यान्यरूपता PratyabhiVi. i. 275. 3 (*on* i. 5. 17); यदेकात्मकमेकस्वभावं तस्य यो भेदोऽन्यान्यरूपता इयमेव सा क्रियोच्यते PratyabhiVi. ii. 196. 2 (*on* ii. 4. 18); [Inst.] by way of having different and different, i.e. various forms एकैकस्य वस्तुनोऽन्यान्यरूपतया निर्माणे सर्वमसमञ्जसमापद्येत SyādvāMañ. 6 (22); SarvaDaSaṁ. 3. 136; तथा भाति अन्यान्यरूपतया भाति Bhāsk. ii. 18. 15 (*on* ii.1.5)

**अन्यान्यरूपत्व** (anyānyarūpa-tva) *n.* the state of having different and different, i.e. various forms अथ च अन्यान्यरूपत्वं भाति PratyabhiVi.ii.17.6 (*on* ii.1.5)

**अन्यान्यवनभूमि** (anyānya-vanabhūmi) *f.* different and different, i.e. various forest regions पञ्चवर्षीमतीत्यैवमन्यान्यवनभूमिषु पुनर्द्वैतवनोत्सङ्गमधितस्थौ युधिष्ठिरः PāṇḍaC. 8. 558.

**अन्यान्यव्यसन** (anyānya-vyasana) *n.* different and different, i.e. various calamities अन्यान्यव्यसनश्रेणी यद् ममैषा पुरः स्थिता PārśvC. 6. 880; करुणः ... राज्यदेशपरिभ्रंशादन्यान्यव्यसनोदयात् ... प्रजायते BhāvPra. (Śā.) 62. 18 (3)

**अन्यान्यशम्या** (anyānya-śamyā) *f.* different yoke-pins सारस्वतसत्रप्रधानयागानामनुदिनमन्यान्यशम्याः प्रान्तप्रदेशेषु कर्तव्यत्वात् चोभयत्राप्यनिरशक्यः MayūMāli. 784. 22 (*on* x. 8. 11)

**अन्यान्यशय्या** (anyānya-śayyā) *f.* one bed after another धृताधृतेस्तस्य भवद्वियोगादन्यान्यशय्यारचनाय लूनैः। अप्यन्यदारिद्र्यहराः प्रवालैर्जाता दरिद्रास्तरवोऽमराणाम् NaiṣC. 8. 67.

**अन्यान्यशास्त्र** (anyānya-śāstra) *n.* different and different, i.e. various treatises अन्यान्यशास्त्रतरुसंगतचित्तहारिपुष्पोपमेयकतिचिन्निचितप्रमेयैः। हृद्याम् ... एनां मालामिव वामलहृदो ... हृदये वहन्तु SyādvāMañ. 32(61)

**अन्यान्यसाधन** (anyānya-sādhana) *n.* different and different, i.e. various means अन्यान्यसाधनाधीना सिद्धिर्यत्र विवक्षिता। तत्साधनान्तराभावनिमित्ता व्यपदिश्यते VākyaPa. iii. 9. 109.

**अन्यान्यस्थान** (anyānya-sthāna) *n.* different places अध्ययनोपक्रमविरतिवैचित्र्येण तत्तत्स्थानपरित्यागेनान्यान्यस्थानेऽखिलैः पठ्यमानस्य वेदवाक्यानवयवतायाः सुप्रसिद्धत्वात् NyāySu. (Ja.) 10A. 7 (*on* i. 1. 1)

**अन्यान्यस्वभाव** (anyānya-svabhāva) *adj.* of different natures ते हि अन्यान्यस्वभावा युगपन्न भान्ति (महदादिरूपाः) PratyabhiVi.ii.196.3 (*on* ii.4.18)

**अन्यान्यहेतु** (anyānya-hetu) *adj.* having different causes तदिमेऽन्यान्यहेतवो वर्णाः स्वकारणानुपूर्वीजन्मानः PramāVāSvopVṛ. 108. 15.

**अन्यान्याभास** (anyānyābhāsa) *m.* different manifestations सोऽपि तथैव क्षणे क्षणे अन्यान्यरूपः (v. 1. अन्यान्याभासरूपः) स्रष्टव्यः PratyabhiVi. ii.72.4 (*on* ii.3.1)

**अन्यान्याहारवर्धित** (anyānyāhāra-vardhita) *adj.* nourished by food of each other अन्यान्याहारवर्धिताः। जिनशासनसंपन्नाः सर्वे ते बान्धवाः मताः MalliC. 7. 506.

**अन्यान्वय** (anyānvaya) *m.* A semantic relation with another (meaning) नञो अन्यान्वयस्य व्युत्पन्नत्वेऽपि अभावप्रतियोगिभूतस्य वरणस्य कृतिसाध्यत्वाभावेन भावनान्वयानुपपत्तेः BhāṭṭDī. iv. 99.11 (*on* x. 8.1); न च ... 'गोत्यमश्ववृत्ती'त्यादिव्यवहारः स्यादिति वाच्यम्, प्रकृत्यर्थविशिष्टसत्ताया एवान्यान्वयात् LaCandr. 317. 31; B syntactic relation with another (word), cf. अन्यान्वयासंभव.

**अन्यान्वयबोध** (anyānvaya-bodha) *m.* knowledge of semantic relation with another (meaning) अन्यथा अन्यपरादन्यान्वयबोधो न स्यात् ... इति शब्दाभासोच्छेदप्रसङ्गः TattvCin. iv(1).109. 2.

**अन्यान्वयरहित** (anyānvaya-rahita) *adj.* devoid of semantic relation with another (meaning) अनतिस्पष्टब्रह्मलिङ्गानि ब्रह्मापलापान्यान्वयरहितपूर्वपक्षविषयत्वसाम्यात् तदनन्तरं द्वितीयपादे विचारितानि ŚivārkaMaDī. i. 399. 23 (*on* i. 3.1)

**अन्यान्वयव्युत्पत्ति** (anyānvaya-vyutpatti) *f.* knowledge of semantic relation with another (meaning) तादृशस्यैव तदर्थयोरन्यान्वयव्युत्पत्तौ पार्ष्ठिकबोधविषयत्वम् BhāṭṭDī. iii. 273. 23 (*on* x. 4. 2)

**अन्यान्वयशङ्का** (anyānvaya-śaṅkā) *f.* supposition of semantic relation with another (meaning) सर्वज्ञत्वादिपरमेश्वरलिङ्गानामन्यान्वयशङ्कानिराकरणेन ... अदृश्यत्वादिगुणक इति धर्मनिर्देशः कृतः ŚivārkaMaDī. i. 378.12 (*on* i. 2. 22)

**अन्यान्वयासंभव** (anyānvayāsambhava) *m.* impossibility of syntactic relation with another (word) सवितुर्भर्ग इत्यस्य ब्रह्मैवार्थस्स्यात् ... सवितृशब्दस्य ... वरेण्यशब्दं विहायान्यान्वयासंभवात् ŚivārakaMaDī. i. 260. 26 (*on* i. 1.22)

**अन्यान्वयिन्** (anyānvayin) *adj.* (used as noun) other relational adjunct अन्यान्वयिनोऽप्यपेक्षायां सत्यां कथंचिदन्वयस्स्यात् ŚivārkaMaDī. i.197.12 (*on* i. 1.7)

**अन्यान्वित** (anyānvita) *adj.* 1 semantically related with another (meaning) अन्यान्वितघटत्वं घटपदस्य शक्यम् LaCandr. 669. 15; अन्यान्वितकर्मत्वमामदिपदस्येत्यादिविवरणाद्युक्तेरयमर्थः LaCandr. 669. 16; (used as noun) (that) which is semantically related with another (meaning) यदपीदमन्यान्विते सामर्थ्यमङ्गीकुर्वतामन्यपदार्थानन्त्येन तदन्वितानामप्यानन्त्यात् बहुविषयतया पदसामर्थ्यापद्यते NyāyMa.166.11; कार्यपदस्य तु स्वरूपेऽन्यान्विते वेति प्रयोजकद्वैविध्याङ्गीकारे गौरवप्रसङ्गो बाधक उन्नेयः PramāMa.17.18; कार्यपदस्य च स्वरूपे सामर्थ्यमन्यान्विते वा सामर्थ्यम् SarvaDaKau. 121. 6; 2 semantically related with one (meaning), cf. अन्यान्वितत्व.

**अन्यान्वितत्व** (anyānvita-tva) *n.* [Inst.] as being semantically related with one (meaning) अन्यान्वितत्वेनोपस्थितस्य अन्यत्राश्रयत्वायोग्यत्वात् MayūMāli.11.14 (*on* i. 2. 2)

**अन्यान्वितस्वार्थ** (anyānvita-svārtha) *m.* meaning of one word semantically related with another (meaning) अन्यान्वितस्वार्थे पदानां सामर्थ्यं न कार्यान्वितस्वार्थे ViṣṇuSaBh. 24. 1 (*on* 10); तथा च सति अव्यवहितसंबन्धोपादानसिद्धये 'अन्यान्वितस्वार्थमात्रे शब्दसामर्थ्यमभ्युपेयम् VivaPraSaṁ. 330. 21.

**अन्यान्वितस्वार्थाभिधायित्व** (anyānvitasvārthābhidhāyitva) *n.* reference to the meaning of one (word) semantically related to another (meaning) तस्मादन्यान्वितस्वार्थाभिधायित्वं पदानामनुयायीति वक्तव्यमन्विताभिधायित्ववादिना ŚrutaPra.iB. 87.16 (*on* i.1.1)

**अन्यान्वितात्मलक्षणा** (anyānvitātmalakṣaṇā) *f.* indication in the meaning of one (word) semantically related with another (meaning) तदेव तर्हि सर्वत्र पदार्थानामन्यान्वितात्मलक्षणायां कारणम् NyāyRaMā. 85. 3.

**अन्यान्विताभिधान** (anyānvitābhidhāna) *n.* denotation (of a word) semantically related with another (meaning) अन्यान्विताभिधानेनापि व्यवहारोपपत्तेः ĀgaPrā. 34. 23.

**अन्यान्वेषण** (anyānveṣaṇa) *n.* act of searching for other (qualities) यदि संभवन्ति कतिचिदिह पूर्वसूचिता गुणाः ... तत्र किंचिदन्यान्वेषणेन TilaMañ.52.3.

**अन्यापकृष्टता** (anyāpakṛṣṭatā) *f.* inferiority of another person न च स्वापेक्षयोत्कृष्टतायाः ... भेदव्याप्यत्वेन स दोषस्तुल्य एवेति वाच्यम्। ... अन्यापकृष्टताया एव (वा) नमस्कार्यतावच्छेदकत्वात् SetuBa. 278.17.

**अन्यापतच्छस्त्र** (anyāpatacchastra) *m., n.* [AmaK.1632, *but m.*, MW.] falling weapon of another person ते कुमाराः प्रतस्थिरे। ... दर्शयन्तः पथि ... भृशमन्यापतच्छस्त्रग्रहणस्य च नैपुण्यम् TriṣaŚaPuC. ii. 5. 85.

**अन्यापति** (anyā-pati) *m.* husband of another woman, i. e. potent to the woman who is other (than wife), type of impotent person शालीनोऽन्यापतिस्तथा NāraSm. 174. 13; अन्यापतिः यस्य भार्याव्यतिरिक्तायामेव योषिति पुंस्त्वम् Aparā. 86. 26 (*on* 1. 55); यस्य स्वभार्या(भार्या?)परिहारेणान्यासु पुरुषभावः सोऽन्यापतिरिति VīraMi. (Saṁskāra.) 758.11; अन्यापतिः अन्यस्यां भवति पुंस्त्वं न स्वभार्यायाम् VyavaNi. 380. 9; यस्य भार्याव्यतिरेकेणान्यासु पुरुषभावः सोऽन्यापतिः BālamBha. ii. 250.12 (*on* 2.140)

**अन्यापत्यप्रतिग्रह** (anyāpatya-pratigraha) *m.* act of accepting or adopting offspring of another person नानर्थकं व्यवधानकल्पनम् ... तत्र ... अन्यापत्यप्रतिग्रहस्यात्र ... निमित्तत्वरूपोद्देश्यत्वेनोपादानात् MīmāKau. i.48.22 (*on* i. 3. 7)

**अन्यापद्** (anyāpad) *f.* another calamity अन्यापदं यां च वदन्ति दीनाः सव्येतरं चक्रविकीर्णपुच्छाः (हयाः) ... पराजयं ते कथयन्ति भर्तुः AśvaCi. 9. 41.

**अन्यापदिष्ट** (anyāpadiṣṭa) *adj.* assigning something else as a reason or pretext प्रेक्षणके ... समीपोपवेशनम्। तत्रान्यापदिष्टं स्पर्शनम् KāmSū. 217.19 (3. 4); JayaMa. 217. 22 (*on* 3. 4)

**अन्यापदेश** (anyāpadeśa) *m.* **1A** another pretext नीवीविस्रंसनं वसनपरिवर्तनमूरुमूलसंवाहनं च। एते चास्यान्यापदेशाः KāmSū. 205. 6 (3. 2); **[Abl.]** under another pretext यद्योषितः संमुखमागताया अन्यापदेशात् व्रजतो नरस्य गात्रेण गात्रं घटते रतज्ञा आलिङ्गनम् ... आहुः RatiRaha. 6. 1; अनुचिन्त्य भैमीमन्यापदेशात् प्रलपन्नजस्रम्। ... नृपतिः ... अज्ञातवासस्थिरमध्युवास Nalābhyu. 8. 20; **[Inst.]** under another pretext कोशदण्डावेकस्थौ कारयेत् कुल्यकुमारमुख्यांश्चान्यापदेशेन ArthŚā. ii. 218. 10 (5. 6); अहं तस्य पुरुषस्य प्रवृत्तिमन्वयं च ज्ञातुमन्यापदेशेन गतवानस्मि Avimā. 1. 6 (16); संमुखागतायां प्रयोज्यायामन्यापदेशेन गच्छतो गात्रेण गात्रस्य स्पर्शनं स्पृष्टकम् (आलिङ्गनम्) KāmSū. 97. 18 (2. 2); JayaMa.97.21 (*on* 2.2); कन्यां चैषामलंकृतामन्यापदेशेन दर्शयेयुः KāmSū. 195.17 (3.1); स्वप्नस्य च भावयुक्तस्यान्यापदेशेन (कथनम्) KāmSū. 217. 17 (3. 4); 329. 6 (6. 3); तापसप्रमदाः ... व्रजन्त्यन्यापदेशेन सुदूरं विह्वलात्मिकाः PadmP. (Ra.) 33. 16; समाप्ताशनकृत्यश्च पादन्यस्तोत्तमाङ्गया। पप्रच्छान्यापदेशेन स्वस्य पुत्रसमुद्भवम् PadmP. (Ra.) 41. 110; सखी सा विज्ञाय तस्या हृदि वर्तमानम्। अन्यापदेशेन सदर्थमन्यं मनःप्रसादार्थमिमं जगाद VarāṅgaC. 19.50; कथामन्यापदेशेन विधाय सदसि स्थितः। पश्यति स्म निजं खड्गम् BṛKathāK. 66.78; हस्तस्य सुलभत्वात्। तमन्यापदेशेनाकृष्य तदङ्गुलिचुम्बनम् JayaMa. 114. 22 (*on* 2. 3); मनोरथोऽन्यापदेशैः स्वाभिप्रायस्य सूचनम् BhāvPra. (Śā.) 225. 1 (8); (ब्रह्मचारी व्रती ... त्यजति व्रतम्) अमीषाम् ... अन्यापदेशेन स्वदेशनिष्कासनमेव दण्डः DaṇḍaVi. 270. 22; कन्यापक्षीयास्तां च भूषितां तेषाम्। संदर्शयेयुरुचितं रम्यामन्यापदेशेन KandaCū. iii.1.30; पत्युरन्यापदेशेन कोपं प्रकाशयति चेन्मध्याधीरा ŚṛṅgāMañ. (A.) 7. 4; **1B [Abl.]** under the pretext of another सा ... अन्यापदेशाच्छिशुं प्रीत्या कर्षति चुम्बति SubhāRaK. 17.46; **[Inst.]** under the pretext of another तस्यां स्वयं मनोरथावेदनमन्यापदेशेन KāmSū. 266.16 (5. 2); एते चान्यापदेशेन कथयन्ति समागताः। नृपाः ... दुःखम् PadmP. (Ra.) 5. 279; अन्यापदेशेनेति। त्वत्तुल्यरूपया सहोपगमः स्वप्ने ममाभूदिति कथनम् JayaMa. 217.18 (*on* 3. 4); अन्यापदेशेनेत्यस्मिन्मित्रस्या(?)मिति दुर्घटो मनोरथः स किं भविष्यति न भविष्यतीति न जाने JayaMa. 267.12 (*on* 5. 2); विरम विरम नेयं पान्थ नम्राम्रमाला ... । इति बहुविधमुक्तः सेवकोऽन्यापदेशैस्त्यजति न विपुलाशापाशबद्धः कुसेवाम् SevyaSe. 48; अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्। यथा हर्षचरितादिः SāhiDa. 377. 3; **2A** variety of figure of speech 'Disguised Reference' (Bhāvika) अन्यापदेशो वा यस्तु त्रिविधं भाविकं विदुः SaraKaṇṭhā. 547. 26; तदिदमन्यापदेशाख्यं भाविकम् SaraKaṇṭhā. 549. 20; **2B** variety of figure of speech 'Disguised Reference' (Samāsokti) अन्यदेवाभिप्रेत्यान्याभिधानं समासोक्तिः। सैव चान्यापदेश इत्युच्यते AlaṅkāŚe. 13. 0 (13); **3A** act of deceiving another, fifth transgression (of a certain vow) अतिचारास्ततो हेयाः पञ्च पञ्च व्रते व्रते मत्सरोऽन्यापदेशश्च तुर्यशिक्षाव्रते स्मृताः YogŚā. 3.118; **3B** act of deceiving another अत्र प्रतिभाति छलमधिको व्यभिचारि भाव इति। ... हास्ये च व्यपदेशान्यापदेशयोर्दर्शनात् RasTa. 109. 9; **4** another name दिशोऽपि हि न दृश्यन्ते देशोऽप्यन्यापदेशभाक् YogVā. i. 26. 23; **5** wrong usage. YogVā. i.26.23 (comm. व्यपदेशादन्यं विरुद्धमपदेशं व्यवहारम्। स्वस्यैव निरवकाशत्वम्); **6** pretext of one, cf. **अन्यापदेशतस् B**; **7** reference to another (matter), cf. **अन्यापदेशता A**.

**अन्यापदेश** (anyāpadeśa) *adj.* having reference to another person तेन ... अन्यापदेशगानादिक्रमेण ... कस्यचिन्मनस्यावर्जनातिशयं विधत्ते AbhinBhā. i.175. 15 (*on* 4. 263)

**अन्यापदेशकथन** (anyāpadeśa-kathana) *n.* statement under the pretext of another अन्यापदेशकथनमन्यैः सस्मितभाषणम्। ... भावैरित्यादिभिर्वेश्यामनुरक्तां विभावयेत् BhāvPra.(Śā.)114. 5 (5); अन्यापदेशकथनैस्तस्य भावपरीक्षणम् BhāvPra.(Śā.)118.1 (5)

**अन्यापदेशतस्** (anyāpadeśa-tas) *adv.* **A** under the pretext of another (नरः) अन्यापदेशतस्तत्कथया सखिभिः समं तिष्ठेत् RatiRaha. 13.43; अन्यापदेशतोऽपि च तामेवोद्दिश्य भूतलेल्लिखनम्। ... उक्तम् KandaCū. v. 2. 13; **B** under the pretext of one (thing) अन्यापदेशतः खलु कुर्यादन्यत् स्वकीययामितम् KandaCū. iii. 2. 40.

**अन्यापदेशता** (anyāpadeśa-tā) *f.* **A [Inst.]** by way of reference to another (matter) अन्यापदेशतया स्फुरितमेव कविचेतसि प्रथमं च प्रतिभाप्रतिभासमानमघटितपाषाणशकलकल्पमणिप्रख्यमेव वस्तु ... तद्विदाह्लादकारिकाव्यत्वमधिरोहति VakroJī. 9. 12; **B** the state of being a reference to other (meaning) समाप्तायां पुनरभिधायां वाच्यार्थबलादन्यापदेशता ध्वन्यते Loc.116.10 (*on* 2. 26); Kāvyānu. (He.) 58.21.

**अन्यापदेशध्वनि** (anyāpadeśa-dhvani) *m.* suggestion of reference to other (meaning) आद्योदाहरणयोरन्यापदेशध्वनिमाह लोचनकारः Kuval. 67 (31); अभिधायां पर्यवसितायामर्थ...°अभिव्यक्तिर्ध्वनिरूपैव लोचनकारोऽप्यत्रान्यापदेशध्वनिं मेने AlaṅkāMañ.107.12.

**अन्यापदेशयुक्ता** (anyāpadeśa-yuktā) *adj.* (*f.*) associated with the reference to other (matter) अन्यापदेशयुक्ताः कथयेत्सुकथाः कथापथाभिज्ञः KandaCū. v. 2. 12.

**अन्यापदेशलक्षण** (anyāpadeśa-lakṣaṇa) *adj.* characterised by the reference to other (matter) आदिग्रहणादप्रस्तुतप्रशंसाप्रकारस्य कस्यचिदन्यापदेशलक्षणस्योपचारवक्रतैव जीवितत्वेन लक्ष्यते VakroJī. 103.1.

**अन्यापदेशवादिन्** (anyāpadeśa-vādin) *m.* one who speaks with reference to (the defect of) another person अदुष्टस्यैव यो दोषान्कीर्तयेद्दोषकारणात्। अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः KātySm. 774; SmṛtiCan.iv.760.14; अन्यापदेशवादी अन्यमपदिश्यान्यदोषाभिधायी DaṇḍaVi.199.10.

**अन्यापदेशव्याज** (anyāpadeśa-vyāja) *m.* [Inst.] under the pretext of reference to another (event) अतीतानागते कार्ये कथ्यते यत्र वस्तुनः। अन्यापदेशव्याजेन पताकास्थानकं तु तत् BhāvPra.(Śā.)202.11(7); SāhiSā.1.50.

**अन्यापदेशशतक** (anyāpadeśa-śataka) *n.* name of a text (*lit.* collection of hundred verses of 'Disguised Reference') अन्यापदेशशतकं प्रहसनमपि येन लीलया ग्रथितम् Ḍamaru.4.

**अन्यापदेशालंकार** (anyāpadeśālaṅkāra) *m.* figure of speech called 'Disguised Reference' (Anyāpadeśa) अन्यापदेशालंकारस्य साध्यवसानलक्षणात्वम् KāvyKaVṛ. 45.18 (2. 4)

**अन्यापदेशिन्** (anyāpadeśin) *m.* type of poet (who refers to his own poem as of others) दश च कवेरवस्था भवन्ति ... । तद्यथा काव्यविद्यास्नातकः ... अन्यापदेशी KāvyMī. 19.17; यः स्वमपि काव्यं दोषभयादन्यस्येत्यपदिश्य पठति सोऽन्यापदेशी KāvyMī. 19. 22.

**अन्यापनय** (anyāpanaya) *m.* removal of one thing अन्यापनये च नान्यस्यापनयः असंबन्धात् TantrVā. 1058.17 (*on* iii. 5. 44)

**अन्यापनुत्ति** (anyāpanutti) *f.* act of driving away other (calamities) अत्रापि दंपतीनां च सुखायान्यापनुत्तये। कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् BhāgP. vii. 13. 25.

**अन्यापम** (anyāpama) *adj.* having another declination of planet क्रान्तिः ... । यद्वान्यापमजीवात्मा स्फुटान्यापमशिञ्जिनी SiddhāTaVi. 254. 3; खेटकोट्यपमो बाहुर्विषमोऽन्यापमः समः SiddhāTaVi., 256.19; अन्यापमज्याभुजे कः कर्णः SiddhāTaVi. (ŚeṣaVā.) 30. 6.

**अन्यापराजित** (anyāparājita) *adj.* not conquered by other (kings) शूरोऽश्वमेधयाजी च सदैवान्यापराजितः। विरुद्धं किं नु तेनोक्तं यथावस्त्वभिधायिना KathāSaSāg. viii.1.123.

**अन्यापराध** (anyāparādha) *m.* 1 another mistake or sin यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते। सोऽन्यापराधे दुर्मेधा विषमे विनिपात्यते MahāBhā. v. App. I.1(5); 2 offence of other person स्वल्पमन्यापराधं हि परस्तु बहु मन्यते ĀdiP. 25.28.

**अन्यापरिगृहीतदेवालय** (anyāparigṛhīta-devālaya) *adj.* whose temple is not taken by another देवोऽन्यान्यापरिगृहीतदेवालयः DaṇḍaVi. 43.19.

**अन्यापरिणय** (anyā-pariṇaya) *m.* marriage with another (girl) एकास्त्वे तत्परिग्रहे ततोऽन्यापरिणये सा सापत्नमाता BālamBha. ii. 240. 32 (*on* 2.135-136)

**अन्यापरोऽक्षत्व** (anyāparo'kṣa-tva) *n.* the state of being perceptible to other person किं चायं ब्रह्मण्यध्यस्तो जीवचैतन्ये वा। आद्ये ... न केवलसाक्षिवेद्यत्वं द्वितीये सुखादिवदन्यापरोऽक्षत्वभङ्गप्रसङ्गः SiddhāTa.12.13.

**अन्यापलाप** (anyāpalāpa) *m.* concealment or denial of (the nature of) other thing समेन वस्तुनान्यापलापोऽपह्नुतिः KāvyālaṅSū. iv. 3. 5.

**अन्यापवादकत्व** (anyāpavādaka-tva) *n.* the state of refuting another (figure of speech) न चात्रैकस्यान्यापवादकत्वं युक्तम् RasGaṅ. 683.14.

**अन्यापहृत** (anyāpahṛta) *adj.* stolen by other person पटादयः ... । अन्यापहृता दुःखात्मका भवन्ति BrahmSūBh. (Śrī.) ii.55. 5 (*on* ii. 2.1)

**अन्यापादन** (anyāpādana) *n.* imposition of other thing न च ... तदभावः प्रत्यक्ष इति वाच्यम् असतापादितेन वैशिष्ट्येनान्यापादनायोगात् BhedaDhi. 31.1.

**अन्यापादान** (anyāpādāna) *n.* act of taking other (vessels) यो नाम प्रयोगान्तरकाले रमणीयानि नवानि पात्राणि लभते तस्येच्छावशेन पूर्वत्यागेनान्यापादानेऽपि न कश्चिद्दोषस्यात् BhāṭṭDī. iv.189. 20 (*on* xi. 3.13)

**अन्यापाय** (anyāpāya) *m.* 1 separation of another (part from Āhavanīya) एतमाहवनीयमाहवनीयो(या)त्प्रणयतीति श्रुतावाहवनीयस्यापादानत्वश्रवणात्तस्य चान्यापाये ध्रुवत्वेनास्त्येवाग्निशेषः BhāṭṭCan. 80.14 (*on* xv. 2.11); 2 passing away, i. e. death of another स्वभावाशुचिदुर्गन्धमन्यापायदुरास्पदम्। सन्तोऽदन्ति कथं मांसम् YaśasCam. ii. 329.10.

**अन्यापेक्ष** (anyāpekṣa) *adj.* Ai expectant of (right of) other person न तान् रथस्थो भूमिष्ठान्धर्मापेक्षी (v.l.अन्यापेक्षो) वृकोदरः। योधयामास MahāBhā. ix. App. I.1 (44); Aii expectant of other, i.e. relative अन्यापेक्षं पृथक्त्वं चेत्स्वयं तर्ह्यपृथग्घटः BṛĀraUBhVā. (Sambandha.) 964; v.1.91; (भेदस्य) अन्यापेक्षं यतोऽन्यत्वं तेन तद्व्योमकार्ष्ण्यवत् BṛĀraUBhVā. i.6.74; अन्यापेक्षं हि यद्रूपं न तत्तस्य स्वतो भवेत् TaiUBhāVā. 156. 10 (2); सर्व एव हि भावा भिन्नस्वभावा भिन्नत्वं च तेषामन्यापेक्षम् TātpaṬ. (Vā.) 613. 22 (*on* iv.1.39); B dependent on another thing (or means) (साधनानि) अन्यापेक्षाणि चेद्द्युः कर्मैकत्वं तदा भवेत् BṛĀraUBhVā. i. 5. 229; स्वतस्सिद्धश्चेदात्मा, नास्यान्यापेक्षं ज्ञत्वं युक्तम् IṣṭaSi. 312. 1; समर्थं प्रमेयत्वं त्वन्यापेक्षमसमर्थम् TātpaṬ. (Vā.) 332. 8 (*on* i.1.4); नान्यापेक्षं प्रामाण्यं किं तु स्वतस्सिद्धमित्युक्तम् NyāyRa. 70.15 (*on* 2. 82); न ह्यवान्तरजातिर्नो न चान्यापेक्षमन्यथा (प्रामाण्यम्) NyāyKu. 36.10; ते सर्वज्ञत्वादयोऽन्यापेक्षाः NyāySu. (Ja.) 482B. 5 (*on* iii. 2.1)

**अन्यापेक्षण** (anyāpekṣaṇa) *n.* expectancy for other (activity) न हि मृदा घटम्, काष्ठैः पचतीति समः संबन्धावगमः, एकत्र नैराकाङ्क्ष्यात् अन्यत्रान्यापेक्षणात् BhāvanāVi. 30.3.

**अन्यापेक्षता** (anyāpekṣatā) *f.* dependence on any other (means) एवं तर्हि सार्वज्ञादेरपि नान्यापे(क्षा)ता NyāySu. (Ja.) 482B.12 (*on* iii. 2.1); MayūMāli. 60. 30 (*on* i. 4. 3)

**अन्यापेक्षत्व** (anyāpekṣatva) *n.* A syntactic expectancy for another (word) अन्यापेक्षत्वे च पृथगर्थत्वात् CāndrVṛ. *on* iii.1.10; शूर्पेणेत्यत्रापि ... अन्यापेक्षत्वे ... न समुद्ययः MīmāKau. i. 52. 4 (*on* i. 2. 27); न चात्रार्थवादः लोकप्रसिद्धपदान्तरसामानाधिकरण्याधीनसिद्धित्वेनान्यापेक्षत्वाद्दौर्बल्यम् MīmāKau. i.75.12 (*on* i. 3. ७); पदस्यावयवत्वेन नित्यमवयविसापेक्षत्ववद्वाराया न नित्यमन्यापेक्षत्वम् MayūMāli. 140. 26 (*on* ii. 2. 6); न ह्येकपदत्वप्रयुक्तमन्यापेक्षत्वं किं त्वन्विताभिधानापर्यवसानप्रयुक्तम् MayūMali. 202.9 (*on* iii.1.11); B dependence on another thing (or means) युक्तं यदेकत्र द्रव्ये रक्तारक्तत्वे कालभेदात् क्रमेण संभवत इति तद्भावस्यान्यापेक्षत्वात् द्रव्यस्य च स्थायित्वात् TātpaṬ. (U.) 44.10 (*on* 2. 36); अन्यापेक्षत्वे स्वरूपस्यैवान्यापेक्षत्वेन अनित्यत्वप्रसङ्गात् IṣṭaSi. 4. 5; कूटस्थमेकं वस्तु सिध्येत्। तद्यात्मेव नान्यत् तस्य स्वतोऽसिद्धेरन्यापेक्षत्वात् IṣṭaSi. 232. 5; अतो नोत्पत्तावन्यापेक्षत्वम् Kāśi. ii. 21. 26 (*on* 5 (1). 22); अङ्कुराभावे प्रयोक्तृत्वमात्रं स्यात्, तदपि न किंचित् अन्यापेक्षत्वात्तस्य PratyabhiVi. ii. 189.1 (*on* ii. 4. 14); न चेह सत्यक(का)मत्वाद्युपन्यासवन्मुक्तस्यान्यापेक्षत्वे प्रमाणमस्ति VedāntDī. 246. 11 (*on* iv. 4. 8)

**अन्यापेक्षत्वाभाव** (anyāpekṣatvābhāva) *m.* absence of syntactic expectancy for another (word) प्रातिपदिकार्थस्मृतौ द्वित्वादिवदन्यापेक्षत्वाभावेन स्वारसिकत्वादेवैकत्वस्मृत्युपपत्तौ ... वचनलक्षणाया अयुक्तत्वात् MayūMāli. 624.18 (*on* ix. 3. 5)

**अन्यापेक्षसिद्धि** (anyāpekṣa-siddhi) *f.* attainment which is dependent on another thing (or means) तयोरन्यानन्वयोर्मध्येऽनन्यस्यान्यापेक्षसिद्धेरित्यर्थः TātpaṬ. (Vā.) 457.15 (*on* ii. 2. 32)

**अन्यापेक्षसिद्धि** (anyāpekṣa-siddhi) *adj.* having attainment which is dependent on another thing (or means) भेदश्च न भेदिस्वरूपमात्रम् ... अन्यापेक्षसिद्धिकस्य भेदस्य स्वरूपत्वायोगात् SarvaMaSaṁ. 35. 23.

**अन्यापेक्षा** (anyāpekṣā) *f.* A [Inst.] with expectancy for another, in respect to another, as compared to another श्रुतेः ... स्मृतेश्च ... । ततोऽन्यापेक्षया स्यातामप्रामाण्यप्रमाणते TantrVā. 92. 8 (*on* i. 3. 3); यदेव ह्येकं तदेवान्यापेक्षयानेकम् TantrVā. 739.11 (*on* iii. 1.14); क्वचिद्यस्य प्रमाणत्वं स्वशक्त्यैरवधारितम्। न ह्यन्यापेक्षया तस्या सा शक्तिरपगच्छति TantrVā. 844.5 (*on* iii. 3. 14); अतिशेत इत्यतिशयः। अन्यापेक्षया योऽर्थ उत्कृष्टः। तेन वाच्यभूतेन युक्तम् ... वाक्यम् AbhinBhā. i. 330. 10 (*on* 6.75); स्वापेक्षया व्यस्तोऽन्यापेक्षया च समस्तः SaraKaṇṭhā. 261. 2; 495. 8; तयोरप्यन्यापेक्षया स्नातको मान्यः ManvaVi. 204.2 (*on* 2.139); अन्यापेक्षया पूर्वापरयोरपि कालयोरेतदपेक्षया स्वकालत्वे विरोधाभावः क्षणेऽपि स्वीकार्यः NyāySiA. 188. 27; अत्यन्ताभावः ...। न चैवं सोऽप्यन्यापेक्षया भवति परः SarvaDaKau. 27. 24; यत्स्वैवान्यापेक्षयाख्यातोपात्तव्यापारसमवायः स कर्ता VaiyāBhū.107. 27 (*on* 24); Bi dependence on another thing (or means) मिथ्यात्वमेवात्मनो न तेनात्मना प्रवेदितमिति तत्प्रवेदनाय युक्तैवान्यापेक्षा Kāśi. i.105.13 (*on* 2. 85); 'अपरत्वम्' अपूर्णत्वमन्यापेक्षितेदमिति (v.l. अपूर्णतान्यापेक्षेदमिति) PratyabhiVi. ii. 227.3 (*on* iii.1.5); यदि बोधस्वभावतया पुरुषो विषयेषु बोद्धव्येषु करणं नापेक्षते तदा सर्वदा सर्वं जानीयात्, ततोऽस्त्यन्यापेक्षा NyāyRa.187.11 (*on* 4.167); NyāyMa.47.6; यद्य भावस्वरूपस्यानुभवे तमःप्रतिपत्तावियान्यापेक्षा नास्तीति, तदापातरमणीयम् NītiMā. 23. 4; वेदार्थत्वाविशेषात् न ब्रह्मजिज्ञासायामप्यन्यापेक्षा युक्ता PrakaVi. 44.16; अन्यापेक्षा यदि स्पृष्टे(?स्फुरिष्टा) सत्तैवं देशकालगा AnuVyā. 39B.1! (*on* 3. 2); यस्य हि स्वरूपे विद्यमानेऽपि प्रकाशार्थमन्यापेक्षास्ति, तस्य तद्गोचरप्रकाशसामग्र्यसंनिधानात् ... कदाचित्संशयास्पदत्वमपि भवति NyāyKu. 80. 18; न प्रत्यक्षसिद्धे वादिविप्रतिपत्तिनिरासार्थमन्यापेक्षा AdvaiSi. 428.17; अन्यापेक्षां विनैव कार्योत्पत्त्यर्थत्वे घटार्थिनां मृदादादानवैयर्थ्यापत्तेः SarvaMaSaṁ. 24.22; [Inst.] with dependence on another thing (or means) सद्रूपमेव च तत्राभिन्नमन्यनिरपेक्षमवभाति भेदस्त्वन्यापेक्षयेति नाक्षणविधाविषयतामुपयाति NyāyMañ. ii.94.10; Bii dependence on any other thing (or means) पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोऽपि AṇuBh. 297.13 (*on* iii. 4. 46); C desire for any other thing अनवधिकातिशयानन्दभगवदनुभवैकतानस्य नान्यापेक्षेति न स्वयं पुनरावृत्तिहेतुरित्यर्थः ŚrutaPra. ii. 653.18 (*on* iv. 4. 22); D syntactic expectancy for another (word) न च बोधायनविखनःशौनकादुकेषु ... सत्सु किमन्येनेति वाच्यम्। तदुक्तिरहितसूत्रनिष्ठानामन्यापेक्षायां साधारणशास्त्रपरिग्रहोपपत्तेः PāñcRāRa. 21. 8; [Inst.] with syntactice expectancy for another (word) अजादी यौ प्रत्ययौ अन्यापेक्षया लब्धप्रथमव्यपदेशौ तयोः परतः पूर्वसवर्णदीर्घः Pradī. v. 109B. 24 (*on* vi. 1.102); यस्यान्यापेक्षया व्यभिचार्युत्तरपदत्वं तस्मिन्नपि (इको ह्रस्वत्वम्) Pradī. v. 247B.15 (*on* vi. 3. 61)

**अन्यापेक्षानुपपत्ति** (anyāpekṣānupapatti) *f.* untenability of dependence on another thing (or means) सहकारिसमवधानं कार्योपयोगादपेक्षेते। ... क्षणिकोऽपि (भावः) नैवापेक्षतेऽन्यजनकस्य स्वयमन्यापेक्षानुपपत्तेः PañcPā. 28. 6 (*on* i.1.1)

NyāyRaMā.193. 5; यत्रान्योऽन्यनिरपेक्षा एवाग्नेयादिभावना भाव्यमपेक्षन्ते इति तथैव संबध्यन्त इति पूर्वः पक्षः NyāyRaMā. 207.19; आग्नेयादिभावनानां षण्णामप्यन्योऽन्यनिरपेक्षाणामेव कथंभावात्मकप्रकरणवत्त्वात् एकैकस्य कर्मणः सकलसूक्तवाकोऽङ्गम् ŚāstrDī. 216.12 (*on* iii. 2. 6); द्विचन्द्रज्ञानादौ ... सामग्रीद्वयमन्योऽन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति BrahmSūBh.(Rā.) 99. 20 (*on* i.1.1); याजनादयः प्रत्येकमन्योऽन्यनिरपेक्षाः पातित्यहेतवः Aparā.1087.17 (*on* 3. 261); अन्यत्र लिङ्गेन्द्रिययोरन्योऽन्यनिरपेक्षयोः। दृष्टं संभूयकारित्वम् TattvPradī.(Ci.) 218.8; इह तु ज्ञानद्वयमन्योऽन्यनिरपेक्षं वाक्यद्वयादुत्पद्यते NyāyMāVi. 350.13 (*on* vi. 5.19); यज्ञवैगुण्यसमाधेर्दृष्टप्रयोजनत्वादन्योऽन्यनिरपेक्षयोर्द्वयोर्व्रीहियववद् विकल्पः NyāyMāVi.688. 24 (*on* xii. 3.5); सृष्टेः प्राक् साम्येनावस्थितानामन्योऽन्यनिरपेक्षाणां सत्त्वरजस्तमसामेकतमस्याङ्गित्वानुपपत्तेः प्रधानस्य जगत्कारणत्वं नोपपद्यते VedāntKau.182. 23 (*on* ii. 2.8); सामग्रीद्वयमन्योऽन्यनिरपेक्षं चन्द्रद्वयग्रहणे हेतुर्भवति YatīndraDī.14.1; **(used as noun)** (that) which is independent of each other अन्योऽन्यनिरपेक्षाणामप्रमाणप्रमेयता PramāSaṁ. 3.78; अन्योऽन्यनिरपेक्षाणां प्रत्येकं प्रमाहेतुभावः प्रमाणानाम् TātpaṬ.(Vā.) 35. 23 (*on* i.1.1); अन्योऽन्यनिरपेक्षस्य चोदकादन्तिमो भवेत् (पर्यायः) NyāyMāVi.571. 24 (*on* x. 6. 3); **B** syntactically not expecting each other उत्पत्तिवाक्ये ह्यन्योऽन्यनिरपेक्षाणामाग्नेयादीनां निरङ्गानां च कालसंयोगः TantrVā.471.1 (*on* ii. 2. 3); अन्योऽन्यनिरपेक्षैर्वाक्यैस्तुल्यार्थत्वेन ज्ञायमाना विकल्पभाजो भवेयुः (देवताः) TantrVā. 514.19 (*on* ii. 2.19); यदि ... उभयत्रान्योऽन्यनिरपेक्षा शब्दप्रवृत्तिः TattvPrakā.73A. 3 (*on* i.4.16); **C** semantically not expecting each other क्रियावर्तमानत्वयोरेकपदोपादानादन्योऽन्यनिरपेक्षयोश्चानुपपत्त्यभावात् ऐक्यमङ्गीकृत्योभयोरित्युक्तम् NyāySu.(So.)88.7 (*on* i. 2. 26)

**अन्योऽन्यनिरपेक्षकारणत्व** (anyo'nyanirapekṣa-kāraṇatva) *n.* mutually independent causality न च करणानाम् ... एकमेवोत्पत्त्यपूर्वं कल्प्यतामिति वाच्यम्, तृतीयादिनावगतस्यान्योऽन्यनिरपेक्षकरणत्वस्य कार्यनिरूपितत्वावश्यंभावात् MīmāKau.iii(2).4.12 (*on* ii.1.1)

**अन्योऽन्यनिरपेक्षजन्मन्** (anyo'nyanirpekṣa-janman) *adj.* (used as noun) (objects) produced independent of each other अन्योऽन्यनिरपेक्षजन्मनोः कार्यकारणभावाभावात् न ग्राह्यग्राहकत्वम् NyāyRa. 309.19 (*on* 5(3).150)

**अन्योऽन्यनिरपेक्षता** (anyo'nyanirapekṣa-tā) *f.* [Inst.] **A** by way of being mutually independent एकार्थानामेकस्मिन्नुपकारे अन्योऽन्यनिरपेक्षतया विनियुक्तानां विकल्पः स्यात् ŚāstrDī.871. 2 (*on* xii. 3.4); **B** by way of being not expecting syntactically each other एतेषाम् ... अन्योऽन्यनिरपेक्षतया यत् एकत्र शब्दभागे एव अर्थविषये एव उभयत्रापि वा अवस्थानम् KāvyPra.752.1; अन्योऽन्यनिरपेक्षतयैव कुतो न शब्दवृत्तिः TattvPrakā.73A. 5 (*on* i.4.16)

**अन्योऽन्यनिरपेक्षत्व** (anyo'nyanirapekṣa-tva) *n.* the state of being mutually independent अन्योऽन्यनिरपेक्षत्वाद्युगपद्यापि जन्मनि। मानमेयत्वनास्तित्वं क्रियाकारकवर्जनात् ŚlokaVār. 5(3).150 (309.7); अन्योऽन्यनिरपेक्षत्वं स्मृतीनाम् ... वर्णितम् BālaKrī.i.16. 3 (*on* 1.7); न चासति पौर्वापर्ये तत् संभवति। सहजन्मनोरन्योऽन्यनिरपेक्षत्वात् Kāśi.ii.155.19 (*on* 5(3).153); अन्योऽन्यनिरपेक्षत्वं महत्त्वानेकद्रव्यवत्त्वयोरिति विकल्प एव न्याय्यः TātpaṬ.(Vā.) 113. 9 (*on* i.1. 3); मिश्रोद्देशेनापि दत्तः सोमोंऽशतः प्रत्येकमुभाभ्यां पीयते तेन पानेऽन्योऽन्यनिरपेक्षत्वात् द्वाभ्यामपि पीत इन्द्रपीत इति शक्यं वक्तुम् ŚāstrDī. 230. 2 (*on* iii. 2.18); अदृष्टार्थयोः स्मृत्योरन्योऽन्यनिरपेक्षत्वे सति विषयव्यवस्थापकन्यायाभावे च सत्यर्थयोर्विकल्पः Aparā. 627.17 (*on* 2. 21); अचेतनानां समुदायिनामन्योऽन्यनिरपेक्षत्वेन स्वतः समुदायासंभवात् VedāntKau.193.1 (*on* ii. 2.18)

**अन्योऽन्यनिरपेक्षनानाप्रयोजन** (anyo'nyanirapekṣa-nānāprayojana) *n.* various purposes or objectives which are mutually independent न हि ... अन्योऽन्यनिरपेक्षनानाप्रयोजनयुक्तानाम् ... एकवाक्यतालक्षणमस्ति TantrVā.784.12 (*on* iii. 2.19)

**अन्योऽन्यनिरपेक्षनिमित्त** (anyo'nyanirapekṣa-nimitta) *n.* mutually independent causes इह सर्वत्र परभार्यारजस्वलागमने पारदार्यप्रायश्चित्तं पृथक्कार्यमन्योऽन्यनिरपेक्षनिमित्तभेदात् Aparā.1149. 25 (*on* 3. 288)

**अन्योऽन्यनिरपेक्षभिन्नशब्द** (anyo'nyanirapekṣa-bhinnaśabda) *m.* different words which are not expecting syntactically each other एकस्याः त्रयो धात्वर्थाः ... । न च समुच्चयं प्रतिपद्यन्ते ... अन्योऽन्यनिरपेक्षभिन्नशब्दोपादानात् TantrVā.447. 5 (*on* ii. 2.1)

**अन्योऽन्यनिरपेक्षम्** (anyo'nyanirapekṣam) *adv.* without depending on each other द्विचन्द्रज्ञानादौ ... सामग्रीद्वयमन्योऽन्यनिरपेक्षं चन्द्रद्वयग्रहणे हेतुर्भवति YatīndraDī.14.1.

**अन्योऽन्यनिरपेक्षवाक्यद्वय** (anyo'nyanirapekṣa-vākyadvaya) *n.* couple of sentences which are not expecting syntactically each other अत्रोत्प्रेक्षयोः कालभेदेऽपि समप्राधान्यम्। अन्योऽन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् Kuval.171(269)

**अन्योऽन्यनिरपेक्षवाक्यभेद** (anyo'nyanirapekṣa-vākyabheda) *m.* syntactic split which is not expecting each other यदि हि स्वतन्त्रमेव कर्तरि एकत्वे च अन्योऽन्यनिरपेक्षवाक्यभेदेन तिब्विधानमिष्यते TantrVā. 957.4 (*on* iii.4.13)

**अन्योऽन्यनिरपेक्षसाधनत्वशक्ति** (anyo'nyanirapekṣasādhanatva-śakti) *f.* power of being material causes which are mutually independent सिद्धान्ते त्वन्योऽन्यनिरपेक्षसाधनत्वशक्तियुक्तानां सहप्रयोगमात्रं क्रियते TantrVā. 526.12 (*on* ii. 2. 20)

**अन्योऽन्यनिरपेक्षसाधनभाव** (anyo'nyanirapekṣasādhana-bhāva) *m.* state of being material causes which are mutually independent व्रीहियवयोरेकं कार्यमन्योऽन्यनिरपेक्षसाधनभावोपदेशाद्विकल्पः BrahmSūBh.(Bhā.)199.1 (*on* iii. 3. 59)

**अन्योऽन्यनिरपेक्षसिद्धि** (anyo'nyanirapekṣa-siddhi) *f.* mutually independent establishment नाप्यात्मानुभवावुभावपि चित्प्रकाशाविति ... तयोरन्योऽन्यनिरपेक्षसिद्धिप्रसङ्गात् VivaPraSaṁ.69.15.

**अन्योऽन्यनिरपेक्षार्थ** (anyo'nyanirapekṣārtha) *m.* mutually independent objects तेषामन्योऽन्यनिरपेक्षार्थपरिच्छेदहेतुत्वेन तुल्यानामेव प्रामाण्यम् NyāyRa.68.16 (*on* 2.73)

**अन्योऽन्यनिरपेक्षोपाय** (anyo'nyanirapekṣopāya) *m.* mutually independent means (of salvation) अक्षरविद्याशाण्डिल्यविद्यादीनां श्रुतिस्वारस्यादन्योऽन्यनिरपेक्षोपायत्वं हि प्रतीयते ŚrutaPra.ii. 501. 20 (*on* iii. 3. 34)

**अन्योऽन्यनिराकरण** (anyo'nya-nirākaraṇa) *n.* act of negating or sublating each other विरोधेऽपि द्वयोरेकस्य वा ज्ञानस्य तद्रूपाधिगत्योरन्योऽन्यनिराकरणात् BrahmSi.63. 25.

**अन्योऽन्यनिराकाङ्क्ष** (anyo'nya-nirākāṅkṣa) *adj.* **A** mutually independent भेदेनोपासनं कर्तव्यम् ... प्रतिप्रकरणमुपासनाविधीनामन्योऽन्यनिराकाङ्क्षत्वात् BrahmSūBh.(Bhā.)198.19 (*on* iii. 3. 58); **B** (used as noun) (words) syntactically not expecting each other समंध्वन्योऽन्यनिराकाङ्क्षेषु वाक्यभेदः स्यात् MīmāKau.iii(2).128. 20 (*on* ii.1.48)

**अन्योऽन्यनिरूपित** (anyo'nya-nirūpita) *adj.* described or conditioned by each other पूर्वोक्ताभ्यासादिप्रमाणस्य हेतुता न तु द्रव्यकर्मणां अन्योऽन्यनिरूपितान्योऽन्यवृत्तिशेषत्वनिरूपणं प्रति MīmāKau.ii.133.9 (*on* iii.1.1)

**अन्योऽन्यनिर्ग्रन्थन** (anyo'nya-nirgranthana) *n.* act of killing each other समरस्ततोऽभूदभूतपूर्वः कपिराक्षसानाम्। अन्योऽन्यनिर्ग्रन्थनदीक्षितानां देवासुराणामिव पूर्वकल्पे RāmC. 32.43.

**अन्योऽन्यनिर्णय** (anyo'nya-nirṇaya) *m.* **A** decision regarding each other न चैवं ग्रामक्षेत्रगृहादिष्वन्योऽन्यसामन्तैरन्योऽन्यनिर्णयः कार्यः SmṛtiCan. iv. 545.9; **B** mutual understanding अन्योऽन्यनिर्णयोत्पन्नपरिचयपल्लवितविभ्रमाभिरामोऽर्थविशेषो ग्रथनम् NāṭaLaRaK. 3053.

**अन्योऽन्यनिर्दयविघट्टनतस्** (anyo'nyanirdayavighaṭṭana-tas) *adv.* on account of the harsh friction or rubbing against each other अन्योऽन्यनिर्दयविघट्टनतोऽप्यखण्डचण्डाश्रिभिः ... रदाग्रैः। ... दम्भोलिदन्तवदहश्यत पुष्पदन्तः ŚrīKaC.18.43.

**अन्योऽन्यनिर्भरस्पर्धा** (anyo'nya-nirbharaspardhā) *f.* keen rivalry between each other क्वचिदन्योऽन्यनिर्भरस्पर्धोद्धुरविटचेटकारब्धावाच्यवचनयुद्धः। ... उत्सवामोदः HarṣaC.187.1.

**अन्योऽन्यनिर्भर्त्सिन्** (anyo'nya-nirbhartsin) *adj.* threatening, i.e. competing with each other अन्योऽन्यनिर्भर्त्सिभिर्हस्ताग्रैर्युगपन्निपत्य दशभिर्यमैर्धृतं कार्मुकम् VakroJī.125.11; BālRā.1. 50.

**अन्योऽन्यनिर्मुक्त** (anyo'nya-nirmukta) *adj.* **1** independent of each other स्थाणुर्वा पुरुषो वेति संदेहेऽपि यदा द्वयं स्वसंवेऽन्योऽन्यनिर्मुक्तं तदार्थविरहः कुतः PrakaPañ. 58.10; **2** discharged or shot by each other मुष्टिरन्योऽन्यनिर्मुक्तैः सायकैरिव कीलितः। एक एव तयोर्वीक्षांचक्रे कर्णान्तमागतः PāṇḍaC.13.656.

**अन्योऽन्यनिर्वर्णन** (anyo'nya-nirvarṇana) *n.* description of each other सागरिकावत्सराजयोरन्योऽन्यनिर्वर्णनेन रूपातिशयप्रकटनं शोभा RasāSu. 250. 5(3.104)

**अन्योऽन्यनिषेध** (anyo'nya-niṣedha) *m.* negation or sublation of each other माया... नापि सदसती, सत्त्वासत्त्वयोरन्योऽन्यनिषेधरूपत्वेनैकाधिकरण्यासंभवात् SarvaMaSaṁ.41.8.

**अन्योऽन्यनिष्ठ** (anyo'nya-niṣṭha) *adj.* relating or existent in each other यद्यप्यन्योऽन्यनिष्ठं स्यात्सख्यं तदपि युज्यते। सदा साहाय्यहेतुत्वात् UjjvaNiMa.196.8.

**अन्योऽन्यनिष्पेष** (anyo'nya-niṣpeṣa) *m.* act of rubbing against each other हस्ताग्रयोरन्योऽन्यनिष्पेषः संघर्षणम् AbhinBhā.i. 321.8(*on* 6.64)

**अन्योऽन्यनिसर्गोपजात** (anyo'nyanisargopajāta) *adj.* developed from natural state or condition of each other (v.l. किं त्वनयोर्महान्निसर्गस्नेहः अन्योऽन्यनिसर्गोपजातस्नेहः Müller Ed.) कथं भेदयितुं शक्यः Hitopa. 2.105(2)

**अन्योऽन्यनिहत** (anyo'nya-nihata) *adj.* A slain by each other (महारथाः) पेतुरन्योऽन्यनिहता व्यसवः MahāBhā.viii.16. 31; B struck by each other वीरौ ... अन्योऽन्यनिहतौ नागौ ... युयुधाते BhaviP. 471B. 2(iii(3).6. 55)

**अन्योऽन्यनृपयुद्ध** (anyo'nya-nṛpayuddha) *n.* royal war between each other अन्योऽन्यनृपयुद्धेन विघ्नो देव पदे पदे RājTa.(Śrī.) i.7. 31.

**अन्योऽन्यनैककार्यत्व** (anyo'nyanaika-kāryatva) *n.* mutually several or different actions बुद्धानामन्योऽन्यनैककार्यत्वे चत्वारः श्लोकाः MaYānaSū.49.7 (*on* 9.81)

**अन्योऽन्यनैरन्तर्य** (anyo'nya-nairantarya) *n.* continuity or inseparability of one another सहचारिणेत्यनुसंबद्धचारिणा अन्योऽन्यनैरन्तर्येण MaYānaSū. 86.1 (*on* 13.6)

**अन्योऽन्यनैरपेक्ष्य** (anyo'nya-nairapekṣya) *n.* independence of or from each other ज्ञानयोगकर्मयोगयोः आत्मप्राप्तिसाधनभावे अन्योऽन्यनैरपेक्ष्यमाह GītāBh.(Rā.) 289. 5(*on* 5.4); अन्योऽन्यनिरपेक्षाणां जन्म यत्र धियां भवेदिति वार्तिकोक्त्यान्योऽन्यनैरपेक्ष्यं विना परबलीयस्त्वायोगात् NyāySu.(So.)1500. 30 (*on* iii.4. 35); [Inst.] by way of independence of or from each other द्वयोः पदार्थयोरेकावान्तरोपकारजनकत्वमन्योऽन्यनैरपेक्ष्येणैवावगम्यते MīmāKau. i(3).16. 3(*on* i. 3. 3); यौ अन्योऽन्यनैरपेक्ष्येण ... उपधायकौ LaCandr. 468. 21.

**अन्योऽन्यन्यूनाधिकभाव** (anyo'nya-nyūnādhikabhāva) *m.* condition of being smaller and bigger with respect to each other यद्यपि सर्पपेष्वन्योऽन्यन्यूनाधिकभावो विद्यते तथापि मेर्वपेक्षयावरत्वनिर्देशः समानः GītāBh. (Rā.) 362. 2(*on* 6.47)

**अन्योऽन्यपक्ष** (anyo'nya-pakṣa) *m.* 1 parties of each other द्वैराज्यमन्योऽन्यपक्षद्वेषानुरागाभ्यां परस्परसंघर्षेण वा विनश्यति ArthŚā.iii.12. 5(8. 2); 2 views of each other अन्योऽन्यपक्षं निराकुर्वद्भिर्वादिभिरेव रूप्यस्यानिर्वचनीयत्वं स्थापितम् IṣṭaSi.47.23; भवतामन्योऽन्यपक्षा अपि न भ्रमास्सिध्यन्ति IṣṭaSi.143.1; न ... मुक्तिः भवद्भिरेवान्योऽन्यपक्षं दूषयद्भिर्दूषितत्वात् IṣṭaSi. 344. 5; 3 one side or term to another पञ्चसप्तनवराशिकादिकेऽन्योऽन्यपक्षनयनं फलच्छिदाम्। संविधाय Līlā.79(2)

**अन्योऽन्यपक्षप्रतिपक्षभाव** (anyo'nya-pakṣapratipakṣabhāva) *m.* hostility and friendship of each other अन्योऽन्यपक्षप्रतिपक्षभावाद्यथा परे मत्सरिणः प्रवादाः। नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तथा ते Mahā-ViSt.(H.)30.

**अन्योऽन्यपतन** (anyo'nya-patana) *n.* fall at each other (top and base of a tree) शरीरभङ्गं कर्तृणां नाशमग्रेऽप्यपत्यहृत्। अन्योऽन्यपतनं पूज्यं छेद्यं चोभयतः समम् MayaMa.15. 98.

**अन्योऽन्यपति** (anyo'nya-pati) *m.* A rulers of each other इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे। तथैवान्ये नृपतयः (v.l. अन्योऽन्यपतयश्चान्ये) सहपुत्राः सबान्धवाः MahāBhā.xiii.1.5; B lords of each other लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ शुभौ। न चेद्वान्योऽन्यपतिना शुभमित्रेण वा तथा। वरस्य मृत्युः NāraS. 29. 27.

**अन्योऽन्यपरमाणुज्ञान** (anyo'nyaparamāṇu-jñāna) *n.* knowledge of the atoms of each other अन्योऽन्यपरमाणुज्ञानापेक्षया हि तद्वत्ति NyāySu.(Ja.) 391A. 5(*on* ii. 2. 5)

**अन्योऽन्यपराक्रम** (anyo'nya-parākrama) *m.* valour of each other रामवालिनोः परस्परं युद्धचिकीर्षाभिप्राययोगादन्योऽन्यपराक्रमोत्कर्षवर्णनात् संलापः RasāSu.72.12(1. 265)

**अन्योऽन्यपराङ्मुखता** (anyo'nya-parāṅmukhatā) *f.* separation of or from each other अस्मिन् मुष्टावेव स्वस्तिकक्षेत्रे करौ कृत्वा द्वयोरपि यदा व्यावर्तितकरणेन कनिष्ठादिना परिवर्तनमन्योऽन्यपराङ्मुखता तदनन्तरं च पद्मकोशद्वयं तदा AbhinBhā.ii.78.18(*on* 9. 207)

**अन्योऽन्यपराहत** (anyo'nya-parāhata) *adj.* contradicted by each other क्लिष्टं तु संकुलं वाक्यं यदन्योऽन्यपराहतम् ParaNā.456.

**अन्योऽन्यपरिकर्मित** (anyo'nya-parikarmita) *adj.* embellished by each other ततस्तं ददृशुर्देवाः ... अन्योऽन्यपरिकर्मितैः। अङ्गैरमितसौन्दर्यैरनुकल्पितभूषणम् Yādavā.1.69.

**अन्योऽन्यपरिघट्टन** (anyo'nya-parighaṭṭana) *n.* mutual stirring or relation स्वस्वभाववशावेशादन्योऽन्यपरिघट्टनैः। सृष्टयः परिवर्तन्ते YogVā. iv.43. 39.

**अन्योऽन्यपरिज्ञान** (anyo'nya-parijñāna) *n.* act of discovering or acquaintance with each other ततोऽन्योन्यपरिज्ञानहर्षपूर्णे निजात्मनि। युक्तं तद्यन्न मातः स्म तौ कुमारीवराबुभौ KathāSaSāg.xvii. 3.49.

**अन्योऽन्यपरिपन्थिन्** (anyo'nya-paripanthin) *adj.* mutually contradictory इतिहासपुराणेष्वप्यन्योऽन्यपरिपन्थिषु। स्वमूलगुणभेदेन वलाबलविनिश्चयः NyāyPari. 353.15.

**अन्योऽन्यपरिपिष्ट** (anyo'nya-paripiṣṭa) *adj.* crushed by each other हयाः ...। अन्योऽन्यपरिपिष्टाश्च समासाद्य परस्परम्। अविक्षताः स्म दृश्यन्ते MahāBhā.ix. 22.47.

**अन्योऽन्यपरिभक्षण** (anyo'nya-paribhakṣaṇa) *n.* act of devouring each other प्रजानामन्नकामानामन्योऽन्यपरिभक्षणात्। अधर्मस्तत्र संजातः MahāBhā. i.60. 52.

**अन्योऽन्यपरिभाषण** (anyo'nya-paribhāṣaṇa) *n.* mutual conversation एतत् प्रकृतानुगुण्येनान्योऽन्यपरिभाषणात् परिभाषणम् PratāYaBhū. 204.1.

**अन्योऽन्यपरिहार** (anyo'nya-parihāra) *m.* A exclusion, i.e. deviation of each other अन्योऽन्यपरिहारेण स्वप्नजाग्रदवस्थयोः। कामकर्मात्मकासङ्गविविक्तत्वमिहोदितम् BṛĀraUBhVā.iv.3.1081; B negation of each other अन्योऽन्यपरिहारो वा ज्ञानाज्ञानात्मकः स्थितः ŚivDr.4. 24; Ci non-existence of each other, mutual absence यः प्रतियोगी तुल्यकक्ष्योऽन्योऽन्यपरिहाराद्य विरुद्धस्तस्य योऽवभासः समारोपणलक्षणः PratyabhiVi.i. 315.1(*on* i.6. 5); Cii loss of each other धर्माधर्मयोश्छायातपयोरिवान्योऽन्यपरिहारेणावस्थितयोर्यदैवैकस्य ग्लानिस्तदैवेतरस्याभ्युत्थानम् VyaktiVi.83.1.

**अन्योऽन्यपरिहारिन्** (anyo'nya-parihārin) *adj.* mutually exclusive, i.e. opposite परस्परविरोधाभावाद्रूपद्वयं नान्योऽन्यपरिहारीत्युभयरूपसमुच्चयं भगवान् बादरायणो मेने VedāntSā.(Rā.) 404.4(*on* iv.4.7)

**अन्योऽन्यपरिहासा** (anyo'nya-parihāsā) *f.* [Inst.] by mocking at each other माम् ... बाला गृहीत्वा क्रीडितुं गताः ... हस्ताहस्तेन क्रीडन्तश्चान्योऽन्यपरिहासया VarāP.138.81.

**अन्योऽन्यपरीक्षण** (anyo'nya-parīkṣaṇa) *n.* mutual examination or evaluation वरस्य कन्यावरणोद्यतस्य कुमारिकायाः पतिमर्थयन्त्याः। आख्यायतेऽन्योऽन्यपरीक्षणाय क्रमेण चेष्टा सरमासुतस्य ŚārṅgaPa. 2367; तन्व्याः संप्रतिपत्तिशुसहतरैर्वाक्यैर्विपण्णानने मय्यन्योऽन्यपरीक्षणात्परिजने मूकस्मितं कुर्वति Subhāṣi.1369.

**अन्योऽन्यपरुष** (anyo'nya-paruṣa) *adj.* mutually cruel or harsh लोभः क्रोधः ... देहिनाम्। अहीश्चान्योऽन्यपरुषा देहं भिन्द्युः पृथग्विधाः MahāBhā.vii. App.I. 8(207)

**अन्योन्यपल्लवित** (anyo'nya-pallavita) *adj.* extended by one another अन्योऽन्यपल्लवितद्विजयप्रशंसः ... एकत्र तेन मिलितः फणिराजलोकः NavaSāC.18. 26.

**अन्योऽन्यपाणितलताडन** (anyo'nyapāṇitala-tāḍana) *n.* act of flapping of each other's palms अन्योऽन्यपाणितलताडनलब्धलक्ष्या नीरान्निरीयुरथ दम्पतयः सहेलम् HammīMaKā.6. 57.

**अन्योऽन्यपाणिमलन** (anyo'nyapāṇi-malana) *n.* act of crushing the hands of each other दिण्डेः स्फुलिङ्गकणिकाः सरुषः किरद्भिरन्योऽन्यपाणिमलनोत्थितधूमदिग्धैः। नाप्लोषि धूर्जटिसदः कथमपि ... परुषाक्षिपातैः HarVi.7. 26; अन्योऽन्यपाणिमलनक्षतपद्मरागरत्नोर्मिकोद्धतपरागकणैश्चकार। ब्राह्मी जगत्कपिशिताखिलदिक्प्रभातवेलेव HarVi.7. 59.

**अन्योऽन्यपात्र** (anyo'nya-pātra) *n.* vessels of each other गृह्णन्त्यन्योऽन्यपात्राणि ... योगिनः KulārT.8.71.

**अन्योऽन्यपादमीलन** (anyo'nyapāda-mīlana) *n.* mixture of the quarters of each other एतयोरिन्द्रवज्रोपेन्द्रवज्रयोः संकरोऽन्योऽन्यपादमीलनमुपजातिः ChandaśCū. ii.156.1.

**अन्योऽन्यपारतन्त्र्य** (anyo'nya-pāratantrya) *n.* mutual dependence पारतन्त्र्यात्मा — अन्योऽन्यपारतन्त्र्यरूपः Bhāsk. i.118. 23 (*on* 2.11)

**अन्योऽन्यपार्श्वसक्त** (anyo'nyapārśva-sakta) *adj.* joined together by the side of each other अन्योऽन्यपार्श्वसक्ताभ्यां कराभ्यां स्यात्कपोतकः। शीते भये च कार्योऽयम् ViṣṇuDhaP.iii. 26. 55.

**अन्योऽन्यपालन** (anyo'nya-pālana) *n.* act of protecting or maintaining each other अन्योऽन्यपालनायाज्ञां राज्ञस्त्रिदिवगामिनः। पालनीयामनुध्याय प्रत्यानय दयां मयि RājTa.(Jo.)371.

**अन्योऽन्यपावन** (anyo'nya-pāvana) *adj.* sanctifying or purifying each other मैथिलसुताम् ... भरतो ववन्दे ... वन्द्यं युगं चरणयोर्जनकात्मजायाः ... शिरोऽस्य साधोरन्योऽन्यपावनमभूदुभयं समेत्य RaghuVa.13.78; संपर्किणी नदी राज्ञा संपर्की सरिता नृपः। अन्योऽन्यपावनावेतावित्यूचे सारणः शुकम् Rāvaṇā.11. 24.

**अन्योऽन्यपितृ** (anyo'nya-pitṛ) *m.* fathers of each other अन्योऽन्यपितरो यूयं ते चैवेति निबोधत देवाश्च पितरश्चैव HariVaṁ.12.31; 12.41; VāyuP. i. 56.85; BrahmāṇḍP.ii. 9. 35.

**अन्योऽन्यपीडा** (anyo'nya-pīḍā) *f.* **A** injury to each other संरब्धौ हि महाबाहू परस्परवधैषिणौ। अन्योऽन्यमीक्षां (v.l.अन्योऽन्यपीडां) चक्राते दहन्ताविव लोचनैः MahāBhā.vii.107.6; **B** act of pressing each other संबाधोऽन्योऽन्यपीडा तद्रहितानसंबाधान् उरुगायवतः ... लोकान् अभिसिध्यति ChāndoUBh.444.13(*on* vii.12. 2)

**अन्योऽन्यपीनांसविघर्षण** (anyo'nyapīnāṁsa-vigharṣaṇa) *n.* act of rubbing fat shoulders of each other अन्योऽन्यपीनांसविघर्षणेन। उल्लासितः कुङ्कुमपांसुपूरः पिशङ्गयत्येष दिशां मुखानि NavaSāC.14.16.

**अन्योऽन्यपुरातनजनन** (anyo'nya-purātanajanana) *n.* previous births of each other कन्याकुमारावेवमन्योऽन्यपुरातनजननामधेयपरिचितैः परस्परज्ञानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः DaśKuC. 28.12.

**अन्योऽन्यपुष्करोज्झित** (anyo'nyapuṣkarojjhita) *adj.* thrown up by the tips of the trunks of each other कार्याण्यस्मिन् करिणां मिथुनान्यभितोऽम्बुकेलियुक्तानि। अन्योऽन्यपुष्करोज्झितसीकरभयपिहितनयनानि SamarāSū.31.134.

**अन्योऽन्यपुष्टता** (anyo'nya-puṣṭatā) *f.* mutual saturation अन्योऽन्यपुष्टतां यातैर्मोहसंवेदनभ्रमैः। जन्तुः पाषाणतामेति स्थितमित्यादिसर्गतः YogVā.iii. 54. 55.

**अन्योऽन्यपूर्वकत्व** (anyo'nyapūrvaka-tva) *n.* the state of being preceded, i.e. caused by each other सोऽप्युत्तरपूर्वकश्चेत् अन्योऽन्याश्रयता तयोरन्योऽन्यपूर्वकत्वात् IṣṭaSi. 220.4.

**अन्योऽन्यपृष्ठ** (anyo'nya-pṛṣṭha) *n.* backs of each other अन्योऽन्यपृष्ठपरिरक्षितचापचक्रनिर्मुक्तशाततरशल्यशराभिघातैः। सैन्यैरजिग्रहदसौ HarVi.49.13.

**अन्योऽन्यप्रकटानुराग** (anyo'nyaprakaṭānurāga) *m.* mutually manifested love अन्योऽन्यप्रकटानुरागरभसादुद्भूतरोमाञ्चयोः ... यातो दुर्लभसंगमोत्सवविधिर्यूनोर्जनाख्येयताम् Subhāṣi. 2115.

**अन्योऽन्यप्रकाश** (anyo'nya-prakāśa) *adj.* manifesting each other किं च कुम्भादयो जडत्वान्न स्वतः प्रकाशन्ते नाप्यन्योऽन्यप्रकाशाः NyāyMa.141.3.

**अन्योऽन्यप्रकाशकत्व** (anyo'nyaprakāśaka-tva) *n.* the state of manifesting each other व्यपदेशभेदाद्य ... नेन्द्रपदेन महेन्द्राभिधानम् ... द्वयोर्मन्त्रयोस्समाम्नातयोरन्योऽन्यप्रकाशकत्वे विकल्पापत्तेः MīmāKau.iii(1). 91. 21(*on* ii.1.17)

**अन्योऽन्यप्रकृति** (anyo'nya-prakṛti) *f.* nature of each other पतिर्जायां प्रविशति स तस्यां जायते पुनः। अन्योऽन्यप्रकृतिर्ह्येषा MahāBhā.i.674*(2)

**अन्योऽन्यप्रगुणगुण** (anyo'nyapraguṇa-guṇa) *m.* merits or virtues befitting each other वरीयानन्योऽन्यप्रगुणगुणनिर्माणनिपुणो विधातुर्व्यापारः फलतु MālaMā.1.150.

**अन्योऽन्यप्रगृहीतत्व** (anyo'nyapragṛhīta-tva) *n.* the state of being what is syntactically expecting each other ते चामी वचनातिशयाः तद्यथा संस्कारवत्त्वम् ... अन्योऽन्यप्रगृहीतत्वम् – परस्परेण पदानां वाक्यानां वा सापेक्षता AupaSūṬ.40.14.

**अन्योऽन्यप्रचल** (anyo'nya-pracala) *adj.* mutually moving or dancing भृङ्गिरिटौ ... चामुण्ड्यालिङ्गिते। ... अव्यादवः ... तयोरन्योऽन्यप्रचलस्थिपञ्जररणत्कङ्कालजन्मा रवः SubhāRaK. 5.1; SaduktiKa. 25. 20.

**अन्योऽन्यप्रणत** (anyo'nya-praṇata) *adj.* paying respect to each other, bowing to each other ब्रह्माविष्णुमहेश्वराः। ... अन्योऽन्यप्रणताश्चैव लीलया परमेश्वराः KūrmaP. 32.4 (i. 2)

**अन्योऽन्यप्रणति** (anyo'nya-praṇati) *f.* act of paying respect to each other, act of bowing to each other वृत्तेऽन्येषां यथौचित्यमन्योऽन्यप्रणतिक्रमे ... शिवा कुन्तीमभाषत PāṇḍaC.16.169.

**अन्योऽन्यप्रणय** (anyo'nya-praṇaya) *m.* love for each other, mutual love आनन्दैकमयाः ... विराटनगरे तस्मिन्युक्तस्युषामन्योऽन्यप्रणयेन ... वासराः PāṇḍaC.10.480; अन्योऽन्यप्रणयान्मिथो नरवधूयुगमेष्वनष्टप्रिया ... समरतिः संप्रार्थिता निर्जरैः ŚṛṅgāDī. 3.41.

**अन्योऽन्यप्रणयकलह** (anyo'nya-praṇayakalaha) *m.* mutual love - quarrel जात्वन्योऽन्यप्रणयकलहे जातरोषापि जिह्वैरावि(र्धर्मा (?) ध्वनं) किल यदकरोश्चुदिग्धेरपाङ्गैः। तन्मे ... स्मारयन्ति ... उत्पलानां दलानि HaṁsDū.(Vā.)111.

**अन्योऽन्यप्रणयसुभग** (anyo'nyapraṇaya-subhaga) *adj.* blessed by mutual love नैषा याच्ञा मम ... किन्त्वन्योऽन्यप्रणयसुभगः कोऽपि मैत्रीविपाकः MayūSaṁ.1. 22.

**अन्योऽन्यप्रतिकर्मन्** (anyo'nya-pratikarman) *n.* retaliation or hostility to each other देवस्यैकतमालपत्रमुकुटस्यार्धं पुरद्वेषिणो देहार्धेन समस्यमानमसमं श्वः श्रेयसायास्तु वः। यस्मिन् भूधरकन्यकाब्धिसुतयोः ... अन्योऽन्यप्रतिकर्मनर्मभिदुरो भूयाननङ्गज्वरः SaduktiKa. 27.10.

**अन्योऽन्यप्रतिकूल** (anyo'nya-pratikūla) *adj.* directed against or opposed to each other ममैव तत्र कशिपुप्राप्तिः ... इत्यादौ परिचिन्तितम् ... भृङ्गिकूष्माण्डयोरन्योऽन्यप्रतिकूलमीशशिवयोः पाणिग्रहे पातु वः SubhāRaK. 5. 29; SaduktiKa. 25.10.

**अन्योऽन्यप्रतिक्षेप** (anyo'nya-pratikṣepa) *m.* mutual refutation or sublation स्थाणुर्वा पुरुषो वेति ... एकस्मिन् युगपदन्योऽन्यप्रतिक्षेपस्य धीविरुद्धत्वात् NyāyPari. 58. 3.

**अन्योऽन्यप्रतिक्षेपक** (anyo'nya-pratikṣepaka) *adj.* mutually refuting or sublating अन्योऽन्यप्रतिक्षेपकविरुद्धनानार्थावलम्बनत्वं विकल्पस्याप्यस्ति CitraMī.63.1.

**अन्योऽन्यप्रतिघात** (anyo'nya-pratighāta) *m.* act of dashing against each other अन्योऽन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलैरुत्तालास्त इमे गभीरपयसः पुण्याः सरित्संगमाः UttaRāC. 2. 30.

**अन्योऽन्यप्रतिपक्षता** (anyo'nya-pratipakṣatā) *f.* opposition to each other अनयोः ... अन्योऽन्यप्रतिपक्षतानुभवात् ... भेदाभेदविषयतयैव व्यवस्थापनं युक्तम् NyāySu.(Ja.) 399A.7(*on* ii. 2.7)

**अन्योऽन्यप्रतिपादक** (anyo'nya-pratipādaka) *adj.* denoting or conveying each other तदेतत् सूक्तमित्युक्तं मिथुनं परिचिह्नितम्। आदावन्योऽन्यमिश्रत्वादन्योऽन्यप्रतिपादकम् AhirbuS. 59.42.

**अन्योऽन्यप्रतिपूजक** (anyo'nya-pratipūjaka) *adj.* worshipping or honouring each other विप्रा अन्योऽन्यप्रतिपूजि(?जि)काः। अन्योऽन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च SaṁvaSm.88.

**अन्योऽन्यप्रतिबन्धक** (anyo'nya-pratibandhaka) *adj.* (used as noun) (that) which is mutually contradictory अन्योऽन्यप्रतिबन्धकस्य तत्त्वे वा ज्ञानमेव न स्यात् TattvCin. i.774.13.

**अन्योऽन्यप्रतिबन्धबल** (anyo'nyapratibandha-bala) *n.* [Abl.] on the strength of mutual opposition or contradiction यस्याम् ... नियमहेतूनामन्योऽन्यप्रतिबन्धबलादत्यन्तमपसरणे स एव साधारणीभावः सुतरां पुष्यति AbhinBhā.i. 279.12(*on* 6. 31)

**अन्योऽन्यप्रतिबिम्ब** (anyo'nya-pratibimba) *m.* reflection of each other अचैतन्यचैतन्ययोः अन्योऽन्यविषयतालक्षणोऽन्योऽन्यस्मिन् अन्योऽन्यप्रतिबिम्बः सिद्धः SāṁkhyaPraBh.44. 30 (*on* 1.87)

**अन्योऽन्यप्रतिबिम्बन** (anyo'nya-pratibimbana) *n.* act of reflecting each other अयमेव च संयोगविशेषो बुद्ध्याद्यात्मनोरन्योऽन्यप्रतिबिम्बने हेतुः SāṁkhyaPraBh.48. 32 (*on* 1. 99)

**अन्योऽन्यप्रतिबिम्बसिद्धि** (anyo'nyapratibimba-siddhi) *f.* establishment of the reflection of each other विनिगमनाविरहेण वृत्तिचैतन्ययोरन्योऽन्यविषयताख्यसंबन्धरूपतयान्योऽन्यस्मिन्नन्योऽन्यप्रतिबिम्बसिद्धेश्च SāṁkhyaPraBh.44.17(*on* 1.87)

**अन्योऽन्यप्रतिबिम्बित** (anyo'nya-pratibimbita) *adj.* reflected in each other इमे ते कौसुमोद्योता अन्योऽन्यप्रतिबिम्बिताः YogVā.iv.6.5.

**अन्योऽन्यप्रतिबुद्ध** (anyo'nya-pratibuddha) *n.* [Inst.] through mutual enlightenment एतद्धि पञ्चविंशकम्। बुध्यमानो भवत्येष ममात्मक इति श्रुतः। अन्योऽन्यप्रतिबुद्धेन वदन्त्यव्यक्तमच्युतम् BrahmP. 244.6.

**अन्योऽन्यप्रतिभाविक** (anyo'nya-pratibhāvika) *adj.* felt for or concerning each other रस्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् MahāBhā.i.200. 20.

**अन्योऽन्यप्रतिभावित** (anyo'nya-pratibhāvita) *adj.* nurtured by concern for each other रस्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् (v.l.°भावितम्) MahāBhā. i. 200. 20.

**अन्योऽन्यप्रतियोग** (anyo'nya-pratiyoga) *m.* counterpositiveness of each other संयोगश्च विभागश्च भेदश्चैव पृथक् पृथक्। अन्योऽन्यप्रतियोगेन ह्युभयोरपि दृश्यते AnuVyā. 26B. 5(*on* 2. 2); अन्योऽन्यस्य प्रतियोगोऽन्योऽन्य-प्रतियोगः NyāySu.(Ja.)369A.4 (*on* ii. 2.6)

**अन्योऽन्यप्रतियोगिक** (anyo'nyapratiyogi-ka) *adj.* 1 having each other as the counterpositive अन्योऽन्यप्रतियोगिकः अभावः अन्योऽन्याभावः TarkSaṁ. (Ā.) 131. 2; एक एव भेदः द्विधर्मिको दृष्टः इति। तस्मादन्योऽन्यप्रतियोगिका-नेकधर्मिकानेकभेदविषयत्वं प्रतीतेर्न वक्तुं शक्यम् NyāySu.(Ja.) 369B.8(*on* ii. 2.6); वस्तुतोऽन्योऽन्यप्रतियोगिकयोर्घटपटस्वरूपभेदयोः प्रतीतयोः सतोः असति सादृश्यादौ प्रतिबन्धके अन्योऽन्यप्रतियोगिकतया विशिष्टभेदप्रतीतौ बाधकाभावात् NyāySu.(Ja.) 408A.2(*on* ii. 2.8); Nyāyāmṛ.560B.11; AdvaiSi.803.1; 2 having each other as the relational adjuncts, cf. अन्योऽन्यप्रतियोगिकत्व.

**अन्योऽन्यप्रतियोगिकता** (anyo'nyapratiyogika-tā) *f.* [Inst.] by way of being what has each other as the counterpositive घटात्पटः पृथक् पटाच्च घटः पृथग् इति अन्योऽन्यप्रतियोगिकतया प्रतीयते NyāySu.(Ja.)369A.11(*on* ii. 2.6)

**अन्योऽन्यप्रतियोगिकत्व** (anyo'nyapratiyogika-tva) *n.* the state of being what has each other as the relational adjuncts उभयविश्रान्त-सादृश्योपमायामन्योऽन्यप्रतियोगिकत्वांशे व्यक्तिः। सादृश्यरूपोपमांशे वृत्त्यन्तरम् CitraMī.39.5; अन्योऽन्यप्रतियोगिकत्वविशिष्टसादृश्यविषयवृत्त्यन्तरनिरपेक्षकत्वं व्यक्तेः तद्विषयव्यक्तिनिरपेक्षत्वं वृत्त्यन्तरस्य चास्त्येव CitraMī.39.13; अन्योऽन्यप्रतियोगिकत्व-विशिष्टा ... सा उपमेयोपमा RasGaṅ. 265. 2; अन्योऽन्यप्रतियोगिकत्वस्य व्यञ्जनव्यापारमात्रगम्यत्वेनोपमायाश्च ... अबोधनात् RasGaṅ. 265.5; अन्योऽन्य-प्रतियोगिकत्वमुपमायां न प्रतीयते RasGaṅ. 266.4.

**अन्योऽन्यप्रतियोगिता** (anyo'nyapratiyogi-tā) *f.* the state of being the counterpositives of each other घटपटस्वरूपभेदयोः ... अन्योऽन्यप्रतियोगितया विशिष्टधीः Nyāyāmṛ. 560B.12.

**अन्योऽन्यप्रतियोगित्व** (anyo'nyapratiyogi-tva) *n.* 1 the state of being the relational adjuncts of each other कस्यांचित्क्रियायां भावानामन्योऽन्यप्रतियोगित्वं सहार्थ इति चेन्न। अनुत्पन्नस्थितिन(v.l. °वि)रुद्धानामन्योऽन्यप्रतियोगित्वाभावात् सहभवतां च प्रतियोगित्वे कालस्याप्रत्याख्यानमेव NyāyKa.64.18; 2 the state of being the counterpositives of each other घटपटस्वरूपभेदयोरन्योऽन्यप्रतियोगित्व-योग्यघटपटत्वादिरूपेण प्रतीतयोः असति प्रतिबन्धके ... विशिष्टधीः Nyāyāmṛ. 560B.11; AdvaiSi.803.1.

**अन्योऽन्यप्रतिरुष्ट** (anyo'nya-pratiruṣṭa) *adj.* angry at each other हयाः ... अन्योऽन्यपरिपिष्टाः (v.l. अन्योऽन्यप्रतिरुष्टाः) ... दृश्यन्ते MahāBhā.ix.22.47.

**अन्योऽन्यप्रतिरोध** (anyo'nya-pratirodha) *m.* mutual opposition or contradiction समत्वेऽपि प्रकरणसमत्वापादनदशायामन्योऽन्यप्रतिरोधस्येष्टत्वेन तत्प्रसङ्गानुपपत्तेश्च ŚatDū.71.18.

**अन्योऽन्यप्रतिविद्ध** (anyo'nya-pratividdha) *adj.* hitting against each other हयाः ... । अन्योऽन्यपरिपिष्टाः (v.l. अन्योऽन्यप्रतिविद्धाः) ... दृश्यन्ते MahāBhā.ix. 22.47.

**अन्योऽन्यप्रतिश्रुति** (anyo'nya-pratiśruti) *f.* mutual echo or reverberation गम्भीरत्वं तत्रैव शब्दस्य भ्रमणादन्योऽन्यप्रतिश्रुतिकारसमारम्भसंपूर्णाद्य AbhinBhā.i.64.19(*on* 2.82)

**अन्योऽन्यप्रतिषेध** (anyo'nya-pratiṣedha) *m.* 1 mutual contradiction or conflict अन्योऽन्यप्रतिषेधो विप्रतिषेधः MahāBh.i. 304.12(*on* i.4. 2); 2 mutual exclusion अन्योऽन्यप्रतिषेधदर्शनमपि स्यादत्र चोक्तं विना (पुष्पाणाम्) ĪśānŚiPa.i.8.68; ii. 5.82.

**अन्योऽन्यप्रतिष्ठ** (anyo'nya-pratiṣṭha) *adj.* based on each other, interdependent शरीरहृदयवायवोऽन्योऽन्यप्रतिष्ठाः BṛĀraUBh.479.5 (*on* iii. 9. 26); देहहृद्वायवोऽन्योऽन्यप्रतिष्ठाः संहतत्वतः। प्रयुक्ताः कर्मणा पुंसां वर्तन्ते भोगसिद्धये BṛĀraUBhVā.iii. 9. 92.

**अन्योऽन्यप्रतिसंगम** (anyo'nya-pratisaṅgama) *m.* counterunion of each other राजराष्ट्रभयावहम् ... विरुद्धानां च सत्त्वानामन्योऽन्यप्रतिसंगमम् AVPari.64(3).3.

**अन्योऽन्यप्रतिसर्पण** (anyo'nya-pratisarpaṇa) *n.* act of approaching each other (ग्रहाणाम्) आरोहणम् ... अन्योऽन्यं प्रति सर्पणम् (v.l. अन्योऽन्य-प्रतिसर्पणम्) ... । सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः MahāBhā.ii. App.I.28(16)

**अन्योऽन्यप्रतीघात** (anyo'nya-pratīghāta) *m.* hindrance to each other याम्यां दिग्भ्यां द्वयोः परस्परमागच्छतोरन्योऽन्यप्रतीघातो भवति ते विरुद्धे दिशौ NyāyKa.147. 2.

**अन्योऽन्यप्रत्यनीक** (anyo'nya-pratyanīka) *adj.* 1 mutually divergent अन्योऽन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः। व्यत्यासादुपयोगेन प्रकृतिं गमयेद्भिषक् CaraS.viii.12.8; 2 mutually contradictory अन्योऽन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि NyāyBh. 310. 5(*on* iv. 2.49)

**अन्योऽन्यप्रत्यय** (anyo'nya-pratyaya) *adj.* 1 having (factors as) mutual (remote) causal conditions द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योऽन्यहेतुकोऽन्योऽन्यप्रत्ययो न नित्यः ... अनुप्रवर्तते ĀryaŚāS.13.4.

**अन्योऽन्यप्रत्यय** (anyo'nya-pratyaya) *m.* faith or confidence in each other अविस्रम्भो न जात्वासीदन्योऽन्यप्रत्ययात् तयोः TriṣaŚaPuC.i. 2.63.

**अन्योऽन्यप्रथन** (anyo'nya-prathana) *n.* act of celebrating each other अन्योऽन्यप्रथनविडम्बनप्रवीणैः। ... आक्लृप्तस्थविरहसां निशाटडिम्भैः। ... अद्राक्षीदमरविरोधिराजधानीम् Rāgh.12. 51.

**अन्योऽन्यप्रधन** (anyo'nya-pradhana) *n.* mutual fight, i.e. mutual enmity सः। निनाय योधान् ... अन्योऽन्यप्रधनैर्धनम् RājTa.(Ka.)8.170.

**अन्योऽन्यप्रयुक्त** (anyo'nya-prayukta) *adj.* caused by each other जीवब्रह्मविभागस्याविद्यकत्वादविद्यायाश्च जीवाश्रितत्वात् जीवत्वाज्ञाने अन्योऽन्यप्रयुक्ते इति प्रयुक्तेरेव प्रतिबन्धः Nyāyāmṛ.352A.8.

**अन्योऽन्यप्रयोजक** (anyo'nya-prayojaka) *adj.* conducive to each other सर्व एते ह्यस्ववशा दण्डचक्रादयो यथा। ... अथ वा मतमेतत्ते तेऽप्यन्योऽन्यप्रयोजकाः MahāBhā.xiii.1. 34.

**अन्योऽन्यप्रवर्तन** (anyo'nya-pravartana) *n.* act of prompting each other अन्योऽन्यप्रवर्तने अन्योऽन्याश्रयणात्। उत्तरस्य ज्ञानस्य जगत्कारणत्वा-भावान्नान्योऽन्याश्रयणम् NyāySiA. 231. 27.

**अन्योऽन्यप्रवर्तित** (anyo'nya-pravartita) *adj.* caused to roll on by each other ब्रह्मैव मामाहेत्यादरातिशयः। पुत्रशतयोगाद्य(द)न्योऽन्यप्रवर्तितबहुतरपरिवारयोगः AbhinBhā.i.18.12(*on* 1. 24)

**अन्योऽन्यप्रवितीर्ण** (anyo'nya-pravitīrṇa) *adj.* delivered, i.e. given to each other अन्योऽन्यप्रवितीर्णदन्तनखरप्रोद्यत्पदव्यञ्जनैर्यूनोर्वीक्ष्य परां स्थितिं गतवतो निर्व्याजवीरव्रते। कन्दर्पः ... आशिश्राय ... निद्राम् HammīMaKā.7.127.

**अन्योऽन्यप्रविभागक** (anyo'nya-pravibhāgaka) *adj.* causing mutual separation रक्ष्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् (v.l. अन्योऽन्यप्रविभागकम्) MahāBhā.i. 200. 20.

**अन्योऽन्यप्रविभाविक** (anyo'nya-pravibhāvika) *adj.* causing to appear dissension or strife between each other रक्ष्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् (v.l. अन्योऽन्यप्रविभाविकम्) MahāBhā.i. 200. 20.

**अन्योऽन्यप्रवेश** (anyo'nya-praveśa) *m.* entrance, i.e. merging into each other देवानामन्योऽन्यप्रवेशेन देहलयो भवति TattvPrakā.210B.10 (*on* iv. 2 17)

**अन्योऽन्यप्रश्न** (anyo'nya-praśna) *m.* question to each other, mutual enquiry सर्वमुभयोरन्योऽन्यप्रश्नादनेनैव तरोः प्रकाण्डेनान्तरितः शृणोमि UdaySuKa.134.6.

**अन्योऽन्यप्रस्तुत** (anyo'nya-prastuta) *adj.* begun or commenced by each other कृत्या च कांश्चिदन्योऽन्यप्रस्तुतप्रियव्यवहारान् ... निषधेश्वरश्चिन्तयांचकार NalaCam. 5. 54(42)

**अन्योऽन्यप्रहाण** (anyo'nya-prahāṇa) *n.* abandonment of each other तादात्म्यग्राहिणी प्रतीतिरियं गौरयमित्येकात्मतापरामर्शात् उभयोरन्योऽन्यप्रहाणेन स्वरूपान्तराभावाद्य अनुवृत्तता हि गोत्वस्येव NyāyKa. 315.12.

**अन्योऽन्यप्रहित** (anyo'nya-prahita) *adj.* discharged by each other किं किं नेत्यमसिध्यत् ... निशाचारिणामन्योऽन्यप्रहितामरासुरशरस्रग्दार्यमाणैः गजैः ŚrīKaC. 23.45.

**अन्योऽन्यप्रहृति** (anyo'nya-prahṛti) *f.* act of striking or attacking each other अन्योऽन्यप्रहृतौ रन्ध्रमीक्षमाणौ ...। अयुध्येतां दुराधर्षौ दण्डिनौ दैत्यशेखरौ BrahmāṇḍP. iii. 28.110; अन्योऽन्यप्रहृतिर्मा भूदिति काश्मीरिका भटाः। पत्रशाखा न्यधुर्मूर्ध्नि हर्तुं निजपरभ्रमम् RājTa.(Śrī.) 4. 256.

**अन्योऽन्यप्रान्तरान्तर्** (anyo'nyaprāntarāntar) *ind.* in the space between each other अन्योऽन्यप्रान्तरान्तर्विचलदुरुमरुत्पुञ्जगुञ्जारवोग्रैरङ्गुल्यग्रैरुदञ्चन्नखकिरण-शिखास्पष्टदंष्ट्राकरालैः। क्रामन्वः पातु पञ्चाननः EI.xi.190.1.

**अन्योऽन्यप्राप्त** (anyo'nya-prāpta) *adj.* occurring after each other पात्रसंकोचे सति परस्परसंकरेण स्वादुतोपघातकानि यानि चान्योऽन्यप्राप्तपरिवेषणकालानि च यानि विस्मृत्य पूर्वं न परिविष्टानि ... तानि भुञ्जानेष्वपि द्विजेषु परिवेषणीयान्येव CaturCin.iii(1).1380. 21.

**अन्योऽन्यप्राभृत** (anyo'nya-prābhṛta) *n.* present or gift for each other अन्योऽन्यप्राभृतैस्तुष्टौ पुरं स्वं स्वं गतौ नृपौ PrabhāC. 98.13.

**अन्योऽन्यप्रियकाङ्क्षिन्** (anyo'nyapriya-kāṅkṣin) *adj.* desiring favour or showing kindness to each other धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः। सत्त्वस्थाः शौर्यसंपन्ना अन्योऽन्यप्रियकारिणः (v.l.अन्योऽन्यप्रियकाङ्क्षिणः) MahāBhā. ii. 49.19.

**अन्योऽन्यप्रियकाम** (anyo'nyapriya-kāma) *adj.* desiring favour or showing kindness to each other स्वोचितान्येव कर्माणि प्रारभन्ते च मानवाः। ... अन्योऽन्यप्रियकामाश्च राजभक्तिसमन्विताः BrahmāṇḍP.ii. 50. 9.

**अन्योऽन्यप्रियकारिन्** (anyo'nyapriya-kārin) *adj.* doing favour to each other धृष्टद्युम्नः पाण्डवाः ...। सत्त्वस्थाः शौर्यसंपन्ना अन्योऽन्यप्रियकारिणः MahāBhā. ii.49.19; ii.App. I. 33(14)

**अन्योऽन्यप्रियता** (anyo'nya-priyatā) *f.* fondness or affection for each other अन्योऽन्यप्रियताप्रसन्नमनसः सर्वत्र सन्तु प्रजाः NāgaSa. 38.18 (comm. अन्योऽन्यं परस्परोपरि प्रियता स्नेहः मैत्री)

**अन्योऽन्यप्रियदर्शन** (anyo'nya-priyadarśana) *adj.* having pleasant or grateful sight for each other पाण्डवाः ...। सत्त्वस्थाः ... अन्योऽन्यप्रियकारिणः (v.l. अन्योऽन्यप्रियदर्शनाः) MahāBhā.ii.49.19.

**अन्योऽन्यप्रीणन** (anyo'nya-prīṇana) *n.* act of pleasing each other लभध्वं परमं स्थानमन्योऽन्यप्रीणनात् GaṇeP.ii.139.11.

**अन्योऽन्यप्रीतमनस्** (anyo'nya-prītamanas) *adj.* whose minds are pleased with each other अन्योऽन्यप्रीतमनसोरुमाशंकरयोरय। श्लेषं संसक्तयोर्ज्ञात्वा शङ्कितः किल वृत्रहा BrahmāṇḍP.ii.10. 22.

**अन्योऽन्यप्रीति** (anyo'nya-prīti) *f.* 1 love for each other, mutual love or affection शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति (v.l.अन्योऽन्यप्रीत्या पिङ्गलकः करटकदमनकनामानौ मन्त्रिपुत्रौ न गणितवान्) PañcT.1. 54(37)(46.7); परस्परं प्रीत्या (v.l.तेन स्नेहेनान्योऽन्यप्रीत्या च) कालोऽतिवर्तते PañcT. 2.77(34)(252.1); अन्योऽन्यप्रीतिरनयोरुमाशंकरयोर्यथा VāyuP.ii.11. 20; 2 pleasure to each other ततो युद्धमभूद्घोरं परस्परवधैषिणाम्। अन्योऽन्यवधसंयुक्तमन्योऽन्यप्रीतिवर्धनम् MahāBhā.ix.11. 38.

**अन्योऽन्यप्रीतिकृत्** (anyo'nyaprīti-kṛt) *adj.* causing, i.e. having mutual love अन्योऽन्यप्रीतिकृतां समानरूपानुरागकुलवयसाम्। केषांचिदेव मन्ये समागमो भवति पुण्यवताम् Nāgā. 2.14.

**अन्योऽन्यप्रीतिभावक** (anyo'nyaprīti-bhāvaka) *adj.* producing mutual love or affection रक्ष्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् (v.l. °प्रीतिभावकम्) MahāBhā.i. 200. 20.

**अन्योऽन्यप्रीतिभाविक** (anyo'nyaprīti-bhāvika) *adj.* producing mutual love or affection रक्ष्यतां सौहृदं तस्मादन्योऽन्यप्रतिभाविकम् (v.l. °प्रीतिभाविकम्) MahāBhā.i. 200. 20.

**अन्योऽन्यप्रीतियुक्त** (anyo'nyaprīti-yukta) *adj.* possessing love for each other अन्योऽन्यप्रीतियुक्तौ तु नान्योऽन्यं जहतुः VarāP.122. 38; अन्योऽन्यप्रीतियुक्तानामेतेषां स्वस्वपत्तने। त्रयाणामपि मित्राणां याति कालः शनैः शनैः BṛKathāK.134.4.

**अन्योऽन्यप्रीतिसंयुक्त** (anyo'nyaprīti-saṁyukta) *adj.* having affection for each other अन्योऽन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा MahāBhā.i.102.6.

**अन्योऽन्यप्रीतिसंहृष्ट** (anyo'nyaprīti-saṁhṛṣṭa) *adj.* pleased with mutual love or affection अन्योऽन्यप्रीतिसंहृष्टदत्तलाभैन वै जने। ताम्बूलहृष्टवदने .... नीराजनं प्रकर्तव्यम् BhaviP.813A. 25(iv.140.19)

**अन्योऽन्यप्रीतिसंपन्न** (anyo'nyaprīti-sampanna) *adj.* having love for each other (दंपती) अन्योऽन्यप्रीतिसंपन्नौ तिष्ठतः स्म मुदान्वितौ BṛKathā-K.64.5.

**अन्योऽन्यप्रीतिसुखित** (anyo'nyaprīti-sukhita) *adj.* delighted by love for each other मृगस्तु प्रीतिमानेवं कूर्मादींस्तानुवाच सः। पुण्यवानस्मि यत्प्राप्ता भवन्तः सुहृदो मया। प्राणानुपेक्ष्य यैरेवं मृत्योरग्राहमुक्तः। ... अन्योऽन्यप्रीतिसुखिताः काककूर्माखवोऽवसन् KathāSaSāg. x. 5.139.

**अन्योऽन्यप्रेक्षण** (anyo'nya-prekṣaṇa) *n.* act of seeing or looking at each other आकाशे ...। अन्योऽन्यप्रेक्षणतोषमन्वभूवन्फल्गुन्यस्तिष्यपुनर्वसू च मन्ये Rāvaṇā.1.40.

**अन्योऽन्यप्रेक्षा** (anyo'nya-prekṣā) *f.* act of seeing or looking at each other न निवर्तयितुं चापि शक्येयं महती चमूः। अन्योऽन्यप्रेक्षया पश्य प्रवर्तीयं वरूथिनी MahāBhā.vi. 51. 39.

**अन्योऽन्यप्रेमन्** (anyo'nya-preman) *n.* love for each other, mutual love क तेऽन्योऽन्यं यत्नाः (v.l. वान्योऽन्यप्रेम Kane Ed.) क च गहनाः कौतुकरसाः UttaRāC.6. 33.

**अन्योऽन्यप्रेमप्रवण** (anyo'nyaprema-pravaṇa) *adj.* disposed to or full of mutual love यदन्योऽन्यप्रेमप्रवणयुवतीमन्मथकथासमारम्भे ... पुलकैरञ्चिततनुः। तथा मन्ये धन्यम् ... कुरङ्गाक्षी दीक्षागुरुमकृत कंचित्सुकृतिनम् SubhāRaK.15.41; SaduktiKa.71. 33.

**अन्योऽन्यप्रेमसंयुक्त** (anyo'nyaprema-saṁyukta) *adj.* possessing love for each other प्रियङ्गुदर्शनाभिख्यो नन्दनः ... । अन्योऽन्यप्रेमसंयुक्तदंपत्योरनयोरभूत् BṛKathāK.127.154.

**अन्योऽन्यप्रेमसङ्ग** (anyo'nyaprema-saṅga) *m.* possession of mutual love अन्योऽन्यप्रेमसङ्गेन याति कालः शनैः शनैः BṛKathāK.138.47.

**अन्योऽन्यप्रेमसंगत** (anyo'nyaprema-saṅgata) *adj.* possessing mutual love विबुधौ ...। पद्मनारायणस्नेहमीहमानौ परीक्षितुम्। क्रीडैकरसिकात्मानावन्योऽन्यप्रेमसंगतौ। पश्यावः प्रीतिमनयोः PadmP.(Ra.)115. 3.

**अन्योऽन्यप्रेमसंबन्ध** (anyo'nyaprema-sambandha) *adj.* related or connected with mutual love (अद्राक्षीत्) अन्योऽन्यप्रेमसंबन्धं प्रस्फुरद्विमले जले। ... मीनयोर्युगलम् PadmP.(Ra.)3.131; भार्याद्वयं प्राह श्रेणिकः ... । अन्योऽन्यप्रेमसंबन्धम् BṛKathāK. 55.102.

**अन्योऽन्यप्रेमसंबन्ध** (anyo'nyaprema-sambandha) *m.* relation or connection of mutual love अन्योऽन्यप्रेमसंबन्धचेतसोरनयोरभूत्। ... नन्दनः ... जिनदासः BṛKathāK.13. 3; अन्योऽन्यप्रेमसंबन्धतुष्टमानसयोस्तयोः। बभूव परमा मैत्री BṛKathāK.32.12; युधद्वयमिदं स्पष्टं महिषीणां दिने दिने। अन्योऽन्यप्रेमसंबन्धं चरन्नेकत्र तिष्ठति BṛKathāK.121. 9.

**अन्योऽन्यप्रेषित** (anyo'nya-preṣita) *adj.* sent, i.e. communicated to each other अनयोरन्योऽन्यप्रेषितप्रच्छन्नदूतोक्तिवर्धितानुरागयोः चलन्त्यङ्गानि न मनोरथाः NalaCam. 5. 20(1)

**अन्योऽन्यफल** (anyo'nya-phala) *n.* fruit of each other सूत्रप्रामाण्येनान्योऽन्यफलत्वं भङ्क्त्वा सहोत्पन्नकार्यकारणभावविभङ्गया आह Sphuṭā.iii.63.20 (*on* 3. 32)

**अन्योऽन्यफलित** (anyo'nya-phalita) *adj.* producing consequences, i.e. divine attributes between each other गोप्यं तदेतद्रत्नचतुष्टयम्। अन्योऽन्यफलितं सर्वैरशेषैरधिकं गुणैः LakṣmīT. 50.87.

**अन्योऽन्यबद्ध** (anyo'nya-baddha) *adj.* 1 joined together with each other (वाक्स्तम्भनकृत्) नरेन्द्रभुजगावन्योऽन्यबद्धौ लिखेत् ŚāraTi. 24.66; 2A tied to each other समर्थौ। एकैकपादाविव देवदत्तावन्योऽन्यबद्धौ न हि तौ प्रयातुम् KalyāKā.7.47; 2B fixed on each other, cf. **अन्योऽन्यबद्धदृष्टित्व**; 3 (closely) related with or concerning each other अन्योऽन्यबद्धपरिहासपरंपराभिः ... परिवार्यमाणा । ... अक्षान्विनिक्षिपति संप्रति पक्ष्मलाक्षी ŚṛṅgāSar.84; 4 contracted with each other, cf. **अन्योऽन्यबद्धवैर**.

**अन्योऽन्यबद्धदृष्टित्व** (anyo'nyabaddhadṛṣṭi-tva) *n.* the state of having a glance fixed on each other सेनाद्वितयम् ... युद्धसज्जम् ... अन्योऽन्यबद्धदृष्टित्वाच्चित्रं भित्ताविवार्पितम् YogVā.iii. 32.7.

**अन्योऽन्यबद्धवैर** (anyo'nyabaddha-vaira) *adj.* having enmity or hostility contracted with each other अन्योऽन्यबद्धवैराणां जिगीषूणां नृपात्मज। उद्योगसमयः सौम्य पार्थिवानामुपस्थितः Rāmā.iv. 29.30; संप्रति पार्थिवानामपि तावदन्योऽन्यबद्धवैराणां प्रतिनिवृत्ताः कलहाः DhūrtaViSaṁ.11.2.

**अन्योऽन्यबद्धस्पर्ध** (anyo'nyabaddha-spardha) *adj.* having competition contracted with each other, i.e. competing with each other ऋतुभिरपि दर्शितनिजनिजद्रुमकुसुमसमृद्धिभिरन्योऽन्यबद्धस्पर्धैरिव ... आराममद्राक्षीत् (समरकेतुः) TilaMañ. 212. 5.

**अन्योन्यबद्धस्मित** (anyo'nyabaddha-smita) *adj.* having smile fixed on each other तौ दंपती ... अन्योऽन्यबद्धस्मितौ NyāySiA. 234. 27.

**अन्योऽन्यबन्धन** (anyo'nya-bandhana) *adj.* {f. –ī} 1 dependent on each other, interdependent (अर्थकामौ) अन्योऽन्यबन्धनावेतौ विनान्योऽन्यं न सिध्यतः MahāBhā.v. 37. 34; SūktiRa.163.101; 2 joining or linking one another नृत्तं शृङ्खलन्योऽन्यबन्धनी BhāvPra.(Śā.) 246.17(8)

**अन्योऽन्यबन्धन** (anyo'nya-bandhana) *n.* act of binding each other अलीककलहाकृष्टसूत्रशेषीकृतस्रजः। अन्योऽन्यबन्धनानीतबिशसूत्रयुता इव। ... एताश्चोपवने दिव्यस्त्रीणां क्रीडाः RāghPāṇ.(Dha.)7. 38

**अन्योऽन्यबल** (anyo'nya-bala) *n.* 1 strength of each other or one another प्रजह्रे समन्तेव तत्र तैरपेक्षितान्योऽन्यबलोपपत्तिभिः Kirātā.14.44; द्वन्द्वयुद्धरताः सर्वे अन्योऽन्यबलकाङ्क्षिणः SkandP. i(1).17.140; अमिप्रहारैर्विविधैरन्योऽन्यबलदर्पिताः ... केचिद्गजगजाः ... क्रीडन्ति Hastyāyur. 200.8(2.13); 2 armies of each other अन्योऽन्यबलद्वयम्। यथाञ्जनक्षयम् RājTa.(Prā.)244.

**अन्योऽन्यबलाबल** (anyo'nya-balābala) *n.* strength and weakness of each other श्रुति॰...॰समाख्यानामेवान्योऽन्यबलाबलावधारणसंदिह्यमानवचनव्यक्तिषु ... निर्णयार्थं द्वितीयतृतीयौ पादावारभ्येते BrahmSūBh.(Bhā.)37. 5(*on* i. 2.1)

**अन्योऽन्यबाणवर्ष** (anyo'nya-bāṇavarṣa) *adj.* showering arrows at each other तद्दानवमहामेघं देवायुधविराजितम्। अन्योऽन्यबाणवर्षं तद्युद्धदुर्दिनमावभौ HariVaṁ. 37. 36.

**अन्योऽन्यबाध** (anyo'nya-bādha) *m.* 1 contradiction to each other इन्द्रेशानाद्यभिख्या स्वयमिह महदाद्युक्तिभिर्वा विशिष्टा ... स्यात् नैक ईशो न भवति यदि वा कश्चिदन्योऽन्यबाधात् TattvMu. 3.13; 3.71; 2 act of hurting, i.e. pressing each other, cf. अन्योऽन्यबाधिन्.

**अन्योऽन्यबाधक** (anyo'nya-bādhaka) *adj.* opposed or enemical to each other सिंहोऽब्रवीद्व्यक्तवाचो जातिस्मरा वयम्। अन्योऽन्यबाधकाश्चास्मद्वृत्तान्तं च क्रमाच्छृणु KathāSaSāg. x. 9. 56.

**अन्योऽन्यबाधकत्व** (anyo'nya-bādhakatva) *n.* opposition to each other, mutual contradiction कारणाभावे कार्यस्योत्पत्तिर्विभावना ... कारणाभाव इत्यन्योऽन्यबाधकत्वानुप्राणितात्विरोधालंकाराद्भेदः AlaṅkāSa.124.7.

**अन्योऽन्यबाधकभाव** (anyo'nya-bādhakabhāva) *m.* mutually contradictory relationship धातुरुद्रमहेश्वरशब्दानामन्योऽन्यविरोधात् अन्योऽन्यबाधकभावानुपपत्तेश्च, अर्थनिश्चायकत्वेऽनुपपन्ने सति प्रमाणान्तरायत्तोऽर्थनिश्चयः ŚrutaPra. ii.191.22 (*on* i.4.29)

**अन्योऽन्यबाधन** (anyo'nya-bādhana) *n.* mutual contradiction भ्रान्तिश्च वस्तुवित्तिश्चेत्येतदन्योऽन्यबाधनम् PramāVāBh.193. 2.

**अन्योऽन्यबाधनावस्था** (anyo'nyabādhanāvasthā) *f.* states or conditions opposing each other अन्यामन्यां धनावस्थाम् (v.l. अन्योऽन्यबाधनावस्थाम्) प्राप्य ... । असंतुष्टाः प्रमुह्यन्ति MahāBhā.xi. 2. 20.

**अन्योऽन्यबाधा** (anyo'nya-bādhā) *f.* hinderance or impediment to each other दीपाश्च ... गेहे नान्योऽन्यबाधां जनयन्ति भान्तः VarāṅgaC.10.38.

**अन्योऽन्यबाधित** (anyo'nya-bādhita) *adj.* mutually contradictory तेभ्यः स्वरूपं भिन्नं हि वैरूप्यमभिधीयते। वैरूप्यं न च भिन्नं चेत्येतदन्योऽन्यबाधितम् TattvSaṁ.1718.

**अन्योऽन्यबाधिन्** (anyo'nya-bādhin) *adj.* obstructing, i.e. pressing each other विभाति तन्व्या नवरोमराजिः ... । अन्योऽन्यबाधिस्तनमण्डलस्य मध्यस्य धात्रा विहितेव सीमा JānaHa.7.11.

**अन्योऽन्यबाध्य** (anyo'nya-bādhya) *adj.* [*f.* –ā] contradictory to each other, mutually contradictory ज्योतिश्शास्त्रं पुराणाद्यपि न हि निगमग्राह्यमन्योऽन्यबाध्यम् TattvMu.1.64; एकाधारे विरुद्धाकृतियुगयुगपत्ख्यातिरन्योऽन्यबाध्या TattvMu. 4.15.

**अन्योऽन्यबाध्यत्व** (anyo'nyabādhya-tva) *n.* the state of being mutually contradictory ननु भेदज्ञानबाधितो रूप्यसर्पाद्यैक्यभ्रमः ... अन्यथा तयोरन्योऽन्यबाध्यत्वान्नानेकरूपं किं चित्स्यात् IṣṭaSi.108.10.

**अन्योऽन्यबाध्यबाधकभाव** (anyo'nya-bādhyabādhakabhāva) *m.* mutually contradictory- and - contradicted relationship मनुष्यत्वमर्कटत्वादेरन्योऽन्यबाध्यबाधकभावं विना समावेशाङ्गीकारे ... तदविशेषात् ŚivārkaMaDī.ii. 232.10(*on* iii. 2.6)

**अन्योऽन्यबाहुमलन** (anyo'nyabāhu-malana) *n.* act of rubbing arms of each other अभ्युन्मिषच्छिखिशिखापटलं सुबाहुरन्योऽन्यबाहुमलनेन करद्वयस्थम्। त्वष्टा ... आधत्त चक्रघटनार्थमिवार्कतेजः HarVi. 34.18.

**अन्योऽन्यबीज** (anyo'nya-bīja) *n.* seed of each other अन्योऽन्यबीजाधायकमन्योऽन्यजनकं च चित्तं चित्तान्तरादुत्पद्यमानमन्योऽन्यवास्यवासकत्वेन प्रवर्तते Sphuṭā.ii.68. 20(*on* 2. 36)

**अन्योऽन्यबीजलग्न** (anyo'nyabīja-lagna) *adj.* whose seeds are stuck with each other रुद्राक्षस्य फलम् ...। अन्योऽन्यबीजलग्नं च मालायां परिवर्जयेत् PadmP.v. 57.11.

**अन्योऽन्यबोधनाशक्त** (anyo'nyabodhanāśakta) *adj.* unable to recognize each other देवाः ...। अन्योऽन्यबोधनार(श)क्ताः प्रणम्य शिवमूचिरे PadmP.iv.104.67.

**अन्योऽन्यभक्त** (anyo'nya-bhakta) *adj.* divided by each other छित्वा छेदेन राशिं प्रथमफलमपोह्याप्तमन्योऽन्यभक्तम् GaṇiSāSaṁ. 5.115½; 136½.

**अन्योऽन्यभक्ष** (anyo'nya-bhakṣa) *m.* food for each other काके ...। अन्योऽन्यभक्षसंक्रमितानने तुष्टिरुत्तमा भवति BṛSaṁ. 95.43.

**अन्योऽन्यभक्षण** (anyo'nya-bhakṣaṇa) *n.* 1 object of eating, i.e. food for each other बिडालमत्स्यमज्ञानां जन्तूनां क्षुद्रसंज्ञिनाम्। अन्योऽन्यभक्षणानि स्युः AVPari.64(5).4; 2 act of eating each other अन्योऽन्यभक्षणे सक्ताः ...। इहैव परिवर्तन्ते न ते यान्त्युत्तरां दिशम् MahāBhā.xii.185.23; अन्योऽन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम्। ... सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः MahāBhā. xii.290.37; BrahmP. 239. 36.

**अन्योऽन्यभक्षणादि** (anyo'nyabhakṣaṇādi) *adj.* object of eating, i.e. food etc. for each other etc. अन्योऽन्यभक्षणादीनि तिर्यक्त्वे च चिरं मया। प्राप्तानि दुःखशल्यानि PadmP.(Ra.)32.86.

**अन्योऽन्यभक्षिन्** (anyo'nya-bhakṣin) *adj.* who eat each other (हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः। परस्परादिन स्तेनाः) अन्योऽन्यभक्षिणः मत्स्याद्याः ManvaVi.1506.4(*on* 12. 59)

**अन्योऽन्यभङ्ग** (anyo'nya-bhaṅga) *m.* defeat of, i.e. victory over each other दिने दिने ...। अन्योऽन्यभङ्गाहिततीव्रतर्षस्तथापि दूरीकृतजन्यमर्षः Śaṅka-DigVi.(Mā.)8.71.

**अन्योऽन्यभण्डन** (anyo'nya-bhaṇḍana) *n.* mutual war सैन्यद्वयम् ...। अन्योऽन्यभण्डनासक्तं बभूव BṛKathāK. 56. 307.

**अन्योऽन्यभजन** (anyo'nya-bhajana) *n.* act of sharing, i.e. serving each other इन्द्रियविषयविज्ञानानामन्योऽन्यभजनं कारित्रभजनं वा भागः Abhidh-KoBh. 28. 20 (*on* 1.39)

**अन्योऽन्यभय** (anyo'nya-bhaya) *n.* fear of each other द्विजकौलेयकन्यायो राजडामरसंघयोः। ततोऽन्योऽन्यभयप्रश्रयद्वैरयोरुदजृम्भत RājTa.(Ka.)8.800.

**अन्योऽन्यभयंकर** (anyo'nya-bhayaṅkara) *adj.* one more terrible than the other नरकम् ... घोरं तथान्योऽन्यभयंकरम्। एवमेतेषु ते पापा नरकेषु समागताः ViṣṇuDhaP.ii.119. 52.

**अन्योऽन्यभव** (anyo'nya-bhava) *adj.* produced from each other, i.e. related respectively समवृत्तयोर्द्वयोर्हि द्वात्रिंशदशीतिहस्तविस्तृतयोः। ग्रासेऽष्टौ की बाणावन्योऽन्यभवौ समाचक्ष्व GaṇiSāSaṁ.6. 232½.

**अन्योऽन्यभवनगमन** (anyo'nyabhavana-gamana) *n.* act of occupying the houses of each other (लग्नेशदशमेशयोः) अन्योऽन्यभवनगमनात्क्रूराभावेऽध चिन्तितप्राप्तिः TājiNī.iii.1.110(360)

**अन्योऽन्यभागगत** (anyo'nyabhāga-gata) *adj.* occupying the (ninth) part of each other अन्योऽन्यभागगतयोः सितकुजयोरन्यपुरुषसक्ता स्यात् Sārā.45.18.

**अन्योऽन्यभाजित** (anyo'nya-bhājita) *adj.* divided by each other कर्णाश्रितभुजघातैक्यमुभयथान्योऽन्यभाजितं गुणयेत् BrāhmSphuSi.12. 28; Līlā.4.190.

**अन्योऽन्यभाव** (anyo'nya-bhāva) *m.* 1 feeling for each other, mutual feelings गौरी वः पातु पत्युः प्रतिनयनमिवाविष्कृतान्योऽन्यरूपा (v.l. प्रतिनयन इवाविष्कृतान्योऽन्यभावा) CaṇḍīŚ.41; अन्योऽन्यभावचतुरेण सखीजनेन मुक्ताः ... कटाक्षाः MālaMā.1. 237; SaraKaṇṭhā.618. 9; 2 existence of each other, i.e. mutual identity भिन्नयोरप्यन्योऽन्या(न्य?)भावाविरोधात् एको भावः स्यात् IṣṭaSi. 5.7; 3 mutual exchange of conditions इन्द्रस्य ... शूकरस्य च ... मृत्युतः संत्रासोऽपि समः स्वकर्मगतिभिश्चान्योऽन्यभावः समः ŚāntiŚ. 2.8; 2.13.

**अन्योऽन्यभावना** (anyo'nya-bhāvanā) *f.* feeling or regard for each other देवोऽपि भावयेत्पश्चान्मानुषोऽपि न संशयः। अन्योऽन्यभावना कार्या स स्तेयी यो न भावयेत् BhaviP. 323B. 32 (ii(1). 5.76)

**अन्योऽन्यभावारोपण** (anyo'nyabhāvāropaṇa) *n.* superimposition of the nature of each other ('योऽसौ सोऽहम्' इति वाक्ये) जीवब्रह्मणोरन्योऽन्यभावारोपणमिति चेत् ... न ŚrutaPra.ii. 506. 21(*on* iii. 3. 37)

**अन्योऽन्यभाषण** (anyo'nya-bhāṣaṇa) *n.* mutual talk or conversation दोषा गताः ... अन्योऽन्यभाषणपदैरमृतोपमैश्च DevīBhāP.iii. 22. 35; अभिलापः ... अनुरागः। यथा अन्योऽन्यभाषणमनङ्गविलासगोष्ठी PratāYaBhū. 278.8 (comm. इष्टालापरूपम्) [संलापोऽन्योऽन्यभाषणम् ŚabdaRa.(Vā.) 1853]

**अन्योऽन्यभाषानवबोध** (anyo'nyabhāṣānavabodha) *m.* non-understanding of the dialect of each other अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु। दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न जनैरचिह्नि NaiṣC.10. 34 (comm. परस्परभाषाबोधाभावात्)

**अन्योऽन्यभाषित** (anyo'nya-bhāṣita) *n.* mutual talk or conversation साग्रं योजनमेतस्मादतीत्यान्योऽन्यभाषितम्। शृणोत्ययं जनः PadmP.(Ra.) 39. 20; बहवः ... आसीनाः अन्योऽन्यभाषितमपि न स्मरन्तश्चेत्युः ChāndoUBh. 446.7 (*on* vi.13.1)

**अन्योऽन्यभिन्न** (anyo'nya-bhinna) *adj.* 1 differing from or falling out with one another तेषामन्योऽन्यभिन्नानां स्वशक्तिमनुतिष्ठताम्। निग्रहः पण्डितैः कार्यः MahāBhā.xii.108. 26; 2 mutually different or distinct अन्योऽन्यभिन्ना

संबन्धः नाख्यातपदरहितेषु वेदान्तवाक्येषु भवितुमर्हति NyāyKa.6.3; कारकयोश्च मन्त्राश्चाभिधानीरूपयोरन्योऽन्यसंबन्धो युक्तः MīmāKau. iii(1).79.4(*on* i.2.44); यत्र तद्धितवृत्तौ ... कारकतातिरिक्तसंबन्धेन वृत्तिस्तत्राकृत्यापि भावनासंबन्धं प्रथमतोऽन्योऽन्यसंबन्धेन वैशिष्ट्य उच्यमानेऽपि न वाक्यभेदः MīmāKau.iii(2). 178.11(*on* ii. 2.6); **Bii** mutual relation सर्गाभिधानि चास्मिन्नवान्तरप्रकरणानि कुर्वीत। संधीनपि सुश्लिष्टांस्तेषामन्योऽन्यसंबन्धात् Kāvyālaṅ.(Ru.)16.19; एवमन्योऽन्यसमन्वये(v.l. अन्योऽन्यसंबन्धात्) अन्येऽपि भेदाः (शब्दहरणस्य) KāvyMī.57.10; यथा लौकिकानामलंकाराणां हिरण्मयानां मणिमयानां च पृथक् सौन्दर्यहेतूनामन्योऽन्यसंबन्धेन चारुत्वातिशयो दृश्यते तथैव काव्यालंकाराणाम् PratāYaBhū.472.4; **C** mutual contact or connection परमाणूनां निरवयवत्वे अन्योऽन्यसंबन्धेऽपि स्थौल्यासिद्धेः SarvaMaSaṁ. 28.2; NityoNi. 72.11.

**अन्योऽन्यसंबन्धता** (anyo'nyasambandha-tā) *f.* [Inst.] by way of being related to each other ब्रह्मविष्णुरुद्राणां तद्वाचकवर्णभेदानाम् अन्योऽन्यसंबन्धतया एकत्र प्रतीयमानत्वेन ... ह्रींकारस्य नन्दनोपमा LalitāTriBh. 354.2(*on* 58)

**अन्योऽन्यसंबन्धपरिकल्पन** (anyo'nyasambandha-parikalpana) *n.* assumption of mutual relation (काव्यालंकाराणाम्) तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये। तेषामानन्त्यमन्योऽन्यसंबन्धपरिकल्पने Dhvanyā.2.12.

**अन्योऽन्यसंबन्धबल** (anyo'nyasambandha-bala) *n.* [Abl.] on the strength of mutual relation देशकालप्रमात्रादीनां नियमहेतूनामन्योऽन्यसंबन्धबलादत्यन्तमपसरणे स एव साधारणीभावः सुतरां पुष्यति Kāvyānu.(He.)75.3(2)

**अन्योऽन्यसंबन्धबोधकत्व** (anyo'nyasambandhabodhaka-tva) *n.* the state of conveying mutual semantic relation अतः ... पदार्थानां न क्वचिदन्योऽन्यसंबन्धबोधकत्वम् ... प्रतीतम् PrakaPañ.393.11.

**अन्योऽन्यसंबन्धभजन** (anyo'nyasambandha-bhajana) *n.* separation or division of mutual relation अन्योऽन्यं देवताविशेषं प्रति द्रव्यस्य भजनं कर्तव्यमित्यर्थः। एवं विशब्दः श्रुत्यावृतः ... धातुना च प्रत्ययस्याविप्रकर्षः। एवमन्योऽन्यसंबन्धभजनं कुर्यात् ṬupṬ.140.12(*on* vi. 5.11)

**अन्योऽन्यसंबन्धयोग्यार्थ** (anyo'nyasambandhayogyārtha) *adj.* conveying meanings competent of having mutual semantic relation तत्राज्ञातेऽपि वाक्यार्थे श्रोतैवं विचिकित्सते। ब्रवीत्यन्योऽन्यसंबन्धयोग्यार्थानि पदान्ययम् ĀgaPrā.38.13.

**अन्योऽन्यसंबन्धसिद्धि** (anyo'nyasambandha-siddhi) *f.* establishment of mutual semantic relation कारकस्य ... भावनारूपक्रियासंबन्धित्वं विना कारकत्वायोगात् न कारकाणामन्योऽन्यसंबन्धसिद्धिः MīmāKau.i.154.18(*on* i.4.1)

**अन्योऽन्यसंबन्धादि** (anyo'nyasambandhādi) *adj.* mutual relation etc. असंकीर्णसिद्धान्तधर्माणामेवाधिकारिणामन्योऽन्यसंबन्धादियोग्यत्वम् इतरेषां तु बाह्यानामिव वर्जनीयत्वमपि प्रतिपादितम् PāñcRāRa.15.4.

**अन्योऽन्यसंबन्धानादर** (anyo'nyasambandhānādara) *m.* [Inst.] by ignoring mutual semantic relation प्रकृते तु दध्यादिविधीनामन्योऽन्यसंबन्धानादरेण ... विकल्पस्योत्तरकालिकत्वमिति विशेषः MīmāKau. iii(2).264.16 (*on* ii. 2. 23)

**अन्योऽन्यसंबन्धाभाव** (anyo'nyasambandhābhāva) *m.* absence of mutual semantic relation कारकाणां क्रियापरिहारेणान्योऽन्यसंबन्धाभावात् TantrVā. 53.2 (*on* i.2.31); TantrRa. 29.18.

**अन्योऽन्यसंबन्धित्व** (anyo'nyasambandhi-tva) *n.* the state of being related to each other 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति निर्देशः 'रामानुजं लक्ष्मणपूर्वजं च' इतिवत् अन्योऽन्यसंबन्धित्वतात्पर्यातिशयकृतः ŚrutaPra.iA.186.7 (*on* i.1.1)

**अन्योऽन्यसंवलन** (anyo'nya-sambalana) *n.* mixture of each other शिखण्डाभरणभुवा मुक्ताफलालोकेन मरकतमणिकिरणकलापेन चान्योऽन्यसंवलनवृजिनेन प्रयागप्रवाहवेणिकावारिणेवागत्य स्वयमभिषिच्यमानम् ... हर्षमद्राक्षीत् HarṣaC.117.5.

**अन्योऽन्यसंबाध** (anyo'nya-sambādha) *adj.* pushing or pressing each other (राघवः) लोकैरन्योऽन्यसंबाधैर्यो द्रष्टुं च न शक्यते Rāmā.ii.2131*(2)

**अन्योऽन्यसंभव** (anyo'nya-sambhava) *m.* **A** production or origination of one from another दृश्यन्ते व्याधिसंकराः ... तथा चान्योऽन्यसंभवात् CaraS. ii.8.22(1941 Ed.); **B** natural inclination to each other शृङ्गारबीभत्सयोः समानाश्रयत्वेन तयोरन्योऽन्यसंभवोन्मूलकत्वम् Loc.172.19(*on* 3.24)

**अन्योऽन्यसंभावितविशेष** (anyo'nyasambhāvita-viśeṣa) *m.* particular attributes which are possible to be present in each other वैश्वानरोपासकत्वे- नैकविद्यात्वाभिमानिनामन्योऽन्यसंभावितविशेषग्रहणाय ... 'किं ब्रह्मेति ... व्याख्यातम् ŚivārkaMaDī.i. 389.16(*on* i. 2. 27)

**अन्योऽन्यसंभाव्यमान** (anyo'nya-sambhāvyamāna) *adj.* being supposed or thought of one as the other स्वैराचारस्मरपरिचये तत्र शौरेः प्रवृत्ते वेषालापोद्धतगतितयान्योऽन्यसंभाव्यमाने। आसीत् ... तासामन्तःकलुषकलनानल्पसंकल्पजल्पः DaśāvaC.8.73.

**अन्योऽन्यसंभाष** (anyo'nya-sambhāṣa) *m.* mutual talk or conversation (रामसुग्रीवयोः) तयोरन्योऽन्यसंभाषाद्भृशं प्रीतिरजायत Rāmā.v.33.30.

**अन्योऽन्यसंभाषण** (anyo'nya-sambhāṣaṇa) *n.* mutual talk or conversation उभयोः प्रतिपिद्धमन्योऽन्यसंभाषणमाचरतोर्यः ... संग्रहणे दण्डः स एव वेदितव्यः Aparā.855. 23(*on* 2.285)

**अन्योऽन्यसंभाषणकौतूहल** (anyo'nyasambhāṣaṇa-kautūhala) *n.* interest or curiosity for mutual talk or conversation भट्टाचार्य, उपसृत्य विलोकयेदमन्योऽन्यसंभाषणकौतूहलम् CaitaCa.194.5(8)

**अन्योऽन्यसंभाषणसक्तचित्त** (ano'nyasambhāṣaṇasakta-citta) *adj.* whose minds are attached to mutual talk or conversation (नरेन्द्रपुत्री भटः च) अन्योऽन्यसंभाषणसक्तचित्तम् ... मिथुनं जहर्ष VarāṅgaC.19.37.

**अन्योऽन्यसंभिन्न** (anyo'nya-sambhinna) *adj.* **A** which have met each other अन्योऽन्यसंभिन्नदृशां सखीनां तस्यास्त्वयि प्रागनुरागचिह्नम्। कस्यापि कोऽपीति निवेदितम् MālaMā.1.317; **Bi** combined with each other यज्ञल्पितं यद्धरितादिकं तदन्योऽन्यसंभिन्नमवन्तिदेशे KāvyMī. 9.10(3); **Bii** mixed with each other (वस्तु) अन्यदन्योऽन्यसंभिन्नं मिश्रमित्यभिधीयते SāhiSā.1.52.

**अन्योऽन्यसंभेद** (anyo'nya-sambheda) *m.* **1** mutual close relation, i.e. identity परत्र परावभासस्यान्योऽन्यसंभेदस्य विद्यमानत्वादध्यासलक्षणव्याप्तिरिहाप्युपपन्ना PañcPā.17.1(*on* i.1.1); होमो विश्वविकल्पानामात्मन्यस्तमयो मतः। तेषामन्योऽन्यसंभेदभावनं तर्पणं भवेत् TantrRā. 35.19; **2A** mutual confluence तर्दीयसर्वाङ्गजुषोरगाधं सौन्दर्यलावण्यसुधास्रवन्त्योः। ममज्जुरापत्य दृशः सखीनामन्योऽन्यसंभेदमपूर्वतीर्थम् Yādavā.12. 23; **2B** mutual connection or combination (वर्णादीनाम्) तेषामन्योऽन्यसंभेदजातानामेकयुग्मतः ... संख्या कर्तुं न शक्यते TantrRā. 26.14(comm. तयोरन्योऽन्यसंश्लेषजनितरूपविशेषाः); (अक्षराणाम्) तेषामन्योऽन्यसंभेदालेखनात् स्युरनन्तकाः (यन्त्रभेदाः) TantrRā.26.74; अक्षराणाम् एषामन्योऽन्यसंभेदबाहुल्याद्बहवोऽर्णवाः TantrRā.35.63; **2C** mutual joining or entwining (अङ्गुल्यादीनाम्) तेषामन्योऽन्यसंभेदप्रकारैस्तत्प्रपञ्चता TantrRā.35.23; **3** act of rubbing or striking against each other अन्योऽन्यसंभेदसमुच्छ्रितासु कल्लोलरेखासु कदाचिदस्याः भूयः स्वर्लोकाक्रमसाध्वसेन सुरा दुद्रुवुरन्तरिक्षे Gaṅgāva.6.47.

**अन्योऽन्यसंमत** (anyo'nya-sammata) *adj.* approved or agreed by each other (कलावतीठिण्ठाकरालयोः) (शापेन) तेनायमावयोर्जातः संयोगोऽन्योऽन्यसंमतः KathāSāSāg.xviii.2.123.

**अन्योऽन्यसंमर्द** (anyo'nya-sammarda) *m.* **1** act of rubbing or pushing each other तेषामन्योऽन्यसंमर्दादूष्मेव समजायत MahāBhā.xvi.72.10; **2** clash or contest between each other पश्यन्त्यास्तं नृपं तस्या लज्जाकौतुकयोर्द्वयोः। अभूदन्योऽन्यसंमर्दः KathāSaSāg.i 3.66.

**अन्योऽन्यसंमिलित** (anyo'nya-sammilita) *adj.* mixed with each other अन्योऽन्यसंमिलितमांसलदन्तकान्ति ... मिथुनं चकास्ति KāvyālaṅSū.iii.2.10.

**अन्योऽन्यसंमिश्रितात्मन्** (anyo'nya-sammiśritātman) *adj.* having the nature of syntactically or semantically related to each other ये हि शब्दात्मानो ग्रन्थसंदर्भस्वभावा ये च तदभिधेया अर्थस्वभावास्ते सर्वेऽन्योऽन्यसंमिश्रितात्मान एव NyāyMañ.i. 234. 22.

**अन्योऽन्यसंमीलनयोग्या** (anyo'nyasammīlana-yogyā) *adj.* (*f.*) fit for combination with each other व्यायामानामन्योऽन्यसंमीलनयोग्यानां चारीणां संहत्य ... कल्पनम् ... कर्तुं शक्यम् AbhinBhā.ii.129.10(*on* 12.1)

**अन्योऽन्यसंमुख** (anyo'nya-sammukha) *adj.* **Ai** facing each other closely अन्योऽन्यसंमुखे पाणितले वै दक्षिणोत्तरे। कनिष्ठाङ्गुष्ठयोरग्रे श्लिष्टे दीर्घास्तथापराः। परितो भ्रामयेदेवं चक्रमुद्रेयमीरिता LakṣmīT.31.38; अन्योऽन्यसंमुखौ हस्तौ सुश्लिष्टौ मुक्ततर्जनी। मध्यमाङ्गुष्ठसंयोगान्मुद्रैपा क्षोभणी स्मृता ĪśānŚiPa.i. 21.155; i.38.46; ii. 56.58; **Aii** facing, i.e. joining with each other अन्योऽन्यसंमुखकर्कटदंष्ट्राद्याकारेण अङ्गुलीनामत्रावस्थानात् कर्कटः AbhinBhā. ii.57.10 (*on* 9.134); (विरचयामासुः) अभानुभयतो मार्गं मञ्चास्तेऽन्योऽन्यसंमुखाः TriṣaŚaPuC.i.4.614; अन्योऽन्यमुपघातिनौ (v.l. अन्योऽन्यसंमुखौ) दीर्घौ वक्राङ्गुष्ठौ यथोक्तौ प्रथितं नाम मुद्रा SmṛtiCan.ii. 389.3; **B** facing, i.e. confronting each other (अर्जुनकर्णौ) तौ प्रजाभिरदृश्येतां रणायान्योऽन्यसंमुखौ PāṇḍaC.3.433.

**अन्योऽन्यसंमुखतलत्व** (anyo'nyasammukhatala-tva) *n.* the state of having palms facing each other closely (करौ) अन्योऽन्यसंमुखतलत्वात्तसंमुखौ AbhinBhā.ii.71. 22(*on* 9.186)

**अन्योऽन्यसंमुखाकार** (anyo'nyasammukhākāra) *m.* act of making one facing another (पूजार्थम्) अन्योऽन्यसंमुखाकारः संनिधापनमीरितम् KulārT. 17.91.

**अन्योऽन्यसंमुखीभूत** (anyo'nya-sammukhībhūta) *adj.* which have become facing, i.e. joining each other युक्त संबद्धे अनामिकाकनिष्ठिके ययोस्तौ तथोक्तौ तावन्योऽन्यसंमुखीभूतौ ... मीनो नाम मुद्रा SmṛtiCan.ii. 389.15.

**अन्योऽन्यसहकारिता** (anyo'nya-sahakāritā) *f.* A associateship of each other केचिद्विद्वन्मानिनः ... ध्वनिभेदयोः ... अन्योऽन्यसहकारिताम् ... यदाहुस्तद् भ्रान्तिमात्रमूलम् VyaktiVi.19.16; B auxiliary state, i.e. assistance of each other अन्त्योपान्त्यशब्दयोः ... अन्योऽन्यसहकारितायाम् एवमन्यस्मिन्नपि तत्र तत्र दर्शनात्कथं न व्याप्तिभङ्गः KhaṇḍanKhā.1310.14.

**अन्योऽन्यसहकारिभाव** (anyo'nya-sahakāribhāva) *m.* auxiliary state, i.e. assistance of each other मायिकामायिकाभ्यां स्वप्नजागरपदार्थाभ्यामन्योऽन्यसहकारिभावेनैकः पुरुषार्थो न संभवति SāṁkhyaPraBh. 94.32(*on* 3.26)

**अन्योऽन्यसहचर** (anyo'nya-sahacara) *adj.* invariably concomitant with each other, mutually co-existing 'अन्योऽन्यमिथुनवृत्तयः' अन्योऽन्यसहचराः अविनाभाववर्तिन इति यावत् (गुणाः) SāṁkhyaTaKau. 277.1(*on* 12); अन्योऽन्यसहचराः अविनाभूता इत्यर्थः ŚivārkaMaDī.ii. 56.6(*on* ii.2.1)

**अन्योऽन्यसहभूहेतु** (anyo'nyasahabhū-hetu) *m.* causes which are invariably concomitant with each other or mutually co-existing अविनाभाविनोऽपि रूपरसगन्धस्प्रष्टव्यस्वभावस्योपादायरूपस्यान्योऽन्यमेव प्रसङ्गः। अन्योऽन्यसहभूहेतुप्रसङ्ग इत्यर्थः Sphuṭā.ii.124.12(*on* 2.51)

**अन्योऽन्यसहाय** (anyo'nya-sahāya) *adj.* having each other as companion or assistant यत्र च समासेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा। एकैकविचिताः अन्योऽन्यसहाया इति MahāBh.iii.363.13(*on* viii.1.1); नित्यवीप्सयोः। ... क्वचिदुक्तार्थस्यापि प्रयोगः। एकैकशो देहि। अन्योऽन्यसहाया इति BhāṣāVṛ. *on* viii.1.4; 'स्त्रीपुंसकयोः' इति वार्तिके अन्योऽन्यमिमे ब्राह्मण्यौ इतरेतरमिमे कुले इत्यादि तत्रोदाहृतम्। ... अन्योऽन्यसहाया इति 'सर्वस्य द्वे' इति सूत्रस्थभाष्यप्रयोगोऽपि बोध्यः LaŚabdeŚe.ii.416.13.

**अन्योऽन्यसहित** (anyo'nya-sahita) *adj.* A forming clique तस्यामात्या बभूवुस्ते अन्योऽन्यसहितास्तदा MahāBhā.i. 1970*(1); B associated with each other विश्वेषां देवानामेकपदोपादानादन्योऽन्यसहितानां देवतात्वेऽवगते ... न ... पृथक्प्रयोगेण बाधितुं शक्यते CaturCin. iii(1).147.3.

**अन्योऽन्यसहिष्णु** (anyo'nya-sahiṣṇu) *adj.* tolerating each other, mutually conducive विशेषाणां धर्मिणि परमोत्कर्षानुसंधानतत्पराणामन्योऽन्यसहिष्णूनामियत्तया नियमासंभवात् RasāSu. 207.8(2. 263½)

**अन्योऽन्यसह्यप्रश्न** (anyo'nyasahya-praśna) *m.* enquiry regarding the health of each other अन्योऽन्यसह्यप्रश्नेन प्रमोदेन महोत्सवैः। ययौ कपीनां तदहश्चिन्तामौनेन रक्षसाम् RāmC.35.116.

**अन्योऽन्यसाक्षिन्** (anyo'nya-sākṣin) *m.* mutual witnesses विष्णुदत्तः ... सनिर्वेदमचिन्तयत् ... अन्यालाभात्प्रविष्टाः स्मः किं त्वत्रान्योऽन्यसाक्षिणः KathāSaSāg.vi.6.66.

**अन्योऽन्यसांकर्य** (anyo'nya-sāṅkarya) *n.* A mutual cross-connection एषां चान्योऽन्यसांकर्याल्लोष्ठसंचारक्रमेण बहवः प्रक्रमभेदप्रकाराः समुद्भवन्ति VyaktiVi.63.4; B mutual commingling (परस्त्रीणाम्) क्वचिदन्योऽन्यसांकर्यमासां लक्ष्येषु दृश्यते SāhiDa.125.5.

**अन्योऽन्यसाचिस्मित** (anyo'nya-sācismita) *n.* smile with side glance at each other अन्योऽन्यसाचिस्मितचतुरसखीकामिभिर्वीक्ष्यमाणाः। उत्तरुस्तीरलेखाम् ... हरिणशिशुदृशः SaduktiKa.139.20.

**अन्योऽन्यसादृश्य** (anyo'nya-sādṛśya) *n.* similarity with each other स्वधर्मसादृश्यं केचित् त्रिशिखाः ... पञ्चशिखाः ... इति लोके त्रिशिखादीनामन्योऽन्यसादृश्यम् Kāśi.iii.147.12(*on* 5(6).20)

**अन्योऽन्यसादृश्यविशेषरम्य** (anyo'nyasādṛśyaviśeṣa-ramya) *adj.* beautiful due to distinct similarity with each other अन्योऽन्यसादृश्यविशेषरम्यान् सा पञ्च भैमी पुरुषान् ददर्श Nalābhyu.5. 27.

**अन्योऽन्यसानुराग** (anyo'nya-sānurāga) *adj.* (used as noun) (those) having love for each other अन्योऽन्यसानुरागौ यदि जीवितमुज्झतः स तद्भवतु KathāSaSāg.xii. 28.95.

**अन्योऽन्यसापेक्ष** (anyo'nya-sāpekṣa) *adj.* A mutually dependent प्रत्यक्षानुपलम्भस्रोतःपञ्चकेन तानि पञ्च वस्तूनि एकसंवित्समुद्रविश्रान्तानि कृतानि तदा एकीभूतानि प्रमात्रा स्वतन्त्रतया अन्योऽन्यसापेक्षाणि PratyabhiVi.i.361. 5 (*on* i.7.4); एवमन्योऽन्यसापेक्षं नाभविष्यत्त्वयं यदि। ... राज्याप्तिः कथमस्य भविष्यति RājTa.(Śrī.)4. 548; B syntactically expectant of each other (एकवाक्यस्थपरस्परसापेक्षपदत्वेन उभयोः साम्ये सति) एकप्रमाजनने अन्योऽन्यसापेक्षपदत्वेनेत्यर्थः LaCandr.356.18.

**अन्योऽन्यसापेक्षता** (anyo'nya-sāpekṣatā) *f.* A mutual dependence इदानीं दैवपुरुषकारयोरन्योऽन्यसापेक्षतामाह Aparā. 588.1(*on* 1.349); B mutual expectancy एकस्मिन् कार्येऽन्योऽन्यसापेक्षतया तुल्यनिष्पादकत्वेनान्वय इतरेतरयोगः ŚrutaPra.iB.102.8(*on* i.1. 2)

**अन्योऽन्यसापेक्षत्व** (anyo'nya-sāpekṣatva) *n.* A mutual expectancy किमत्र कारणं यदिन्द्रियपरमाणूनां विषयपरमाणूनां च विज्ञानोत्पत्तये तुल्येऽप्यन्योऽन्यसापेक्षत्वे न द्वयानामेषां केवलेन्द्रियपरमाणुवदेकायतनत्वं व्यवस्थाप्यते Sphuṭā.i. 53.10 (*on* 1.20); नीलकण्ठत्वादिधर्मस्यापहतपाप्मत्वादिगुणानां ब्रह्मणि नित्यत्वादन्योऽन्यसापेक्षत्वाद्योपसंहारे न विरोधः BrahmSūBh.(Śrī.)ii.352.3(*on* iii.3.38); B mutual dependence अत्र विरोचनस्य फणामणिरूपणं दिनादीनामहिप्रभृतिरूपणमिति चान्योऽन्यसापेक्षत्वम् AlaṅkāRa.26.55; भ्रमाज्ञानजीवभेदानामन्योऽन्यसापेक्षत्वाद्यक्रकम् NyāySu.(Ja.)207A. 2(*on* i.4.6); वस्तुव्यवहारयोरापरोक्ष्येऽन्योऽन्यसापेक्षत्वादन्योन्याश्रयः Nyāyāmṛ. 511A.8.

**अन्योऽन्यसापेक्षा** (anyo'nya-sāpekṣā) *f.* mutual dependence, i.e. mutual relation (कर्मशास्त्रज्ञानशास्त्रयोः) कथमन्योऽन्यसापेक्षा कथं वापि समुच्चयः SarvaVeSāSaṁ.185.

**अन्योऽन्यसाभिलाष** (anyo'nya-sābhilāṣa) *adj.* being in love with each other स वानङ्गप्रभां दृष्ट्वा वणिक्सापि च तं तदा। अन्योऽन्यसाभिलाषौ तौ बभूवतुरुभावपि KathāSaSāg.ix. 2.301; (चन्द्रस्वामी नारायणी दासी च) अन्योऽन्यसाभिलाषौ च दैवाद्धौ तौ बभूवतुः KathāSaSāg.ix.6.108.

**अन्योऽन्यसामन्त** (anyo'nya-sāmanta) *m.* vassals or landlords neighbouring each other न चैवं ग्रामक्षेत्रगृहादिष्वन्योऽन्यसामन्तैरन्योऽन्यनिर्णयः कार्यः SmṛtiCan.iv.545.9.

**अन्योऽन्यसामर्थ्य** (anyo'nya-sāmarthya) *n.* 1 mutual competency or efficacy (विभावानुभावाः) एवमन्योऽन्यसामर्थ्यं दर्शयन्ति रसोदये BhāvPra. (Śā.)33.1(2); 2 strength of each other अथातिबलम् – स्पर्धयान्योऽन्यसामर्थ्यव्यक्तिस्त्वतिबलं भवेत् RasāSu.276.2(3.166)

**अन्योऽन्यसामान्यविशेषपरिवर्तन**(anyo'nya-sāmānyaviśeṣaparivartana) *n.* mutual exchange of general and particular, i.e. etymological and conventional terms शास्त्रीयः शब्दः ... रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा। ... तन्मिश्रोऽन्योऽन्यसामान्यविशेषपरिवर्तनात् Candrā.1.12.

**अन्योऽन्यसाम्य** (anyo'nya-sāmya) *n.* A similarity or sameness with each other (यो मां पश्यति सर्वत्र सर्वं च मयि) अन्योऽन्यसाम्यादन्यतरदर्शनेनान्यतरदपीदृशमिति पश्यति GītāBh.(Rā.)346. 2(*on* 6.30); B mutual equality अन्योऽन्यसाम्यकुपितो दिदर्शयिषुरन्तरम्। चक्रं सस्मार च मधुः TriṣaŚaPuC.iv.4.176.

**अन्योऽन्यसायक** (anyo'nya-sāyaka) *m.* missiles or arrows of each other अन्योऽन्यसायकवलाहतिजातवह्निः आहवः प्रववृते रघुनन्दनस्य RāmC.(App.2) 37.70.

**अन्योऽन्यसाहचर्य** (anyo'nya-sāhacarya) *n.* proximity with each other विजयते, पराजयते अन्योऽन्यसाहचर्याद्वा प्रादिपरिपठितयोरिह ग्रहणम् CāndraVṛ. *on* i.4.53; अन्योऽन्यसाहचर्याद्योपयोरुपसर्गयोर्ग्रहणम् PadMañ. *on* KāśiVṛ. *on* P.i. 3.42(443.18)

**अन्योऽन्यसाहित्य** (anyo'nya-sāhitya) *n.* A mutual association or togetherness (श्राद्धे) यदि पुनरेकं पदार्थमेकस्मिन् कृत्वानन्तर एव क्षणे तमेवान्यस्मिन्नपि कुर्यात् तदा ब्राह्मणादीनामन्योऽन्यसाहित्यमापादितं भवति CaturCin. iii(1).762.13; B collective occurrence of each other यत्रान्योऽन्यसाहित्यान्वयपूर्वक इतरेतरपदार्थान्वयस्तत्र समासः साधु TattvCin.iv(2).799.5; समूह एव चेतरेतरयोगपदवाच्यः। अत एव तद्विग्रहवाक्ये चद्वयादिप्रयोगः। तेन द्वन्द्वेऽन्योऽन्यस्मिन्नन्योऽन्यसाहित्यं गम्यते BālamBha. ii.258. 30(*on* 2.145); C mutual company राधया माधवो देवो माधवेन च राधिका। विराजत इत्यादि। अनयैव श्रुत्या अन्योऽन्यसाहित्यविधानपरया नित्यसंबन्धः प्रमेोत्कर्षश्चोक्तः VedāntRaMañ.1. 5(72. 5); D mutual combination पौर्णमास्यमावास्याख्ययोः समुदाययोरन्योऽन्यसाहित्यं विना फलपूर्वसाधनत्वेऽपि 'पौर्णमास्यां पौर्णमास्या यजेत ...' इति तृतीयया समुदायापूर्वसाधनत्वावगमः MayūMāli. 393.17(*on* iv. 3.18)

**अन्योऽन्यसाहित्यनियम** (anyo'nyasāhitya-niyama) *m.* rule or regulation of mutual association or togetherness संघातापत्तिः किं शरीरोपाधिकी स्वाभाविकी ... वा। ... न द्वितीयः। अनेकेषामवयवानामन्योऽन्यसाहित्यनियमादर्शनात्

SarvaDaSam.16. 215.

**अन्योऽन्यसिद्धता** (anyo'nyasiddha-tā) *f.* the state of being accomplished by means of each other अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत्। अनवस्थितिरज्ञानहेतौ वान्योऽन्यसिद्धि(?द्ध)ता UpādhiKha.1B.3.

**अन्योऽन्यसुदृढचेष्टित** (anyo'nya-sudṛḍhaceṣṭita) *n.* firm or sure actions in the case of each other अन्योऽन्यसुदृढचेष्टितसद्भावस्नेहपाशबद्धानाम्। विच्छेदकरो मृत्युर्धीराणां वा परिच्छेदः KuṭṭaMa.466 (comm. अन्योऽन्यं प्रति यानि सुदृढानि ... स्थिरतामापन्नानि चेष्टितानि)

**अन्योऽन्यसुसहाय** (anyo'nya-susahāya) *adj.* well assisted by each other कीकसासुनवः सर्वे ... । अन्योऽन्यसुसहायाश्च निर्जग्मुर्नगरान्तरात् BrahmāṇḍP. iii. 24.11.

**अन्योऽन्यसुहृद्** (anyo'nya-suhṛd) *m.* mutual friends (सात्वतपाण्डुसेनायाः युद्धे) तेषामन्योऽन्यसुहृदां कृते कर्मणि दुष्करे। सिंहनादः ... सुमहानभूत् MahāBhā.ix. 20.6; अन्योऽन्यसुहृदः सर्वे ते वणिज्यार्थम् ... रत्नद्वीपं रत्नाकरं ययुः PārśvC.7.786.

**अन्योऽन्यसूतोन्मथन** (anyo'nyasūtonmathana) *n.* act of killing the charioteers of each other अन्योऽन्यसूतोन्मथनादभूतां तावेव सूतौ रथिनौ च कौचित् RaghuVa.7. 52.

**अन्योऽन्यसेना** (anyo'nya-senā) *f.* armies of each other परस्परं वेगितमाप्नुवन्तो न पेतुरुद्भिद्य शरा हयाश्च। तेऽन्योऽन्यसेनामुभयेऽप्यनाप्य स्वं श्लाघमाना इव तीक्ष्णभावम् RāghPāṇ.(Dha.)16. 24.

**अन्योऽन्यसैन्य** (anyo'nya-sainya) *n.* armies of each other ताभ्यामन्योऽन्यसैन्ये ... नोद्यमाने महास्त्रैः सद्योभारावतारात्क्षितिरपि सुतरां भोगिभर्तुर्बभूव RāghPāṇ.(Ka.)1.12.

**अन्योऽन्यसैन्यविमर्दन** (anyo'nyasainya-vimardana) *n.* act of crushing the armies of each other लोकायतं तन्त्रमन्योऽन्यसैन्यविमर्दनैर्नष्टम् PraboCan. 5.10(87.16)

**अन्योऽन्यसौहार्द** (anyo'nya-sauhārda) *n.* mutual harmony or conformity (श्रुतीनाम्) तासामन्योऽन्यसौहार्दमाहुर्यतिवराश्रयाः ŚatDū.198.16.

**अन्योऽन्यस्खलन** (anyo'nya-skhalana) *n.* collision against each other अन्योऽन्यस्खलनाद्दूरमुच्छलन्तो नभस्तले। उभयेऽपि शराश्चेलुः प्राक्प्रत्यञ्च इवानिलाः PāṇḍaC.13.390.

**अन्योऽन्यस्खलित** (anyo'nya-skhalita) *adj.* colliding against each other विवृतात्मधैर्यपारं नीराणां निधिरेष दूरपारः। व्यक्तं हसतीव चन्द्रगौरैरन्योऽन्यस्खलितैर्महोर्मिभिस्त्वाम् RāmC.14. 24.

**अन्योऽन्यस्तोत्र** (anyo'nya-stotra) *n.* praise of each other प्रपञ्चस्तु मिथःस्तोत्रम् ... हास्यकृत् ... अत्र नटसूत्रधारयोरयथार्थस्यान्योऽन्यस्तोत्रस्य हास्यायैव प्रवृत्तत्वात् प्रपञ्चः RasāSu. 274. 20(3.168)

**अन्योऽन्यस्त्री** (anyo'nya-strī) *f.* 1 woman of different caste ब्राह्मणादिवर्णानामन्योऽन्यस्त्रीगमनेन ... वर्णसंकरो नाम जायते ManvaMu. 430.3 (*on* 10. 24); 2 wife of another person व्यभिचारोऽन्योऽन्यस्त्रीगमनम् BālamBha.i. 290. 23(*on* 1.94)

**अन्योऽन्यस्थानप्राप्ति** (anyo'nyasthāna-prāpti) *f.* occurrence of one word in the place of the other छन्दसां स्वरूपेणान्योऽन्यस्थानप्राप्तिलक्षणव्यतिक्रमासंभवात् ... तत्संबन्धित्वमात्रेण व्यतिक्रमो वाच्यः MayūMāli.740.6(*on* x. 5. 26)

**अन्योऽन्यस्थितिहेतु** (anyo'nyasthiti-hetu) *m.* cause of existence, i.e. sustenance of each other अन्योऽन्यस्थितिहेतुत्वादन्नादत्वमुच्यते। शरीरप्राणयोरेवं प्राणो वा अन्नम्। शरीरमन्नादमिति TaiUBhāVā. 202.8(3)

**अन्योऽन्यस्नेह** (anyo'nya-sneha) *m.* A fondness or affection for each other (सोमशर्मासोमिल्लयोः) भवेतां नन्दनौ तयोः। अन्योऽन्यस्नेहसंपन्नौ BṛKathāK.16.3; B love for each other अन्योऽन्यस्नेहवृद्धिं प्रकटयति विधिः प्रायशः पुण्यभाजाम् Subhāṣi. 2003.

**अन्योऽन्यस्नेहवृत्ति** (anyo'nya-snehavṛtti) *f.* state or nature of affection for each other ताभ्यामदुःखाभ्यामन्योऽन्यस्नेहवृत्तिभिः। केऽपि ... अत्यवाह्यन्त वासराः VikraDeC.4. 94.

**अन्योऽन्यस्पर्धा** (anyo'nya-spardhā) *f.* [Inst.] A in mutual contest or competition तास्तदा तम् ... संतोषयितुमुद्यताः। ... अन्योऽन्यस्पर्धया MahāBhā.iii. 259.5; अन्योऽन्यस्पर्धयारूढावावामादित्यसंसदम् MahāBhā.iii. 266.48; अन्येऽपीतरे जनाः। अन्योऽन्यस्पर्धया राजन् लज्जयान्येऽवतस्थिरे MahāBhā.vi. 54. 29; यद्वा न्यायोऽयमन्योऽन्यस्पर्धया यदुपप्लुतम्। शमिता दण्डयेच्छाम्यम् RājTa.(Ka.)8. 2231; 8.2071; वितस्ता॰ ... ॰नद्यास्तदापगाः अन्योऽन्यस्पर्धयेवोग्रा ग्रामांस्तीरेष्वमज्जयन् RājTa.(Śrī.)1(3).8; अन्योऽन्यस्पर्धया प्रविशतोः ... संनद्धयो राजधानी ययौ संभ्रमलोलताम् RājTa.(Śrī.)3.380; B in mutual rivalry or emulation अन्योऽन्यस्पर्धया राजन् व्यायच्छन्त महारथाः MahāBhā.vi.42. 24; (संपातिजटायू) अन्योऽन्यस्पर्धया युक्तावुन्मत्तौ स्वबलेन तौ BrahmP.166.4; देवानामन्योऽन्यस्पर्धया पृथक्पृथग्व्यूहकल्पनामुपक्रम्य MayūMāli. 853. 22(*on* xii.1.12); C in mutual envy or jealousy अन्योऽन्यस्पर्धया राजन् ज्ञातयः संगता मिथः MahāBhā.vi.229*(1)

**अन्योऽन्यस्पर्धाविच्छेद** (anyo'nyaspardhā-viccheda) *m.* destruction of mutual envy or jealousy एकावयविपरिग्रहस्तु ... अन्योऽन्यस्पर्धाविच्छेदाय नात्यन्ताय प्रभवति NyāyKu.110.12.

**अन्योऽन्यस्पर्धिन्** (anyo'nya-spardhin) *adj.* A contesting or competing with each other (अङ्गिरसउशनसौ) ब्राह्मणौ तावुभौ नित्यमन्योऽन्यस्पर्धिनौ भृशम् MahāBhā.i.71.6; अन्योऽन्यस्पर्धिनां तेषां यद्येकं सत्करिष्यसि शेषाः ... न योत्स्यन्ते MahāBhā.vii. 5.15; अन्योऽन्यस्पर्धिनो राजन्यजन्ते गुणतः सदा MahāBhā.xii.413*(1); B rivalling or emulating each other तयोः समभवद् युद्धम् ... । दिव्यास्त्रविदुषोस्तीव्रमन्योऽन्यस्पर्धिनोस्तदा MahāBhā.iii. 272.11; viii.63.63; (कर्णार्जुनौ) अन्योऽन्यस्पर्धिनौ राजन्नन्योऽन्यस्य वधैषिणौ MahāBhā.viii. 979*(2); (द्रौण्यर्जुनौ) अन्योऽन्यस्पर्धिनौ तौ तु शरैः ... । ततश्चक्रतुर्मृधेऽन्योऽन्यम् MahāBhā.ix.13. 23; तदावाम् ... मोहितौ ... अन्योऽन्यस्पर्धिनौ रात्राववित्राय परस्परम् VāyuP.i. 23.103.

**अन्योऽन्यस्पर्धिवीर्य** (anyo'nyaspardhi-vīrya) *n.* mutually competing valour अन्योऽन्यस्पर्धिवीर्यार्जितशुचियशसोऽप्याहवे वीरवाराः। सः श्रीहम्मीरवीरः समरभुवि कथं जीयते लीलयैव HammīMaKā.10. 22.

**अन्योऽन्यस्पर्श** (anyo'nya-sparśa) *m.* act of touching each other, mutual touch (आसनेषु ... विविक्तेषूपवेशयेत्) 'विविक्तेषु' उपविष्टानामन्योऽन्यस्पर्शपरिहारक्षमान्तरालवत्सु CaturCin.iii(1).1193. 2; धून्वन् शिरोजान् करजैः प्रियायाः ... अत्रोभयोरन्योऽन्यस्पर्शहर्षेण स्वेदः RasāSu. 91.8(1. 304); उदक्ययोरन्योऽन्यस्पर्शे निर्णयः VīraMi.(Saṁskāra.)147.15; भोक्तृणामन्योऽन्यस्पर्शे ... गायत्र्यष्टशतं जपेत् BālamBha.i. 544. 21(*on* 1. 249)

**अन्योऽन्यस्पर्शन** (anyo'nya-sparśana) *n.* act of touching each other, mutual touch वृत्तक्षेत्रत्रयस्यान्योऽन्यस्पर्शनाज्ञातस्यान्तरस्थितक्षेत्रस्य सूक्ष्मफलानयनसूत्रम् GaṇiSāSaṁ. 6.83½(1)

**अन्योऽन्यस्पृष्ट** (anyo'nya-spṛṣṭa) *adj.* touching each other वृत्तक्षेत्रत्रयाणां च। अन्योऽन्यस्पृष्टानामन्तरजक्षेत्रसूक्ष्मगणितं किम् GaṇiSāSaṁ. 6.85½; पवनोद्धुतशिखरैः स्पर्शयन्ति परस्परम्। आरात्पवनतोऽन्योऽन्यस्पृष्टशाखावतंसकाः। नागवृक्षाः SkandP.v(1). 5.14.

**अन्योऽन्यस्पृष्टाग्रा** (anyo'nyaspṛṣṭāgrā) *adj.* (*f.*) tips of which are touching each other अन्योऽन्यस्पृष्टाग्रयोः मध्यमयोः पृष्ठतोऽधरोत्तरं तिरःप्रसारितानि दक्षवामानामाकनिष्ठाग्राणि तर्जनीभ्यां धृत्वा ... सर्वखेचरी NityoNi.72.10.

**अन्योऽन्यस्पृहा** (anyo'nya-spṛhā) *f.* longing for each other रजो रागात्मकं रागहेतुभूतम्। रागो योषित्पुरुषयोरन्योऽन्यस्पृहा GītāBh.(Rā.)590.25 (*on* 14.7)

**अन्योऽन्यस्मारितार्थ** (anyo'nyasmāritārtha) *m.* meaning or referent caused to be recollected from each other अन्योऽन्यस्मारितार्थान्वितमभिदधति स्वार्थमेवं पदानि TattvMu.4.91.

**अन्योऽन्यस्मित** (anyo'nya-smita) *n.* act of smiling at each other यत्रान्योऽन्यस्मितमनुनयः ... । तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं त्वं पादान्ते लुठसि न च मे मन्युमोक्षः AmaŚ.38; SaraKaṇṭhā. 575.8; SubhāRaK. 21.14; SaduktiKa.100.15; Subhāṣi.1630.

**अन्योऽन्यस्मितचन्द्रिका** (anyo'nyasmita-candrikā) *f.* moonlight in the form of mutual smile अन्योऽन्यस्मितचन्द्रिकाकिशलयैराराधयन्मन्मथं गोपीगोपपरीवृतो यदुपतिः पायाज्जगन्मोहनः KṛṣṇaKa.2.104.

**अन्योऽन्यस्मृतिहेतु** (anyo'nyasmṛti-hetu) *m.* cause of memory of each other अत्रैव प्रमाणादयोऽर्थाः ... अन्योऽन्यस्मृतिहेतवः TātpaṬ.(Vā.)574. 19(*on* iii. 2.42)

**अन्योऽन्यस्य** (anyo'nyasya) *adv.* [SaraKaṇṭhā.(Gr.)i.1.124; GaṇRa.1.6 (13); 1.6(15); 1. 9(25)] mutually, reciprocally, to each other अन्त एवान्ये पशवोऽन्योऽन्यस्य स्कन्दन्ति JaimiBr.1.250; अन्योऽन्यस्याभिसंक्रुद्धावन्योऽन्यं जघ्नतुः शरैः MahāBhā. iii.17. 24; तौ तु पक्षप्रहाराभ्यामन्योऽन्यस्योरुविक्रमौ। प्रहरन्तौ भयं तीव्रं प्रजानां चक्रतुस्तदा MārkP.9.14; वैद्यपुत्रौ ... प्रत्तानामनुकामानामन्योऽन्यस्य प्रभक्षिणौ BrahmāṇḍP.ii. 59.8.

**अन्योऽन्यस्वरूप** (anyo'nya-svarūpa) *n.* form or nature of each other, mutual form अन्योऽन्याभावो नामान्योऽन्यस्वरूपमेव परस्य NyāySu.(Ja.) 49B.13(*on* i.1.1)

**अन्योऽन्यस्वरूप** (anyo'nya-svarūpa) *adj.* of the form or nature of each other कार्यकारणयोरपि। एकत्वमेव भेदे हि नैवान्योऽन्यस्वरूपता ĪśvaPraSū. ii.4.17.

**अन्योऽन्यस्वरूपानुगम** (anyo'nya-svarūpānugama) *m.* accordance of mutual form अत्यन्तव्यावृत्तानां पिण्डानां यतः कारणादन्योऽन्यस्वरूपानुगमः प्रतीयते तदनुवृत्तिप्रत्ययहेतुः सामान्यम् SyādvāMañ.8(12); NyāyKa.11.19.

**अन्योऽन्यस्वरूपाविष्ट** (anyo'nyasvarūpāviṣṭa) *adj.* connected with the form of each other विकल्पप्राणितं पूर्वापरीभूतत्वं क्रमरूपता क्रियायाः किंचित् क्षणं न वस्तु स्पृशति, ते हि क्षणा नान्योऽन्यस्वरूपाविष्टाः PratyabhiVi. i.115.1(*on* i. 2.9)

**अन्योऽन्यहरण** (anyo'nya-haraṇa) *n.* division of each other अण्डभा?न्न-विरोधोऽस्ति त्वन्योऽन्यहरणे सति। सर्वेषां योनयः सर्वा इच्छाकाले ह्युपस्थितां(ते) PauṣkS. 28.48.

**अन्योऽन्यहर्ष** (anyo'nya-harṣa) *m.* pleasure in each other अन्योऽन्य-हर्षान्ननृतुस्तथान्याश्चित्राङ्गहाराः स्तनभिन्नहाराः Saund.10. 37.

**अन्योऽन्यहस्त** (anyo'nya-hasta) *m.* A hands of each other (कुमारः) अन्योऽन्यहस्तैः प्रतिनीयमानो बालेन्दुवद्वृद्धिमुपाजगाम VarāṅgaC.2.3; B different hands पाशाङ्कुशाहिडमरूकपालशूलैः खट्वाङ्गशक्तिशरचापयुतैर्भवन्ति। अन्योऽन्य-हस्तकलितैः कति मूर्तिभेदाः शंभोर्हरेरिव गदारिसरोजशङ्खैः Līlā. 269.

**अन्योऽन्यहस्तग्रह** (anyo'nyahasta-graha) *m.* act of holding hands of each other कलिङ्गसेनाप्यालिङ्ग्य्त्सा तां सोमप्रभां तदा। ... ततः कथाक्रमेणैव वाचा सख्यमवध्यत। ताभ्यामुभाभ्यामन्योऽन्यहस्तग्रहपुरःसरम् KathāSaSāg.vi. 2.110.

**अन्योऽन्यहस्तार्पण** (anyo'nyahastārpaṇa) *n.* act of joining (single) hand of each other सः ... हरिरङ्गनानाम्। अन्योऽन्यहस्तार्पणसंप्रवृत्तमासां जहासाञ्जलिमप्यपूर्वम् Yādavā 4.48 (comm. परस्परस्य एकैकहस्तार्पणेन)

**अन्योऽन्यहानि** (anyo'nya-hāni) *f.* damage to each other ब्रह्मकर्मप्रति-बन्धकरूपभूतार्चनं ब्राह्मणानामयुक्तं, तदन्येषां रागद्वेषादिरज्जुबद्धानामन्योऽन्यहानिमभीप्सूनां तद्विद्यावैशद्यप्रत्यासत्तिः ŚaṅkaVi.(Ā.)227.12.

**अन्योऽन्यहाराभिहत** (anyo'nya-hārābhihata) *adj.* reciprocally multiplied by the denominators अन्योऽन्यहाराभिहतौ हरांशौ राश्योः समच्छेद-विधानमेवम्। मिथो हराभ्यामपवर्तिताभ्यां यद्वा हरांशौ सुधियात्र गुण्यौ Līlā.29.

**अन्योऽन्यहासानुभाव** (anyo'nyahāsānubhāva) *m.* external indication of the smile of each other अन्योऽन्यहासानुभावेन इयमेव कपटकेलिरिति निश्चीयते HāsyaCū.131.14.

**अन्योऽन्यहिंसाप्रणय** (anyo'nyahiṁsāpraṇaya) *m.* dislike for the injury to each other अन्योऽन्यहिंसाप्रणयं नियच्छन् परस्परप्रेम विवर्धयंश्च। योगादुपायज्ञतया च तेषां विस्मारयामास स मत्स्यवृत्तम् JātaMā.95.13(15.2)

**अन्योऽन्यहितकृत्** (anyo'nya-hitakṛt) *adj.* doing good or favour to each other युवां पूर्वभगिन्यौ ... अन्योऽन्यहितकृन्निर्द्वन्द्वं हृदयं हि वाम् KathāSaSāg.iii. 3.150.

**अन्योऽन्यहीन** (anyo'nya-hīna) *adj.* 1 deprived of each other तां सुन्दरीं चेन्न लभेत नन्दः सा वा निषेवेत न तम् ...। द्वन्द्वं ध्रुवं तद्विकलं न शोभेतान्योऽन्यहीनाविव रात्रिचन्द्रौ Saund.4.7; 2 devoid of (distinctness from) each other पात्रे महति पात्राणि यथैवान्तर्गतानि तु। भवन्त्यन्योऽन्यहीनानि परस्परसमाश्रयात्। तथा ह्यालोक आकाशे भेदास्त्वन्तर्गता मताः VāyuP.i.49.177; MastyaP.123. 58; BrahmāṇḍP.i.19.187.

**अन्योऽन्यहृतचेतस्** (anyo'nyahṛta-cetas) *adj.* having minds seized, i.e. distracted by each other (चित्तोत्सवापिङ्गलयोः) विद्यालाभस्तयोर्नासीदन्योऽन्यहृतचेतसोः PadmP.(Ra.)26.7.

**अन्योऽन्यहृदयग्रहण** (anyo'nyahṛdaya-grahaṇa) *n.* act of winning the hearts of each other (स्त्रीपुरुषसंयोगः ... उपचारकृतः) उपचारोऽन्योऽन्यहृदयग्रहणोचितैर्व्यापारैः परिपूर्णः AbhinBhā.iii.187.7(*on* 22.98)

**अन्योऽन्यहृदयासीन** (anyo'nyahṛdayāsīna) *adj.* staying, i.e. residing in the hearts of each other भ्रातरः अन्योऽन्यहृदयासीनाः प्रेमनिर्भरचेतसः। ... रेमिरे स्वेप्सितं पुरि PadmP.(Ra.)94.37.

**अन्योऽन्यहेति** (anyo'nya-heti) *f., m.* weapons of each other समीकम्। अन्योऽन्यहेतिपरिघट्टनकीर्णवह्निज्वालापरिस्फुरणतर्जितविद्युदर्चिः RāghPāṇ.(Ka.)13.8.

**अन्योऽन्यहेतु** (anyo'nya-hetu) *m.* 1 means of (acquiring) each other प्राणानां च धनस्य साधनधियामन्योऽन्यहेतुः पणः PañcT. 2.45(237.12); 2 cause of each other ग्रहणीदोषाः ... आनाहोऽतिसारश्च वर्से(?सर्वे) त्वन्योऽन्यहेतवः Hastyāyur. 86.16(1.12)

**अन्योऽन्यहेतुक** (anyo'nyahetu-ka) *adj.* 1 caused by each other द्वादशाङ्गः प्रतीत्यसमुत्पादोऽन्योऽन्यहेतुकोऽन्योऽन्यप्रत्ययः ĀryaŚāS.13.4; PramāVār. 2.42; 2 dependent on each other साधनं सर्वमर्थानामर्था धर्मादिसाधनाः। ... संपद् धर्मकामादिहेतुजा। भूयो धर्मेण सामुत्र तया ताविति च क्रमः। एकचक्रकमेतद्धि प्रोक्तमन्योऽन्यहेतुकम् BhaviP.24B.9(i.6.24)

**अन्योऽन्यहेतुकत्व** (anyo'nyahetuka-tva) *n.* the state of being caused by each other किं सूत्रान्तरापाश्रयेणाविद्यायोनिशोमनस्कारयोरन्योऽन्यहेतुकत्वप्रदर्शनेन प्रयोजनम् Sphuṭā.iii.45.19(*on* 3.27)

**अन्योऽन्यहेतुता** (anyo'nyahetu-tā) *f.* 1 the state of being the cause of each other, reciprocal causality प्रबन्धवृत्त्या गन्धादेरिष्टैवान्योऽन्यहेतुता। तदबाधकमेवेदं तद्धेतुत्वप्रसञ्जनम् TattvSaṁ.530; अन्योऽन्यहेतुता चैव ज्ञानशक्त्योर-नादिका ŚlokaVār.272.6(*on* 5(3).17); अक्षरानुगतोऽप्यर्थो यदि संशय्यते तदा। नित्यप्रयोगरूपोत्थविज्ञानात्तद्विनिश्चितिः। प्रयोगेऽपि च संशीतौ वाक्यार्थज्ञानसंश्रयात्। निर्णीतसंशयं प्राज्ञ एवमन्योऽन्यहेतुता BṛĀraUBhVā.i.4. 1626; विक्षेपतत्संस्कार-योरन्योऽन्यहेतुतयाभावोऽनादित्वात् बीजाङ्कुरादिवत् IṣṭaSi. 334.17; 2 relation of being the cause of each other, mutual causal relation रूपशब्दादिबुद्धीनाम-स्त्येवान्योऽन्यहेतुता TattvSaṁ.1310.

**अन्योऽन्यहेतुत्व** (anyo'nyahetu-tva) *f.* the state of being the cause of each other, reciprocal causality यद्यप्यक्षैर्विना बुद्धिर्न तान्यपि तया विना। तथाप्यन्योऽन्यहेतुत्वं ततोऽप्यऽन्योऽन्यहेतुकं PramāVār. 2.42.

**अन्योऽन्यहेतुहेतुमत्ता** (anyo'nya-hetuhetumattā) *f.* mutual cause-and-effect relationship ननु ऊहबाधयोर्न मिथो हेतुहेतुमत्ता ... नानयोरन्योऽन्यहेतुहेतुमत्ता ŚāstrDī.645.16(*on* x.1.1)

**अन्योऽन्यांश** (anyo'nyāṁśa) *m.* 1 aspect or part of each other स एवं जायतेंऽशेन केचिदिच्छन्ति मानवाः। ततोऽपरे ब्रुवन्तीममन्योऽन्यांशेन जायते VāyuP.ii.5.137; 2 ninth aspect (*navamāṁśa*) of each other भवेत् ... । अन्योऽन्यांशगयोः सितावनिजयोरन्यप्रसक्ताङ्गना Bṛhajjā. 24.9.

**अन्योऽन्यांसप्रणिहितभुजा** (anyo'nyāṁsapraṇihita-bhujā) *adj.* (*f.*) who have their arms put on the shoulders of each other अन्योऽन्यांसप्रणिहितभुजाः संगताः कौतुकेन। ... योषितः पामराणां पश्यन्त्यस्त्वाम् ... लेख्यलीलां वहन्ति NalaCam.6.67.

**अन्योऽन्याकाङ्क्षत्व** (anyo'nyākāṅkṣa-tva) *n.* the state of being dependent on each other सर्वतः प्राणः ... आगच्छतु, यच्च ... आयुः तदप्यागच्छतु, यतस्तवामृतत्वेन प्राणदानसामर्थ्यादित्यन्योऽन्याकाङ्क्षत्वं मन्त्रस्वरूपाम्नान-वेलायामेव प्रतीयते MīmāKau.iii(2).127. 5(*on* ii.1.48)

**अन्योऽन्याकाङ्क्षा** (anyo'nyākāṅkṣā) *f.* A mutual semantic competency क्रियाकाङ्क्षानिबन्धनः पदार्थानामन्योऽन्यसंबन्धः ... यत्र तु नास्ति तत्रोपसंसर्गपरतया पदैरभिहितानां पदार्थानामेव योग्यतासंनिधिमतामन्योऽन्याकाङ्क्षानिबन्धनः संबन्धः NyāyKa.6.6; B mutual syntactic expectancy अन्योऽन्याकाङ्क्षासंनिधियोग्यतावन्ति पदानि वाक्यम् VivaPraSaṁ.269.21.

**अन्योऽन्याकाङ्क्षालक्षण** (anyo'nyākāṅkṣā-lakṣaṇa) *adj.* characterised by mutual semantic competency न च ... प्रत्यभिज्ञापनविधानाभ्यां न वाक्यभेदः प्रसज्यते इति समर्थनमनुपपन्नम् ... इति वाच्यम्, विध्यभावे ... अन्योऽन्याकाङ्क्षालक्षणप्रकरणानुत्थित्या आज्यभागयोः तन्मूलकगृहमेधीयाङ्गत्व-कल्पनासिद्धिप्रसङ्गात् PūrvottaVāNaMā. 27.17.

**अन्योऽन्याक्रमिन्** (anyo'nyākramin) *adj.* attacking or pushing each other अन्योऽन्याक्रमिणः शरारिशिशवः प्रातर्नदीरोधसि प्रालेयाम्बु पिबन्ति SubhāRaK.35.4.

**अन्योऽन्याक्रान्ततेजस्क** (anyo'nyākrāntatejas-ka) *adj.* 1 surpassing each other in valour तावुद्यतौ कृत्यं भ्रातरौ भुवि चक्रतुः। अन्योऽन्या-क्रान्ततेजस्कौ सूर्याचन्द्रमसाविव PadmP.(Ra.)6.355; 2 surpassing each other in lustre or brilliance, outshining each other, PadmP.(Ra.) 6.355.

**अन्योऽन्याक्रान्तिकरण** (anyo'nyākrānti-karaṇa) *n.* act of over – reaching or cheating each other अन्योऽन्याक्रान्तिकरणं विगृह्यासनमुच्यते NītiSā.11.13 (comm. आक्रान्तिरतिसंधानम्। अरिविजिगीष्वोः परस्परनीति-संधानपूर्वकम्)

**अन्योऽन्याक्षमिन्** (anyo'nyākṣamin) *adj.* not tolerating, i.e. hating each other अन्योऽन्याक्षमिणः शरारिशिशवः प्रातर्नदीरोधसि प्रालेयाम्बु पिबन्ति SaduktiKa.180.26.

**अन्योऽन्याक्षर** (anyo'nyākṣara) *n.* A letters of each other सामर्थ्यजुष-संकुलात्। तत् सूक्तमिथुनम् ... उत्थितम्। ... आद्योस्तथान्तयोः शश्वदन्योऽन्याक्षर-मिश्रितम् LakṣmīT.50.15; B syllables of each other अन्योऽन्याक्षरवर्तिन्या चैकान्तरतयाथवा। शृङ्खलाबन्ध इत्युक्तः VidaMuMa.3.42.

**अन्योऽन्याक्षारण** (anyo'nyākṣāraṇa) *n.* mutual reproach or accusation (of adultery) विट्शूद्रयोरेवमन्योऽन्याक्षारणे प्रथमो वैश्यस्य शूद्रस्य मध्यमः (दण्डः) ManvaVi.1042. 3(*on* 8.277)

**अन्योऽन्याक्षेप** (anyo'nyākṣepa) *m.* 1 mutual relation (between word and meaning) एकात्मकयोरेव हि वाच्यवाचकयोरन्योऽन्याक्षेपात्परस्परनियमः TantrVā. 225.14(*on* i.3.23); 2 mutual implication विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यो यत्र स्वसौन्दर्यादेव तयोरन्योऽन्याक्षेपः न विध्यनुवादभावः Kāvyānu.(He.) 206.18; 3 mutual censure or abuse मूर्धावसिक्ताम्बष्ठयोर-न्योऽन्याक्षेपे दण्डमाह Subodhi.89.18(*on* 2.206)

**अन्योऽन्याक्षेपक** (anyo'nyākṣepaka) *adj.* mutually exclusive अन्योऽन्या-क्षेपकत्वे सत्यन्वयव्यतिरेकयोः। उभयांरुक्तिरेकस्य नात्येति पुनरुक्तताम् VyaktiVi. 84.17.

**अन्योऽन्याक्षेपिन्** (anyo'nyākṣepin) *adj.* mutually exclusive बुद्धिः सर्वात्मनान्योऽन्याक्षेपिनानार्थसंश्रया। सादृश्यमूला वार्थस्पृक्संदेहालंकृतिर्मता CitraMī. 62. 23.

**अन्योऽन्याख्यायिन्** (anyo'nyākhyāyin) *adj.* shouting at each other अन्योऽन्याख्यायिभिर्लोकैः पुरं मुखरतामगात् RājTa.(Ka.)8.1368.

**अन्योऽन्यागम** (anyo'nyāgama) *m.* act of approaching each other कर्मेशस्थनवांशराशिपवशाद्वृत्तिं जगुस्तद्विदः। भैषज्योर्णतृणाम्बुधान्यकनकव्यापार-मुक्तादिकैरन्योऽन्यागमदूतवृत्तिभिरिनस्यांशे तु जीवत्यसौ JātaPā.15.44.

**अन्योऽन्यागस्कृत्** (anyo'nyāgaskṛt) *adj.* offending or provoking each other (वीराणाम्) तेषाम् ... युद्धम् ... अवर्तत ... । अन्योऽन्यागस्कृताम् MahāBhā.vi.75.55.

**अन्योऽन्यागस्कृत** (anyo'nyāgaskṛta) *adj.* who have offended or provoked each other (वीराणाम्) तेषाम् ... युद्धम् ... अवर्तत ... । अन्योऽन्यागस्कृतां राजन् (v.l. अन्योऽन्यागस्कृतानां तु) MahāBhā.vi.75.55.

**अन्योऽन्यागुणसंचय** (anyo'nyāguṇa-sañcaya) *m.* collection of demerits or defects of each other सर्वान् गुणान्। निघ्नन्त्येव यथा शरीरमखिलं दोषत्रयः प्रोत्कटाश्चान्योऽन्यागुणसंचयानपि महान्यामार्धतुल्याः पृथक् VasiS.32.76.

**अन्योऽन्याग्रह** (anyo'nyāgraha) *m.* absence of knowledge of each other यदि शुक्तेरन्यस्य च ग्रह एवान्योऽन्याग्रहो नान्यः, तदा उभयोरपि सदा सहैव ग्रहभावादग्रहोऽपि सहैव स्यात् IṣṭaSi. 272. 20.

**अन्योऽन्याघात** (anyo'nyāghāta) *m.* 1 mutual multiplication चः पञ्चविकल्पो गीस्त्वेकविकल्पः इत्यन्योऽन्याघाते पञ्चैव प्रतिपादम् ChandaśCū.3.71(4); 2A collision against each other शत्रूणां कालरात्रौ समिति समुदिते वाणवर्षान्धकारे ... । अन्योऽन्याघातमत्तद्विरदघनघटादन्तविद्युच्छटाभिः पश्यन्तीयं समन्तादभिसरति मुदा सांयुगीनं जयश्रीः SaduktiKa. 213.16; 2B strikes against each other अन्योऽन्यमिलिताः कांस्यघनवत्कठिना घनाः। अन्योऽन्याघातसहना नदन्तः सुभटा बभुः RājTa.(Śrī.) 1(1).151.

**अन्योऽन्याङ्ग** (anyo'nyāṅga) *n.* 1 subsidiary or subordinate parts of each other कुर्याद्वा व्यूहभेदेन मन्त्रसङ्घस्य पूजनम्। अन्योऽन्याङ्गानि फालेन मुख्यतन्त्रत्रिकस्य च PauṣkS. 20.60; 2A bodily parts of each other पायाद्वः ... अन्योऽन्याङ्गनिपातजर्जरजरत्स्थूलास्थिजन्मा रवः SaraKaṇṭhā. 510. 25; 2B bodies of each other गाढाश्लेषे तव किल पुरा यः स्तनोत्तुङ्गभूषामन्योऽन्याङ्गव्यतिकर-विधेरन्तरायं विवेद। सोऽयम् ... दूरवर्ती पतिस्ते ... वदति भवतीमित्थमस्मन्मुखेन HaṁsDū.(Vā.)104.

**अन्योऽन्याङ्गाङ्गिभाव** (anyo'nyāṅgāṅgibhāva) *m.* mutual part- and-whole relationship सर्वेषां प्रधानभावनान्वितानां नान्योऽन्याङ्गाङ्गिभावः संभवति NyāyRaMā.134.6.

**अन्योऽन्याङ्गिकसंचार** (anyo'nyāṅgikasañcāra) *m.* mutual movement of limbs अन्योऽन्याङ्गिकसंचारैरेहैस्ततालैर्मिथः कृतैः। परिक्रम्य च निष्क्रामेत् BhāvPra. (Śā.)264.17(9)

**अन्योऽन्याङ्गीकरण** (anyo'nyāṅgīkaraṇa) *n.* mutual agreement or consent (स्त्रियं स्पृशेद्देशे यः स्पृष्टो वा मर्षयेत्तया। परस्परस्यानुमते सर्वं संग्रहणं स्मृतम्) अन्योऽन्याङ्गीकरणे सर्वं संग्रहणं मन्वादिभिः स्मृतम् ManvaMu.353.9(*on* 8.358); BālamBha.ii.333.28(*on* 2.284)

**अन्योऽन्याङ्घ्रि** (anyo'nyāṅghri) *m.* A feet of each other अन्योऽन्याङ्घ्रिलग्नै-स्तैर्भीतैर्यावद्व शृङ्खला। रचिता स वृषस्तावदुत्पपात जवान्नभः KathāSaSāg.x.9.194; B feet, i.e. quarters of each other (metre) इन्द्रवज्रोपेन्द्रवज्रयोरन्योऽन्याङ्घ्रिमेलन-मुपजातिर्भवेत् KāvyKaVṛ.5.17(1.2); C both feet, i.e. cross-legged feet (ईशानयः) ज्ञानमूर्तिरिति ख्यातम् ...। अन्योऽन्याङ्घ्रितलं सम्यक् स्फिक्पिण्डाधः प्रकल्पयेत् ŚilpaRa.ii.22.159.

**अन्योऽन्याचरण** (anyo'nyācaraṇa) *n.* behaviour or conduct of each other अन्यश्च कश्चिदन्योऽन्याचरणनिन्दापरायणः ... कलिः UdaySuKa.79.9.

**अन्योऽन्याचारक** (anyo'nyācāra-ka) *m.* behaviour, i.e. assistance of each other बभूव तस्याः स्वच्छाया द्वितीया तापसी सखी। ... सूच्या तया सुनिर्गत्य सुपाताक्ष्या स्म कूणितैः। पश्चात्सख्याभ्यासाधुरन्योऽन्याचारके बलम् (कृतम्) YogVā.iii.72.14 (comm. परस्पराचरणीये स्थैर्यसाहाय्ये)

**अन्योऽन्याञ्जलि** (anyo'nyāñjali) *m.* folded palms (in respect) of each other तावन्योऽन्याञ्जलिं कृत्वा ... ननन्दतुर्दशरथो रोमपादश्च Rāmā.i.10.22.

**अन्योऽन्यातिरेक** (anyo'nyātireka) *m.* [Inst.] excepting or without each other न ह्यन्योऽन्यातिरेकेण संहतानां क्वचित्स्थितिः BṛĀraUBhVā.iii.9.88.

**अन्योऽन्यातिविरुद्ध** (anyo'nyātiviruddha) *adj.* A totally contradictory to each other नान्योऽन्यातिविरुद्धार्थवाक्यानां तत्र दर्शनात्। अतिप्रमाणविषयं ब्रह्म BṛĀraUBhVā.iii.9.172; B totally hostile or inimical to each other (देहमनसोः) रागद्वेषवतोर्नित्यमन्योऽन्यातिविरुद्धयोः। एतयोर्मूलकाषेण विनाशः परमं सुखम् YogVā.v.53.52 (comm. परस्परोपतापकत्वाद्द्वेषवतोर्व्याग्रयोः ... इव एतयोः सतोः)

**अन्योऽन्यातिशय** (anyo'nyātiśaya) *m.* A excellence of or superiority over each other (पार्थतहार्दिक्ययोः) तयोः समभवद्युद्धं भीष्महेतोर्महारणे। अन्योऽन्यातिशयैर्युक्तं यथा वृत्रमहेन्द्रयोः MahāBhā.vi.107.41; उपर्युपरि देवानामन्योऽन्यातिशये स्थितम्। नरैः पुण्यफलं स्वर्गे मूलच्छेदेन भुज्यते SkandP.i(2).42.132; प्रभावातिशयो यश्च यश्चानुभवनात्मकः। अन्योऽन्यातिशयो यश्च तेऽपि नातिशयात्पृथक् SaraKaṇṭhā. 540.2; एतज्जगत्सर्वमन्योऽन्यातिशये स्थितम् PadmP.ii.66. 215; B abundance or excesiveness of each other शताप्सरसं स्वर्गिणं दृष्ट्वा पञ्चाप्सरसः ... दुःखमुत्पद्यते। ... तदेवमन्योऽन्यातिशयात् स्वर्गेऽपि दुःखमव्यावृत्तम् MāṭhVṛ.8. 22(*on* 2); C [Abl.] due to competition with each other भार्याः ... साध्वीः ... भवनं यज्ञदत्तस्य पितृमित्रस्य शिश्रियुः। ... मध्यमा ... तासां पुत्रमसूत सा। अन्योऽन्यातिशयात्तस्मिन्स्नेहश्चासामवर्धत KathāSaSāg.i.3.15.

**अन्योऽन्यातिशयस्थिता** (anyo'nyātiśaya-sthitā) *adj.* (*f.*) remaining in the superiority over each other स्वर्गेऽपि हि कुतः सौख्यं दृष्ट्वा दीप्तां परश्रियम्। उपर्युपरि देवानामन्योऽन्यातिशयस्थिताम् PadmP.ii.66.181.

**अन्योऽन्यातिशयाशिन्** (anyo'nyātiśayāśin) *adj.* desirous of superiority over each other ब्रह्मा ... हरिः ... रुद्रः ... अन्योऽन्यमात्सर्यादन्योऽन्यातिशयाशिनः ... । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ŚivaP.vii(1).13.16(516A.10)

**अन्योऽन्यातिशयित** (anyo'nyātiśayita) *adj.* excelling or surpassing each other विरला उपकृत्यैव ... सरित्प्रवाहा इव। अत्र यदिदमुपकृत्यान-पेक्षितप्रत्युपकाराणां गमनम्, यच्चाकृतप्रत्युपकाराणां तद्विरहेऽवसादनं तदुभयमपि जलधरसरित्प्रवाहयोरन्योऽन्यातिशयितयोरुपन्यस्यमानं प्रत्यनीकन्यासो भवति SaraKaṇṭhā.503.21.

**अन्योऽन्यातिशयोच्छ्रित** (anyo'nyātiśayocchrita) *adj.* exhalted by superiority over each other दुःखं दुःखेन शाम्यति। एवमेतज्जगत्सर्वमन्योऽन्या-तिशयोच्छ्रितम् SkandP.i(2).42.147.

**अन्योऽन्यातिशयोपेत** (anyo'nyātiśayopeta) *adj.* endowed with superiority over each other तौ स्पर्धिनावस्त्रौ ... । अन्योऽन्यातिशयोपेतौ तदालोक्य पितामहः। ... उवाच VarāP.21.60; अन्योऽन्यातिशयोपेताः संभवा भोगसंप्लवे PadmP.ii.66. 204.

**अन्योऽन्यात्मकता** (anyo'nyātmaka-tā) *f.* A the state of being of the nature of or identical with each other अन्योऽन्यस्मिन्नन्योऽन्यात्मकतामन्योऽन्य-धर्मांश्चाध्यस्येतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः ... लोकव्यवहारः BrahmSūBh.(Śaṅ.)2.2(*on* i.1.0); कुतोऽदो लभतेऽसत्त्वं यत्सदात्मनि निष्ठितम्। अन्योऽन्यव्यतिरेकित्वात्रान्योऽन्यात्मकता तयोः BṛĀraUBhVā.i.2.14; स्वरूपमन्योऽन्यात्मकतान्योऽन्यधर्माध्यासौ। ... फलं व्यवहारः VedāntKa.9.21(*on* i.1.0); अन्तःकरणवृत्तिरविद्यावृत्तिश्चेति द्वे इमे ज्ञाने तथापि विषयाधीनं फलम्। ... तद्विषयश्च सत्यमिथ्याभूतयोरिदमंशरजतांशयोरन्योऽन्यात्मकतयैकत्वमापन्नः SarvaDaSaṁ.16.645; B type of figure of speech Anyo'nya (*lit.* the state of being identical with or like each other) अन्योऽन्यात्मकता यथा SaraKaṇṭhā. 348.17.

**अन्योऽन्यात्मकत्व** (anyo'nyātmaka-tva) *n.* the state of being of the nature of or identical with each other अन्योऽन्यस्मिन्नन्योऽन्यात्मकत्वमपि

चेत्सत्यात्तदा अतस्मिंस्तदिति न भवेत् NyāySu.(Ja.)59A.1(*on* i.1.1)

**अन्योऽन्यात्मता** (anyo'nyātma-tā) *f.* the state of being of the nature of or identical with each other भावो भावान्तरात्मत्वमत एव न यास्यति।न द्वयोरन्यथाभावमृतेऽन्योऽन्यात्मतामियात् IṣṭaSi. 232.7; 235. 5; यद्यप्यन्तःकरण-वृत्तिरविद्यावृत्तिश्चेति ज्ञानद्वयम्, तथापि तद्विषयः सत्यानृतयोरिदंरजतयोर-न्योऽन्यात्मतयैकत्वमापन्नः VivaPraSaṁ.42.22.

**अन्योऽन्यात्मताव्यवच्छेद** (anyo'nyātmatā-vyavaccheda) *m.* negation of the state of being of the nature of or identical with each other यदि भावान्तरात्रान्योऽभावो न भावान्तरं सिध्येत् नायमयमित्यन्योऽन्यात्मताव्यवच्छेदमन्तरेण भेदासिद्धेः, अन्यथा एकस्मिन्नपि तत्प्रसङ्गात् IṣṭaSi. 296.10.

**अन्योऽन्यात्मत्व** (anyo'nyātma-tva) *n.* the state of being of the nature of or identical with each other यदि नाम एकवस्तुज्ञाने सर्वस्याभिन्नं रूपं भाति तथापि न भिन्नरूपं भाति। ... न च तयोरन्यवस्तुत्वम् अन्योऽन्यात्मत्वेन प्रतीतेः अन्यथा अप्रतीतेश्च IṣṭaSi.319.7; 319.12.

**अन्योऽन्यात्मत्वसंभव** (anyo'nyātmatva-sambhava) *m.* possibility of the state of being of the nature of or identical with each other न विरुद्धागुणयोरन्योऽन्यात्मत्वसंभवः BrahmSūBh.(Śaṅ.)774.5(*on* iv.1.3)

**अन्योऽन्यात्मन्** (ano'nyātman) *m.* A nature of one another गोत्वेन न हि शुक्लत्वं गोत्वं वा तेन रज्यते। अन्योऽन्यात्मन्यसद्भावाद्व्यक्त्यङ्गत्वाद्द्वयोरपि ŚlokaVār.7.31(854.5); B [Inst.] in the form of each other सदसतोरन्योऽन्यात्मना ख्यातिरन्यथाख्यातिः IṣṭaSi.138.16; अन्योऽन्यात्मना त्वमू गोचरयन् कथमसौ सोपाख्यगोचरोऽपि समीचीनतया न विभ्रमः NyāyMa.87. 5; न सहावस्थानं दृष्टान्ते विवक्षितं दार्ष्टान्तिके तदभावात् किं त्वन्योऽन्यात्मना स्फुरणम् VedāntKa.5.13(*on* i.1.0)

**अन्योऽन्यात्मपरावृत्त** (anyo'nyātma-parāvṛtta) *adj.* exchanged or excluded from the nature of each other प्रत्यभिज्ञाविशेषात्तदुपादानं प्रकल्पयेत्। अन्योऽन्यात्मपरावृत्तभेदाभेदावधारणात् NyāyVi. 2.130.

**अन्योऽन्यात्मव्यवच्छेद** (anyo'nyātma-vyavaccheda) *m.* exclusion of the nature of each other (शुक्लगवादिषु) अनेकान्तिकानेकवाक्यार्थोपप्लवे सति। अन्योऽन्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः ŚlokaVār.7.271(920.4)

**अन्योऽन्यात्मसंभेद** (anyo'nyātma-sambheda) *m.* [Inst.] on the basis of the relation of the form of each other पारिशेष्याद्विषयविषयिणोरन्योऽ-न्यात्मसंभेदेनैव तद्धर्माणामपि परस्परसंभेदेन विनिमयात्मना भवितव्यम् Bhām.4.14 (*on* i.1.0)

**अन्योऽन्यात्माकार** (anyo'nyātmākāra) *adj.* having the form of the nature of each other यश्चासौ विषयविषयिभावात्मा दृग्दृश्ययोःसंबन्ध इष्यते, किं ताभ्यामसंबद्धः ... आहोस्विदुभयात्मा, अन्यो[ऽन्यात्माकारो] वा ŚatDū.101.29.

**अन्योऽन्यात्यन्ताभाव** (anyo'nyātyantābhāva) *m.* mutual and constant absences न च समवायिनाशे ध्वंसनाशः ... अन्योऽन्यात्यन्ताभाव-योर्नित्यत्वेऽनेकसमवेतत्वे च जातित्वप्रसङ्गः TattvCin.i.670.4; भिन्नत्वेनापि शब्दविशेषणत्वे बाधकाभावात् तस्यान्योऽन्यात्यन्ताभावसाधारणार्थकत्वेनासाधारण्येन तदर्थकत्वाभावाच्च ŚaṅkaVi.(Ā.)260.13.

**अन्योऽन्यादृष्टसंचार** (anyo'nyādṛṣṭa-sañcāra) *adj.* moving about unseen by each other (लीलाप्रज्ञादेव्यौ) ददृशतुः ... । त्रैलोक्यवरभूतौघ-संचाराविरलान्तरम्। अन्योऽन्यादृष्टसंचारसुरासुरकुलाकुलम् YogVā.iii.24.17.

**अन्योऽन्याधरपान** (anyo'nyādharapāna) *n.* act of drinking (nector of) the lips of each other दर्शनस्पर्शनादीनि निषेवते विलासिनी। ... आदिशब्दादन्योऽन्याधरपानचुम्बनादयः SāhiDa.181.8.

**अन्योऽन्याधार** (anyo'nyādhāra) *m.* substratum of each other आध्यन्तरं शरीरं स्वं बाह्यं राष्ट्रमुदाहृतम्। अन्योऽन्याधारसंबन्धादेकमेवेदमिष्यते NītiSā.6.2.

**अन्योऽन्याधारता** (anyo'nyādhāra-tā) *f.* A the state of being the substratum of each other नानाधर्मप्रणाड्या बहुभिरपिपदैर्धर्मिणोऽत्रैक्यसिद्धौ नान्योऽन्याधारतैक्ये प्रसजतः TattvMu.4.98; B the state of being dependent on each other (सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य ... न किंचिदतिरिच्यते) [विष्टब्ध]स्यान्योऽन्याधारतया। त्रिदण्डवदन्योऽन्यावष्टम्भगृहादिदण्डत्रयवत् ... न किंचिद्व्यसनमतिरिच्यते ManvaVi.1260.7(*on* 9. 296)

**अन्योऽन्याधारत्व** (anyo'nyādhāra-tva) *n.* the state of being the substratum of each other आत्माकाशयोः ... । नापि संयोगित्वम्। गुणादौ तदसंभवात्। संयोगिनोरुभयोरन्योऽन्याधारत्वप्रसङ्गाच्च TattvPradī.(Ci.)337.2.

**अन्योऽन्याधाररूप** (anyo'nyādhāra-rūpa) *n.* [Inst.] in the form of being the substratum of each other वासुदेवे स्थितं चक्रं चक्रमध्ये तु माधवः। अन्योऽन्याधाररूपेण प्रणमामि स्थिताविह MatsyaP.285.17.

**अन्योऽन्याधिक्यन्यूनताभाव** (anyo'nyādhikyanyūnatā-bhāva) *m.* condition of being in excess or deficit of each other प्रतिसर्गावस्थायाम् ...। सत्त्वरजस्तमसामन्योऽन्याधिक्यन्यूनताभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते BrahmSūBh.(Rā.)475.7(*on* ii.2.6)

**अन्योऽन्याधिपतित्व** (anyo'nyādhipatitva) *n.* mutual dominence अन्योऽन्याधिपतित्वेन विज्ञप्तिनियमो मिथः Viṁśa.18.

**अन्योऽन्याधिष्ठानत्व** (anyo'nyādhiṣṭhāna-tva) *n.* the state of being the substratum of each other नैतत्सारम् ... ज्ञानज्ञेयभ्रमयोरन्योऽन्याधिष्ठानत्वे चाधिष्ठानस्य पूर्वभावित्वेनान्योऽन्याश्रयत्वात् VivaPraSaṁ. 50.6.

**अन्योऽन्याधिष्ठित** (anyo'nyādhiṣṭhita) *adj.* subsisting on, i.e. supported by each other अस्ति नूनमन्योऽन्याधिष्ठितो यदयोऽयं संघात इति संगतिः MāṭhVṛ.29.22(*on* 17)

**अन्योऽन्याधीन** (anyo'nyādhīna) *adj.* dependent on each other अर्थक्रियास्थितेः ... कथं प्रवृत्तिः। अप्रवृत्तस्य वा कथमर्थक्रियास्थितिः। तदिहोभयस्मिन्नन्योऽन्याधीने दुरुत्तरमितरेतराश्रय(त्व)म् Kāśi.i.102.10(*on* 2.76)

**अन्योऽन्याधीनता** (anyo'nyādhīnatā) *f.* mutual dependence अविद्याजीवयोः ...। अन्योऽन्यासंश्रयो नो चेदन्योऽन्याधीनताहतिः Nyāyāmṛ.351B.10; 352A. 5; (अविद्याजीवयोः) न च ... अन्योऽन्याधीनताक्षतिः AdvaiSi.585.6; अविद्यानाशस्य जीवनाशव्यापकत्वेनाविद्याया जीवोपाधित्वेन वा अन्योऽन्याधीनता GuruCandr.iii. 24.17; LaCandr. 585.19.

**अन्योऽन्याध्यसन** (anyo'nyādhyasana) *n.* superimposition on each other, mutual superimposition (वस्त्वधिष्ठानयोः) अन्योऽन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यात् SaṁkṣeŚā.1.31(i.40.18)

**अन्योऽन्याध्यास** (anyo'nyādhyāsa) *m.* superimposition on each other, mutual superimposition यदि स्वप्नेऽपि ... रूपाद्यर्थाः ... भान्तोऽन्योऽन्याध्यासेन भान्ति सर्वस्वप्नभ्रमबाधात्मा तेषां स्वरूपग्राही ... जाग्रद्बोधो न जातु स्यात् IṣṭaSi.283.15; जलव्योम्ना घटाकाशो यथा सर्वस्तिरोहितः। तथा जीवे च कूटस्थः सोऽन्योऽन्याध्यास उच्यते PañcDa.6.24; अन्योऽन्याध्यासम् ... । ईश्वरब्रह्मणोः सिद्धं कृत्वा ब्रूते सुरेश्वरः PañcaDa.6.190; अन्योऽन्याध्यासरूपेण कूटस्थाभासयोर्वपुः। एकीभूय भवेन्मुख्यस्तत्र मूढैः प्रयुज्यते PañDa.7.10; ननु आत्मबुद्ध्योरन्योऽन्या-ध्यासाभिप्रायप्रयुक्तोऽयमस्मच्छब्दो नात्मस्वरूपविषयक इति चेन्न VedāntRaMañ.1.1 (9.2); (प्रियः पुत्रात् पिण्डः पिण्डात्तथेन्द्रियम्) अन्योऽन्याध्यासाच्चिदचिद्ग्रन्थिरूपोऽध्यासः SiddhāBi.40.7; न च कूटस्थप्रकाशिते कथं जीवस्य व्यवहारस्मृत्यादिकमिति शङ्क्यम्। अन्योऽन्याध्यासेन जीवैक्यत्वापत्त्या कूटस्थस्य जीवान्तरङ्गत्वात् Siddhā-LeSaṁ.155.5.

**अन्योऽन्याध्यासानुरोध** (anyo'nyādhyāsānurodha) *m.* [Inst.] in accordance or conformity with the mutual superimposition अवच्छिन्नसत्ता तु क्लृप्तेति चेन्न, कपालाद्यवच्छिन्नचिति घटादेः घटाद्यवच्छिन्नचिति कपालादेश्च तादात्म्यस्याप्यन्योऽन्याध्यासानुरोधेन क्लृप्तत्वात् GuruCandr.i. 37.17.

**अन्योऽन्याध्यासाभाव** (anyo'nyādhyāsābhāva) *m.* absence of mutual superimposition अनिवृत्तिश्च पूर्वमेतयोः (ओंकारोद्गीथयोः) अन्योऽन्याध्यासाभावात् SrutaPra.ii.469.4(*on* iii.3.9)

**अन्योऽन्याननदर्शिन्** (anyo'nyānana-darśin) *adj.* looking at the faces of each other कनकपुर्याख्या पुरी ... । श्रुतापि नैव सास्माभिर्दर्शने देव का कथा। इति ते चावदन्सर्वे अन्योऽन्याननदर्शिनः KathāSaSāg.v.1.49; x.10.68; गणौ ... । बभूवतुः स्मितमुखावन्योऽन्याननदर्शिनौ KathāSaSāg. xvii.1.61.

**अन्योऽन्यानन्तरबल** (anyo'nyānantarabala) *adj.* having the strength equal to each other बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान्। ... अन्योऽन्यानन्तरबलाः परस्परजयैषिणः। बाहुयुद्धमभीप्सन्तः MahāBhā.iv. App.I.27(13)

**अन्योऽन्यानन्वितत्व** (anyo'nyānanvita-tva) *n.* A the state of not being connected with each other डोम्बिकपिदगकानामन्योऽन्यानन्वितत्वं वाक्यानामिव AbhinBhā.i.171.20(*on* 4.261); B the state of not being syntactically related to each other, AbhinBhā.i.171.20(*on* 4.261)

**अन्योऽन्यानन्वितार्थ** (anyo'nyānanvitārtha) *adj.* referring to the meanings which are not semantically related to each other अन्योऽन्यानन्वितार्थानि पदान्यपि हि मानवाः। रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः PrakaPañ. 34.1.

**अन्योऽन्यानपेक्ष** (anyo'nyānapekṣa) *adj.* 1 not dependent on each other, mutually independent यद्यपेकं कार्यमनेकस्मात् कारणान्मतम्, तथाप्यन्योऽ-न्यानपेक्षाणामपि स्वहेतुवशादपेक्षाणां मेलनं युक्तम् NayaVi. 250. 3(*on* i.1.8); (विपर्ययो मिथ्याज्ञानम्) स्वकारणादन्योऽन्यानपेक्षे ज्ञाने जायेते TattvVai.13.27

(*on* 1.8); शब्दार्थालंकारयोस्तु संसृष्टिः । 'सोणत्थि ... णिवारेइ' अत्रानुप्रासौ रूपकं चान्योऽन्यानपेक्षे KāvyPra.753.4; एकाश्रयाः शक्तयोऽन्योऽन्यानपेक्षप्रवृत्तयः ... युगपदेव स्वकार्यकारिण्यो दृष्टा: VyaktiVi.23.23; वाय्वादीनां चतुर्णामन्योऽन्यानपेक्षैव सृष्टिः ... अभिहिता NyāySu.(Ja.)351A.5(*on* ii.2.6); **2** syntactically not expectant of each other सत्यादिपदानां लक्षकत्वात्र वैयर्थ्यम् ... इत्याहुः। तत्र। ... 'सत्यं ज्ञानं' 'विज्ञानमानन्दं ब्रह्मे'त्यादाव(न्यो)ऽन्यानपेक्षाणामेव सत्यादिपदानां ब्रह्मलक्षकत्वदर्शनात् Nyāyāmṛ.460B.7; AdvaiSi.697.1.

**अन्योऽन्यानपेक्षक** (anyo'nyānapekṣa-ka) *adj.* syntactically not expectant of each other कोपः श्लोकसमूहस्तु स्यादन्योऽन्यानपेक्षकः SāhiDa.375.14.

**अन्योऽन्यानपेक्षतस्** (anyo'nyānapekṣa-tas) *adv.* on account of not being syntactically expectant of each other एकविशेष्येण विशेषणतया युतिः। साक्षादित्यादिकानां स्यान्मिथोऽन्योऽन्यानपेक्षतः। एकवस्त्ववसायित्वात् ... । विशेषणानि सर्वाणि विशिंषन्ति BṛĀraUBhVā.iii.4.30.

**अन्योऽन्यानभिघातम्** (anyo'nyānabhighātam) *adv.* without harming each other अर्थान् ... कामम्। ... धर्मं मोक्षम् ... विबुधः। अन्योऽन्यानभिघातं सेवेतार्थादिकान् वर्गान् KandaCū.i. 2.3.

**अन्योऽन्यानभिज्ञ** (anyo'nyānabhijña) *adj.* not knowing each other तत्तत्कार्यनिवेदनार्थमिलितान्योऽन्यानभिज्ञस्पशप्राप्तव्यावसरप्रतीक्षणकृतद्वाः पार्श्ववेद्यासिकम्। ... पश्यामि पाण्डोर्गृहम् Jīvān.102.3.

**अन्योऽन्यानभिज्ञत्व** (anyo'nyānabhijña-tva) *n.* the state of not knowing each other अविरहिताः कां प्रीतिं करिष्यन्ति अन्योऽन्यानभिज्ञत्वाद्य(द्या)-व्यक्तगुणोपभोगेऽप्यसमर्थाश्च भवन्ति DhūrtaViSaṁ. 29.11.

**अन्योऽन्यानभिभूत** (anyo'nyānabhibūta) *adj.* not overcoming each other भावसंधिरन्योऽन्यानभिभूतयोरन्योऽन्याभिभवनयोग्ययोः सामानाधिकरण्यम् RasGaṅ.125.10.

**अन्योऽन्यानभिसंबन्ध** (anyo'nyānabhisambandha) *m.* absence of relation with each other द्रव्येणैवाभिसंबन्धाद् गुणानां न परस्परम्। अन्योऽन्यानभिसंबन्धात्रविशेषस्त्वेतरत् BṛĀraUBhVā. i.6.80.

**अन्योऽन्यानात्मन्** (anyo'nyānātman) *adj.* not being of the nature of each other अभावमनिच्छतोऽभावानामन्योऽन्यानात्मतया भेदासिद्धौ जिघृक्षाभावासिद्धौ च इदं जिघृक्षितं नेदमिति विभागो न युक्तः IṣṭaSi. 302.15.

**अन्योऽन्यानात्मन्** (anyo'nyānātman) *m.* [Inst.] by way of non-identification with each other इदमहं वेद्यीत्यन्योऽन्यानात्मना स्फुटम्। त्रयं साक्षाद्यकास्ति SaṁviSi. 97.17.

**अन्योऽन्यानादर** (anyo'nyānādara) *m.* disregard for each other, mutual disregard अन्योऽन्यानादरेणैव प्रार्थयन्ते प्रयोजनम् ŚāstrDī. 117.16 (*on* ii.1.15)

**अन्योऽन्यानादित्व** (anyo'nyānāditva) *n.* eternality of each other नास्तीतरेतराश्रयत्वमतीतेन कर्मणा प्रवर्तितो वर्तमानफलदानाय प्रवर्तत इत्यन्योऽन्यानादित्वात् कर्मेश्वरयोः PrakaVi. 555.18.

**अन्योऽन्यानालोचन** (anyo'nyānālocana) *n.* [Inst.] without considering (the existence of) each other सर्वेषामेषामन्योऽन्यानालोचनेनाग्निहोत्रवाक्यमात्रालोचनात् तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात् ŚāstrDī.149.7(*on* ii. 2.10)

**अन्योऽन्यानुकूल्य** (anyo'nyānukūlya) *n.* [Inst.] by mutual favour, i.e. dependence संपरायानुग्रहं परेषु विपाकनिष्पन्दगुणाभ्यां परंपरया करोति। तद्विपाकनिष्यन्दयोरन्योऽन्यानुकूल्येनान्यव्यवच्छेदात् MaYānaSū. 32.2.

**अन्योऽन्यानुगत** (anyo'nyānugata) *adj.* **1** dependent on each other फलाप्तये ... । अन्योऽन्यानुगतत्वं ही संस्थितं ज्ञानकर्मणोः PauṣkS. 38.161; **2A** agreeing with each other सर्वज्ञोपज्ञसिद्धान्तस्यान्योऽन्यानुगतसर्वनयमयतया मात्सर्याभावमविर्भावयति SyādvāMañ. 30(2); **2B** conforming to each other निरूपितं मतिज्ञानम्। तन्निरूपणेन च श्रुतज्ञानमपि निरूपितमेव। द्वयोरन्योऽन्यानुगतत्वात् JñānBiPra. 16.7.

**अन्योऽन्यानुगम** (anyo'nyānugama) *m.* mutual agreement, i.e. merger पुद्गलनिचिते लोके हेतुभिः ... कर्मयोग्यवर्गणापुद्गलैः संगृहीतैः आत्मनो वह्न्ययःपिण्डवदन्योऽन्यानुगमात्मकसंबन्धो बन्धः KumāPraPra.83.29.

**अन्योऽन्यानुगमात्मन्** (anyo'nyānugamātman) *adj.* of the nature of mutual agreement, i.e. merger संवरः ... बन्धो जीवस्य कर्मणः। अन्योऽन्यानुगमात्मा तु यः संबन्धो द्वयोरपि ṢaḍdarSa.(Ha.)51 (comm. परस्परानुप्रवेशरूपः)

**अन्योऽन्यानुगुणत्व** (anyo'nyānuguṇa-tva) *n.* the state of being suitable for each other अन्योऽन्यानुगुणत्वादेवम् ... यूनोः। ... न प्रीतिर्हीयते KandaCū. ii.5.36.

**अन्योऽन्यानुगुण्य** (anyo'nyānuguṇya) *n.* mutual subserviency तयोः (द्रव्यगुणयोः) क्रमवशेनान्योऽन्यानुगुण्यम् TantraVā.710.16(*on* iii.1.8)

**अन्योऽन्यानुग्रह** (anyo'nyānugraha) *m.* **1** mutual favour त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान्। अन्योऽन्यानुग्रहे वृत्ते नास्ति भूयः समागमः MahāBhā.xii.136.158; **2A** mutual help or assistance विकाराः ...। अन्योऽन्यानुग्रहेणैते त्रयोविंशतिरुत्थिताः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते LakṣmīT. 5.81; **2B** mutual complementation ओषधिर्वनस्पतिर्वानस्पत्यो वीरुधः स्थावराः ...। इत्येष चतुर्विधो भूतग्रामोऽन्योऽन्यानुग्रहे प्रवर्तते Hastyāyur.388.9(3.6); **3** mutual syntactic agreement अन्योऽन्यानुग्रहाभावात्पदानां नास्ति वाक्यता ŚlokaVār.860. 3(*on* 7.50)

**अन्योऽन्यानुग्राहिन्** (anyo'nyānugrāhin) *adj.* rendering mutual help or assistance न चोभयमप्यन्योऽन्यानुग्राहितदुपजननसामर्थ्यम् ... अर्थान्तर-प्रतिभामुपजनयति VyaktiVi.120.9.

**अन्योऽन्यानुचरितानुगामिन्** (anyo'nyānucaritānugāmin) *adj.* following the good conduct of each other अयं तु तपस्वी लोकः पिपीलिकाधर्मोऽन्योऽन्यानुचरितानुगामी DhūrtaViSaṁ. 29.5.

**अन्योऽन्यानुचितत्व** (anyo'nyānucita-tva) *n.* the state of not being syntactically expectant of each other डोम्बिकाशिङ्गटकादौ अन्योऽन्यानुचितत्वं वाक्यानां तत्तश्चानन्वये कथं रञ्जकत्वम् Kāvyānu.(He.)392.22.

**अन्योऽन्यानुजीविन्** (anyo'nyānujīvin) *adj.* dependent on each other सर्वे तथान्योऽन्यानुजीविनः। ... त्रिगुणाः पञ्च धातवः MahāBhā.xiv.36.4.

**अन्योऽन्यानुपकार** (anyo'nyānupakāra) *m.* absence of mutual help or assistance अन्योऽन्यानुपकारेऽपि नाविशिष्टा इमे यतः। स्वोपादानबलोद्भूताः कलापोत्पादकाः पृथक् TattvSaṁ.436.

**अन्योऽन्यानुपरक्त** (anyo'nyānuparakta) *adj.* not attached or related to one another अन्योऽन्यानुपरक्तं भूतग्रस्तप्रकृतिप्रायं जगत् आपद्येत PratyabhiVi. i. 219.6(*on* i. 5. 5) (Bhāsk. अननुषक्तम्)

**अन्योऽन्यानुप्रविष्ट** (anyo'nyānupraviṣṭa) *adj.* mixed with each other अन्योऽन्यानुप्रविष्टानि सर्वाण्येतानि (महाभूतानि) निर्दिशेत्। स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते SuśruS.iii.1.21.

**अन्योऽन्यानुप्रवेश** (anyo'nyānupraveśa) *m.* **1** mutual agreement, i.e. merger with each other अन्योऽन्यानुप्रवेशेन बन्धः कर्मात्मनो मतः। अनादिः सावसानश्च कालिकास्वर्णयोरिव YaśasCam.ii.280.3; **2** mixing with each other पृथिव्यादीमन्योऽन्यानुप्रवेशकृतः सलिलरसो भवत्युत्कर्षापकर्षेण SuśruS.i.45.6; **3** mutual overlap, cf. **अन्योऽन्यानुप्रवेशिन्.**

**अन्योऽन्यानुप्रवेशिन्** (anyo'nyānupraveśin) *adj.* mutually overlapping ख्यातित्रयेऽप्यसित्रन्योऽन्यानुप्रवेशिनि। युक्त्या विरुध्यमाने च श्रेयस्यख्यातिरेव सा NyāyMañ.i.164.27.

**अन्योऽन्यानुबद्ध** (anyo'nyānubaddha) *adj.* mutually connected, i.e. harmonized शतायुर्वै पुरुषो विभज्य कालमन्योऽन्यानुबद्धम् ... त्रिवर्गं सेवेत KāmSū.10.3(1.2); अन्योऽन्यानुबद्धमिति धर्मादीनामन्यतमं द्वाभ्यामेकेन वानुबद्धम् JayaMa.10.9(*on* 1.2); 26.6(*on* 1.2)

**अन्योऽन्यानुबन्ध** (anyo'nyānubandha) *adj.* having mutual connection, i.e. harmonized धर्मार्थाविरोधेन कामं सेवेत ... । समं वा त्रिवर्गमन्योऽन्यानुबन्धम् ArthŚā.i.39.7(1.7)

**अन्योऽन्यानुबन्ध** (anyo'nyānubandha) *m.* mutual connection, i.e. harmonization ननु त्रिवर्गस्य नियतकालत्वादन्योऽन्यानुबन्धो नास्ति JayaMa. 11.8 (*on* 1.2)

**अन्योऽन्यानुरञ्जन** (anyo'nyānurañjana) *n.* act of entertaining or pleasing each other नटी नटाश्च मोदन्ते यत्रान्योऽन्यानुरञ्जनात्। अतो रङ्ग इति ज्ञेयः BhāvPra.(Śā.) 194.15(7)

**अन्योऽन्यानुरत** (anyo'nyānurata) *adj.* mutually attached ग्रामस्यैतस्य सीमान्ते वनस्थल्यामुभौ समम्। अन्योऽन्यानुरतावास्तां शृगालौ विकृताननौ PadmP.(Ra.)109.55.

**अन्योऽन्यानुराग** (anyo'nyānurāga) *m.* mutual love or passion द्वयोरप्येककालमन्योऽन्यानुरागः प्रतीयते तत्रैका लावण्यादिना रज्यतेऽन्यः स्नेहादिना SaraKaṇṭhā.644.13; अत्र नार्या अपि दण्डाभिधानादन्योऽन्यानुरागजोपभोगविषयमिदं वचनमिति गम्यते SmṛtiCan.iv.744.19; [Inst.] with mutual love or passion (गान्धर्वः समयान्मिथः) अन्योऽन्यानुरागेण DīpKa.9.19(*on* 1.61); कन्याया वरस्य चान्योऽन्यानुरागेण यः परस्परसंयोग आलिङ्गनादिरूपः स गान्धर्वो ज्ञातव्यः ManvaMu.92.17(*on* 3.32)

**अन्योऽन्यानुरागपूर्वक** (anyo'nyānurāga-pūrvaka) *adj.* preceded by mutual love or passion यदा स्त्रीपुंसयोरन्योऽन्यानुरागपूर्वकसंवादेन परिणेता युद्धादिना विजित्य तामुद्वहेत्तदा गान्धर्वराक्षसौ मिश्रौ भवतः ManvaMu.91.21(*on* 3.26)

**अन्योऽन्यानुरागयुक्त** (anyo'nyānurāga-yukta) *adj.* possessing mutual love or affection एष भार्यापत्योरन्योऽन्यानुरागयुक्तो धर्मो युष्माकमुक्तः ManvaMu. 381.27(*on* 9.103)

**अन्योऽन्यानुरागातिरेक** (anyo'nyānurāgātireka) *m.* excess of mutual love or passion मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकदर्शनेऽन्योऽन्यानुरागातिरेकः समजायत DaśKuC. 31. 20.

**अन्योऽन्यानुरागाद्यभाव** (anyo'nyānurāgādy-abhāva) *m.* absence of mutual love or passion etc. अन्योऽन्यानुरागाद्यभावेनानौचित्यादृसभावाभासौ Kāvyānu. (He.)123.2.

**अन्योऽन्यानुरागाभाव** (anyo'nyānurāgābhāva) *m.* absence of mutual love or passion रावणादावन्योऽन्यानुरागाभावाद्रतिर्व्यभिचारिणी Kāvyānu.(He.) 101.17.

**अन्योऽन्यानुरागिन्** (anyo'nyānurāgin) *adj.* loving each other ते भार्यापतयस्त्रयः पर्यन्ते विविशुर्वह्निं सहान्योऽन्यानुरागिणः KathāSaSāg.xii.6.418.

**अन्योऽन्यानुरागोत्कर्ष** (anyo'nyānurāgotkarṣa) *m.* excess of mutual love or passion 'उत्फुल्लगण्डयुगम्' इत्यत्रान्योऽन्यानुरागोत्कर्षप्रतिभानादुदारत्वम् RasāSu.67.8(1. 236)

**अन्योऽन्यानुरूप** (anyo'nyānurūpa) *adj.* 1 suitable for each other चिरात्खलु युक्तकारी विधिः स्याद्यदि युगलकमेतदन्योऽन्यानुरूपं घटयेत् Nāgā.1.17(4); मया च वामन्योऽन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तद्रचितैरेव शेखरस्रगनुलेपनादिभिश्च चिरमुपासितासि DaśKuC.70.7; 2 congruous or agreeing with each other यत्रान्योऽन्यानुरूपपदार्थसंघट्टना क्रियते स समालंकारः PratāYaBhū. 427.12.

**अन्योऽन्यानुरोध** (anyo'nyānurodha) *m.* following, i.e. dependence on each other न च स्वातन्त्र्यं द्वयोर्युक्तम् अन्योऽन्यानुरोधाननुरोधयोर्विरोधात् TattvPrakā.109B.1(*on* ii.3.8)

**अन्योऽन्यानुवर्तन** (anyo'nyānuvartana) *n.* [Inst.] by following, i.e. by being favourable to each other अधोक्षजमनोजयोरिव चान्योऽन्यानुवर्तनेन नित्यमावयोर्वर्तमानयोरेकदा ... यशोर्धमहाराजस्य पलिताङ्कुरदर्शनमभूत् YaśasCam. i.243.2 (comm. परस्परानुकूलतया)

**अन्योऽन्यानुवर्तिन्** (anyo'nyānuvartin) *adj.* 1 following each other अन्योऽन्यानुवर्तिनः। ... त्रिगुणाः पञ्च धातवः MahāBhā.xiv.36.5; 2 attached to each other ये चान्योऽन्यानुवर्तिनः ... । तैर्नरः ... सुवयस्यैर्वृषायते CaraS. vi. 2(3).21.

**अन्योऽन्यानुविधानत्व** (anyo'nyānuvidhāna-tva) *n.* the state of intermingling with each other सप्तादीनां च तरतमयोगाच्छरीरविशेषेभ्यश्चान्योऽन्यानुविधानत्वाच्च भेदाग्रमसंख्येयं भवति AṣṭāSaṁ.i. 239.7(2.8)

**अन्योऽन्यानुवृत्ति** (anyo'nyānuvṛtti) *f.* continuation in each other विशेषणं (विशेषाणां?) मिथोव्यावृत्तानाम् अन्योऽन्यानुवृत्तेः अयुक्तत्वात् TarkSaṁ. (Ā.)101.4.

**अन्योऽन्यानुव्रज** (anyo'nyānuvraja) *adj.* following each other सहितौ सन्तौ अन्योऽन्यमनुरक्तौ ... अन्योऽन्यमनुव्रजतः इत्यन्योऽन्यानुव्रजौ ... कर्तव्यानि ... विदधानौ JñātāDhaṬ.91B.9.

**अन्योऽन्यानुसंधान** (anyo'nyānusandhāna) *n.* 1 mutual unification or merger अन्योऽन्यानुसंधानरूपत्वं जडविरुद्धेन चैतन्येन व्याप्तम् PratyabhiVi.ii.190.4 (*on* ii. 4.15); 2 mutual recollection किमंशानामन्योऽन्यानुसंधानमापाद्यते उतांशिनः Vādā.151.1.

**अन्योऽन्यानुसारित्व** (anyo'nyānusāri-tva) *n.* the state of following or conforming to each other यथार्थत्वं बाधवैधुर्यं वा अर्थानुसारि। ... आद्यः न कार्यकारणयोरन्योऽन्यानुसारित्वसिद्धावपि तात्त्विकत्वाभावात् TarkSaṁ.(Ā.)6.10.

**अन्योऽन्यानुस्यूतप्रत्यय** (anyo'nyānusyūta-pratyaya) *m.* knowledge or presentation continued through each other सा ... क्षणानामन्योऽन्यानुस्यूतप्रत्ययजनिका एकसूत्रस्थानीया वासना SyādvāMañ.19(9)

**अन्योऽन्यान्तरण** (anyo'nyāntaraṇa) *n.* arrangement of (syllables of) each other तदिदं गुरुलघुसंचययोरन्योऽन्यान्तरणमिति दण्डी Kāvyānu.(He.)237.4.

**अन्योऽन्यान्तरनिर्गत** (anyo'nyāntara-nirgata) *adj.* projecting from the interior of each other, i.e. interlaced with each other अन्योऽन्यान्तरनिर्गताङ्गुलदलश्रेणीभवत्त्रिश्थलग्रन्थिप्रग्रथितं करद्वयमुपर्युत्तानमाबिभ्रता सा ... बाहुयुगेन शंसति मनोजन्मप्रवेशोत्सवम् SubhāRaK.15.37.

**अन्योऽन्यान्तरनिःसृता** (anyo'nyāntara-nissṛtā) *adj.* (*f.*) projecting from the interior of each other, i.e. interlocked with each other अङ्गुल्यो यस्य हस्तस्य ह्यन्योऽन्यान्तरनिस्सृताः। स कर्कट इति ज्ञेयः NāṭyaŚā.9.133 (AbhinBhā. अन्योऽन्यस्य चान्तराणि मध्यानि तैर्निस्सृता)

**अन्योऽन्यान्तरिता** (anyo'nyāntaritā) *adj.* (*f.*) interposed with each other करावूर्ध्वमुखौ कार्यावन्योऽन्यान्तरिताङ्गुली MāliniT.7.27; अन्योऽन्यान्तरिताः सर्वाः करयोरङ्गुलीः स्थिताः। ... मुद्रेयममृतप्रभा MāliniT.7.33.

**अन्योऽन्यान्तर्भावोपपत्ति** (anyo'nyāntarbhāvopapatti) *f.* tenability of inclusion into each other साधनभेदाल्लक्षणवैलक्षण्ये सति नान्योऽन्यान्तर्भावोपपत्तिः Kāśi.i. 205.14(*on* 4.3)

**अन्योऽन्यान्नग्रह** (anyo'nyānna-graha) *adj.* accepting food of each other अन्योऽन्यान्नग्रहा विप्राः ...। अन्योऽन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च SaṁvaSm.88.

**अन्योऽन्यान्नप्रद** (anyo'nyānna-prada) *adj.* offering food to one another अन्योऽन्यान्नग्रहा(v.l. °प्रदा) विप्राः ...। अन्योऽन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च SaṁvaSm. 88.

**अन्योऽन्यान्वय** (anyo'nyānvaya) *m.* 1 connection or attachment with one another भावा एकप्रमातरि। अन्योऽन्यान्वयरूपैक्ययुजः ĪśvaPraSū.ii. 2.4; Bhāsk. 50.8(*on* ii. 2.4); 2Ai semantic relation with each other स्वर्गयागौ हि ... नान्योऽन्यान्वयमनुभवतः Kāśi.ii.12.6(*on* 5(1).15); यावद्धि पदार्था नान्योऽन्यान्वयमनुभवन्ति तावदप्रयोजनकं जायते Kāśi.iii.185.16(*on* 5(7).79); अर्था एवाकाङ्क्षासंनिधियोग्यतासहिता अदृष्टमेवान्योऽन्यान्वयमाहुः NayaVi.265.6(*on* i.1.25); पदविक्षेपशब्दानुमितस्य गमनस्य कारकापेक्षत्वाद् गोपदावगतायाश्च गोः क्रियापेक्षत्वादन्योऽन्यान्वयः NyāyRaMā.84.16; (ऐन्द्र्या गार्हपत्यमुपतिष्ठते) अन्योऽन्यान्वयस्तु वाक्यावगतो लिङ्गेन विरुध्यते ŚāstrDī. 242.10(*on* iii. 3.7); अर्थानां चान्योऽन्यान्वयप्रत्यायनशक्तिस्तदाधानशक्तिश्चापरा पदानाम् TattvPradī.(Ci.)150.10; आकाङ्क्षावशेनान्योऽन्यान्वये विशेषावगतिः ... संस्कारं न बाधते PadMañ. *on* KāśiVr. *on* P.ii.3.46 (206.12); पदाभिहिताः पदार्था एव आकाङ्क्षादिवशात् अन्योऽन्यान्वयं बोधयन्ति NyāySu.(Ja.)89A.7(*on* i.1.1); अन्योऽन्यान्वयं विना सामान्यरूपा एव अवतिष्ठेरन् MānaMe. 94.7; 2Aii syntactic relation with each other वाक्यावयवानामन्योऽन्यान्वयः समञ्जसो भवति BrahmSūBh.(Rā.) 373.18(*on* i.4.19); 2B mutual (subsidiary and primary) relationship विनियोगाकाङ्क्षया ... साधनापेक्षया चान्योऽन्यान्वये सति ŚivārkaMaDī.i.61.5(*on* i.1.1); 3 descent of each other ततोऽन्योऽन्यान्वयज्ञानात्रितरामनुरागिणौ। मुनिपुत्रः स चाहं च यावत्तत्र स्थितावुभौ KathāSaSāg.x. 3.101.

**अन्योऽन्यान्वयधी** (anyo'nyānvaya-dhī) *f.* cognition of semantic relation with each other अथ क्लृप्ता पदार्थानामन्वये शक्तिः श्रेतिमाश्रत्वगन्तृत्वैः प्रत्येकं मानान्तरमितैरन्योऽन्यान्वयधीजननात्, तत्र NayaVi. 266. 2(*on* i.1.25)

**अन्योऽन्यान्वयनियम** (anyo'nyānvaya-niyama) *m.* law or rule of semantic relation with each other द्रव्यस्य परिच्छेदकगुणाकाङ्क्षया चार्थिकेन पार्ष्ठिकान्वयेनान्योऽन्यान्वयनियमः पर्यवस्येत् ŚivārkaMaDī. i.305.5(*on* 2.1)

**अन्योऽन्यान्वयप्रकार** (anyo'nyānvaya-prakāra) *m.* manner of mutual (subsidiary and primary) relationship पशुसोमयागयोरपि प्रधानाङ्गवाक्यानामन्योऽन्यान्वयप्रकारो द्रष्टव्यः TantrRaha.51.4.

**अन्योऽन्यान्वयप्रतिपत्ति** (anyo'nyānvaya-pratipatti) *f.* cognition of semantic relation with each other किमिति पदार्थानां लक्षणयान्योऽन्यान्वयप्रतिपत्तिजनकत्वमास्थीयते TattvPradī.(Ci.)145. 2.

**अन्योऽन्यान्वयप्रत्यायक** (anyo'nyānvaya-pratyāyaka) *adj.* which produces cognition of semantic relation with each other पदस्मारितानामेव पदार्थानामाकाङ्क्षादिवशादन्योऽन्यान्वयप्रत्यायकत्वोपपत्तेः TattvPradī.(Ci.)148.6.

**अन्योऽन्यान्वयबोधक** (anyo'nyānvaya-bodhaka) *adj.* which conveys semantic relation with each other पदार्थानां हि ... अन्योऽन्यान्वयबोधकत्वं न प्रतीतम् PrakaPañ. 392.1; न च पदार्थस्वरूपमात्रविषयस्मृतीनामन्योऽन्यान्वयबोधकत्वमनुपपन्नम् TattvPradī.(Ci.)149.9.

**अन्योऽन्यान्वयबोधन** (anyo'nyānvaya-bodhana) *n.* act of conveying semantic relation with each other (पदार्थाः) ते च यद्यन्योऽन्यान्वयबोधने समर्थास्युः तदा तेषामवान्तरव्यापारता स्यात् PrakaPañ. 392.6.

**अन्योऽन्यान्वययोग्यार्थ** (anyo'nyānvaya-yogyārtha) *adj.* having, i.e. conveying meanings which are competent of semantic relation with each other अयमाप्तोऽन्योऽन्यान्वययोग्यार्थमेव पदजातं ब्रवीति Kāśi.i.73.1(*on* 2. 20); PrakaPañ. 39. 5; TantrRaha. 37.7.

**अन्योऽन्यान्वययोग्यार्थक** (anyo'nyānvayayogyārtha-ka) *adj.* having, i.e. conveying meanings which are competent of semantic relation with each other विप्रलम्भकवाक्यस्थपदानामप्यन्योऽन्यान्वययोग्यार्थकत्वात् TattvPradī. (Ci.)268.7.

**अन्योऽन्यान्वययोग्यार्थत्व** (anyo'nyānvayayogyārtha-tva) *n.* the state of having, i.e. conveying meanings which are competent of semantic relation with each other योग्यतापि किं पदानामेव सहप्रयोगयोग्यत्वमुतान्योऽन्यान्वययोग्यार्थत्वम् TattvPradī.(Ci.)268.5.

**अन्योऽन्यान्वयरूप** (anyo'nyānvaya-rūpa) *adj.* of the nature of semantic relation with each other पदार्था यद्यन्योऽन्यान्वयं विना सामान्यरूपा एवावतिष्ठेरन् तर्हि ... सामान्यरूपस्य वाच्यस्यानुपपत्तेरन्योऽन्यान्वयरूपे विशेषे एव पदार्थाः पर्यवस्यन्ति MānaMe. 94.7.

**अन्योऽन्यान्वयविज्ञान** (anyo'nyānvaya-vijñāna) *n.* knowledge of semantic relation with each other अन्विितार्थाभिधायित्वे ... अन्योऽन्यान्वयविज्ञानं नान्यथेत्युपदर्शितम् PrakaPañ.40.10.

**अन्योऽन्यान्वयशक्ति** (anyo'nyānvaya-śakti) *f.* power of semantic relation with each other पदानां हि तावदर्थरूपाभिधानरूपा शक्तिः तदर्थरूपाणामन्योऽन्यान्वयशक्तिः तदाधानशक्तिश्चापरा पदानामेवेति TattvBi.123.2.

**अन्योऽन्यान्वयशून्य** (anyo'nyānvaya-śūnya) *adj.* devoid of syntactic relation with each other धनंजयः - कथमन्योऽन्यान्वयशून्यान्यस्या वचांसि SubhaDha.2.9(18)

**अन्योऽन्यान्वयसिद्धि** (anyo'nyānvaya-siddhi) *f.* establishment of the semantic relation with each other उत्तरार्धेक्षुखण्डाग्नेयीषूक्तेत्यन्योऽन्यान्वयसिद्धिः NayaVi.271.9(*on* i.1.25)

**अन्योऽन्यान्वित** (anyo'nyānvita) *adj.* 1 united with each other (in wedlock) अन्योऽन्यान्वितयोर्वधूवरयोर्यद्देयं तद्धनं युतयोरिदमिति व्युत्पत्त्या यौतकं मतमित्यर्थः SmṛtiCan. iv.662.13; 2 semantically related with each other अन्योऽन्यान्विताः पदार्था तदन्वयो वा वाक्यार्थः NyāySu.(Ja.) 86A.8(*on* i.1.1); 86B.11(*on* i.1.1); इदं च ग्राहकग्रहणं खले कपोतवदन्योऽन्यान्वितैः कृत्स्नपदार्थैः प्रत्ययार्थैश्च सह युगपदेव भवति TantrRaha.63.21.

**अन्योऽन्यान्वितपदार्थ** (anyo'nyānvita-padārtha) *m.* word-meanings semantically related with each other तेषामेव पदानामन्योऽन्यान्वितपदार्थाभिधानशक्तिः TattvPradī.(Ci.)151.7.

**अन्योऽन्यान्वितस्वार्थ** (anyo'nyānvita-svārtha) *m.* word-meanings semantically related with each other ननु पदानामेवान्योऽन्यान्वितस्वार्थाभिधायकत्वसंभवे किमिति पदार्थानां लक्षणयान्योऽन्यान्वयप्रतिपत्तिजनकत्वमास्थीयते TattvPradī.(Ci.)145.1; 150.12.

**अन्योऽन्यान्विताभिधान** (anyo'nyānvitābhidhāna) *n.* denotation or expression of the meanings which are semantically related with each other संनिपातिवाक्येषु विधिप्रत्ययेनाधिकारापूर्वेऽनूदिते सत्यवहननप्रोक्षणादयश्च तदन्वितं स्वार्थमभिदधतीत्यन्योऽन्यान्विताभिधानम् TantrRaha.63.7; 63.16.

**अन्योऽन्यान्वितावयवार्थ** (anyo'nyānvitāvayavārtha) *m.* meanings of the constituents which are semantically related with each other चित्रगुसमुदायस्यान्योऽन्यान्वितावयवार्थसंबन्धिन्यन्यपदार्थे शक्तिः कल्प्येत TattvCin.iv (2).738.2.

**अन्योऽन्यापघन** (anyo'nyāpaghana) *m.* bodies of each other अन्योऽन्यापघनघनाघट्टकुपितकुम्भीरभयभ्राम्यत्ककुभकुहूत्कारमुखरम् ... क्रियते मुक्ताफलद्युतिचक्रः पथः YaśasCam.ii. 208.4 (comm. अन्योन्यानां परस्पराणां ये अपघनाः शरीराणि)

**अन्योऽन्यापतितत्यागिन्** (anyo'nyāpatita-tyāgin) *adj.* (used as noun) (those) forsaking each other not expelled from caste दण्ड्यः ... पणशतम् ... पितृपुत्राचार्ययाज्यर्त्विजामन्योऽन्यापतितत्यागी च ViṣṇuSm.5.113.

**अन्योऽन्यापत्ति** (anyo'nyāpatti) *f.* 1 knowledge of different (stages of life) लिङ्गमेवाश्रमख्यातावन्योऽन्यापत्तिकारणम् BhāgP.xii.2.4; NītiPra.1.14; 2 condition of becoming each other अत्र निरन्तरतां मुक्त्वा नान्योऽन्यलयो नान्योऽन्यापत्तिसंधिरस्ति इति शिथिलता AbhinBhā.ii.336.8(*on* 16.99)

**अन्योऽन्यापराधोद्घट्टन** (anyo'nyāparādhodghaṭṭana) *adj.* exposing the offence of each other एतदुभयोरपि अन्योऽन्यापराधोद्घट्टनं वचनं यौगन्धरायणोऽपि ... अपराधमुद्घट्टयति AbhinBhā.iii.58.10(*on* 21.99)

**अन्योऽन्यापरित्यागशपथ** (anyo'nyāparityāga-śapatha) *m.* oath of not abandoning each other कृत्वान्योऽन्य(?न्या)परित्यागशपथं तैः समं ततः। विष्णुदत्तः प्रतस्थे स पित्रोरविदितो निशि KathāSaSāg.vi.6.45.

**अन्योऽन्यापरिहार** (anyo'nyāparihāra) *m.* [Inst.] without excluding each other अथाविभक्त एवायमसंकीर्णा स्थितिः कथम्। अन्योऽन्यापरिहारेण स्थितेर्गत्यन्तरं न च TattvSaṁ.1279.

**अन्योऽन्यापहृत** (anyo'nyāpahṛta) *adj.* what is robbed by one from another दुर्विभक्तमन्योऽन्यापहृतमन्तर्हितमविज्ञातोत्पन्नं वा पुनर्विभजेरन् ArthŚā.ii. 34.5(3.5); अन्योऽन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते। तत्पुनस्ते समैरंशैर्विभजेरन् YājñaSm.2.126; अन्योऽन्यापहृतं ज्येष्ठकनिष्ठाद्यपहृतम् VyavaMa.131.12.

**अन्योऽन्यापातसंच्छिन्न** (anyo'nyāpāta-sañcchinna) *adj.* broken by the strokes of each other रावणस्य बलेनामा तेषां युद्धमभूत् परम्। अन्योऽन्यापातसंच्छिन्नविविधायुधसंहतिः PadmP.(Ra.)16.44.

**अन्योऽन्यापादन** (anyo'nyāpādana) *n.* possibility of help of each other एवमङ्गानामप्यन्योऽन्यापादनं दर्शयितव्यम् TantrVā.666.19(*on* iii.1. 2)

**अन्योऽन्यापादित** (anyo'nyāpādita) *adj.* caused mutually मुख्यावपि च योगीश्वरधर्मशब्दावन्योऽन्यापादितविरोधव्याहतसामर्थ्यौ दुर्बलावेव BālaKrī.i.6.7(*on* 1.1)

**अन्योऽन्यापाश्रय** (anyo'nyāpāśraya) *m.* 1 mutual assistance अन्योऽन्यसमुपष्टम्भादन्योऽन्यापाश्रयेण च। ज्ञातयः संप्रवर्धन्ते MahāBhā.v.36.63; 2 co-relation or mutual dependence प्रकृतिः पुरुषश्च ...। अन्योऽन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः BhāgP.xi.22.26; xii.4.27.

**अन्योऽन्यापाश्रय** (anyo'nyāpāśraya) *adj.* A taking refuge to each other अन्योऽन्यापाश्रयाश्चैव ...। अन्योऽन्यव्यतिषक्ताश्च त्रिगुणाः पञ्च धातवः MahāBhā.xiv.36. 5; B co-related or mutually dependent विज्ञाते सत्याप्तपूर्वत्वसिद्धिः इत्यन्योऽन्यापाश्रयत्वप्रसङ्गः SaṁkṣeŚā.3.270(ii.306.5); पुरुषं प्रकृतिर्ब्रह्मन्न विमुञ्चति कर्हिचित्। अन्योऽन्यापाश्रयत्वात् ... अनयोः BhāgP.iii.27.17.

**अन्योऽन्यापाश्रित** (anyo'nyāpāśrita) *adj.* mutually assisting, resorting to each other अन्योऽन्यापाश्रितयोर्यदि वा कुड्यादिसंश्रितत्वेन। ... इह कथयन्त्यूर्ध्वं रतं विबुधाः KandaCū.ii.6.27.

**अन्योऽन्यापूरणासक्त** (anyo'nyāpūraṇāsakta) *adj.* engaged in falling over each other अन्योऽन्यापूरणाश(?स)क्तान् ... दृष्ट्वा ... एतान् (॰समीरणसुतादयः) ... साधारमानयन् PadmP.(Ra.)76. 39.

**अन्योऽन्यापेक्ष** (anyo'nyāpekṣa) *adj.* A expectant of each other यत्र स्वसौन्दर्यादिव तयोरन्योऽन्यापेक्षो (न?) विध्यनुवादभावः ... तत्रैव पदार्थपौर्वापर्यनियमोऽवगन्तव्यः VyaktiVi.97.13; B mutually dependent (उत्पत्तिस्थितिविनाशाः परस्परापेक्षाः) अन्योऽन्यापेक्षाणामुत्पादादीनां वस्तुनि सत्त्वं प्रतिपत्तव्यम् SyādvāMañ.21(61); C mutually contradictory (नाधीयीत) कलहेऽन्योऽन्यापेक्षशब्दश्रवणे ManvaVi.516.1(*on* 4.121)

**अन्योऽन्यापेक्षण** (anyo'nyāpekṣaṇa) *n.* mutual dependence लिङ्गभूतसामान्यग्रहणाय पुनरन्योऽन्यापेक्षणादनवस्थापातात् न किंचिदप्यनुमानमात्मानं लभते NyāyRa.394.19(*on* 5(4).148)

**अन्योऽन्यापेक्षतस्** (anyo'nyāpekṣa-tas) *adv.* due to being mutually dependant न कारणं विना कार्यं न कार्यं कारणं विना। अन्योऽन्यापेक्षतः सिद्धेर्विनान्योऽन्यं न तद्द्वयम् BṛĀraUBhVā.i.4.363.

**अन्योऽन्यापेक्षता** (anyo'nyāpekṣa-tā) *f.* the state of being mutually dependant जनकाजनकक्षणभेदाभ्युपगमः ... स्थिते क्षणिकत्वे प्रत्यक्षस्य भ्रान्तता तद्भ्रान्तत्वे च क्षणिकत्वसिद्धिरित्यन्योऽन्यापेक्षता NyāyKa.77.8.

**अन्योऽन्यापेक्षत्व** (anyo'nyāpekṣa-tva) *n.* 1 the state of being mutually dependant न च जन्मध्वंसावन्यावपि सहैव स्ताम् ... उक्तन्यायेन तयोरन्योऽन्यापेक्षत्वे हेत्वभावात् IṣṭaSi.368.11; अधिभूतेषु ग्राह्यग्राहकयोरन्योन्यापेक्षत्वात् कल्पितत्वमतोऽद्वैतं तत्त्वम् VedāntKa.131.6(*on* i.1. 28); (साध्यसाधनयोः) साध्येऽनुपात्ते साधनत्वेन निर्देशः नान्वयं पुष्णाति। तथा साधनेऽनुपात्ते साध्यत्वेन निर्देशोऽपि। तयोरन्योऽन्यापेक्षत्वात् PratāYaBhū.384.10; नत्वनुमित्योरन्योऽन्यापेक्षत्वम् TattvCin.ii(2).21.3; 2 the state of being mutually contradictory अत्र स्वामिसेवकयोरनुचितत्वस्यान्योऽन्यापेक्षत्वम् AlaṅkāRa.56(36); 3 the state of being mutually expectant यदि तावदन्योऽन्यापेक्षत्वरूपं व्यपेक्षालक्षणं यथा राजपुरुष इत्यत्र MīmāKau.iii (1). 52.7(*on* i. 2. 27)

**अन्योऽन्यापेक्षसंबन्ध** (anyo'nyāpekṣa-sambandha) *m.* mutually expectant relation न चैवं यत्तदोरिदमेतददसां चाभिन्नार्थत्वेऽप्येतद्दोषविषयत्वप्रसङ्गः। तेषामुक्तप्रकारेण स्वभावतोऽन्योऽन्यापेक्षसंबन्धोपपादनात् VyaktiVi.59.18.

**अन्योऽन्यापेक्षसंसिद्धि** (anyo'nyāpekṣa-saṁsiddhi) *f.* establishment dependent on each other (नामरूपयोः) अन्योऽन्यापेक्षसंसिद्धेरन्योऽन्यव्यभिचारतः। ... भानाविव तमो भवेत् BṛĀraUBhVā.i.4.686.

**अन्योऽन्यापेक्षसिद्धि** (anyo'nyāpekṣa-siddhi) *adj.* whose establishment is dependent on each other प्रमात्रादीह यत्किंचित्प्रत्यगज्ञानहेतुजम्। अन्योऽन्यापेक्षसिद्धित्वान्मिथ्या तदपि पूर्ववत् BṛĀraUBhVā.i.4.477.

**अन्योऽन्यापेक्षा** (anyo'nyāpekṣā) *f.* 1A [Inst.] by virtue of mutual syntactic expectancy आत्मभेदो न चेत्कश्चित् वर्णेभ्यः पदवाक्ययोः। अन्योऽन्यापेक्षया शक्त्या वर्णः स्यादभिधायकः VākyaPa. 2.213; अन्योऽन्यापेक्षा

व्यपेक्षा ... परस्परसंबन्धः PadMañ. *on* KāśiVṛ. *on* P.ii.1.1(6.12); iv.1.82(393.5); **1B** by virtue of mutual semantic competancy न संकरः। अन्योऽन्यापेक्षया शब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितैर्भिन्नविषयत्वात् AlaṅkāSa.24.1; अन्योऽन्यापेक्षया एकक्रियासंबन्ध इतरेतरयोगः PrakriKau.i. 622.6; **2** [Inst.] in comparison with each other धर्मिणामेवान्योऽन्यापेक्षया भेदाभेदौ धर्मौ दृष्टौ IṣṭaSi.101.19; यद्यपि धर्माः पट्पदार्थेभ्यो न व्यतिरिच्यन्ते किं तु ते एवान्योऽन्यापेक्षया धर्मा धर्मिणश्च भवन्तीति NyāyKa.16.3;(अष्टौ स्तम्भान् ... कल्पयेत्) अन्योऽन्यापेक्षया चाष्टहस्तान्तरौ AbhinBhā.i.68.7(*on* 2.94); **3** mutual support अन्योऽन्यापेक्षा हि अत्र जीवितम् सा च जडानां न संभवति PratyabhiVi.ii.189.6 (*on* ii.4.14); [Inst.] with mutual support यद्यन्योऽन्यापेक्षया विमोचनं न कृतम् ... तत्रैकस्य यत् प्रायश्चित्तं प्राप्नोति, तस्य पादेनैकैकः शुध्यति BālaKrī.ii.151.21(*on* 3. 268); संहतान्योधयेदन्योऽन्यापेक्षया युध्यमानान-भिघ्नत ManuBh.ii.57.4(*on* 7.191); **4** mutual dependence सामग्रीं प्रत्यपि पदार्थानां शक्तत्वे अन्योऽन्यापेक्षा न युक्ता VivaPraSaṁ.99.17; अत एव ... तत्तत्प्रत्ययापृथग्भावान्नान्योऽन्यापेक्षा Vādā.131.3; अज्ञानजीवयोर्हि कुत्रापि विषयेऽन्योऽन्यापेक्षा न चेदन्योऽन्याधीनताव्याहतिः Nyāyāmṛ.352A.5; [Inst.] due to mutual dependence अन्योऽन्यापेक्षया पुंसः समुदायत्ववेदनं स्यात् AnuVyā. 29A. 2(*on* 2.2)

**अन्योऽन्यापेक्षाभाव** (anyo'nyāpekṣābhāva) *m.* absence of mutual dependence or need संतानिव्यतिरेकेण च तत्र संतानयोरन्योऽन्यापेक्षाभावात् Nyāyāmṛ. 351B. 4.

**अन्योऽन्यापेक्षिक** (anyo'nyāpekṣi-ka) *adj.* expectant or correlative of each other जन्म तु द्रव्यरसयोरन्योऽन्यापेक्षिकं स्मृतम्। अन्योऽन्यापेक्षिकं जन्म स्याद्देहदेहिनोः SuśruS.i.40.16.

**अन्योऽन्यापेक्षिता** (anyo'nyāpekṣi-tā) *f.* the state of being mutually dependent अन्योऽन्यापेक्षिता नित्यं स्यात्सामान्यविशेषयोः ŚlokaVār. 5(12). 9 (547.5); प्रत्यक्षस्य भ्रान्तत्वेनाबाधितविषयत्वादनुमानस्यात्मलाभो लब्धात्मके चानुमाने प्रत्यक्षस्य भ्रान्तत्वमित्यन्योऽन्यापेक्षितादोषः NyāyKa.129.13.

**अन्योऽन्यापेक्षित्व** (anyo'nyāpekṣi-tva) *n.* the state of being mutually dependent प्रत्यक्षस्य भ्रान्तत्वे बाधकस्य प्रमाणत्वं बाधकप्रामाण्ये च प्रत्यक्षस्य भ्रान्तत्वमित्यन्योऽन्यापेक्षित्वम् NyāyKa.43.14.

**अन्योऽन्यापेक्षिन्** (anyo'nyāpekṣin) *adj.* **1** having mutual dependence, mutually dependent अन्योऽन्यापेक्षिणोऽमी नियतमवयवाः साधयन्त्यर्थजातम् NyāyMañ.ii.144. 21; **2** having mutual syntactic or semantic expectancy अन्योऽन्यापेक्षिणौ भूप शब्दार्थौ हि परस्परम् SkandP.ii(2). 28.43.

**अन्योऽन्यापोह** (anyo'nyāpoha) *m.* **1** exclusion of each other भेदशब्दाः ... विरोधाद्यान्योऽन्यापोहेन वर्तन्ते NyāyRa.605. 20(*on* 5(13).146); **2** denial of each other क्रियाकारकयोरप्यस्ति मिथोऽपेक्षा ... नान्योऽन्यापोहः सिध्येत् NyāyRa.609.7(*on* 5(13).156)

**अन्योऽन्यापोहन** (anyo'nyāpohana) *n.* act of excluding each other (भिन्नावभासार्थाः ... प्रत्यगात्मनः) पशोस्तत्त्वन्योऽन्यापोहनेहवाकिनि विकल्पे समारूढास्तेऽर्था भवन्ति PratyabhiVi.ii. 295.6(*on* iv.1.8)

**अन्योऽन्यापोहबुद्धि** (anyo'nyāpoha-buddhi) *f.* idea of exclusion of each other अन्योऽन्यापोहबुद्ध्या नियतिरिति मिथसंश्रयस्तत्प्रतीतौ TattvMu.5. 115.

**अन्योऽन्याप्तता** (anyo'nyāptatā) *f.* mutual trustworthiness एवंभावो हि वादिप्रतिवादिनोः संवादेऽन्योऽन्याप्तताश्वासे सत्येव स्यात् NyāySu.(Ja.) 273A.11(*on* ii.1. 2)

**अन्योऽन्याप्रतिबन्ध** (anyo'nyāpratibandha) *m.* [Inst.] without obstructing each other अन्योऽन्याप्रतिबन्धेन त्रिवर्गमपि साधयन् ... गृहिधर्माय कल्पते YogŚā.1.52; RauhiC.(App.1)6.

**अन्योऽन्याप्रतियोगिक** (anyo'nyāpratiyogi-ka) *adj.* not having each other as counterpositive अन्योऽन्याप्रतियोगिकः संसर्गप्रतिषेधस्तया विवक्षितः KhaṇḍanKhā. 347.6; 352.19.

**अन्योऽन्याप्रतियोगित्व** (anyo'nyāpratiyogi-tva) *n.* the state of not having each other as counterpositive अन्योऽन्याप्रतियोगिकः संसर्गनिषेधः संसर्गाभावः ... अन्योऽन्याप्रतियोगित्वेन व्यवच्छेदोऽपि ... कथं स्यात् KhaṇḍanKhā. 353.3.

**अन्योऽन्याप्राप्यनगर** (anyo'nyāprāpya-nagara) *adj.* having the cities not reachable, i.e. detached from each other (ददृशुर्नभः) अन्योऽन्याप्राप्यनगरं नगरन्ध्रकरानिलम् YogVā.iii. 24.54.

**अन्योऽन्याबद्धपार्ष्णिक** (anyo'nyābaddhapārṣṇi-ka) *adj.* having the back of the heels touching each other, i.e. cross-legged एतद्य योगमूर्तिः स्याच्छेषं पूर्ववदाचरेत्। ऊरुमूलं समाश्रित्य अन्योऽन्याबद्धपार्ष्णिकम् ŚilpaRa.ii. 22.164.

**अन्योऽन्याबाधा** (anyo'nyābādhā) *f.* [Inst.] by way of not harming each other अन्योऽन्याबाधया तस्य पुरुषार्थत्रयीजुषः। चतुर्थोऽपि पुमर्थोऽभून्नृपतेः संगमोत्सुकः PārśvC.4.11.

**अन्योऽन्याभवन** (anyo'nyābhavana) *n.* non-existence of each other, mutual absence अन्योऽन्यं न भवतीत्यन्योऽन्याभवः तस्य भावः अन्योऽन्याभाव- ता अन्योऽन्याभवनमिति यावत् LaCandr.793.41.

**अन्योऽन्याभाव** (anyo'nyābhāva) *m.* **1Ai** mutual non-existence, mutual negetion or mutual absence ननु नान्योऽन्याभावो नाम कश्चित् यो भावानां तत्त्वं विशेषणं वा स्यात्, अर्थसिद्धिरेवैषा। न चेदन्योऽन्याभावो नाम कश्चित् सिद्धस्तर्हीभेदः BrahmSi.72.1; गवि योऽश्वाद्यभावस्तु सोऽन्योऽन्याभाव उच्यते ŚlokaVār. 5(8).3(473.6); एवमन्योऽन्याभावोऽपि यदि सोऽन्यो भेदात्; न चेत् नातिदेशः कार्यः। एवं च सति न दृग्दृश्ययोर्भेदो द्रष्टुं शक्यः नाप्यन्योऽन्याभावः IṣṭaSi.3.21; न च स्वप्रतियोगिसमानकालसमानाधिकरणोऽभावोऽन्योऽन्याभावः KhaṇḍanKhā.337.4; 326.7; तादात्म्यनिषेधः अन्योऽन्याभावः SaptaPa.115(34); कुम्भः स्तम्भो न भवतीति स्तम्भप्रतियोगिकोऽभावो यः कुम्भमाश्रितः सोऽन्योऽन्याभाव इति कथमप्रमितप्रतियोगित्वप्रसक्तिः। मैवम्। प्रतियोगिभेदाभावादन्योऽन्याभाव-संसर्गाभावयोर्भेदाभावप्रसङ्गात्। ... प्रतियोग्यनिष्ठत्वे सत्यकादाचित्कोऽभावोऽन्योऽन्याभाव इति लक्षणभेदादभावयोर्भेद इति चेन्नैवम्। यत्किंचित्प्रतियोगिनिष्ठत्वस्यान्योऽन्याभावेऽपि भावादतिव्याप्तेः TattvPradī.(Ci.)173.2; TarkSaṁ.(Ā.)12.16; VedāntKa.30.7 (*on* i.1.1); भेदश्चेत् आत्माश्रयादिप्रसङ्गात् अन्योऽन्याभावश्चेत् तेनैव तद्व्यवहारसिद्धेः गौरवात् पृथक्त्वान्तरकल्पनानवकाशात् TarkSaṁ.(Ā.)67.23; 14.13; घटत्वमेव पटादन्योऽन्याभावः ŚrutaPra.ii.260.19 (*on* ii.1.18); संयोगवदन्योऽन्याभाव-स्याव्याप्यवृत्तित्वात् TattvCin.i.385.3; तादात्म्याभावोऽन्योऽन्याभावः SarvaDaKau. 5.1; कोऽयं भेदो नाम। किं स्वरूपम्। उत पृथक्त्वम्। उतान्योऽन्याभावः। अथवा वैधर्म्यम्। न प्रथमः। ... तृतीये वक्तव्यं किमिदंरजतत्वयोरन्योऽन्याभावो नावभासते उतेदंरजतयोरिति। नाद्यः। ... किं चान्योऽन्याभावो नामान्योऽन्यस्वरूपमेव परस्य NyāySu.(Ja.)49B.10 (*on* i.1.1); इह हि दृश्यादन्योऽदृश्यः तस्य भावोऽदृश्यत्वमित्यदृश्यत्वादिशब्दैर्दृश्याद्यन्योऽन्याभावोऽभिधीयते NyāySu.(Ja.)167A.2 (*on* i.2.6); 285A.2 (*on* ii.1.4); यः कर्ता धर्मी कुलालादिर्न तस्य प्रतिषेधात्मत्वम्। यश्च प्रतिषेधात्मकोऽन्योऽन्याभावः न तस्य कर्तृत्वमित्यत आह। धर्मेति। धर्मधर्मिणोः कुलालान्योऽन्याभावयोरेकत्वतः NyāySu.(Ja.)285A.5 (*on* ii.1.4); किं मूर्तद्रव्यस्य प्रागभाव आकाशः किं वा प्रध्वंसः यद्वा अत्यन्ताभावः। अथवा अन्योऽन्याभावः NyāySu.(Ja.)432B.3 (*on* ii.3.1); ŚaṅkaVi.(Ā.)260.18; पूर्वं प्रध्वंसनान्योऽन्याभावैर्यदुपशाम्यति। न शाम्यत्येव तद्विते YogVā.iv.2.10; विशेषत्वं नाम जातिर्नास्ति ... एवमन्योऽन्याभावेनापि गतार्थता दुस्तरा NyāyPari.499.16; घटो नास्ति न भवतीत्युभयत्रापि घटस्यैव प्रतियोगित्वे अत्यन्तान्योऽन्याभावयोर्भेदो न स्यात् उभयत्रापि घटस्यैवावच्छेदकत्वेनावच्छेदक-भेदस्याप्यभावाच्च ŚaṅkaVi.(Ā.) 260.21; Upask.376.4 (*on* ix.1.4); अत्यन्ता-भावस्याव्याप्यवृत्तित्वाभ्युपगमात् अन्योऽन्याभावे तु तथाप्रतीतेरभावात् Upask.286.18 (*on* vii.1.6); अन्योऽन्याभावस्य अन्योऽन्याभावो भावत्वम् PadārthaTaNi.55.5; अभावाभावस्य भावत्वाद्घटध्वंसकाले घटध्वंसप्रागभावयोरन्योऽन्याभावस्य वक्तव्यत्वात् अभावाभावस्य भावत्वाद्घटध्वंसकाले घटः स्यादिति निरस्तम् Nyāyāmṛ. 562B.12; एकस्यैवान्योऽन्याभावस्यानन्ता-भावप्रतियोगिकतद्रूपत्वम् AṇuBh.210.19 (*on* iii.3.3); न चान्योऽन्याभावस्य व्याप्यवृत्तित्वनियमात् तत्तद्गन्धत्वाकारेणावच्छेदकेषु गन्धेषु गन्धत्वाकारेणा-वच्छेदकभिन्नत्वासंभवेऽप्यवच्छेदकत्वात्यन्ताभावस्संभवति ŚivārkaMaDī.i.142.12 (*on* i.1.3); SāṁkhyaPraBh.54.8 (*on* 1.113); घटान्योऽन्याभावत्वं घटादिभ्यः पृथग्भूते वस्तुनि नेत्यर्थः। ... तथा चान्योऽन्यं न भवतीत्यन्योऽन्याभावः LaCandr.793.40; इदमिदं नेति प्रतीतिविषयोऽन्योऽन्याभावः VedāntPari.260.1; ध्वंसो जन्यो अविनाशी च। अत्यन्ताभावान्योऽन्याभावौ त्वजन्यौ अविनाशिनौ Tarkāmṛ.15.6; प्रागभावो नाम पूर्वावस्थापरंपरा। प्रध्वंसाभावो नामोत्तरावस्थापरंपरा। अत्यन्ता-भावान्योऽन्याभावौ तु धर्म्यन्तरस्वरूपावेव YatīndraDī.36.5; तादात्म्यसंबन्धा-वच्छिन्नप्रतियोगिताकोऽन्योऽन्याभावः। यथा घटः पटो न भवति TarkSaṁ.(A.) 62.15; अत्यन्ताभावस्यैव प्रतीतेरत्यन्ताभावान्योऽन्याभावावेव नञर्थौ न संसर्गाभावत्वेन तस्य शक्तिः BhāṭṭCin.i.118.10 (*on* i.1.4); कदाचिदस्मादेव वाक्यात् पाकानुकूल-कृतिमद्भिन्नश्चैत्र इत्यन्योऽन्याभावस्यापि बोधात् BhāṭṭCin.i.119.22 (*on* i.1.4); अन्योऽन्याभावस्य प्रतियोगित्वसंबन्धेन अनुयोगित्वसंबन्धेन च अभावात् निर्भेदा LalitāSaBh.65.27 (*on* 100); अपरिच्छेद्या। देशतः परिच्छेदो ह्यत्यन्ताभाव एव। कालतस्तु ध्वंसप्रागभावौ। वस्तुतस्त्वन्योऽन्याभाव इति स्थितेः LalitāSaBh.136.17 (*on* 178); कदाचिदत्यन्ताभावस्य कदाचिदन्योऽन्याभावस्य बोधात् तत्र नियामकः

**अन्योऽन्याव्यतिरेकित्व** (anyo'nyāvyatireki-tva) *n.* the state of not being different from each other, i.e. identity with each other अन्योऽन्याव्यतिरेकित्वादैकात्म्यं प्राप्नुयात्तयोः BṛĀraUBhVā.i.6.84.

**अन्योऽन्याव्यभिचार** (anyo'nyāvyabhicāra) *m.* A absence of mutual deviation or contradiction अन्योऽन्याव्यभिचारात् चतुर्णां धर्माणां यथेष्टं विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च दर्शयितव्यः BṛĀraUBh.282.10 (*on* ii.3.2); B absence of mutual transgression or straying कन्यादानसमयेऽन्योऽन्याव्यभिचारेण सहोभौ चरतां धर्ममित्यनेन वाक्येन समयं कृत्वा यत्कन्यादानं स प्राजापत्य इति कल्पतरुप्रभृतयः VīraMi.(Saṁskāra.)852.6.

**अन्योऽन्याव्यभिचारिन्** (anyo'nyāvyabhicārin) *adj.* not transgressing or straying each other पुरुषस्य पत्न्याश्च धर्माय हि ते अन्योऽन्याव्यभिचारिलक्षणे वर्त्मनि वर्तमानयोः संयुक्तवियुक्तयोश्च धर्मान् ... वक्ष्यामि ManvaMu.364.4 (*on* 9.1)

**अन्योऽन्याशङ्कित** (anyo'nyāśaṅkita) *adj.* having fear for each other, fearing each other राजा च राजपुत्रश्च तदमात्यपुरोगमाः। अन्योऽन्याशङ्किताः सर्वे न निद्रामुपलेभिरे RājTa.(Śrī.)1(7).166.

**अन्योऽन्याश्रय** (anyo'nyāśraya) *adj.* A having mutual support अन्योऽन्याश्रयाः ... ते तथोक्ताः (गुणाः) SāṁkhyaKāBh.9.29 (*on* 12); अन्योऽन्याभिभवाश्च अन्योऽन्याश्रयाश्च अन्योऽन्यजननाश्च (गुणाः) MāṭhVṛ.21.17 (*on* 12); 22.1 (*on* 12); सत्त्वम् ... रजः ... तमः ... अन्योऽन्याश्रयाः सर्वे न तिष्ठन्ति निराश्रयाः DevīBhāP. iii.8.13; B dependent on each other, mutually dependent, interdependent अवृक्षव्यतिरेकेण वृक्षार्थग्रहणे द्वयम्। अन्योऽन्याश्रयमित्येकग्रहाभावे द्वयाग्रहः PramāVār.1.115; त्वं भक्त्या प्रीयसे भक्तिः प्रीते त्वयि च नाथ यत्। तदन्योऽन्याश्रयं युक्तं यथा वेत्थ त्वमेव तत् Stotrā.16.21.

**अन्योऽन्याश्रय** (anyo'nyāśraya) *m.* 1A fallacy of mutual dependence, interdependence अनादित्वाद्ध सर्गस्य बीजाङ्कुरवदन्योऽन्याश्रयो न दोषाय SāṁkhyaKāBh.29.28 (*on* 52); PratyabhiVi.i.66.4 (*on* i.1.3); पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः। अन्योऽन्याश्रयमाप्नोति विना शास्त्रेण साधयन् Śloka-Vār.2.247(121.5); यदि विरोधबलेनैव तदपोहमित्युच्यते ततो व्यक्तमन्योऽन्याश्रयं प्राप्नोति Śarka.69.12; एकानुव्याधवती हि प्रख्या तादृशव्यपदेशोत्पादिनी बुद्धिनिबन्धनत्वाद् व्यपदेशस्य। ततस्तु तामर्थयमानो व्यक्तमन्योऽन्याश्रयमावहति TattvBi.53.2; 65.1; NayaVi.196.5 (*on* i.1.5); याज्ञवल्क्यवचनेनागमस्य भुक्तिवशेन प्रामाण्यम् ... इति आगमवशेन भुक्तेः प्रामाण्यमित्यन्योऽन्याश्रयः स्यात् VyavaNi.132.3; अन्योऽन्यस्याव्यवहितान्योऽन्यापेक्षित्वमन्योऽन्याश्रयः Khaṇḍan-Khā.1291.14; PramāLa.1B.9; नन्वथशब्दार्थनिर्णयोऽतश्शब्दार्थनिर्णयसापेक्षः ... इत्यन्योऽन्याश्रयः ŚrutaPra.iA.12.23 (*on* i.1.1); तथा च चक्रकम् ... वेदनेच्छायां जातायामेव विविदिषेच्छा जायते, तस्यां जातायां कर्मानुष्ठानम्, ततो विविदिषेति। अत्र एकैकोभयपर्वसंकोचेनात्माश्रयान्योऽन्याश्रयावप्यन्तर्भाव्यौ ŚatDū.64.25; 172.15; प्रत्यक्षस्य साक्षात्कारित्वं लक्षणं, चाक्षुषादिज्ञाने साक्षात्करोमीत्यनुगतबुद्धेर्बाधकं विना जातिविषयत्वात्। न चेन्द्रियजन्यत्वं तथा, अन्योऽन्याश्रयात् TattvCin.i.543.4; i.5.5; नापि श्रवणमननोपासननिर्धूतभेदवासनस्य वाक्यमात्रजन्यः साक्षात्कार इति वाच्यम्, तस्यान्योऽन्याश्रयविरोधादिदुष्टत्वात् NyāySiA.216.19, 232.9; तर्को निरसनीयः। तन्निरासे च श्रुतेः सर्वमिथ्यात्वप्रतिपादकत्वमित्यन्योऽन्याश्रयमनुत्तीर्णः कथमसावपि तर्कस्य विरुद्धतां प्रतिपद्येत NyāySu.(Ja.)28A.12 (*on* i.1.1); अत एव धर्मधर्मिणोः धर्मिप्रतियोगिनोरन्येषां च प्रतीतावन्योऽन्याश्रयो निरस्तः NyāyPari.85.6; 341.1; यद्यपि द्रव्यत्वे सिद्धे क्रियावत्त्वं गुणवत्त्वं च सिध्यति तत्सिद्धौ च द्रव्यत्वसिद्धिरित्यन्योऽन्याश्रयः Upask. 86.5 (*on* ii.1.12); 150.13 (*on* iii.1.14); आत्माश्रयान्योऽन्याश्रयचक्रकानवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्षसत्त्वविपक्षासत्त्वान्यतररूपविकला एव हेत्वाभासतामापादयन्ति Upask.160.13 (*on* iii.1.17); उत्पादस्तु युगपदेव द्वयोरन्यथान्योऽन्याश्रयः स्यात् Upask.343.13 (*on* vii.2.21); अबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्वरूपमिथ्यात्वनिरूप्यत्वेनान्योऽन्याश्रयात् Nyāyāmṛ.37A.7; AdvaiSi.118.1; असत्त्वाप्रकारकप्रमाविषयत्वेनासत्त्वस्य सत्त्वनिरूप्यत्वेनान्योऽन्याश्रयात् Nyāyāmṛ.94B.6; 30A.6; 145A.8; न च संबन्धद्वित्वमेव बाधकम्। अन्योऽन्याश्रयात् Nyāyāmṛ.193A.7; 615A.11; व्यवहारापरोक्षस्य परोक्षविषयत्वरूपत्वेऽन्योऽन्याश्रयात् Nyāyāmṛ.627B.8; 644A.9; तथा हि ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञानस्यैव साधनत्वेऽवगते तच्छेषत्वे च यागादीनामवगते तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि। इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योऽन्याश्रयः AṇuBh.4.17 (*on* i.1.1); 129.5 (*on* ii.1.35); 310.18 (*on* iv.1.13); भेदनिरूपकप्रतियोगित्वादिज्ञानस्यापि भेदज्ञानाधीनतयान्योऽन्याश्रयः BhedaDhi.111.3; न चैवमुपक्रमादीनां श्रुतिलिङ्गादीनां च परस्परापेक्षणादन्योऽन्याश्रयः शङ्कनीयः ŚivārkaMaDī.i.38.18 (*on* i.1.1); i.133.16 (*on* i.1.2); तुक्यन्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वम्, असिद्धे च बहिरङ्गे ह्रस्वसद्भावात्तुक्प्राप्तिरित्यन्योऽन्याश्रयात् PāṇiTaVāNaMā.37.5; न च प्रतिबिम्बान्यथानुपपत्त्या बिम्बभूतः पुरुषः सेत्स्यति ... अन्योऽन्याश्रयात् ... असम्बन्धे च ज्ञातृतया पुरुषसिद्ध्यनन्तरं तस्य ज्ञेयत्वान्यथानुपपत्त्या प्रतिबिम्बसिद्धौ नान्योऽन्याश्रयः SāṁkhyaPraBh.49.17 (*on* 1.99); न च तदज्ञाननिवर्तकतामात्रेण तद्विषयत्वोपचारः अन्योऽन्याश्रयात् JñānBiPra.27.9; औषधपानादेरिव ... फले कालान्तरसंबन्धस्य चित्रविधिप्रामाण्यसिद्ध्युत्तरकालिकत्वेन अन्योऽन्याश्रयात् BhāṭṭDī.i.6.16 (*on* i.1.4); LaCandr.75.16; लशुनखलयोस्ताद्रूप्यसिद्धौ सत्यां लशुनरूपखलवृत्तित्वेन यशःसौरभ्ययोस्ताद्रूप्यं सिध्येत् यशःसौरभ्ययोस्ताद्रूप्यसिद्धौ च ... लशुनखलयोस्ताद्रूप्यम्, इत्यन्योऽन्याश्रयो नाशङ्कनीयः RasGaṅ.326.16; स्नानस्य प्रधानस्य प्राप्तौ तदङ्गदर्शनप्राप्तिः, तस्यां च निमित्ते सति स्नानमित्यन्योऽन्याश्रयात् NirṇaSi.53.18; YatīndraDī.14.5; LalitāSaBh.228.13 (*on* 296); वादिनोः संदेहाभावेन मध्यस्थसंदेहस्य वादिपक्षावयववाक्यप्रयोगजन्यतया तत्र पक्षतावच्छेदकज्ञानाभावेनान्योऽन्याश्रयात् BhāṭṭCin.i.6.20 (*on* i.1.2); VaiyāBhū.71.24 (*on* 21); 250.10 (*on* 66); 'हलन्त्यम्' 'आदिरन्त्येन' इत्यनयोः परस्परापेक्षत्वेनान्योऽन्याश्रयात् लकारे इत्संज्ञामबोधयित्वा हलमित्संज्ञाबोधनं पाणिने रयुक्तम् LaŚadbeŚe.i.11.15; i.12.1; i.12.28; स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं, तन्निर्णये च स्थानिवत्वाभावज्ञानमित्यन्योऽन्याश्रयस्तत्राप्रवृत्तौ मानम् LaŚabdeŚe.i. 94.10; i.12.12; i.245.13; अन्यथा डाचि द्वित्वे द्वित्वे चार्थनिकाच्त्वे डाजित्यन्योऽन्याश्रयः स्यादिति भावः LaŚabdeŚe.ii.404.8; भूवादिसूत्रे भाष्ये 'भाववचनो धातुः' इति लक्षणे, सति प्रत्यये भाववचनत्वं भाववचनाच्च प्रत्ययः इत्यन्योऽन्याश्रयमाशङ्क्यानाश्रित्य भाववचनत्वं प्रत्ययः नित्यत्वाच्छब्दानामित्युक्तम् VaiyāSiMañ. 8.22; 111.6; 224.7; चिरकालोपभोगानुपपत्तिरूपार्थापत्त्यागमसत्तावगतिः। तस्यामवगतायां तत्सहकृतभोगस्य प्रामाण्यनिश्चय इति साक्षात्प्रमाणभूतेन भोगेनागमसत्ताया अनिश्चयान्नान्योऽन्याश्रयः BālamBha. ii.41.27 (*on* 2.27); 1B support of each other दोषाः ... अन्योऽन्याश्रयमासुवन्ति विसृता व्यक्तिप्रपत्राः पुनः। ते व्याधिं जनयन्ति KalyāKā.4.9; मत्प्रसत्तेस्त्वत्प्रसादस्त्वत्प्रसादादियं पुनः। इत्यन्योऽन्याश्रयं भिन्धि प्रसीद भगवन् मयि TriṣaŚaPuC. ii.6.623; VītaRā.10.1; खशैर्गङ्गामठोपान्ताद् भीतैरुत्सवमल्लिके। विमुक्ते क्षुदभूत्कोऽपि हर्षोऽन्योऽन्याश्रयात्तयोः RājTa.(Prā.)62; 1C mutual syntactic dependence यदि विशेषेणान्वितोक्तेनान्वितो वाच्यः, तदान्योऽन्याश्रयः यद्यनुक्तेन तदा पदान्तरवैयर्थ्यम् NayaVi.265.4 (*on* i.1.25); तस्येति पदादुपस्थित्या वाक्यान्तरक्रियाप्रतिपत्तिरित्यन्योऽन्याश्रयः ŚaktiVā.121.15; करेण राजते नागः इत्यत्र करपदस्य ... शुण्डायां गजे च। न चात्रैकशब्दशक्तिनियमनमपरशब्दशक्तिनियमोऽपेक्षते येनान्योऽन्याश्रयः स्यात् RasGaṅ.154.3; 2 the word or expression *anyo'nyāśraya* (*lit.* mutual dependence) अन्योऽन्यं परस्परमित्यत्र दलद्वयेऽपि टाप् प्राप्तः। न च सर्वनाम्नो वृत्तिमात्रे इति पुंवद्भावः, अन्यपरयोरसमासवद्भावात्। ... अन्योऽन्यसंसक्तमहस्त्रियामम्, अन्योऽन्याश्रयः SiddhāKau.330A.1 (*on* vii.1.12)

**अन्योऽन्याश्रय** (anyo'nyāśraya) *n.* A mutual syntactic dependence अर्थपरत्वे ह्यर्थबोधार्हो नियोज्यः ततश्चार्थपरता इत्यन्योऽन्याश्रयम् NayaVi.24.8 (*on* i.1.1); शब्दस्य जात्यादिभिरभेदस्तुल्यनिर्देशात्, भेदस्तु श्रोत्राद्युपाधेः। एवं विश्वमेकम्। श्रोत्रादिभेदोऽपि शब्दादिधीभेदात्। अन्योऽन्याश्रयमविद्यानुगुणम् NayaVi. 177.9 (*on* i.1.5); शब्दस्य चार्थशक्तावन्वयधर्माधिक्यमात्रम्, अर्थस्य शक्त्याधिक्यं शब्दे च शक्त्याधानशक्तिरिति शक्तित्रयम्। न चान्योऽन्याश्रयम् NayaVi.267.2 (*on* i.1.25); B fallacy of mutual dependence, interdependence अन्योऽन्याश्रयं च न प्रतियोगिस्मृत्यापास्यम् NayaVi.271.9 (*on* i.1.25); न चाध्यासे सति विषयत्वं विषयत्वे चाध्यास इत्यन्योऽन्याश्रयम् Bhām.23.6 (*on* i.1.1); न चाविद्यायां सत्यां जीवात्मविभागः सति च जीवात्मविभागे तदाश्रयाविद्येत्यन्योऽन्याश्रयमिति सांप्रतम् Bhām.166.5 (*on* i.2.6); स्वेनैव स्वस्य सिद्धिर्या तदात्माश्रयदूषणम्। अनेनान्यस्ततश्चायमित्यन्योऽन्याश्रयं भवेत् MānaMe.38.2.

**अन्योऽन्याश्रयकल्पना** (anyo'nyāśraya-kalpanā) *f.* assumption of fallacy of mutual dependence तथा चित्तं निश्रित्य चैत्ताः प्रवर्तिष्यन्ते। चैत्तांश्च निश्रित्य चित्तं प्रवर्तिष्यत इति तदन्योऽन्याश्रयकल्पना निष्प्रयोजना Sphuṭā.iii.5.22 (*on* 3.3)

**अन्योऽन्याश्रयग्रस्त** (anyo'nyāśraya-grasta) *adj.* involved in the fallacy of mutual dependence न हि ज्ञानाभावमन्तरेणावस्थायां विशेषो वक्तुं शक्यः। ज्ञानसामग्रीविरहश्च ज्ञानाभावानुमेयत्वेनान्योऽन्याश्रयग्रस्तः AdvaiSi.557.10.

**अन्योऽन्याश्रयग्रस्तता** (anyo'nyāśrayagrasta-tā) *f.* the state of being involved in the fallacy of mutual dependence यद्यपि च नाप्रतिपादिताच्छब्दादर्थप्रतीतिरर्थप्रतिपत्तौ च सत्यां तदन्यथानुपपत्त्या स्फोटाभिधानस्य प्रतिपत्तिरित्यन्योऽन्याश्रयग्रस्ततया नार्थापत्तिः प्रमाणम् Kiraṇā.332.23.

**अन्योऽन्याश्रयण** (anyo'nyāśrayaṇa) *n.* A support of each other, mutual support अन्योऽन्याश्रयणं निजप्रकटितं व्यक्तिप्रभेदं तथा। यो वा वेत्ति

... । सोऽयं स्याद् भिषगुत्तमः KalyāKā.4.10; अर्थेनोपार्ज्यते धर्मो धर्मेणार्थ उपार्ज्यते। अन्योऽन्याश्रयणं ह्येतदुभयोत्पत्तिसाधनम् SabhāŚ.78; **B** fallacy of mutual dependence, interdependence तदप्रामाण्येऽनुमानप्रामाण्यं, अनुमानप्रामाण्ये तदप्रामाण्यमित्यन्योऽन्याश्रयणम् ĀgaPrā.30.14; तथा हि केनचिल्लेरितः प्रणिधाय स्मृत्वानन्तरमेव प्रतिवदति स्मृतमद्य मयेति न चायमेव व्याहारस्तत्र लिङ्गं तत्पूर्वकत्वादन्योऽन्याश्रयणापत्तेश्च ĀtmaSi.18.13; किं चासौ कस्य जीवस्य को जीवो यस्य सेति चेत्। नन्वेवमसमाधानमन्योऽन्याश्रयणं भवेत् SaṁviSi.89.24; किं च जात्यादिधर्मविशिष्टवस्तुग्रहणे सति भेदग्रहणं भेदग्रहणे सति जात्यादिधर्मविशिष्टवस्तुग्रहणमित्यन्योऽन्याश्रयणम् BrahmSūBh.(Rā.) 23.4 (*on* i.1.1); संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि संभवत्येव। अत एव नानवस्थान्योऽन्याश्रयणं च BrahmāSūBh.(Rā.). 31.11 (*on* i.1.1); 54.10 (*on* i.1.1); 89.16 (*on* i.1.1); 133.15 (*on* i.1.2); भेदज्ञानस्य भ्रमत्वेन तज्जन्यवासनाया दोषत्वं निश्चीयत इति चेन्न, अन्योऽन्याश्रयणात् NītiMā. 17.7(3); वेदनेच्छया इच्छासिद्धयर्थकर्मानुष्ठानं इच्छासिद्धयर्थकर्मानुष्ठानाद्वेदनेच्छासिद्धिरित्यन्योऽन्याश्रयणं वा ŚrutaPra.1A.62.24 (*on* i.1.1); एवं प्रमाणान्तरेण दोषत्वानिश्चयेन अन्योऽन्याश्रयणापत्तिरूपवैषम्यमुक्तम् ŚrutaPra. 1A.175.19 (*on* i.1.1); प्रागपि कथं तदवस्थाने प्रत्यक्षोदयः अन्योऽन्याश्रयणात् ŚatDū.70.7; न च ग्राहकभेदाद्ग्राह्यभेद इव, अन्योऽन्याश्रयणात् NyāySiA.188.4; पारिमाण्डल्यविवक्षया अणुशब्दप्रयोगे अन्योऽन्याश्रयणात् NyāySiA.191.29; सिद्धे संबन्धे व्याप्यव्यापकधीर्व्यापकप्रतीतौ च संबन्धधीरित्यन्योऽन्याश्रयणात् NyāyPari.131.1(2.1); **C** mutual syntactic dependence न संस्कारवाक्येष्वन्योऽन्याश्रयणप्रसक्तिः MayūMāli.75.25 (*on* i.4.8)

**अन्योऽन्याश्रयणापत्ति** (anyo'nyāśrayaṇāpatti) *f.* undesired contingency of the fallacy of mutual dependence सकर्मकान्यत्वस्यापि तत्त्वेऽन्योऽन्याश्रयणापत्त्या लः कर्मणीत्यादेर्बोधकत्वानापत्तेश्च VaiyāBhū.31.4 (1.5)

**अन्योऽन्याश्रयतस्** (anyo'nyāśraya-tas) *adv.* due to the fallacy of mutual dependence प्रोक्षणीः संस्कृतिर्जातियोगो वा ... अन्योऽन्याश्रयतो नाद्यः NyāyMāVi.50.12 (*on* i.4.9)

**अन्योऽन्याश्रयता** (anyo'nyāśraya-tā) *f.* **1A** the state of being mutually dependent, i.e. fallacy of mutual dependence तैश्च तद्बोधतोऽवश्यमन्योऽन्याश्रयता भवेत् ŚlokaVār.5(7).28(457.4); अन्योऽन्याश्रयता च स्यान्न च कार्यप्रधानता BṛĀraUBhVā.(Sambandha.)616; घटाभावे घटः सिध्येत्पटाभावे पटस्तथा। अन्योऽन्याभावदृष्टेः स्यादन्योऽन्याश्रयता तव BṛĀraUBhVā. (Sambandha.)959; अहंबुद्धयेक्ष्यते प्रत्यक्प्रतीचा चाप्यहंमतिः। अन्योऽन्याश्रयता दोषः स्यादहंवृत्तिवीक्षणे BṛĀraUBhVā.i.4.1526; अन्योऽन्याश्रयता तथा स्यात् आगमानु-मानयोः प्रवृत्तौ तन्मिथ्यात्वं तन्मिथ्यात्वे तयोः प्रवृत्तिः PañcPā.15.18; न हि स्वरूपदृष्टिः प्रतियोग्यपेक्षा, अन्यथा प्रतियोगिनोऽपि प्रतियोग्यपेक्षत्वात् भेददृष्टेरनवस्था अन्योऽन्याश्रयता वेति न किंचिद् दृश्यते IṣṭaSi.3.8; नैवममिथ्यात्वप्रमाणत्व-तुल्यबलताबाध्यत्वानां अन्योऽन्याश्रयता IṣṭaSi.103.20; 319.2; अज्ञानस्य च मिथ्यात्वमज्ञानादितिकल्पने। अनवस्थितिस्तथा च स्यादन्योऽन्याश्रयतायवा AnuVyā. 2B.5 (*on* i.1.1); नाज्ञानकल्पकं किंचिदन्योऽन्याश्रयता यतः AnuVyā. 16A.8 (*on* i.1.4); अतोऽन्योऽन्याश्रयतानवस्थितिश्चक्रकं वा KarmaNi. 2A.3; न च स्नेहादि तद्युक्तं घृतादौ व्यभिचारतः। प्रतीतेरपि मुख्यत्वमन्योऽन्याश्रयतान्यथा TarkSaṁ.(Ā.)36.15; अपि चोभयप्रतिक्षेपाविरोधे पक्षान्तरसिद्धिः। पक्षान्तरसिद्ध्या चोभयप्रतिक्षेपा(वि?)वरोध इत्यन्योऽन्याश्रयता NyāyKu.62.12; शरीराव्याप्तस्य कर्तुरनुमानात्सिद्धिः, सिद्धस्य चाव्याप्तत्वमित्यन्योऽन्याश्रयता NyāyKu.90.9; सामानाधिकरण्यस्य निर्विशेषपरत्वे सिद्धे तदर्थतया अनेकपदप्रयोगसाफल्यम् तत्साफल्ये च सति सामानाधिकरण्यस्य निर्विशेषपरत्वसिद्धिरित्यन्योऽन्याश्रयता ŚatDū.165.29; बहवो जीवाः संसाराज्ञानभागिनः। अनादित्वादविद्याया अन्योऽन्याश्रयता न हि SarvaSiSaṁ.12.78; काम्यत्वे हि वेदाध्ययनस्यान्योऽन्याश्रयता अर्थावबोधे सति कामना, कामनायां सत्यां षडङ्गोपेतवेदाध्ययनप्रवृत्तस्यार्थावबोध इति VivaPraSaṁ.1.10; न केवलं प्रपञ्चः किं तु जीवब्रह्मणोर्भेदोऽपि स्यात् ... कथमन्योऽन्याश्रयतेत्युक्तम् NyāySu.(Ja.)206B.8 (*on* i.4.6); न चोपाधिव्याप्त्योर्निरूपणेऽन्योऽन्याश्रयता NyāyPari.110.5; व्याप्तिसिद्धौ उपाधिसिद्धिः उपाधिसिद्धौ निरुपाधिकसंबन्धरूपव्याप्तिसिद्धिरित्यन्योऽन्याश्रयता स्यात् SarvaDaKau.42.25; न हि मन्त्रत्वं नाम ... उपाधिः, स हि यदि मन्त्रपदवाच्यत्वप्रकारकप्रसिद्धिविषयत्वाख्यः, ततोऽन्योऽन्याश्रयता MīmāKau.iii(2).108.8 (*on* ii.1.33); घटादौ पटत्वेन घटाद्यभावीयप्रतियोगितायाः ... अभावीयाः घटादौ सिद्धत्वात् ... स्वाश्रयसमानाधिकरणात्यन्ताभावीयपारमार्थिकत्वावच्छिन्नप्रतियोगित्यादिकं वाच्यमिति भवत्यन्योऽन्याश्रयता GuruCandr.i.60.24; **[Inst.]** by way of being the fallacy of mutual dependence विशेषणविशेष्यभावश्च भेदापेक्षः धर्मिप्रतियोग्यपेक्षया भेदसिद्धिः भेदापेक्षं च धर्मिप्रतियोगित्वम् इत्यन्योऽन्याश्रयतया भेदस्यायुक्तिः ViṣṇuTaNi.6B.3; मिलितानेकतः समुदायः समुदाये सति मिलितत्वम् इति अन्योऽन्याश्रयतया समुदायानुपपत्तेः TattvPrakā.100B.6 (*on* ii.2.18); **1B** the state of being mutually supportive, i.e. mutual support नागुमात्रमपि ज्ञातुं शक्यते त्रिदशैरपि। भिन्नाभिन्ने जगत्यस्मिन्नन्योऽन्याश्रयता यतः IṣṭaSi.319.2; **2** the word *anyo'nyāśrayatā* अत्रान्योऽन्याश्रयताशब्देन चक्रकमुच्यते। तस्यापि बहुष्वन्योऽन्याश्रयत्वात् NyāySu. (Ja.).206B.8 (*on* i.4.6)

**अन्योऽन्याश्रयतादवस्थ्य** (anyo'nyāśraya-tādavasthya) *n.* the state of remaining in the same condition of mutual dependence तत्सिद्धयधीनसिद्धित्वेन अन्योऽन्याश्रयतादवस्थ्यात् TarkSaṁ.(Ā.)114.28; अन्योऽन्यधर्मभेदज्ञाने च विशिष्य स्तम्भात् कुम्भस्य भेदप्रतीतौ कुम्भात् स्तम्भस्य भेदधीरिति अन्योऽन्याश्रयतादवस्थ्यात् AdvaiSi.802.8.

**अन्योऽन्याश्रयतादि** (anyo'nyāśrayatādi) *adj.* fallacy of mutual dependence etc. अतोऽविद्यास्तु जीवानां कल्पितास्तेऽप्यविद्यया। नान्योऽन्याश्रयतादिश्च दोषोऽस्यां स हि वस्तुनि IṣṭaSi.324.7; न हि व्यवहारदशायामेव अन्योऽन्याश्रयतादिग्रस्तं भेदं साधयतः अनुमानादेः अस्ति मानत्वम् TarkSaṁ.(Ā)140.12.

**अन्योऽन्याश्रयतादोष** (anyo'nyāśrayatā-doṣa) *m.* fallacy of mutual dependence अन्योऽन्याश्रयतादोषः कार्यप्रामाण्यवादिनः। प्रमाणाधिगतौ सत्यां पुंसो मेयानुरोधतः। अनुष्ठेयोऽननुष्ठेय इति पश्चान्मतिर्भवेत् BṛĀraUBhVā.i.3.75; अतोऽभ्युपेयोऽज्ञातोऽर्थः प्रमाणत्वप्रसिद्धये। ... न च प्रमाणतः सिद्धिरज्ञाततस्य शक्यते। अन्योऽन्याश्रयतादोषः सत्येवं प्रसजेद्यतः BṛĀraUBhVā.iv.3.547; अन्योऽन्याश्रयतादोषापादितत्वात्तेश्च सक्तितः। परत्रेत्यादिना नास्य विपर्यासस्य लक्षणम् TarkSaṁ.(Ā.)81.12.

**अन्योऽन्याश्रयतापत्ति** (anyo'nyāśrayatāpatti) *f.* undesired contingency of the fallacy of mutual dependence न च ज्ञानाभावेन तस्यानुमानम्। अन्योऽन्याश्रयतापत्तेः सामग्र्यभावाज्ञानाभावानुमानं तदभावाच्च सामग्र्यभावानुमानमिति TattvPradī.(Ci.)59.6; सामान्यवानगुण इत्याद्यप्यस्य न लक्षणम्। अन्योऽन्याश्रयतापत्तेर्गुणस्याद्याप्यसिद्धितः TattvPradī.(Ci.)183.2.

**अन्योऽन्याश्रयताभाव** (anyo'nyāśrayatābhāva) *m.* absence of the fallacy of mutual dependence प्रपञ्चेऽपि तर्हि प्रामाणिकत्वाद्वा भावस्तद्वत् इति चेत् सिद्धसाध्यत्वतो मैवं व्यभिचारादनन्वयात्। अन्योऽन्याश्रयताभावाद्विभागस्योपलम्भनात् TarkSaṁ.(Ā.)7.20.

**अन्योऽन्याश्रयतासाम्य** (anyo'nyāśrayatā-sāmya) *n.* sameness or similarity with the fallacy of mutual dependence अन्योऽन्याश्रयतासाम्याद्वेषोऽपि न निरूप्यते TarkSaṁ.(Ā.)112.17.

**अन्योऽन्याश्रयतास्वरूप** (anyo'nyāśrayatā-svarūpa) *n.* **[Inst.]** in the form of the fallacy of mutual dependence लक्ष्यसिद्धौ च तत्सजातीयविजातीयसिद्धिः, तत्सिद्धौ तद्व्यवच्छिन्नलक्ष्यसिद्धिः इत्यन्योऽन्याश्रयतास्वरूपेण लक्ष्यसिद्धेः न TarkSaṁ.(Ā.)26.4.

**अन्योऽन्याश्रयताहति** (anyo'nyāśrayatā-hati) *f.* loss of the fallacy of mutual dependence जातेरुपाधितो भङ्गादन्योऽन्याश्रयताहतेः TarkSaṁ.(Ā.)58.8.

**अन्योऽन्याश्रयतुल्यत्व** (anyo'nyāśraya-tulyatva) *n.* equality or similarity with the fallacy of mutual dependence चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेन तस्याप्रामाण्यदर्शनात् तेनापि स्वप्रामाण्यसिद्ध्यर्थमितरविरोधस्यावश्यमपेक्षणीयत्वात् तथा चान्योऽन्याश्रयतुल्यत्वात् AdvaiSi.355.7.

**अन्योऽन्याश्रयत्व** (anyo'nyāśraya-tva) *n.* **A** the state of being mutually supportive, i.e. mutual support (भक्तेः) तस्या ज्ञानमेव साधनमित्येके। अन्योऽन्याश्रयत्वमित्यन्ये BhaktiSū.(Nā.)2.29; **B** the state of being mutually dependent, i.e. the fallacy of mutual dependence तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् SāṁkhyaPraSū.5.14; गमकत्वाद्य धर्मत्वं धर्मत्वाद्गमको यदि। स्यादन्योऽन्याश्रयत्वं हि तस्मात्रापि कल्पना ŚlokaVār.5(5).77(426.2); वाक्यैरेव त्वसंबद्धैः संबन्धो न प्रकल्प्यते। अतोऽन्योऽन्याश्रयत्वं स्यात् एकमूलप्रसिद्धितः ŚlokaVār.7.84(869.4); भेदासिद्धौ व्यवस्थासिद्धेः भेदव्यवस्थावैलक्षण्यानां च अन्योऽन्याश्रयत्वाच्चक्रकत्वापि सिद्धिः IṣṭaSi.17.10; रूप्यादिर्नार्थो भ्रान्तिदृष्टत्वादिति चेत् न रूप्यादितद्दृष्टयोरनर्थत्वभ्रान्तित्वयोरन्योऽन्याश्रयत्वात् IṣṭaSi.202.22; अनादित्वाच्च नान्योऽन्याश्रयत्वम् चक्रकं वा बीजांकुरसंतानयोरिव TātpaṬ.(Vā.) 92.10(*on* i.1.1) तत्रोत्पत्तिलक्षणमन्योऽन्याश्रयत्वात्र निश्चयकारि AbhinBhā. i.299.18 (*on* 6.45); विशेषज्ञानं भेदज्ञानं च अन्योऽन्याश्रयत्वान्नाल्पमुत्पत्तुम् NyāyRa.171.13 (*on* 4.117); चक्षुर्मात्रग्राह्यं रूपमित्यन्योऽन्याश्रयत्वम् Lakṣaṇā.8.17; समुदायस्य ... उभयहेतुकेऽप्यन्योऽन्याश्रयत्वात्तदप्राप्तिः BrahmSūBh.(Ma.)30A.1 (*on* ii.2.18); अतोऽन्योऽन्याश्रयत्वेन समुदायो न युज्यते AnuVyā.29A.1 (*on* 2.2) अज्ञानसिद्धौ प्रमसिद्धिः तत्सिद्धावज्ञानसिद्धिरित्यन्योऽन्याश्रयत्वात् ViṣṇuTaNi.16A.5; द्वित्वासिद्धौ द्रव्यद्वयस्य समवायित्वायोगादन्योऽन्याश्रयत्वात् TarkSaṁ.(Ā.)3.9; अयाज्ञान-

विशेषनिराशकवृत्तिभेदजननादर्थवत्तेति मतम्, तन्न अन्योऽन्याश्रयत्वात् NyāyKu.73.7; अनुमानत्वमौपाधिकेऽपि भेदे पर्यवस्यतीति चेन्न, अन्योऽन्याश्रयत्वात् NyāyKu.123.9; ननु विशुद्धमातापितृसंततिजत्वं नाम ब्राह्मणजातीयमातापितृजत्वमेव तथा चापदेशे ज्ञप्तिप्रतिबन्धकमन्योऽन्याश्रयत्वमापद्यते CaturCin.iii(1).343.3; अथैहैव तन्निश्चयः। तदा प्रवृत्तौ प्रयोजनादिनिश्चयो निश्चिते च प्रयोजनादौ प्रवृत्तिरित्यन्योऽन्याश्रयत्वम् NyāySu.(Ja.)10B.12 (*on* i.1.1); यद्यन्यत्वं क्वापि न गृहीतं तदान्योऽन्याश्रयत्वापादनमेव न शक्यम् NyāySu.(Ja.)408B.12(*on* ii.2.8); अविद्यया विना न सृष्टिः, सृष्ट्या विना नाविद्येत्यन्योऽन्याश्रयत्वम् SāṁkhyaSūVṛ.185.2 (*on* 5.14); निष्ठासंज्ञायां क्तक्तवत्वोः सिद्धिस्तत्सिद्धौ च निष्ठासंज्ञा। असिद्धयोः संज्ञाभावादित्यन्योऽन्याश्रयत्वम् Prasā.ii.548.17; अविद्यायोगादविद्यासिद्धौ चान्योऽन्याश्रयत्वमात्माश्रयत्वम् SāṁkhyaPraBh.119.36 (*on* 5.14); LaCandr.334.31.

**अन्योऽन्याश्रयत्वदोष** (anyo'nyāśrayatva-doṣa) *m*. fallacy of mutual dependence अस्त्येवान्योऽन्याश्रयत्वदोषोऽपि वो भेदाभावयोः IṣṭaSi.296.15; ननु लक्षणान्तरेण व्यवस्थिते लक्ष्ये कथमन्योऽन्याश्रयत्वमित्यत आह। अगतिर्वेति। तद्धि लक्ष्यसापेक्षमनपेक्षं वा। आद्ये अन्योऽन्याश्रयत्वदोषादेवागतिः NyāyVār-Pari.514.14.

**अन्योऽन्याश्रयत्वप्रसङ्ग** (anyo'nyāśrayatva-prasaṅga) *m*. undesired occasion of the fallacy of mutual dependence नापि व्याकरणस्मृतिर्नियामिका। तस्या निर्मूलत्वेनाप्रमाणत्वात्। न ह्यभियुक्तप्रयोगस्तन्मूलम्। अन्योऽन्याश्रयत्वप्रसङ्गात् NyāyMāVi.36.20 (*on* i.3.9); न द्वितीयः। अन्योऽन्याश्रयत्वप्रसङ्गात् NyāyMāVi.601.19 (*on* x.8.2); मैवम्। अन्योऽन्याश्रयत्वप्रसङ्गात् NyāyMāVi.700.3 (*on* xii.4.5)

**अन्योऽन्याश्रयत्वशङ्का** (anyo'nyāśrayatva-śaṅkā) *f*. doubt regarding the fallacy of mutual dependence अनादित्वे तु नान्योऽन्याश्रयत्वशङ्का GuruCandr.ii. 167.12.

**अन्योऽन्याश्रयत्वादिदोष** (anyo'nyāśrayatvādi-doṣa) *m*. fallacy of mutual dependence etc. उपाधिमिथ्यात्वाङ्गीकारे चान्योऽन्याश्रयत्वादिदोषा उक्ताः ViṣṇuTaNi.17A.10.

**अन्योऽन्याश्रयत्वापत्ति** (anyo'nyāśrayatvāpatti) *f*. undesired occasion of the fallacy of mutual dependence औदुम्बरत्वादेः प्राप्त्यभावाद् विध्येकवाक्यत्वं च विनार्थवादत्वायोगादर्थवादाद्य विधिकल्पनेऽन्योऽन्याश्रयत्वापत्तेः NyāySu.(So.) 73.23 (*on* i.2.19)

**अन्योऽन्याश्रयत्वापादन** (anyo'nyāśrayatvāpādana) *n*. undesired occasion of the fallacy of mutual dependence यद्यन्यत्वं क्वापि न गृहीतं तदान्योऽन्याश्रयत्वापादनमेव न शक्यम् NyāySu.(Ja.) 408B.12 (*on* ii.2.8)

**अन्योऽन्याश्रयदुःस्थ** (anyo'nyāśraya-dusstha) *adj*. unsteady due to interdependence अन्योऽन्याश्रयदुःस्थोऽयमभिषेकोऽस्य भाति नः ŚivLī.14.61.

**अन्योऽन्याश्रयदुष्टत्व** (anyo'nyāśrayaduṣṭa-tva) *n*. the state of being defective due to the fallacy of mutual dependence गुणत्वजातियोगोऽपि न भवेद्गुणलक्षणम्। अन्योऽन्याश्रयदुष्टत्वात् जातेस्तद्व्यञ्जकस्य च TattvPradī.(Ci.) 184.4.

**अन्योऽन्याश्रयदूषण** (anyo'nyāśraya-dūṣaṇa) *n*. fallacy of mutual dependence अनित्यागमपक्षे स्यादन्योऽन्याश्रयदूषणम् SarvaSiSaṁ.8.22.

**अन्योऽन्याश्रयदोष** (anyo'nyāśraya-doṣa) *m*. A fallacy of mutual dependence न ह्यन्यग्रहणं वस्तु भिन्नं वित्तावपेक्षते। अन्योऽन्याश्रयदोषोऽयं तस्मादस्मिन्निरास्पदः TattvSaṁ.1065; जीवाश्रयाविद्येति चान्योऽन्याश्रयदोषपराहतम् NyāyKa.87.16; अनादित्वाद्य बीजाङ्कुरवन्नान्योऽन्याश्रयदोषभावः SāṁkhyaTaKau. 450.1 (*on* 52); विशेष्यवाचिनोऽनेकार्थस्य तु तन्निबन्धनभावोपगमे अन्योऽन्याश्रयदोषः VyaktiVi.120.8; न च अप्रत्यक्षोपलम्भस्यार्थदृष्टिः तस्याप्यनुपलब्धस्य प्रस्तुतोपलम्भप्रत्यक्षीकाराभावात्। उपलम्भान्तरसंभावने चानवस्था। अर्थोपलम्भात् तस्योपलम्भे अन्योऽन्याश्रयदोषः PramāMī.3.19 (*on* i.1.2); SyādvāMañ.12(46); ननु स्वतन्त्रसत्तानिरूप्यं परतन्त्रसत्त्वम्, तन्निरूप्यं च स्वतन्त्रसत्त्वमित्यन्योऽन्याश्रयदोषापत्तिरिति चेन्न VedāntRaMañ.92.23; अथातश्शब्दयोरर्थविशेषप्रत्यये नान्योऽन्याश्रयदोष इति चेत् मैवम् SiddhāSi.i.10.15; तेन अनवस्थान्योऽन्याश्रयदोषोऽपि नास्ति। ... परस्परापेक्षान्योऽन्याश्रयः YatīndraDī.14.5; **B** fault of mutual syntactic dependence तत्त्वपक्षे वर्णेभ्योऽर्थधीतः संस्कारैः संभूय स्मृतिः; ततो वर्णेभ्योऽर्थधीरित्यन्योऽन्याश्रयदोषः NayaVi.178.1 (*on* i.1.5)

**अन्योऽन्याश्रयदोषतस्** (anyo'nyāśrayadoṣa-tas) *adv*. on account of the fallacy of mutual dependence न विधिदर्शनेऽपि स्यादन्योऽन्याश्रयदोषतः। दर्शनाद्विधिसंसिद्धेर्विर्त्तेर्दर्शनसिद्धितः BṛĀraUBhVā.(Sambandha.)656.

**अन्योऽन्याश्रयनिरूप्यता** (anyo'nyāśrayanirūpya-tā) *f*. the state of being described by interdependence परत्वापरत्वयोरन्योऽन्याश्रयनिरूप्यतया दिक्काललिङ्गत्वाविशेषसूचनाय च द्विवचनम् Upask.21.16 (*on* i.1.6)

**अन्योऽन्याश्रयपरिहार** (anyo'nyāśraya-parihāra) *m*. resolving removal of the fallacy of mutual dependence अनयोर्हेतुहेतुमद्भावेऽन्योऽन्याश्रयपरिहाराय अनादिशब्दः ŚrutaPra. iA.85.27 (*on* i.1.1); न च अन्योऽन्याश्रयपरिहारो विनिगमकः इति वाच्यम् LaCandr.802.33.

**अन्योऽन्याश्रयप्रसङ्ग** (anyo'nyāśraya-prasaṅga) *m*. undesired occasion of the fallacy of mutual dependence विषयकृतस्य तु तस्य भेदकत्वेऽन्योऽन्याश्रयप्रसङ्गात् ĀtmaTaVi.45.5; अन्यथा अन्योऽन्याश्रयप्रसङ्गात्। शरीरादिनिवृत्तौ अनुपप्लवः चित्तस्य अनुपप्लवे च तस्मिन् शरीरादिनिवृत्तिः Kiraṇā.7.8; साक्षात्कारित्वावगममन्तरेण तदवगमानुपपत्तेः तदवगमाच्चास्य प्रतीतावन्योऽन्याश्रयप्रसङ्गः KhaṇḍanKhā.539.23; नन्वेतदनुपपन्नम्। अन्योऽन्याश्रयप्रसङ्गात् Subodhi.17.17 (*on* 2.27); अपेक्षितसत्तासद्भावे किं मानम् ... एवमन्योऽन्याश्रयप्रसङ्गः BālamBha. ii.41.24 (*on* 2.27)

**अन्योऽन्याश्रयविग्रह** (anyo'nyāśraya-vigraha) *adj*. having interdependent bodies प्रकृतिः पुरुषश्चोभावन्योऽन्याश्रयविग्रहौ। द्विधा भिन्नौ प्रकाशेते BrahmāṇḍP.ii.42.47.

**अन्योऽन्याश्रयवृत्ति** (anyo'nyāśraya-vṛtti) *adj*. existing in mutual support अन्योऽन्याश्रयवृत्तयः (गुणाः) परस्परम् आश्रयक्रियावन्तः SāṁkhyaTaKau.271.22 (*on* 12); वृत्तिः क्रिया ... अन्योऽन्याश्रयवृत्तयः (गुणाः) यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः SāṁkhyaTaKau.275.6 (*on* 12); अन्योऽन्याश्रयवृत्तयः (गुणाः)। यथाहुः सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति SāṁkhyaTaPra.165.14.

**अन्योऽन्याश्रयशक्तितस्** (anyo'nyāśrayaśakti-tas) *adv*. on the strength of mutual support विशेषणस्य वैफल्यादन्योऽन्याश्रयशक्तितः TarkSaṁ.(Ā.)56.10.

**अन्योऽन्याश्रयशङ्का** (anyo'nyāśraya-śaṅkā) *f*. A doubt regarding mutual support उत्पत्तिलक्षणा(णे) ह्यन्योऽन्याश्रयशङ्का ... इति स्फुटं निश्चयदर्शनोपायत्वमुत्पत्त्यादीनां न संभवति AbhinBhā.i.295.9 (*on* 6.38); **B** doubt regarding the fallacy of mutual dependence अतोऽत्र नान्योऽन्याश्रयशङ्कापि अपेक्षानियमाभावात् ŚatDū.92.10; सत्त्वानन्दत्वादिसामान्यधर्मस्यानादिसंसर्ग एव ब्रह्मणि स्वीक्रियते इति नान्योऽन्याश्रयशङ्का LaCandr.495.30.

**अन्योऽन्याश्रयसंश्रय** (anyo'nyāśraya-saṁśraya) *m*. [Abl.] due to connection with the fallacy of mutual dependence अर्थापत्तिरपि ... अन्योऽन्याश्रयसंश्रयान्न हेतुभेदावभासे मानभावं भजते NyāyMa.55.1.

**अन्योऽन्याश्रयसक्तितस्** (anyo'nyāśrayasakti-tas) *adv*. on account of the contingency of mutual dependence अतिप्रसङ्गादेकत्वा(द)न्योऽन्याश्रयसक्तितः। प्रमितेस्तत्र चासत्त्वात् कुतो धीरनवस्थिता TarkSaṁ.(Ā.)77.29.

**अन्योऽन्याश्रयादि** (anyo'nyāśrayādi) *adj*. fallacy of mutual dependence etc. न च प्रमेयत्वाभिधेयत्वादावन्योऽन्यवृत्तिवदिहान्योऽन्यापेक्षा प्रमिता अन्यथा अन्योऽन्याश्रयादिः क्वापि दोषो न स्यात् Nyāyāmṛ.352B.5.

**अन्योऽन्याश्रयादिक** (anyo'nyāśrayādi-ka) *adj*. fallacy of mutual dependence etc. अस्तु नाम व्यवस्थाज्ञापकत्वेऽन्योऽन्याश्रयादिकं कारकहेतुत्वे तु न तस्य प्रसङ्गः CaturCin. iii (1).343.10; यदि भेददर्शनं स्यात्तर्ह्यन्योऽन्याश्रयादिकं स्यात् Nyāyāmṛ.547B.5.

**अन्योऽन्याश्रयादिदुष्ट** (anyo'nyāśrayādi-duṣṭa) *adj*. faulty or defective due to the fallacy of mutual dependence etc. न ह्यन्योऽन्याश्रयादिदुष्टस्य व्यावहारिकतापि दृष्टचरी Nyāyāmṛ.547A.7.

**अन्योऽन्याश्रयादिदोष** (anyo'nyāśrayādi-doṣa) *m*. fallacy of mutual dependence etc. न चान्योऽन्याश्रयादिदोषः SarvaDaSaṁ.3.150; चिन्मात्रमेवाविद्याविषयः तस्याकल्पितत्वेन अन्योऽन्याश्रयादिदोषाप्रसक्तेः AdvaiSi.586.1.

**अन्योऽन्याश्रयाद्यधीना** (anyo'nyāśrayādy-adhīnā) *adj*. (*f*.) dependent on the fallacy of mutual dependence etc. अन्योऽन्याश्रयाद्यधीनाया भेदासिद्धेरापादनम् LaCandr.790.21.

**अन्योऽन्याश्रयाद्यापात** (anyo'nyāśrayādy-āpāta) *m*. undesired contigency of the fallacy of mutual dependence etc. युगपत्प्रतीतयोर्धर्मिप्रतियोगिभावेन भेदप्रतीत्युपपत्तेरपि नान्योऽन्याश्रयाद्यापातः Vādā.131.2.

**अन्योऽन्याश्रयाद्यापादन** (anyo'nyāśrayādy-āpādana) *n*. act of imposition of fallacy of mutual dependence etc. न हि व्यावहारिकमृदः स्वजन्यघटसापेक्षत्वम्। किं चात्र न भेदमात्रेण तद्दर्शनमात्रेण वा अन्योऽन्याश्रयाद्यापादनम् AdvaiSi.790.2.

**अन्योऽन्याश्रयानवकाश** (anyo'nyāśrayānavakāśa) *m*. absence of the scope for or occasion of the fallacy of mutual dependence व्यभिचारसंश्रयस्याप्रयोजकत्वेनान्योऽन्याश्रयानवकाशात् GuruCandr.i.70.23; अज्ञानतदुपहितयोस्तद्गोचर-

साक्षिणोश्च अनादित्वेनोत्पत्तिज्ञप्त्योरन्योऽन्याश्रयानवकाशात् GuruCandr.i.134.22; विशिष्यतासंबन्धेन तदवच्छिन्नस्य प्रतियोगित्वस्य निवेशे अन्योऽन्याश्रयानवकाशः LaCandr. 119.4; प्रतिपत्तेः पूर्वमपि तादृशवक्तृबुद्धेर्ग्रहसंभवेनान्योऽन्याश्रयानवकाशात् ŚaktiVā. 121.18; मन्त्रस्य लिङ्गात् स्तरणे विनियोगसंभवेन अन्योऽन्याश्रयानवकाशात् MayūMāli.75.23 (*on* i.4.8)

**अन्योऽन्याश्रयानवस्थायापात** (anyo'nyāśrayānavasthādy-āpāta) *m.* undesired contingency of the fallacy of mutual dependence and *ad infinitum* ब्राह्मणत्वस्य व्यवस्थाज्ञानाभावात्तथाभूतस्य व्यवस्थाज्ञानसाधनत्वासंभवादन्योऽन्यात्माश्रयानवस्थाद्यापातः CaturCin.iii(1).343.9.

**अन्योऽन्याश्रयापत्ति** (anyo'nyāśrayāpatti) *f.* A undesired contingency of the fallacy of mutual dependence ननु तथाप्यसावस्त्वेव इतरथान्योऽन्याश्रयापत्तेः NyāyKu.145.3; लक्षणया एकवाक्यत्वकल्पने अन्योऽन्याश्रयापत्तेरितिभावः NyāySu.(So.)4.26 (*on* i.2.1); तद्ग्रहणाद्योद्धारणार्थतेत्यन्योऽन्याश्रयापत्तेर्न प्रकरणपाठमात्रेण विनियोगो युक्तः NyāySu.(So.)20.5 (*on* i.2.6); नन्वनुग्रहस्यान्योपायसापेक्षत्वं न वा। नाद्यः। अप्रधानतापत्तेः। अन्योऽन्याश्रयापत्तेश्च VedāntRaMañ.21.17; न च विश्वमिथ्यात्वात्परमार्थसत्त्वमपि न विश्वसाधारणम्, ज्ञानत्वानन्दत्वादिवदिति वाच्यम् अन्योऽन्याश्रयापत्तेः इति चेत् अयुक्तमेतत् AdvaiSi.404.5; अश्वप्रतिग्रहेष्ट्यधिकरणेऽपि न पूर्वाधिकरणसिद्धकर्माङ्गत्ववशेन दातुरिष्टिरिति निर्णयः अन्योऽन्याश्रयापत्तेः UpaParā.15.20; न ... प्रयोगभेदकत्वमन्योऽन्याश्रयापत्तेः। सति हि प्रयोगविधौ विशिष्टविधिसंदष्टता यस्यां च विधेयत्वात् प्रयोगविधिः MīmāKau. iii(2).280.20 (*on* ii.2.26); वेदान्तेषु ... तेषु तदधिगमोपगमे च प्रवृत्तस्य तदधिगमस्तदधिगमे च मुमुक्षोः प्रवृत्तिरित्यन्योऽन्याश्रयापत्तेः SiddhāSi. i.32.21; न चैकार्थबोधहेतुत्वेनैकत्वम्। तेनैकत्वमेकत्वेन चैकार्थधीहेतुतेत्यन्योऽन्याश्रयापत्तेः VaiyāSiMañ.224.2; B undesired contingency of mutual syntactic dependence 'नारायणाद् ब्रह्मा जायते' इत्यस्य प्रापकत्वमुपपद्यत इति चेन्न। अन्योऽन्याश्रयापत्तेः। रुद्रशब्दस्य नारायणे लक्षणसिद्धौ हि तस्य प्रापकतोपपत्त्यास्य तदनुवादत्वं सिद्ध्यति सिद्धे च तदनुवादत्वे लक्षणाकल्पनमिति ŚivārkaMaDī. i.329.26 (*on* i.2.8); रामपदस्याभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम् तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येत्यन्योऽन्याश्रयापत्तेः RasGaṅ.150.13.

**अन्योऽन्याश्रयापात** (anyo'nyāśrayāpāta) *m.* undesired contingency of the fallacy of mutual dependence न खल्वनलीकत्वं तत्कल्पकम् ... अन्योऽन्याश्रयापातात् PrakaVi.9.20; सृष्टिमन्तरेण सृष्टिकालानुपपत्तिः सृष्टिकालमन्तरेण तदनुपपत्तिरित्यन्योऽन्याश्रयापातादिति भावः TattvPrakā.98B.10 (*on* ii.2.12); प्रपञ्चमिथ्यात्वसिद्धेः प्राक् तदसिद्ध्यान्योऽन्याश्रयापातात् Nyāyāmṛ.171B.7; अपरोक्षज्ञानकामनाया अधिकारिविशेषणत्वाङ्गीकारेणान्योऽन्याश्रयापातात् Nyāyāmṛ. 620A.1; अन्योऽन्याश्रयापातेन मतिज्ञानादीनां मूलत एव अभावप्रसङ्गात् JñānBiPra.5.10; न चात्र कर्म न निरूप्यत इत्यकर्मकत्वम् ... अन्योऽन्याश्रयापाताद्य VaiyāBhū.58.7 (*on* 13)

**अन्योऽन्याश्रयापेक्ष** (anyo'nyāśrayāpekṣa) *adj.* expectant of, i.e. due to mutual dependence नैकत्वाभावो भेदोऽभिमतः किं तु अन्योऽन्याश्रयापेक्षभेदरूपधर्मवत्त्वम् इति चेन्न। तस्याभावात् KhaṇḍanKhā.1270.24.

**अन्योऽन्याश्रयाप्रसक्ति** (anyo'nyāśrayāprasakti) *f.* absence of occasion of the fallacy of mutual dependence उपक्रमादीनां स्वरूपलाभार्थं श्रुतिलिङ्गाद्यपेक्षा श्रुतिलिङ्गादीनामन्यविषयश्रुतिलिङ्गादिभ्यो बलवधारणार्थमुपक्रमाद्यपेक्षेति विषयभेदेन परस्परापेक्षायाम् ... अन्योऽन्याश्रयाप्रसक्तेः ŚivārkaMaDī.i.38.21 (*on* i.1.1)

**अन्योऽन्याश्रयाभाव** (anyo'nyāśrayābhāva) *m.* absence of the fallacy of mutual dependence तवाप्रामाण्यसंशयस्तु उक्ततर्कमूलकविशेषदर्शनादिना निरसनीय इत्यन्योऽन्याश्रयाभावात् GuruCandr.i.458.20.

**अन्योऽन्याश्रयाभासत्व** (anyo'nyāśrayābhāsa-tva) *n.* the state of being the fallacy of mutual dependence अन्योऽन्याश्रयाभासत्वप्रयोजकस्य व्यक्तिभेदस्याभावो नानवस्थायामेवमात्माश्रयाभासत्वप्रयोजकस्य द्वारभेदस्याभावो नात्माश्रयान्तरादौ इति व्यक्तमव्यापकत्वापत्तेः KhaṇḍanKhā.1297.22.

**अन्योऽन्याश्रयाविशेष** (anyo'nyāśrayāviśeṣa) *m.* absence of difference from the fallacy of mutual dependence गुणासिद्धौ तदसिद्धेः अन्योऽन्याश्रयाविशेषात् TarkSaṁ.(Ā.)56.25.

**अन्योऽन्याश्रयासंस्पर्शिन्** (anyo'nyāśrayāsaṁsparśin) *adj.* not touching, i.e. not involving the fallacy of mutual dependence न चान्योऽन्याश्रयासंस्पर्शिनि मार्गे सति तदापादको मार्गो ग्राह्यः Nyāyāmṛ.561A.2.

**अन्योऽन्याश्रयिन्** (anyo'nyāśrayin) *adj.* dependent on each other, mutually dependent नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योऽन्यसंयोगमन्योऽन्याश्रयिनश्च ते MārkP.45.60; त्रयो देवाः ... अन्योऽन्यमिथुना ह्येते अन्योऽन्याश्रयिणस्तथा MārkP.46.19.

**अन्योऽन्याश्रयोद्घाटन** (anyo'nyāśrayodghāṭana) *n.* act of revealing the fallacy of mutual dependence उत्पत्तेर्गौणीति वदता अन्योऽन्याश्रयोद्घाटनस्य सुकरत्वात् उत्पत्तेर्गौणत्वे ततः पुराणयोर्मिथोऽन्यत्वं तस्यान्यत्वादुत्पत्तेर्गौणत्वमिति ŚrutaPra.ii.346.21 (*on* ii.3.9)

**अन्योऽन्याश्रित** (anyo'nyāśrita) *adj.* A dependent on each other यद्य नामरूपयोरन्योऽन्याश्रितत्वमुक्तं किमिदं कामरूपावचरं नाम संधायोक्तमाहोस्वित्सर्वमिति AbhidhKoBh.434.23 (*on* 8.3); B retaining on each other तेषां तस्य च मात्सर्यं यदापर्याप्तिमाययौ। तदान्योऽन्याश्रिता भृत्याः पणं चक्रुर्युयुत्सवः RājTa. (Ka.)8.22.

**अन्योऽन्याश्लेष** (anyo'nyāśleṣa) *m.* 1 mutual fusion or intermingling अथ सर्वेषामेषामन्योऽन्याश्लेषपेशलवधुना कथयामोऽलंकारौ Ekāva.8.75; 2 embrace of each other अन्योऽन्याश्लेषभाजो ... त्वद्वैरियूनोर्विलसति नितरां वैरभावप्रभावः PadyaVe.171.

**अन्योऽन्याश्वासन** (anyo'nyāśvāsana) *n.* condolence or consolation of each other तद्भार्याश्च मिलन्ति स्म हतबान्धवदुःखिताः। एकत्र तस्यां रजनावन्योऽन्याश्वासनागताः KathāSaSāg.viii.4.96.

**अन्योऽन्याष्टमषष्ठग** (anyo'nyāṣṭamaṣaṣṭha-ga) *adj.* occupying the sixth and eighth places in respect of each other अन्योऽन्याष्टमषष्ठगद्युचरयोः पाकापहारे भयम् JātaPā.18.30.

**अन्योऽन्यासंलग्नत्व** (anyo'nyāsaṁlagna-tva) *n.* the state of not sticking to each other चरुशब्दस्यौदनवाचित्वोक्तेः अन्योऽन्यासंलग्नत्वलक्षणवैशद्ययुक्ततण्डुलनिष्पन्नस्यौदनत्वप्रसिद्धेः MayūMāli.258.2 (*on* iii.3.14)

**अन्योऽन्यासंस्पर्श** (anyo'nyāsaṁsparśa) *m.* absence of contact or relation with each other सर्वथा अन्योऽन्यासंस्पर्शे अङ्गाङ्गिभावानुपपत्तेः NyāySu. (Ja.)91A.5 (*on* i.1.1)

**अन्योऽन्यासक्त** (anyo'nyāsakta) *adj.* A held by each other बिम्बोष्ठीनां विभ्रमा हारिणोऽथ द्रागन्योऽन्यासक्तहस्तारविन्दाः ... पिण्डीबन्धा नर्तकीनामिवासन् HarVi.18.91; B attached to each other, i.e. united together शिवलिङ्गं नादरूपं बिन्दुरूपं तु शक्तिकम्। उपप्रधानभावेन अन्योऽन्यासक्तलिङ्गकम्। पूजयेत् ŚivaP.i.17.138 (21A.8)

**अन्योऽन्यासङ्ग** (anyo'nyāsaṅga) *m.* act of clinging to each other अन्योऽन्यासङ्गगाढव्यतिकरदलितभ्रष्टकापालमालां स्वां भोः संत्यज्य शंभोः ... अव्यात् ...पार्वती वः CaṇḍīŚ.77.

**अन्योऽन्यासंगत** (anyo'nyāsaṅgata) *adj.* mutually inconsistent or contradictory उत्तरोत्तरग्रथनादन्योऽन्यासंगतादयं ग्रथितनामा विरोधभेदः SaraKaṇṭhā.341.3.

**अन्योऽन्यासंगति** (anyo'nyāsaṅgati) *f.* absence of relation or association with each other अथाभिन्नं मतं ताभ्यां द्रव्यस्यापद्भवस्ततः। न विशेषो न सामान्यमन्योऽन्यासंगतेर्भवेत् BṛĀraUBhVā.i.6.82.

**अन्योऽन्यासंपृक्त** (anyo'nyāsampṛkta) *adj.* not related to, i.e. not dependent on each other बहिस्तटस्थौ अन्योऽन्यासंपृक्तौ Bhāsk. ii.50.11 (*on* ii.2.4)

**अन्योऽन्यासंबद्ध** (anyo'nyāsambaddha) *adj.* not connected with each other न चास्थिराणां भिन्नकालतया अन्योऽन्यासंबद्धानां च तेषां वास्यवासकभावो युज्यते SyādvāMañ.19(45)

**अन्योऽन्यासहत्व** (anyo'nyāsaha-tva) *n.* the state of not tolerating, i.e. contradictory to each other नन्वेकपदस्था कारकविभक्तिर्युगपत् संख्यान्वयं क्रियान्वयं च बोधयतीति तुल्यबलत्वात्रान्योऽन्यासहत्वम् ŚrutaPra.iB.215.24 (*on* i.1.13)

**अन्योऽन्यासूया** (anyo'nyāsūyā) *f.* [Inst.] with mutual jealousy कुमन्त्रिणः। अन्योऽन्यासूयया जघ्नुरथ कार्याणि भूभुजः RājTa.(Ka.)7.1011.

**अन्योऽन्यास्त्रसंघट्ट** (anyo'nyāstra-saṅghaṭṭa) *m.* strokes of the weapons of each other अथान्योऽन्यास्त्रसंघट्टलब्धोल्लासैः कृशानुभिः। ववृतेऽस्ततमःस्तोमो वीराणां दारुणो रणः PāṇḍaC.13.443.

**अन्योऽन्यास्त्रसमायोग** (anyo'nyāstra-samāyoga) *m.* contacts, i.e. strokes of the weapons of each other साजीजनत्कुमारं [च] शक्तियुक्त[म्] कुमारवत्। भीं[म]राजस्य सेन्[ा]न्यं। महाकालं महामतिं। यश्चानेकशः अन्यो[न्]य[ा]स्त्रसमायोगसंजात[ा]नी महाहवे[।] स्वामिनोऽप्रसरो धीरो रिपुसैन्यमनीने(न)शत् EI.v.133.28.

**अन्योऽन्यास्फाल** (anyo'nyāsphāla) *m.* A act of dashing against each other अन्योऽन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के ... विचरितुं पण्डिताः

पाण्डुपुत्राः VeṇīSaṁ.1.302; ŚārṅgaPa.4086; B act of flapping each other क्षितिपालकुमारकाणां च खेलतामन्योऽन्यास्फालैराभरणेषु मुक्ताफलानि फेलुः HarṣaC.187.12.

**अन्योऽन्यास्फालन** (anyo'nyāsphālana) *n.* A act of flapping against each other अन्योऽन्यास्फालनोद्भूतस्फुलिङ्गैर्मार्गणा। अपि कोपादस्त्रमिवाग्नेयमातेनुरितरेतरम् PāṇḍaC.13.53; B act of striking against each other तदीयगदयोर्नादैरन्योऽन्यास्फालनोद्भवैः। शङ्कन्ते स्म जगत्कोशस्फोटमाकालिकं जनाः PāṇḍaC.13.914.

**अन्योऽन्यास्फालनच्छल** (anyo'nyāsphālana-cchala) *m., n.* [Abl.] under the pretext of striking against each other तदा भटप्रकाण्डानां युद्धं किमिव वर्ण्यते। यदयुध्यत शस्त्राण्यप्यन्योऽन्यास्फालनच्छलात् HammīMaKā.9.134.

**अन्योऽन्यास्फोट** (anyo'nyāsphoṭa) *m.* act of striking against each other (सेनाद्वितयम्) अन्योऽन्यास्फोटनिःशेषप्रपत्तद्रूरिवृन्दकम् YogVā.iii.32.22.

**अन्योऽन्याहंयुता** (anyo'nyāhaṁyu-tā) *f.* [*ahaṁyu*, P.v.2.140] the state of being proud of each other दशग्रीवेण सार्धं ता पुनः क्रीडां प्रचक्रिरे। अन्योऽन्याहंयुतां प्राप्य प्रथमोपगमाकुलाः PadmP.(Ra.)8.109.

**अन्योऽन्याहत** (anyo'nyāhata) *adj.* 1 multiplied mutually शेषौ मण्डलज्यौ यमक्षितिजयोः ... अन्योऽन्याहतविग्रहौ च पददौ रूपेण संयोजितौ LaBhāska.8.17; 2 striking against each other अन्योऽन्याहतदन्तनादमुखरप्रह्वं मुखं कुर्वता ... पुण्याग्निः पथिकेन पीयत इव ज्वालाहतश्मश्रुणा SūktiMu.63.25; हल्लिसककेल्युदाहरणम् अन्योऽन्याहतमणिमयदण्डाः क्रीडन्ति मण्डलिताः। ... सुदृशः ŚṛṅgāMañ.(A.)45.11; 3 hurled at each other सेनयोः ... आसीद्युद्धम् ... अन्योऽन्याहतहेत्यादिचूर्णपूर्णाम्बरोदरम् YogVā.iv.26.27.

**अन्योऽन्याहति** (anyo'nyāhati) *f.* 1 mutual multiplication अत्राष्टमश्चगणः पञ्चमेदो नवमो 'नौजे जः' इति चतुर्भेदोऽन्योऽन्याहतौ विंशतिः ChandaśCū.4.19(4); 2 act of striking against each other अन्योऽन्याहतिदन्तनादमुखरं प्रह्वं मुखं कुर्वता ... पुण्याग्निः पथिकेन पीयत इव ŚārṅgaPa.3934.

**अन्योऽन्याहननजनन** (anyo'nyāhanana-janana) *n.* act of effecting the striking against each other तत्रान्योऽन्याहननजननात् ... अभ्युत्थितोऽग्निः RājTa.(Śrī.)1(7).275; 3.142.

**अन्योऽन्याहारप्रदान** (anyo'nyāhāra-pradāna) *n.* act of giving food to each other ततश्च तयोः प्रत्यहमन्योऽन्याहारादिदानेन (v.l. °हारप्रदानेन PañcT.2.25(12)(205.11)F.N.) ... कालोऽतिवर्तते Hitopa. 1.74(3)

**अन्योऽन्याहारादिदान** (anyo'nyāhārādi-dāna) *n.* act of giving food etc. to each other ततश्च तयोः प्रत्यहमन्योऽन्याहारादिदानेन कुशलप्रश्नैः ... कालोऽतिवर्तते Hitopa.1.74(3)

**अन्योऽन्याहितसङ्ग** (anyo'nyāhitasaṅga) *adj.* mutually united ऊष्मभरश्च चेतसि पदं तेषां बबन्ध क्रुधो। अन्योऽन्याहितसङ्गकृष्णहिमगुज्वालाध्वजोद्दृढितम् ŚrīKaC.23.51.

**अन्योऽन्याहूत** (anyo'nyāhūta) *adj.* in which each was challenged by other अन्योऽन्याहूतमेतेषामभवत्परमं रणम् PadmP.(Ra.)60.7.

**अन्योऽन्याह्वानसंकुल** (anyo'nyāhvāna-saṅkula) *adj.* full of challenges of each other तद्भटानामभूद्युद्धमन्योऽन्याह्वानसंकुलम् PadmP.(Ra.)60.75.

**अन्योऽन्येक्षणराग** (anyo'nyekṣaṇa-rāga) *m.* love or passion (developed) by glancing at each other अन्योऽन्येक्षणरागरञ्जितत्या द्वौ निर्निमेषेक्षणौ CaitaCa.143.19(6)

**अन्योऽन्येच्छा** (anyo'nyecchā) *f.* A mutual willingness, i.e. understanding अथैव केनचित्कस्मैचिद्गविं दत्तायां न तयोरन्योऽन्येच्छयानुशयो दानादानदानस्य तदानीमेव निर्वृतत्वात् ManuBh.ii.178.22 (*on* 8.227); B mutual consent एवं सगुणयोः कन्यावरयोर्नान्योऽन्येच्छया त्यागोऽस्ति प्रागपि विवाहात् ManuBh.ii.178.24 (*on* 8.227); संयोग एकत्रदेशे संगतयोरन्योऽन्येच्छया ... समयरूपो द्रष्टव्यः BālamBha.iii.34.22 (*on* 3.16)

**अन्योऽन्येच्छाभाव** (anyo'nyecchābhāva) *m.* absence of mutual consent एतद्ध लक्षणं यथोक्तविध्यर्थनिष्पत्तिमात्रेणेति तु ग्राह्यम्। राक्षसेऽन्योऽन्येच्छाभावात् ManvaVi.302.12 (*on* 3.35)

**अन्योऽन्येच्छामात्र** (anyo'nyecchā-mātra) *n.* mere mutual consent कन्याज्ञातिभिः कन्यया वा सहान्योऽन्येच्छामात्रेण विनापि दानाद्विवाहसिद्धिरित्यर्थः ManvaVi.302.11 (*on* 3.35)

**अन्योऽन्येतरत्व** (anyo'nyetaratva) *n.* mutual differences, i.e. comprehensional difference and practical difference नाप्यन्योऽन्येतरत्वाभ्यां भेदः भेदकाभाव इतरेतरत्वस्यैवायोगात् Nyāyāmṛ.427B.8; नाप्यन्योऽन्येतरत्वाभ्याम्, भेदकाभावे इतरत्वस्यैवायोगात् AdvaiSi.658.18 (LaCandr. व्यावहारिकान्यत्वप्रातीतिकान्यत्वाभ्याम्)

**अन्योऽन्येर्ष्याकलहचतुरा** (anyo'nyerṣyākalaha-caturā) *adj.*(*f.*) skilled in quarrelling due to jealousy of each other (अहम्) शङ्के पङ्केरुहवसतिना स्थापिता शान्तिहेतोरन्योऽन्येर्ष्याकलहचतुरा याः (श्रुतयः) VikraDeC.18.76.

**अन्योऽन्यैकत्वव्यवहार** (anyo'nyaikatva-vyavahāra) *m.* usage or common practice of oneness or identity of each other तदभावात्तदुत्थबीजान्तरोत्पन्नवृक्षाणां वृक्षान्तराणां चान्योऽन्यैकत्वव्यवहाराभावः ŚrutaPra.ii.176.19 (*on* i.4.28)

**अन्योऽन्यैकीकृत** (anyo'nyaikīkṛta) *adj.* joined together or identified with each other (पीठबिम्बानाम्) अन्योऽन्यैकीकृतानां तु वज्रबन्धेन मे शृणु। किंचित्पीठविभङ्गे तु न दोष उपजायते JayāS.20.373.

**अन्योऽन्यैक्यबुद्धि** (anyo'nyaikya-buddhi) *f.* knowledge of oneness or identity of each other नैकं जातिं मुखं विना अन्योऽन्यैक्यबुद्धिव्यक्त्योः IṣṭaSi. 265.17.

**अन्योऽन्यैक्यवीक्षण** (anyo'nyaikya-vīkṣaṇa) *n.* observation of oneness or identity of each other सदद्वैतेऽनृतद्वैते यदन्योऽन्यैक्यवीक्षणम्। तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः PañcDa.2.104.

**अन्योऽन्योक्ति** (anyo'nyokti) *f.* mutual talk or conversation ताविमौ पूर्वोत्तरार्धयोरन्योऽन्योक्त्या गूढकामलेखौ SaraKaṇṭhā.298.9; अनर्थकं तु प्रलापो विलापः परिवेदनम्। उल्लापः काकुवागन्योऽन्योक्तिः संलापसंकथे AbhidhāCin.275; कुमारः ... अन्योऽन्योक्तिमथाश्रौषीत्तत्र संगतयोपिताम् KumāDeC.(So.)12.13; संलप्तिः संकथापि स्यादन्योऽन्योक्तिरुदीरिता ParaNā.472.

**अन्योऽन्योक्तिशालिन्** (anyo'nyokti-śālin) *adj.* engaged in mutual talk or conversation आयान्तं पश्य यान्तं मामित्यन्योऽन्योक्तिशालिभिः। नागैं रम्यास्ति पाताले नाम्ना भोगवती पुरी DvyāśraKā.13.42.

**अन्योऽन्योत्कण्ठ** (anyo'nyotkaṇṭha) *m.* extreme eagerness or longing for (attacking) each other (सेनाद्वितयम्) अन्योऽन्योत्कण्ठकाठिन्यभरभ्रुकुटिसंकटम् YogVā.iii.32.13.

**अन्योऽन्योत्कर्ष** (anyo'nyotkarṣa) *m.* A excellence of each other तवाननमिवाम्भोजमम्भोजमिव ते मुखम्। इत्यन्योऽन्योपमा सेयमन्योऽन्योत्कर्षशंसिनी Kāvyāda.2.18; B superiority over each other अयमेवावयोर्ब्रह्मन् अन्योऽन्योत्कर्षकाङ्क्षिणोः। सत्यमेव परीक्षायै निकषः समुपस्थितः SkandP.i(3B).10.26; C victory over each other अन्योऽन्योत्कर्षवार्ताकृतकलहकथं खेचरैर्लोकपालाः संप्राप्तं मेनिरे तम् ... संयुगान्तं युगान्तम् RāghPāṇ.(Ka.)9.25.

**अन्योऽन्योत्कोपन** (anyo'nyotkopana) *n.* act of making each other angry अन्योऽन्योत्कोपनपटुवचोविप्लवैः चावबाधे जिह्मम् ŚrīKaC.24.3.

**अन्योऽन्योत्पाद** (anyo'nyotpāda) *m.* production or origination from each other किमन्योऽन्याश्रयत्वम् अन्योऽन्योत्पादं प्रतिवध्नाति NyāySu.(Ja.) 409A.3.

**अन्योऽन्योदाहरणाव्याप्ति** (anyo'nyodāharaṇāvyāpti) *f.* absence of pervasion in the examples of each other अन्योऽन्योदाहरणाव्याप्तेरव्यापकत्वमुभयोः KhaṇḍanKhā.827.20.

**अन्योऽन्योदित** (anyo'nyodita) *adj.* told to each other अन्योऽन्योदितस्वस्वयथावृत्तान्ततोषिणः। प्रणम्य देवीं शर्वाणीं यथेष्टं ते ययुस्त्रयः KathāSaSāg.xii.13.49.

**अन्योऽन्योद्गातृत्व** (anyo'nyodgātṛ-tva) *n.* the state of being the chanter (i.e. the priest and vital breath of sacrificer of each other अन्योऽन्योद्गातृत्ववरणे तयोद्गाने यो वाचि भोगस्तं देवेभ्य इत्याम्नातम् AṇuBh.163.11 (*on* ii.4.15)

**अन्योऽन्योद्भूतमत्सर** (anyo'nyodbhūta-matsara) *adj.* having jealousy arisen against each other पृथ्वीहरो मल्लकोष्ठश्चान्योऽन्योद्भूतमत्सरौ। क्षोभं व्यधत्ताम् ... राजधान्याः RājTa.(Ka.)8.876.

**अन्योऽन्योद्वाहसंबन्ध** (anyo'nyodvāhasambandha) *m.* matrimonial alliance with each other अन्योऽन्योद्वाहसंबन्धैः कायस्थाः संहता यदि। ... तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्ययः RājTa.(Ka.)4.351.

**अन्योऽन्योन्मर्दन** (anyo'nyonmardana) *n.* act of dashing against each other अन्योऽन्योन्मर्दनेन श्रियमिह दधतो यत्प्रसूतास्सुराद्या निर्व्याजत्रिज(Read °र्ज)यन्ति प्रचुरमुपचितानंबुराशेस्तरंगान् EI.xviii.33.40.

**अन्योऽन्योपकार** (anyo'nyopakāra) *m.* Ai mutual benefit स्वपक्षपरपक्षयोरन्योऽन्योपकारसंकीर्तनं परस्परोपकारसंदर्शनम् ArthaŚā.i.176.4 (2.10); पुरुषः पङ्गुरन्धमारुह्यान्योऽन्योपकाराय गच्छति AṇuBh.131.6 (*on* ii.2.7); Aii mutual benefit, i.e. gift प्रतिषिद्धयोः स्त्रीपुंसयोरन्योऽन्योपकारे क्षुद्रकद्रव्याणां द्वादशपणो दण्डः ArthŚā.ii.23.1(3.3); Bi mutual help, i.e. mutual auxiliariness or

intended for semantic relation अन्वयतात्पर्यकतया तत्प्रतिपादकं पदमित्यविवादम् TattvCin.iv(2).541.1.

**अन्वयतात्पर्यग्राहकत्व** (anvayatātparyagrāhaka-tva) *adj.* the state of causing the knowledge of intention for semantic relation अव्यवहितानन्तर्यस्यान्वयतात्पर्यग्राहकत्वाभावेऽप्यन्वयनियामकत्वोपपत्तेः MīmāKau.iii(2).132.1 (*on* ii.1.49)

**अन्वयत्यागवश** (anvayatyāga-vaśa) *m.* [Abl.] on account of the association and abandonment जलातपत्यागसमागमाभ्याम् ... प्रकृतिं भजन्त्यः। तदन्वयत्यागवशादवाप्तैः पङ्कैरमुच्यन्त शनैः पदव्यः Yādavā.5.84 (comm. वर्षासु जलान्वयेनातपत्यागेन च)

**अन्वयदरिद्र** (anvaya-daridra) *adj.* devoid of (all-) embracing character कर्मान्वयदरिद्रं च यदि हेतुः प्रकल्प्यते। तदा व्यक्तय एवास्याः किमितीष्टा न हेतवः TattvSaṁ.752 (Pañ. अन्वयशून्यम्)

**अन्वयदर्शन** (anvaya-darśana) *n.* 1 perception of the (same) origin or source 2 perception of presence or existence 3A perception of syntactic relation B perception of semantic relation C experience of relation or connection 4 illustration, i.e. act of pointing out the positive concomitance 5 perception of continuity 1 perception of the (same) origin or source मानुषस्य शारीरस्य संनिवेशस्तु यादृशः। तल्लक्षणं तु देवानां दृश्यतेऽन्वयदर्शनात् MatsyaP.145.15; 2 perception of presence or existence रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयते NyāyBh.246.9 (*on* iv.1.11); व्यधिकरणविशेष्याणामुदाहरणम् अस्ति प्रधानम् भेदानामन्वयदर्शनात् NyāyVār.170.5 (*on* i.2.45); श्रुत्या ... तद्बलेनैव समस्तं जगच्चेतनमवगमिष्यामि, प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् BrahmSūBh.(Śaṅ.) 291.13 (*on* ii.1.4); मृदादिकारणानां घटाद्युत्पत्तौ पिण्डादिनिवृत्तावनुवृत्तिदर्शनात्। सादृश्यादन्वयदर्शनम् BṛĀraUBh.15.11 (*on* i.2.1); सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु चेक्षणाद्यन्वयदर्शनात्सूत्राणि ... न तत्र प्रमाणम् BrahmSūBh.(Rā.)136.2 (*on* i.1.2); अविरोधो ह्युभयत्रान्वयदर्शनेन निर्वाह्यः यथा शीतोष्णानुगतस्य द्रव्यत्वादेः NyāyKu. 144.20; वस्तुतस्तु साधारणेऽन्वयदर्शनात् असाधारणे च व्यतिरेकदर्शनादुभयनिवृत्त्यर्थं द्वयमप्यपेक्षितम् YuktiSneha.68.35 (*on* i.1.5); 3A perception of syntactic relation न च क्रियाकारकसंहतीनि पदानि लोके नियमेन वक्तुम्। समीहते पक्षमतिः पदानां क्रियां विनाप्यन्वयदर्शनेन SaṁkṣeŚā.1.280(i.212.24); सम्यक् तात्पर्येण ब्रह्मप्रतिपादने वेदान्तपदानामन्वयदर्शनमिति हेत्वर्थमाह PrakaVi.53.20; 150.23; श्रुतिषु परमात्मधर्मत्वेनान्वयदर्शनाद्वा ... गतिशब्दयोः परमात्मसाधकत्वम् ŚrutaPra.ii.39.18 (*on* i.3.14); 3B perception of semantic relation ननु का योग्यता, न तावत् सजातीयेऽन्वयदर्शनम् TattvCin. iv(1).245.1 (comm. संसर्गनिश्चयः); क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात् ArthaSaṁ.59.6; MīmāNyāPra.217.15; विशेष्यमात्रेऽप्यन्वयदर्शनात् ... युक्तमेकयागकल्पनम् MīmāKau.iii(2).238.23 (*on* ii.2.20); करणानाम् ... वेदने एवान्वयः कारकाणां तण्डुलानां काष्ठैः पाचक इत्यादौ गुणभूतक्रियायामप्यन्वयदर्शनात् LaŚabdeŚe.ii.276.2; 'न कलञ्जं भक्षयेत्' इत्यादौ नञर्थस्य विशेषणताविशेषसंबन्धेन भक्षणे चान्वयदर्शनान्न दोषः AlaṅkāKau.(Vi.)67.12; 3C experience of relation or connection वेदस्य ब्रह्मपरत्वमेव कर्मादौ तस्य केनचिदंशेन कथंचिदन्वयदर्शनेऽपि समन्वयस्तु ब्रह्मण्येव VedāntKau.21.25 (*on* i.1.4); ब्राह्मणक्षत्रिययोरन्वयदर्शनात्पूर्वाख्यायिकायामपि ... जानश्रुतिः क्षत्रियोऽवगम्यते ŚivārkaMaDī.i.480.14 (*on* i.3.34); 4 illustration, i.e. act of pointing out the positive concomitance व्यतिरेकप्रधानवादिनां तु किमन्वयदर्शनेन Śarka.46.19; अन्वयदर्शनमन्तरेण केवलव्यतिरेकः प्रतीयमानः संदिग्धो भवति NyāyMañ.ii.8.24; 5 perception of continuity सत्त्वरजस्तमोमयसुखदुःखमोहानां कार्येऽन्वयदर्शनात् तदुत्पादनशक्तं सत्त्वरजस्तमोमयमेव कारणम् ŚrutaPra.ii.279.22 (*on* ii.2.1); सर्वं वस्तु द्रव्यात्मना नोत्पद्यते विपद्यते वा। परिस्फुटमन्वयदर्शनात्। लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति न वाच्यम् SyādvāMañ.21(35); मृत्सुवर्णवादीनां कार्येऽन्वयदर्शनात् सत्योपादानत्वेऽप्यसत्यत्वोपपत्तेः AdvaiSi.758.6.

**अन्वयदर्शनापत्ति** (anvayadarśanāpatti) *f.* undesired contingency of knowledge of continuity आन्त्यात् कार्यादन्वयदर्शनापत्तेश्च स्वकार्यानुगतदर्शनस्यैवोपादानत्वात् PramāMā.11.18.

**अन्वयदशा** (anvaya-daśā) *f.* A time of semantic relation भावनायां करणत्वेनान्वयदशायामेव देवतोद्देश्यकत्वेन यागस्वरूपबोधात् BhāṭṭCan.48.9 (*on* xiv.2.2); B condition of syntactic relation अन्ये तु अन्तशब्दस्तृतीयस्येत्यनेनान्वयदशायां प्रान्तपरः। द्वितीयाद्याम्यामन्वयदशायां समीपपर इत्याहुस्तदयुक्तम् SetuBa.46.26.

**अन्वयदृष्टान्त** (anvaya-dṛṣṭānta) *m.* instance of positive concomitance न पुनरत्र। यत् प्रमाकरणं तत् प्रमाणमिति व्यवहर्तव्यं यथामुक इत्यन्वयदृष्टान्तोऽस्ति TarkBhā.(Ke.)42.2; अन्वयदृष्टान्तेन सामान्यान्वयनियमसिद्धिद्वारा तत्सिद्धिः RasGaṅ.444.10; न चेयं तथा ... यद्गन्धवत्तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति पृथिवीमात्रस्य पक्षत्वात् TarkSaṁ.(A.)40.17; केवलव्यतिरेक्यनुमानं केचिन्मीमांसका न सहन्ते। साध्यसाधनसंबन्धस्यान्वयदृष्टान्ते प्रसिद्धत्वात् TantrRaha.11.28.

**अन्वयदृष्टान्तत्व** (anvayadṛṣṭānta-tva) *n.* the state of being an example of positive concomitance सत्यभावरूपेषु साध्येष्वसतोऽन्वयदृष्टान्तत्वस्याप्यवर्जनीयत्वप्रसङ्गाच्च NyāyPari.122.10; पक्षैकदेशस्य घटादेरन्वयदृष्टान्तत्वसंभवात् LaCandr.343.40.

**अन्वयदृष्टान्ताभाव** (anvayadṛṣṭāntābhāva) *m.* absence of the example of positive concomitance उभयस्य साध्यत्वे तु साध्यरूपविशेषणस्य क्वाप्यप्रमितत्वमन्वयदृष्टान्ताभावेन व्याप्त्यग्रहपर्यवसितदोषः LaCandr.79.19; न च पृथिवीत्वावच्छेदेन पृथिव्याः पक्षत्वे अन्वयदृष्टान्ताभावे नान्वयव्याप्तिग्रह इति वाच्यम् LaCandr.343.39.

**अन्वयदृष्टान्तार्थम्** (anvayadṛṣṭāntārtham) *adv.* for the sake of example of positive relation विद्यामयस्य क्रियामयक्रत्वनुप्रवेशे अन्वयदृष्टान्तार्थं मानसवदिति सूत्रांशं व्याचष्टे ŚivārkaMaDī.ii.365.26 (*on* iii.3.44)

**अन्वयदृष्टान्तासिद्धि** (anvayadṛṣṭāntāsiddhi) *f.* non-establishment of the example of positive concomitance अनुमानमपि घटादिः क्षणिकः अर्थक्रियाकारित्वात् शरीरादिवत् ... तुच्छवत्। न चान्वयदृष्टान्तासिद्धिः ŚivārkaMaDī.ii. 88.31 (*on* ii.2.23)

**अन्वयदृष्टि** (anvaya-dṛṣṭi) *f.* knowledge of semantic relation असिना ... इत्यादिलौकिकवाक्ये प्रत्ययवाच्येच्छाविषयस्यैव फलत्वेनान्वयदृष्टेश्च नेच्छायाः फलत्वप्रतीत्यर्थं तद्विषयेच्छार्थोऽध्याहर्तव्यः ŚivārkaMaDī.i.43.8 (*on* i.1.1)

**अन्वयदेवता** (anvaya-devatā) *f.* family-deity अस्माकमन्वयदेवतेयमीदृश्यावसायेन ... प्रायः कथयति UdaySuKa.58.20.

**अन्वयदौर्घट्य** (anvaya-daurghaṭya) *n.* untenability of syntactic relation अध्याहर्तव्यमिति चेत्, न, अधिकारार्थत्वपक्षे अध्याहृतस्यापि पदस्यान्वयदौर्घट्यात् ŚrutaPra.iA.10.27 (*on* i.1.1)

**अन्वयद्रव्य** (anvaya-dravya) *n.* substance, i.e. substratum of (continued) presence अन्वयरूपेण यदाधारभूतं तदन्वयद्रव्यं भण्यते TātpaVṛ.140.12 (*on* 2.9)

**अन्वयद्रव्यार्थिकनय** (anvayadravyārthika-naya) *m.* rule or law regarding the substratum of (continued) presence उत्पादव्ययध्रौव्याणि द्रव्येण सह परस्पराधाराधेयभावत्वादन्वयद्रव्यार्थिकनयेन द्रव्यमेव भवति TātpaVṛ.138.15 (*on* 2.9); 140.13 (*on* 2.9)

**अन्वयद्वार** (anvaya-dvāra) *n.* [Inst.] through positive connection or relation (काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम्) अन्वयद्वारेणोपसंहरति यदपि इति AbhinBhā.iii.33.11 (*on* 19.55)

**अन्वयधर्म** (anvaya-dharma) *m.* 1 the state or condition of family-relation, i.e. blood-relationship यथा वा वसिष्ठादयः शब्दा अन्तरेणैवान्वयधर्ममनवच्छिन्नस्मृतिपारंपर्यं कैश्च विदितार्थेषु प्रयुज्यन्ते ManuBh.ii.333.25 (*on* 10.5); 2 condition of the signification शब्दस्य चार्थशक्तावन्वयधर्माधिक्यमात्रम् NayaVi. 267.1 (*on* i.1.24)

**अन्वयधी** (anvaya-dhī) *f.* 1 knowledge of causal relationship नव मार्गान्वयधियोः ... योज्या धर्माः AbhidhK.7.17; 2A knowledge of syntactic relation तात्वादिव्यापारादेवाप्तस्य प्रतीत्यान्वयमयं रचयतीत्यन्वयधियमनुमिनोतीति चेत् Kāśi.i.73.5 (*on* 2.21); प्रथमं शब्दमुखेनान्विताना‌मपि पश्चादर्थमुखेनाप्यन्वयधीः TantrRaha.32.8; 2B knowledge of signification केचित्पश्यन्ति न वर्णाः प्रतिपादयन्त्यर्थान् ते हि प्रत्येकं वा अन्वयधियमादधीरन् TātpaṬ.(Vā.) 469.8 (*on* ii.2.57); न च शक्तिभ्रमात्तस्यान्वयधीः VaiyāBhū. 246.14 (*on* 65); 2C knowledge of semantic relation पदसामर्थ्यस्य स्वरूपमात्रगोचरतयाप्यन्वयधिय उदयमुपपादयितुं शक्ष्यामः TattvBi.130.1; अन्वयधियश्च कार्यस्य सति सन्निसंवेदने शब्दनिश्चयज्ञानादेवोत्पत्तेः TattvBi.158.15; 'आम्रो मधुरः शीतः सुरभिः' इत्यन्वितधीः। अतः स्वार्थमात्रेऽपि पदार्थे संनिध्यादेरन्वयधीरस्तु इति। तत्र; रसादेराश्रयानुमा 'द्रव्यम् नान्यदिहाम्रात्' इत्येवं पारिशेष्यानुमयान्वयधीः, नार्थाधीना NayaVi.273.1 (*on* i.1.24); जानत एव मधुरं पित्तदुष्टजिह्वस्य 'तिक्तं' इत्यन्वयधीरनुमानात्मिका बाधिते न स्यात् NayaVi.273.8 (*on* i.1.24); अयं घट इत्यत्रान्विना सिंचेदितिवदन्वयविरोधिनो धर्मस्यानुपादानेनान्वयधीर्युक्ता Nyāyāmṛ.424B.13; एकपदार्थयोरुद्देश्यविधेयभावेन क्रियायामन्वयधीः ... व्युत्पत्तिनिरुद्धा LaCandr. 372.33; 374.17; आकाशमस्तीत्यादिवाक्यादाकाश एकत्वादेरन्वयधीर्न स्यात् LaCandr.450.20.

**अन्वयधीगोचर** (anvayadhī-gocara) *m.* object of knowledge of

signification अथास्त्वप्राकरणिकोऽपर्थः शक्तिवेद्य एवान्वयधीगोचरः RasGaṅ.143.8.

**अन्वयधीतस्** (anvayadhī-tas) *adv.* as compared to the knowledge of signification न हि पदान्यन्वयधीतः पूर्वम्; अर्थानन्तरं तद्धीरित्वर्थस्य शक्तिरिति विरुद्धम् NayaVi.274.6 (*on* i.1.24)

**अन्वयधीपक्ष्य** (anvayadhī-pakṣya) *adj.* pertaining to the category of the knowledge of causal relationship न धर्मान्वयधीपक्ष्यमन्योन्यं दर्शनक्षणी। श्रावको वेत्ति खड्गस्त्रीन् सर्वान्बुद्धोऽप्रयोगतः AbhidhK.7.6.

**अन्वयधीहेतु** (anvayadhī-hetu) *m.* cause of knowledge of signification यथा मानान्तरदृष्टोऽर्थो लिङ्गमनुपपत्त्यान्वयधीहेतुः तथा पदोक्तो व्युत्पत्त्यनुपपत्त्यास्तु NayaVi.276.1 (*on* i.1.24)

**अन्वयधूमकेतु** (anvaya-dhūmaketu) *m.* comet of the family अन्वयधूमकेतवः ... प्रतापेन प्रज्वलन्तः ... क्षत्रबन्धवस्ते ... नतिभिन्नं मन्यन्ते AvantiKa.237.8.

**अन्वयन** (anv-ayana) *n.* 1 relation or connection पशुपुरोडाशेन प्रचर्योपांशु देविकाहविर्भिः प्रचरति। एयोऽन्वयने कल्पः MānŚS.93.3; 2 the act of relating syntanctically भिन्नार्थानां तु पादानामेकेन पादेनान्वयनं कवित्वमेव KāvyMī.59.24.

**अन्वयनामन्** (anvaya-nāman) *adj.* A called *anvaya*, i.e. positive concomitance एवमेवासाधारणोऽपि निश्चयस्यैकेनान्वयनाम्नाङ्गेन विकलस्तमकुर्वन् संशयहेतुतां प्रतिपद्यते Kāśi.iii.60.11 (*on* 5(4).86½); B called *anvaya*, i.e. the connector समन्वयात्। त एवान्वयनामानस्तैः सम्यक् प्रविचारिते AnuVyā.5B.8 (*on* i.1.4); उपक्रमादय एव अन्वीयन्ते शक्तितात्पर्यगोचरेण संबध्यन्ते ... वाक्यान्येतैरिति अन्वयनामानः NyāySu.(Ja.)112B.5 (*on* i.1.4)

**अन्वयनामन्** (anvaya-nāman) *n.* family and name यद्दृष्ट्वा तं स सुजनः पृष्ट्वा चान्वयनामनी। हस्तेऽवलम्ब्योदहरत्कूपात्तस्मादुवाच च KathāSaSāg.xiv.2.3.

**अन्वयनिबन्धना** (anvaya-nibandhanā) *adj.* (*f.*) caused by signification भवत्वयं संबन्धः ... यस्य ह्यन्वयनिबन्धनैव प्रत्यायनशक्तिः तदेव लिङ्गम् NyāyRa.430.8 (*on* 5(5).96)

**अन्वयनिमित्त** (anvaya-nimitta) *n.* 1 cause of the association, i.e. attachment तस्मात्तदन्वयनिमित्तमपीह मोहः SaṁkṣeŚā.1.52 (i.55.11); 2 cause of semantic relation सामान्यतोऽप्यन्वयनिमित्तत्वे विशेषार्थमाकाङ्क्षादि व्यवहारत एव वाच्यम् NayaVi.256.3 (*on* i.1.24)

**अन्वयनियम** (anvaya-niyama) *m.* rule or law of semantic relation द्रव्यगुणयोः परस्परसंबन्धं विना वैयधिकरण्येन क्रियाविशेषणतयान्वयनियमस्यानङ्गीकारे ह्यन्यत्रानिष्टं प्रसज्यते ŚivārkaMaDī.i.304.14 (*on* i.2.1); कथं संस्काराणां नित्यत्वं नित्यत्वेऽपि वा कथं नित्येन सरूपेणैवान्वयनियमः MayūMāli.310.19 (*on* iii.6.13); प्रकृतौ घोषस्य रथासंबद्धस्यापि साधनत्वसंभवेनापेक्षाविरहात्र तथान्वयनियमः MayūMāli.698.10 (*on* x.4.2); प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाभावे क्व प्राधान्यबोधक उक्तो नियमः VaiyāBhū.43.9 (*on* 8)

**अन्वयनियामक** (anvaya-niyāmaka) *adj.* A regulating or governing semantic relation तदविशेषे चैकस्य पाठसन्निधिर्नान्वयनियामकोऽवर्जनीयत्वेनान्यथासिद्धत्वात् Aparā.i.292.24 (*on* 1.203); B regulating or governing syntactic relation योग्यत्वात्तदुत्तरकरिष्यमाणेष्वपीत्यस्य ... सन्निधानं नान्वयनियामकम् LaCandr. 862.40; C regulating or governing signification व्युत्पत्तिरन्वयनियामकं तद्भङ्गो लक्षणापक्षे स्यादित्यर्थः VaiyāBhū.174.5 (*on* 32)

**अन्वयनियामकत्व** (anvayaniyāmaka-tva) *n.* the state of regulating or governing the syntactic relation न च ... यागस्यैव करणत्वोक्तिर्विरुध्येतेति वाच्यम्। अव्यवहितानन्तर्यस्यान्वयतात्पर्यग्राहकत्वाभावेऽप्यन्वयनियामकत्वोपपत्तेः MīmāKau.iii.132.1 (*on* iii.1.49)

**अन्वयनिरपेक्ष** (anvaya-nirapekṣa) *adj.* independent of positive concomitance तदनुपपत्रमिवाशङ्क्यते - अशेषविपक्षापेक्षित्वेनादर्शनमात्रवसेयत्वेन च सुखग्राह्यत्वादन्वयनिरपेक्षस्य व्यतिरेकमात्रस्यैवाङ्गत्वात् TātpaṬ.(U.)337.17 (*on* 5(4).131)

**अन्वयनिरसन** (anvaya-nirasana) *n.* refutation of semantic relation तन्मतमपि धात्वर्थस्य करणतया साध्यतया चान्वयनिरसनेनैव निरस्तम् MayūMāli.67.31 (*on* i.4.4)

**अन्वयनिरासार्थ** (anvaya-nirāsārtha) *adj.* meant for refutation of relation or connection (त्रिवृता ग्रन्थिनैकं न त्रिभिः पञ्चभिरेव वा) वाशब्दो विप्रादिक्रमेणान्वयनिरासार्थः ManvaVi.134.31 (*on* 2.43)

**अन्वयनिरूपण** (anvaya-nirūpaṇa) *n.* description of positive concomitance अन्वयव्यतिरेकयोर्गमकाङ्गत्वादेकेनान्वयनिरूपणमपरेण च सूत्रेणाव्यतिरेकव्युत्पादनम् NyāyMañ.ii.137.19.

**अन्वयनिवासनगरसंवेदन** (anvayanivāsanagara-saṁvedana) *n.* act of informing about family, house and city दृष्टश्चैवमसावालापितश्चैवं ज्ञातश्च नामान्वयनिवासनगरसंवेदनादेवमेव च तेन कुमारकेसरिवृत्तपूर्वकमुपदर्शितः ... चित्रपटः UdaySuKa. 135.29.

**अन्वयनिश्चय** (anvaya-niścaya) *m.* 1 ascertainment of positive concomitance भेदेनैव निर्देशः कार्य इति स्वभावहेतौ तावदन्वयनिश्चयं स्वप्रमाणनिबन्धनं दर्शयन् आह HetuBiṬ.41.4; 45.4; अन्वयनिश्चयं प्रतिपादयता बाधकप्रमाणवृत्तिवशात् तत्स्वभावता पूर्वमेव प्रतिपादिता अन्वयनिश्चयोऽपि स्वभावहेतौ इत्यादिवचनात् HetuBiṬ.76.20; उदाहरणे व्याप्तिग्राहकप्रमाणानुसारेणान्वयनिश्चयो न वचनमात्रेण तस्य सर्वत्राविशेषात् NyāyKa.250.15; 2A ascertainment of syntactic connection अन्योन्यान्वितार्थानि पदान्यपि हि मानवाः। रचयन्तो विलोक्यन्ते तेन नान्वयनिश्चयः PrakaPañ.34.2; 2B ascertainment of semantic relation तदुक्तानां पदार्थानां यद्यप्यन्वययोग्यता। तथाप्यनन्वितस्यापि दृष्टेनान्वयनिश्चयः PrakaPañ.35.2; अनन्वितार्थपदरचनादिहेतवो वेदे शङ्कामपि नादतारयन्तीत्यन्वयनिश्चयस्तावज्जायते PrakaPañ.246.2.

**अन्वयनिश्चयानुपपत्ति** (anvayaniścayānupapatti) *f.* untenability of the ascertainment of semantic relation वेदेऽपि शङ्कया भवितव्यमित्युक्तम् ... न तावदन्वयनिश्चयानुपपत्तिर्वेदे संभवति PrakaPañ.245.21.

**अन्वयनीरज** (anvaya-nīraja) *m., n.* lotus in the form of family आसीत्पुरा। ... प्राग्वाटनाम्नोऽन्वयनीरजस्य चण्डद्युतिश्चण्डपनामधेयः VasaVi-Kā.3.53.

**अन्वयनृपमणि** (anvayanṛpa-maṇi) *m.* jewel among the kings of lineage तत्सुतोभून्नृ राडग्रस्तस्यान्वयनृपमणिश्चार्जुनो दुर्जनोग्रः EI.xix.159.10.

**अन्वयनैयत्य** (anvaya-naiyatya) *n.* law of invariability of semantic relation अष्टाकपालकर्तृकभवनाक्षिप्तायां भावनायामष्टाकपालस्य ... कर्मत्वेनैवान्वयनैयत्यात् MīmāKau.i.230.16 (*on* i.4.9)

**अन्वयपदार्थ** (anvaya-padārtha) *m.* the meaning of the term अन्वय, i.e. connector तत्रान्वयपदार्थमाह NyāySu. (Ja.) 112B.4.

**अन्वयपर** (anvaya-para) *adj.* 1 meant to convey presence संभवः ... अन्वयपरो न व्यतिरेकपर इत्यर्थः TātpaṬ.(Vā.)190.14 (*on* i.1.5); 2 meant to convey semantic relation अन्वयपरप्रमाणशब्दस्य मुख्येऽन्वयायोग्यत्वमेव लक्षणाबीजम् TattvCin.iv(2)691.1; साहचर्यात् स्वार्थान् स्मारयन्ति अन्वयपराणि पदानि NyāySu.(Ja.)90A.1 (*on* i.1.1); (used as noun) (word) meant to convey semantic relation अर्थान्तरान्वयपरस्य स्वार्थमात्राभिधाने ... अन्वयम् यावत्पदस्य सामर्थ्यम् अनुवर्तनीयम् TattvBi.152.2.

**अन्वयपरत्व** (anvayapara-tva) *n.* the state of being what conveys the semantic relation न च पदेन पदार्थोऽन्वितो लक्ष्यते इति वाच्यम्, निश्चिते ह्यन्वयपरत्वे लक्षणा NayaVi.264.8 (*on* i.1.25); प्रत्यक्षमूलकस्मृतपदार्थस्यान्वयो भवतीति चेत्, न, उक्तदोषात् पदार्थस्मरणस्य अन्वयपरत्वानिश्चयात् TattvCin. iv.(2).684.5.

**अन्वयपरंपरा** (anvaya-paramparā) *f.* family succession अथ तस्यान्वयपरंपरागताः पञ्च सचिवास्तिष्ठन्ति PañcT.3.1(17)(274.7)

**अन्वयपरिच्युति** (anvaya-paricyuti) *f.* deviation from the tradition र[ा]ज्यं च[Read व]अभार गुरुभक्तिवतोन्यसंस्थं मा भूत्किलान्वयपरिच्युतिरत्र लक्ष्माः [Read लक्ष्म्याः] EI.ix.197.23.

**अन्वयपरित्याग** (anvaya-parityāga) *m.* abandonment of semantic relationship प्रथमसंबन्धार्हस्य चान्वयपरित्यागेन पश्चात्कथंचिदपेक्षितस्य संबन्धिमात्रस्य संबन्धो जघन्यः प्रथमः Bhām.57.7 (*on* i.1.1)

**अन्वयपरोपस्थिति** (anvayaparopasthiti) *f.* reference intended to produce the semantic relation लक्षणा च शब्दात् परंपरया अशक्यासदृशस्यान्वयपरोपस्थितिरूपा TattvCin.iv.(2).678.7.

**अन्वयपर्यन्त** (anvaya-paryanta) *adj.* [*f.*–ā] extended upto semantic relation शब्देनान्वयपर्यन्ताभिधानं ह्यन्विताभिधानम् ŚrutaPra.iB.89.22 (*on* i.1.1); एकैव शक्तिरन्वयपर्यन्ता व्यक्तिवत् TantrRaha.32.29.

**अन्वयपर्यन्तता** (anvayaparyanta-tā) *f.* the state of being extended upto semantic relation तेन तेषामभिधानशक्तिस्संप्रतिपन्नैवेति, तस्या एवान्वयपर्यन्तता कल्पयितुं सुकरा PrakaPañ.400.16.

**अन्वयपर्यन्तत्व** (anvayaparyanta-tva) *n.* the state of being extended upto semantic relation अन्विताभिधानपक्षे तु शब्दानां स्वार्थबोधनशक्तेरेवान्वयपर्यन्तत्वाभ्युपगमात् कल्पनालाघवमस्ति ŚrutaPra.iB.89.25 (*on* i.1.1)

**अन्वयपर्यवसान** (anvaya-paryavasāna) *n.* culmination into semantic relation अभिधावादिकर्मरूपव्यापारविशिष्टरूपेणैव तस्य प्रवर्तनान्वयपर्यवसानात् ...

प्रशस्त्यादेरन्वयपर्यवसानमित्याशयेन कर्मप्राशस्त्येत्युक्तम् LaCandr.379.38; Citrami. 78.13

**अन्वयपर्वन्** (anvaya-parvan) *adj.* name of a canto in the Bālakāṇḍa of the Rāmāyaṇa (*lit.* linege) (इति श्रीरामायणे बालकाण्डे) (v.l. अन्वयपर्वणि गोदानिकः) एकसप्ततितमः सर्गः Rāmā.i.71 (colophon)

**अन्वयपुरःसर** (anvaya-puraḥsara) *adj.* preceded by positive concomitance एवमन्वयपुरःसराः परिणामादिहेतवोऽपि वक्तव्याः NyāyMañ. ii.59.4.

**अन्वयपूर्वक** (anvaya-pūrvaka) *adj.* preceded by positive concomitance वृत्तिकारेण त्वन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्तुमन्वयः पूर्वमुपात्तः Loc.131.7.

**अन्वयपूर्वकत्व** (anvayapūrvaka-tva) *n.* the state of being preceded by positive concomitance अन्वयपूर्वकत्वाद्य व्यतिरेकग्रहस्य तन्निराकरणे तदपाकरणमवगन्तव्यम् NyāyMañ.i.102.3.

**अन्वयप्रकार** (anvaya-prakāra) *m.* 1A method or process of syntactic relation त्रयाणामोंतत्सदिति शब्दानामन्वयप्रकारो वर्ण्यते। प्रथममोमितिशब्दस्यान्वयप्रकारमाह GītāBh.(Rā.)621.8 (*on* 17.24); योज्यते संबन्ध्यतेऽनेनेत्युभयाकाङ्क्षालक्षणो अन्वयप्रकारो योजनाशब्देनाभिप्रेतः NyāySu.(So.)43.11 (*on* i.2.7); 1B method or process of semantic relation अनेन श्लोकेन भगवानिममर्थमभिप्रेत्यायमर्थ इत्याहेत्यन्वयप्रकारः ŚrutaPra.iB.44.13 (*on* i.1.1); योग्यतापरामर्शबलादेवापूर्वविषयनियोज्यानां लोकप्रसिद्धक्रियाकारकभावेनान्वयप्रकारमतिलङ्घ्य विलक्षणप्रकारेणान्वयः TantrRaha.32.7; शब्दप्रतिपन्नत्वाभावादेवानन्वयः सिद्धः ... अस्मदुक्त एवान्वयप्रकारो लघीयान् MānaMe.98.9; 2 [Inst.] in positive way or manner अन्वयप्रकारेण बीजप्राधान्यं प्रदर्श्य व्यतिरेकमुखेन दर्शयितुमाह ManvaMu.370.15 (*on* 9.37)

**अन्वयप्रकारक** (anvayaprakāra-ka) *adj.* referring to the semantic relation as the qualifier घटकर्मत्वानयनकृतीनां स्वरूपेणोपस्थितिर्नान्वयप्रकारकजिज्ञासानुकूलेति तत्र नाकाङ्क्षा स्यात् TattvCin.iv(1).205.2.

**अन्वयप्रकारकर्मत्व** (anvayaprakāra-karmatva) *n.* objecthood as the qualifier of the semantic relation एवं चान्वयप्रकारकर्मत्वाद्युपस्थापकविभक्त्यादिमत्पदविशेषस्य ... ज्ञानं वाक्यार्थधीहेतुः TattvCin.iv(1).480.1; प्रकरणादयस्तु विषयविशेषे शब्दादीन्नियमयन्ति न त्वन्वयप्रकारकर्मत्वादौ कालविशेषे वा प्रवर्तयन्ति TattvCin.iv(2).863.6.

**अन्वयप्रकारता** (anvayaprakāra-tā) *f.* [Inst.] by way of being a qualifier of the semantic relation राजपुरुषादावन्वयप्रकारतया षष्ठ्यर्थसंबन्धबुद्धिः TattvCin.iv.(2).757.3.

**अन्वयप्रकारत्वादि** (anvayaprakāratvādi) *adj.* the state of being the qualifier etc. of semantic relation नीलघटयोः सामानाधिकरण्यप्रतीतेस्तत्र लक्षणैव अन्वयप्रकारत्वादिना च तस्य भाने राजपुरुषादौ षष्ठ्यर्थोपस्थितिरपि तथास्तु TattvCin.iv(2).778.2.

**अन्वयप्रकारबोधक** (anvayaprakāra-bodhaka) *adj.* which conveys the qualifier of semantic relation अन्वयप्रकारबोधकविभक्त्यभावात् TattvCin.iv (2).728.3.

**अन्वयप्रकारभूत** (anvayaprakāra-bhūta) *adj.* which has become the qualifier of semantic relation गुणत्वे निवर्तमानेऽपि क्रियाकारकान्वयस्य प्रवर्तमानत्वात् अन्वयप्रकारभूतं साक्षात्त्वमपि प्रवर्तयितुमर्हति MayūMāli.204.17 (*on* iii.1.12)

**अन्वयप्रकारोपस्थापक** (anvayaprakāropasthāpaka) *adj.* which conveys the qualifier of semantic relation नन्वपभ्रंशात् कथं वाक्यार्थधीः तत्रान्वयप्रकारोपस्थापकविभक्त्यादेरभावात् TattvCin.iv.(2).864.3.

**अन्वयप्रज्ञापन** (anvaya-prajñāpana) *n.* act of conveying positive concomitance साधर्म्यं चावश्यमेव वचनीयम् अन्वयप्रज्ञापनाय तत्प्रधानत्वादनुमानस्य Kāśi.iii.74.15 (*on* 5(4).118)

**अन्वयप्रतिघातिनी** (anvaya-pratighātinī) *adj.* (*f.*) which destroys the (idea of) continuity शीघ्रवृत्तेरलातादेरन्वयप्रतिघातिनीम्। चक्रभ्रान्तिं दृशा धत्ते न दृशां घटनेन सा PramāVār.3.140.

**अन्वयप्रतिपत्ति** (anvaya-pratipatti) *f.* 1 cognition of semantic relation गवयत्वेऽवगते तर्कपुरस्कारात्तादृश्यस्योपलक्षणतायां व्यवस्थितायां गङ्गायां घोष इतिवदन्वयप्रतिपत्तिः NyāyKuA.ii(1)199.8; तस्याः पदार्थप्रतिपत्त्युपक्षीणाया विरम्य व्यापारात् इति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः Loc.17.5; 2 knowledge of presence, *cf.* अन्वयप्रतिपत्तितस्

**अन्वयप्रतिपत्तितस्** (anvayapratipatti-tas) *adv.* due to the knowledge of presence पर्यायाद् व्यतिरेकाणामन्वयप्रतिपत्तितः। अक्रमं स च भेदानां ऋजुसूत्रो विधारयन् PramāSam.3.80.

**अन्वयप्रतिपत्तिनिमित्त** (anvayapratipatti-nimitta) *n.* cause of the cognition of semantic relation अभिधानन्तरं च यद्यप्यन्वयप्रतिपत्तिनिमित्तं तात्पर्यशक्तिरप्यस्ति ... तथापि तौ वाक्यविषयावेति नेत्रोक्तौ Kāvyānu.(He.)41.10.

**अन्वयप्रतिपत्तिपर** (anvayapratipatti-para) *adj.* meant to convey the semantic relation न च पदानि स्वार्थपरित्यागेन लक्षणयान्वयप्रतिपत्तिपराणि उक्तसाधनत्वात् TattvPradī.(Ci.)155.1.

**अन्वयप्रतिपादकत्व** (anvayapratipādaka-tva) *n.* the state of being what conveys semantic relation अन्वितप्रतिपादकत्वनिमित्तमन्वयप्रतिपादकत्वमिति यावत् NyāyRaMā.98.9; पदानामेव पदार्थप्रतिपादनावान्तरव्यापाराणामन्वयप्रतिपादकत्वाङ्गीकारात् NyāySu.(Ja.)89B.10 (*on* i.1.1)

**अन्वयप्रतिपादन** (anvaya-pratipādana) *n.* 1 act of conveying semantic relation न च तथानुमिताभिरर्थविशेषः सिध्यति यादृशान्वयप्रतिपादनयोग्या पदरचना सा तदन्वयज्ञानमापादयति ĀgaPrā.39.12; 2 explanation of semantic relation निरुक्तस्मृतेरगुणाधिकरण एव तृतीयार्थसंख्यादेर्गुणेऽन्वयप्रतिपादनेन तुल्यतया जातिगुणयोः संख्यान्वयित्वरूपसत्त्वभूतत्वात् VaiyāBhū.18.18 (*on* 2)

**अन्वयप्रतिबन्ध** (anvaya-pratibandha) *m.* obstruction of knowledge आत्मनः ... ज्ञातृज्ञेयत्वापत्तिः ... अतदाश्रयविषयत्वं वेति। तन्न। घटादावज्ञानानाश्रयत्वादेरज्ञातृत्वाद्यप्रयोज्यत्वात्। पराचीनत्वाचित्त्वादिप्रयुक्तं हि तत्। अन्वयप्रतिबन्धस्य च क्काप्यसंप्रतिपत्तेः SiddhāSiA.iii.205.11.

**अन्वयप्रतिभान** (anvaya-pratibhāna) *n.* awareness of family relation यत्त्वस्य अधर्मं जानन्नित्यन्वयप्रतिभानादधर्मत्वव्याख्यानं केषांचित् ViraMi (Saṁskāra.)713.10.

**अन्वयप्रतियोगिता** (anvayapratiyogi-tā) *f.* the state of being relational adjunct of semantic relation नापि पदरूपः शब्दस्तत्र मानम्। ... पदस्यान्वयप्रतियोगितावच्छेदकरूपेणैव स्वार्थोपस्थापकतया निर्विशेषे वृत्तिमात्रायोगाद्य Nyāyāmṛ. 496B.10.

**अन्वयप्रतियोगित्व** (anvayapratiyogi-tva) *n.* the state of being the relational adjunct of semantic relation राजसंबन्धिनः पुरुषेऽन्वयोऽनुभूयते राजसंबन्धी अन्वयप्रतियोगित्वेन TattvCin.iv(2).780.1; आसत्तिरव्यवधानेन शाब्दबोधानुकूलपदार्थोपस्थितिमात्रम्, नत्वन्वयप्रतियोगित्वविशेषितपदार्थोपस्थितिः, गौरवात् AdvaiSi.689.16.

**अन्वयप्रतियोगिन्** (anvaya-pratiyogin) *m.* correlative or rational adjunct of semantic relation अन्वयप्रतियोग्युपस्थापकतया अन्वितमुपलक्षणम् TattvCin. i.830.4; अशक्येत्यादि। अशक्योऽसदृशो योऽन्वयप्रतियोगी तदुपस्थितेः LaCandr. 691.44; आसत्तिरन्वयप्रतियोगिनां यौगपद्येन पदजन्योपस्थितिः MaṇiKa.70.13; अन्वयप्रतियोगिनामव्यवधानेनोपस्थितिर्ह्यासत्तिः AlaṅkāKau.(Vi.)318.21.

**अन्वयप्रतियोगिपदार्थ** (anvayapratiyogi-padārtha) *m.* word-meaning which is the relational adjunct of semantic relation अन्वयप्रतियोगिपदार्थयोः परस्परसंसर्गाबाधो योग्यता इति केचित् MaṇiKa.70.15; अन्वयप्रतियोगिपदार्थायोगाध्यवसितविरोधप्रतियोगिपदार्थेन सहैवान्यपदार्थभेदान्वयबोधः AlaṅkāKau. (Vi.)325.22.

**अन्वयप्रतियोगिविज्ञान** (anvayapratiyogi-vijñāna) *n.* knowledge of relational adjunct of semantic relation तस्यान्वयप्रतियोगिविज्ञानादेवोपपत्तेरिति चेत् TattvCin.iv(1).316.5.

**अन्वयप्रतियोगिस्मारक** (anvayapratiyogi-smāraka) *adj.* producing the recollection of relational adjunct of semantic relation गङ्गापदस्य स्वशक्यसंबन्धेनान्वयप्रतियोगिस्मारकत्वाकल्पनात् TattvCin.iv(2).695.8.

**अन्वयप्रतियोगिस्मृति** (anvayapratiyogi-smṛti) *f.* recollection of the relational adjunct of semantic relation अस्ति व्युत्पन्नस्य पदज्ञानानन्तरं नियमतोऽन्वयप्रतियोगिस्मृतिः TattvCin.iv(2).601.10; न च परंपरया साक्षाद्वान्वयप्रतियोगिस्मृतिहेतुत्वेन प्रमाणत्वम्, स्मृतेरप्रमाणत्वात् TattvCin.iv(2).698.1.

**अन्वयप्रतियोग्युपस्थापक** (anvayapratiyogy-upasthāpaka) *adj.* producing the knowledge of relational adjunct of semantic relation द्वारं पिधेहीत्यादौ पिधानशब्दानुभवे ... जनकत्वमिति चेत्। न। अन्वयप्रतियोग्युपस्थापकपदत्वेन जनकत्वात् TattvCin.iv(1).308.2; अन्ये तु अन्वयप्रतियोग्युपस्थापकपदाव्यवधानमासत्तिः ... इत्याहुः BhāṭṭCin.i.52.17 (*on* i.1.4)

**अन्वयप्रतियोग्युपस्थापकत्व** (anvayapratiyogyupasthāpaka-tva) *n.* the state of producing the knowledge of relational adjunct of semantic relation पदं नानुभावकम् अन्वयप्रतियोगिनस्तीरस्य ततोऽनुपस्थितेः अन्वयप्रतियोग्युपस्थापकत्वेन पदानामन्वयानुभावकत्वात् TattvCin.iv(2).695.4.

**अन्वयप्रतियोग्युपस्थिति** (anvayapratiyogy-upasthiti) *f.* knowledge of relational adjunct of semantic relation अन्यत्रान्वयप्रतियोग्युपस्थितिः तात्पर्यग्रहं विनैवेति न तदपेक्षा TattvCin.iv(1).178.2; आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युप-

स्थिति: सा च स्मृति: TattvCin.iv(1).286.2; BhāṭṭCin.i.52.12 (*on* i.1.4); संनिधिस्त्वव्यवधानेनान्वयप्रतियोग्युपस्थिति: Nyāyāmṛ.448B.6 (*on* 2.2); AdvaiSi.689.9; लाक्षणिकपदेनान्वयप्रतियोग्युपस्थितौ कृतायां यदवशिष्टं शक्तं, तदेवान्वयानुभावकम् AdvaiSi.704.3; अव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्ति: तेन 'गिरिर्भुक्तं वह्निमान् देवदत्तेन' इत्यत्र नान्वयबोध: Tarkāmṛ.20.19.

**अन्वयप्रतीति** (anvaya-pratīti) *f.* **1A** knowledge of syntactic relation अनुपायत्वे पदानामन्वयप्रतीतौ पदार्था अपि चेन्न कारणम्, अकारणिकैवापद्येत PrakaPañ.394.18; **1B** knowledge of semantic relation न पदनिमित्तान्वयप्रतीतिर्भवेत् NyāyRaMā.88.16; शब्दमहिमानमन्तरेण यत: कुतश्चिदपि स्मृतेषु पदार्थेषु अन्वयप्रतीति: स्यात् NyāyKuA.ii(1).218.8; प्रवृत्तिनिवृत्तिरूपत्वाभावेऽपि पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतया अन्वयप्रतीतेरित्यर्थ: ŚrutaPra.iB.139.23 (*on* i.1.4); अनुवृत्तेनान्वयप्रतीतिर्भवति NyāySu.(Ja.)113A.10 (*on* i.1.1); अपि च वेदानुकारेण पठ्यमानेषु लौकिकवाक्येषु कथं अन्वयप्रतीतिरुत्पद्यत एव NyāySu.(Ja.)276B.3 (*on* ii.1.2); न चैवमाकाङ्क्षासत्तिविरहयोरपि पृथग्भाव्यत्वं तयोर्द्वयोरप्यन्वयप्रतीतेरेवानुदयात् NyāyPari.194.10; अन्वय: । ... प्रकारसमर्पकतया ... एतदनन्तरमितिकरणबलादनेन प्रकारेण क्रतुं कुर्वीतेति अन्वयप्रतीते: ŚivārkaMaDī.i.313.18 (*on* i.2.1); यज्ञविषयत्वे प्रमाणाभाव: ... पूर्वोदाहृतवाक्यपर्यालोचनया यज्ञान्वयप्रतीते: MīmāKau.i.130.5 (*on* i.3.27); **2** knowledge of positive concomitance निर्विषयाया व्याप्ते: प्रत्येतुमशक्यत्वाद् द्वादशायतनव्यतिरिक्तस्य चार्थस्याभावात् तेषु चान्वयप्रतीतौ क्षणिकत्वस्यापि प्रतीति: NyāyKa.76.8.

**अन्वयप्रतीतिसिद्धि** (anvayapratīti-siddhi) *f.* establishment of the knowledge of semantic relation अन्वितशब्देन ... अन्वयमभिधातुं शक्यत इत्युच्यते न तर्हि शब्देनान्वयप्रतीतिसिद्धि: NyāyRaMā.100.14.

**अन्वयप्रतीत्यसंभव** (anvayapratīty-asambhava) *m.* impossibility of knowledge of semantic relation न पृथक् शब्दशक्तिं प्रकल्पयतीति । न त्विह तथा पृथक्शक्तिमन्तरेणान्वयप्रतीत्यसंभवात् NyāyRaMā.100.7.

**अन्वयप्रतीत्युपपत्ति** (anvayapratīty-upapatti) *f.* tenability of knowledge of semantic relation गङ्गायां घोष इतिवत् वाक्यादेवान्वयप्रतीत्युपपत्ते: Kiraṇā.322.23.

**अन्वयप्रत्यय** (anvaya-pratyaya) *m.* knowledge of semantic relation अन्वितेभ्योऽन्वयप्रत्यय: Bṛha.394.6 (*on* i.1.25); एवं तर्हि चक्षुषी निमील्य परिभावयतु भवान् किमस्यां जातायामन्वयप्रत्यय: अथ ज्ञातायामिति NyāyKuA.ii(1).208.5; द्वितीयस्तु स्यादपि यद्यनुमानान्तरवत् आकाङ्क्षाज्ञानव्यतिरेकेणान्वयप्रत्ययो न स्यात् Kiraṇā.311.15.

**अन्वयप्रत्ययदर्शन** (anvayapratyaya-darśana) *n.* observation of the knowledge of semantic relation आख्यातपदरहितेष्वप्यन्वयप्रत्ययदर्शनाद्य NyāySu.(Ja.)86B.2 (*on* i.1.1)

**अन्वयप्रदर्शन** (anvaya-pradarśana) *n.* **1** illustration of positive concomitance अन्वयप्रदर्शनसमये च तदेकदेशे तथैव योजने ... अनुमानमप्रमाणम् NyāyMañ.i.108.17; **2** illustration of presence अनुपाकृतमांसभक्षणे ... दोषोऽस्त्येवेतिव्यतिरेकदर्शनमुखेनान्वयप्रदर्शनमवधारणार्थम् ManvaVi.620.20 (*on* 5.56)

**अन्वयप्रधानवादिन्** (anvayapradhāna-vādin) *m.* advocate of positive concomitance as the primary one अन्वयप्रधानवादिनां भवत्ययं दोष: Śarka.46.18.

**अन्वयप्रमा** (anvaya-pramā) *f.* valid knowledge of semantic relation आप्तोक्तत्वात् गङ्गापदान्तर्भाविनान्वयप्रमाप्रयोजकत्वम् ... गृहीतम् TattvCin.iv(2).698.4; अपि तु अन्वयप्रमोत्तरकालं तस्यैव पदस्य यत्र वृत्त्यन्तरेणार्थान्तरप्रत्यायकत्वं तत्रैव तत् MīmāKau.i.148.3 *on* i.3.33)

**अन्वयप्रमिति** (anvaya-pramiti) *f.* valid knowledge of semantic relation पदानि ... अन्वयप्रमितिपूर्वकाणि । ... विनाप्यन्वयप्रमितिं दैवात्प्रयुक्तेष्वाकाङ्क्षादिमत्सु पदेष्वनैकान्त्यात् NyāySu.(Ja.)276A.12 (*on* ii.1.2)

**अन्वयप्रयोजक** (anvaya-prayojaka) *adj.* conducive to the knowledge of semantic relation अनाप्तोक्ते पयसा सिञ्चतीत्यत्र सत्यप्यन्वयप्रयोजकद्रव्यद्रव्यत्वे बाधकप्रमायामन्वयाबोधात् TattvCin.iv(2).378.2.

**अन्वयप्रयोजकत्व** (anvayaprayojaka-tva) *n.* the state of being conducive to the knowledge of semantic relation अन्वयप्रयोजकत्वं हि नान्वितवृत्तित्वेन गृहीतत्वम् किन्तु अनन्वितवृत्तित्वेनागृहीतत्वम् BhāṭṭCin.i.65.32 (*on* i.1.4)

**अन्वयप्रयोजकधर्मवत्त्व** (anvayaprayojakadharmavat-tva) *m.* the state of having the property conducive to the knowledge of semantic relation योग्यता च अन्वयप्रयोजकधर्मवत्त्वम् BhāṭṭCin.i.50.31 (*on* i.1.4)

**अन्वयप्रयोजकरूपवत्त्व** (anvayaprayojakarūpavat-tva) *n.* the state of having the form, i.e. property conducive to the knowledge of semantic relation आकाङ्क्षासत्त्यन्वयप्रयोजकरूपवत्त्वे सत्यप्यनाप्तवाक्ये बाधकप्रमायामन्वयाबोधात् TattvCin.iv(1).260.6; पय: पिबतीत्यादौ प्रकृते चासंभवात् तस्मादन्वयप्रयोजकरूपवत्त्वं साजात्यम् TattvCin.iv(2).308.4; अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमाविरहो निश्चीयते TattvCin.iv(2).312.11; अन्वयप्रयोजकरूपवत्त्वं न योग्यता TattvCin.iv(2).378.1 अस्मादन्वयप्रयोजकरूपवत्त्वं लभ्यिति चेत् न TattvCin.iv(2).392.2; अथ तथानुपस्थितस्यापि विचारस्यान्वयार्हत्वे बाधकाभाव: अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वानभ्युपगमात् GuruCandr.i.318.20; यागादिक्रियायां कार्यत्वान्वये नियोज्यान्वयो हेतु: । ... अन्वयप्रयोजकरूपवत्त्वस्य तन्मते योग्यत्वात् BhāṭṭCin.i.64.25 (*on* i.1.4); अन्वयप्रयोजकरूपवत्त्वस्यैव च योग्यतात्वात् VaiyāBhū.79.19 (*on* 22)

**अन्वयप्रयोजन** (anvaya-prayojana) *n.* objective or purpose of semantic relation अर्थशब्दस्य अन्वयप्रयोजनप्रदर्शनार्थं भाष्यकारेण 'उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति' ... उक्तम् Bṛha.35.6 (*on* i.1.2)

**अन्वयप्रविष्टत्व** (anvayapraviṣṭa-tva) *n.* the state of being included in the (category of) semantic relation न हि वयं पटभेदो घटस्वरूपमित्यन्वयप्रविष्टत्वेन प्रतियोगितया ... पटस्य घटरूपतामापादयाम: AdvaiSi.794.17.

**अन्वयप्रसङ्ग** (anvaya-prasaṅga) *m.* occasion of semantic relation स्वर्गकामस्य ममेदं कार्यमिति एवंबिधबोद्धृत्वलक्षणनियोज्यत्वमिच्छतावश्यमस्येदं कार्यम् ... । तथा च कर्तृत्वेनैवान्वयप्रसङ्ग: NyāyRaMā.163.23; VivaPraSaṁ.135.2.

**अन्वयप्रसङ्गाभाव** (anvayaprasaṅgābhāva) *m.* absence of occasion of semantic relation न तावत् प्रथम: कल्प: स्मरणदशायां पृथक् पृथक् पदार्थस्मरणेन मिथोऽन्वयप्रसङ्गाभावात् ŚrutaPra.iA.189.11 (*on* i.1.1)

**अन्वयप्रसिद्धि** (anvaya-prasiddhi) *f.* renown or fame of family उदयाकरसूनुना उत्पलेन इति पदद्वयस्य व्याख्या दर्शिता । किं च उदयाकरसूनुना इत्यन्वयप्रसिद्ध्या उत्पलेनेति Bhāsk.ii.315.22 (*on* iv.1.18)

**अन्वयप्रिय** (anvaya-priya) *adj.* fond of family निवार्य रुदतो भूप: पूर्लोकानन्वयप्रियान् । क्षमयित्वा स्वापराधान् प्रतस्थे सप्रियासुत: PārśvC.3.737.

**अन्वयफलज्ञान** (anvaya-phalajñāna) *n.* knowledge of the fruit of semantic relation अन्वयमुपलभमानस्यार्थस्य ज्ञाप्यत्वेनान्वयफल(ज्ञाप्यत्वेऽन्वय) ज्ञानदर्शनाच्छब्दस्य तदभावात्तदेवान्वयज्ञानं फलमिति किन्नोपपद्यते NyāyKu.6.6 (F.N. अर्थयोरन्वयज्ञानरूपं फलमुपपादयति)

**अन्वयबल** (anvaya-bala) *n.* [Inst.] on the strength of positive concomitance अन्वयबलेन यदुत्पद्यते विज्ञानं तदनुमानमिति तार्किकस्थिति: TātpaṬ.(U.)369.20 (*on* 5(5).93); अन्वयबलेन हि दृष्टान्तदृष्टकर्तृसदृश: सिध्यतीति नायं प्रसङ्ग: NyāyKa.55.4.

**अन्वयबाध** (anvaya-bādha) *m.* contradiction to semantic relation निषेधस्य त्वस्मन्मते केवलकर्मविषयत्वे संकोचमात्रं नान्वयबाध: ... तथाप्यन्वयबाध एवात्र युक्त: शास्त्रेणैव तथा व्यवस्थाया दर्शितत्वात् NyāyMa.342.7; क्वचित्पुनरन्वयबाधादसंभवता वस्तुसंबन्धेन प्रतिबिम्बनमाक्षिप्यते AlaṅkāSa.76.9; 'कुन्ता: प्रविशन्ति' इत्यत्र ... कुन्तानां तात्पर्यविषयकुन्तिप्रवेशेऽन्वयबाधात्कुन्तपदस्य तत्संयुक्तपुरुषे लक्षणा VaiyāSiMañ.124.3.

**अन्वयबुद्धि** (anvaya-buddhi) *f.* knowledge of semantic relation अन्यान्वितस्वार्थे पदानां सामर्थ्यं न कार्यान्वितस्वार्थे, तथा सत्यर्थवादानामनन्वयप्रसङ्गात् अन्वयबुद्धे: स्तुतित्वात् ViṣṇuSaBh.24.2 (*on* 10); वचनार्थविभक्तिवाच्ययोरुपपत्रान्वयबुद्धिरर्थत: SaṁkṣeŚā.1.511(i.368.6); प्रकरणादिभिस्तात्पर्यनिर्णयहेतुभिरुत्पादिते तस्मिन्यत्र तात्पर्यनिर्णयस्तस्यैवार्थस्यान्वयबुद्धिर्जायते RasGaṅ.137.7.

**अन्वयबोध** (anvaya-bodha) *m.* **A** knowledge of signification तदिदमनभिधातृत्वमनधिगतान्वयबोध एव कल्प्यते पदानाम् नान्यथा TattvBi.158.9; **B** knowledge of semantic relation or verbal cognition, i.e. knowledge of sentence-meaning पदाभिहितै: पदार्थैरन्वयबोध: NyāySu.(Ja.)519B.2 (*on* iii.2.15); गौरश्व: पुरुषो हस्तीत्यादौ नान्वयबोध आकाङ्क्षाविरहात् TarkKau.17.3; जातस्यान्वयबोधस्य विरोधेन बाधात् NyāyPari.194.11; 'राजपुरुष:' इत्यादौ 'राज'पदार्थेन 'पुरुष'पदार्थस्य साक्षान्नान्वयो निपातातिरिक्तनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् SiddhāMu.50.2 (*on* 81); प्रमाणम् ... अन्वयबोधमादधाति PāṇiTaVāNaMā.29.23; अन्वयबोधे विलम्बाभावाच्च लिङ्गविशेषणत्वे ज्ञानत्वं वाच्यम् SarvaDaKau.53.23; यागगतस्य यजिबोधितस्य करणत्वस्य तृतीयान्तनाम्नापि क्रियायामन्वयबोधो वेति भाव: GuruCandr.i.316.23; पद्मत्वादिना नावयवशक्त्यधीनं ज्ञानं कुमुदादौ प्रतिबध्यते शक्त्याकांक्षातात्पर्यादिधीसत्त्वे तत्राप्यन्वयबोधात् GuruCandr.ii.34.1; यदि चाकाश: शब्दाश्रय इति वाक्यस्थमाकाशपदं मुख्यमेव; निर्धर्मितावच्छेदकश्चान्वयबोधो न कुत्रापि ŚaktiVā.73.5; स्वरूपयोग्यत्वे सति

अजनितान्वयबोधकत्वमाकाङ्क्षा तेन 'घटः कर्मत्वं, आनयनं कृतिः' इत्यत्र नान्वयबोधः स्वरूपायोग्यत्वात् Tarkāmr.20.14; पदार्थोपस्थितेरन्तरमन्वयबोधः RasGaṅ.135.16; गङ्गायां घोष इत्यत्र तटत्वेनाप्युपस्थितस्य तटस्य गङ्गात्वेन अन्वयबोधः RasGaṅ.190.5; कथं तर्हि घटो न पश्यतीत्यादौ घटाभावं पश्यतीति नान्वयबोधः RasGaṅ.250.3; 561.1; 643.15; लिङ्पदार्थयोरर्थभावनाशब्दभावनयोरन्वयबोधः प्रवर्त्तनाविषयकृतिरित्याकारको जायते BhāṭṭCin.i.69.28 (*on* i.1.4); i.71.4 (*on* i.1.4); अतः प्रातिपदिकार्थेन विभक्त्यर्थस्याभेदातिरिक्तसम्बन्धेनान्वयबोधो नास्ति BhāṭṭCin.i.93.15 (*on* i.1.4); प्रकरणं हि आकाङ्क्षा सा चान्वयबोधे समर्थापि न विशेषणे समर्था MayūMāli.524.11 (*on* vii.1.1); गुणत्वजातिमनङ्गीकुर्वतां गुणपदाद्रूपत्वरसत्वादिप्रकारेणैवान्वयबोधात् AlaṅkāKau.(Vi).32.9; अन्वयबोधं प्रति ... हेतुत्वस्य त्वयापि कल्पनीयतया ... कारणताकल्पनात् AlaṅkāKau.(Vi.)63.8; धात्वर्थनिष्ठाविशेष्यतानिरूपितप्रकारतासंसर्गेणान्वयबोधं प्रति नञ्पदजन्योपस्थितिमात्रस्य प्रतिबन्धकत्वकल्पनात् AlaṅkāKau.(Vi.)92.4; C knowledge of syntactic relation, cf. अन्वयबोधोत्तरम्.

**अन्वयबोधक** (anvaya-bodhaka) *adj.* which produces the knowledge of semantic relation न च सविषयार्थकेषु विपयितयान्वयबोधकद्वितीयार्थे जाततृतीयया तस्यैव बोधनात् VaiyāBhū.30.8 (*on* 5)

**अन्वयबोधकत्व** (anvayabodhaka-tva) *n.* the state of producing the knowledge of semantic relation श्वेतोऽश्वो धावतीत्यन्वयबोधकत्वदर्शनात् PrakaPañ.392.13; तेन स्मृतानामेवान्वयबोधकत्वमित्याश्रयणीयम् PrakaPañ.407.7; गृहीतसम्बन्धपदोक्तानामगृहीतसम्बन्धानामेवार्थानामन्वयबोधकत्वदृष्टेः ... वाक्येषु तद्बुद्ध्यविवादादिति। तत्र NayaVi.265.8 (*on* i.1.25); प्रशब्दार्थत्वे भावनान्वयो न स्यात् प्रकृतिप्रत्यययोः सम्भूयान्वयबोधकत्वनियमात् TattvCin.iv(2).856.7; प्रमाणान्तरावगतानां पदार्थानामन्वयबोधकत्वादर्शनेऽपि पदैः अभिहितानां तत्किं न स्यादिति चेत् तर्हि न केवलं पदार्थानामन्वयबोधकत्वशक्तिकल्पनम् Nyāy-Su.(Ja.)89A.11 (*on* i.1.1); पदानां संभूयान्वयबोधकत्वव्युत्पत्तेः VaiyāBhū.68.17 (*on* 17)

**अन्वयबोधकवाक्य** (anvayabodhaka-vākya) *n.* sentence producing the knowledge of semantic relation यथासंख्येनान्वयबोधकवाक्यकल्पना, एतत्प्रामाण्यात्, ततश्च बोध इति बोद्धव्यम् LaŚabdeŚe.i.128.10.

**अन्वयबोधक्रम** (anvayabodha-krama) *m.* sequence in (obtaining) knowledge of semantic relation यत्र तात्पर्यग्रहक्रमादन्वयबोधक्रमः तत्रावृत्तिः प्रथमोच्चारणस्य पर्यवसितत्वादिति TattvCin.iv(1).339.6.

**अन्वयबोधजनकत्व** (anvayabodhajanaka-tva) *n.* the state of producing the knowledge of semantic relation शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति न्यायेन शब्दोपस्थापितमादाय शब्दस्यान्वयबोधजनकत्वात् TattvCin.ii(1).685.8.

**अन्वयबोधजनन** (anvayabodha-janana) *n.* act of producing the knowledge of semantic relation धातुसमभिव्याहारस्थले च तदर्थेनान्वयबोधजनननियमेन घटाद्यप्रतिपादकत्वात् TattvCin.iv.(2).352.5.

**अन्वयबोधत्व** (anvayabodha-tva) *n.* the state of being the knowledge of semantic relation शक्यार्थान्वयबोधं विना तत्र तात्पर्यविषयत्वग्रहासम्भवात् संसर्गविषयज्ञानस्यैवान्वयबोधत्वात् VaiyāSiMañ.118.23.

**अन्वयबोधदर्शन** (anvayabodha-darśana) *n.* perception of the knowledge of semantic relation द्वारमित्यादौ ... पिधानादिना अन्वयबोधदर्शनात् TattvCin.iv(1).300.3; वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छब्दसन्निधेरेवान्वयबोधहेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याहियेत TattvCin.iv.(2).469.1.

**अन्वयबोधन** (anvaya-bodhana) *n.* act of producing the knowledge of semantic relation or verbal cognition क्लृप्तं तावत्पदार्थानामाकाङ्क्षासन्निधियोग्यतावशेन सामान्यतोऽन्वयबोधनम् NyāyRa.947.19 (*on* 7.358); श्रुत्यादीनि विनियोगे शेषस्य शेषिणा सहान्वयबोधने कारणानि प्रमाणानि ŚāstrDī.184.9 (*on* iii.1.1); संहत्यैव प्रमाणत्वं शब्दस्यान्वयबोधनात्। पुंसां चेष्टा पुनर्व्यस्ता विशिष्टमनुमापयेत् NyāyKu.8.20.

**अन्वयबोधनशक्ति** (anvayabodhana-śakti) *f.* power of producing knowledge of semantic relation सामान्यान्वितभिधानवादिनो मते पदानि तावत् तन्मात्र एव पर्यवसितशक्तीनि, पदार्थानामप्यन्वयबोधनशक्तिर्नाङ्गीक्रियते PrakaPañ.413.5.

**अन्वयबोधनियम** (anvayabodha-niyama) *m.* rule or law of the knowledge of semantic relation प्रथमान्तपदोपस्थाप्येऽन्वयबोधनियमाद्य तदन्वयं विनानुपपत्तेर्वा स्वर्गकामो यागजन्यफलभागिति चतुर्थो बोधः BhāṭṭCin.i.67.11 (*on* i.1.4)

**अन्वयबोधपूर्वक** (anvayabodha-pūrvaka) *adj.* preceded by the knowledge of semantic relation यद्वा विभक्तेः सन्निहितपदार्थगतस्वार्थबोधकत्वमतो बहुव्रीह्यादावन्वयबोधपूर्वकोत्तरपदलक्षणायां षष्ठीतत्पुरुषे च विभक्तिसन्निहितोत्तरपदार्थगतस्वार्थबोधकत्वम् TattvCin.iv(2).776.1.

**अन्वयबोधप्रतिबन्ध** (anvayabodha-pratibandha) *m.* impediment to the knowledge of semantic relation नाप्यन्वयबाधीनज्ञानं प्रतिबध्यते शक्त्याकाङ्क्षादितात्पर्याणां सत्त्वे अन्वयज्ञानस्यावश्यकत्वात् उपाधेरन्वयबोधप्रतिबन्धाहेतुत्वात् TattvCin.iv(2).617.1.

**अन्वयबोधप्रयोजक** (anvayabodha-prayojaka) *adj.* producing the knowledge of semantic relation असाधारणवाक्यदोषाणाह ... दोषा द्वादश कीर्तिताः। तत्र न्यूनमन्वयबोधप्रयोजकपदशून्यम् AlaṅkāŚe.5.2(1)

**अन्वयबोधप्रसङ्ग** (anvayabodha-prasaṅga) *m.* undesired occasion of the knowledge of semantic relation अत एव वृत्त्यविषयशब्दवद् घटादिपदे समवायादिसंबन्धेन सम्बन्धिन आकाशादेरप्युपस्थितस्यान्वयबोधप्रसङ्गः VaiyāBhū.131.1 (*on* 26); शूलिनं पश्येत्यादौ सत्यपि तात्पर्ये विना लक्षणां पङ्कदण्डशूलानामानयनच्छेदनदर्शनकर्मतयान्वयबोधप्रसङ्गात् VaiyāBhū.170.25 (*on* 32)

**अन्वयबोधबहिर्भूतत्व** (anvayabodhabahirbhūta-tva) *n.* the state of being excluded from the knowledge of semantic relation नापि स्मृतस्याप्यवयवार्थस्यान्वयबोधबहिर्भूतत्वमपहारः योग्यतादिबलादवयवार्थस्यान्वयबोधः स्यादेव TattvCin.iv(2).701.3.

**अन्वयबोधयोग्य** (anvayabodha-yogya) *adj.* competent of (conveying) the knowledge of semantic relation तीरादौ सः ... तीरनीरयोरन्वयबोधयोग्यत्वेऽपि तीरे व्यवहारं पश्यति TattvCin.iv(2).668.5.

**अन्वयबोधविरोधिता** (anvayabodha-virodhitā) *f.* opposition or contradiction to knowledge of semantic relation (संधौ वर्णदोषमाह) शब्ददोषकाटस्यान्वयबोधविरोधिता AlaṅkāŚe.22.4(2)

**अन्वयबोधविषय** (anvayabodha-viṣaya) *m.* object of knowledge of semantic relation एको विरोधस्योल्लासकः द्वितीयश्चान्वयबोधविषयः RasGaṅ.574.7.

**अन्वयबोधविषयता** (anvayabodhaviṣaya-tā) *f.* the state of being the object of the knowledge of semantic relation तन्मतेऽध्याहृतार्थस्यान्वयबोधविषयतया पदजन्यपदार्थोपस्थितित्वेन हेतुत्वमेव नास्ति ŚaktiVā.218.5; शाब्दबोधानां समानप्रकारकतयैव हेतुहेतुमद्भावादगृहीतसंकेतानामपि व्यक्तिविशेषाणामन्वयबोधविषयताया उपपादनेऽपि न निस्तारः RasGaṅ.183.3.

**अन्वयबोधविषयत्व** (anvayabodhaviṣaya-tva) *n.* the state of being the object of the knowledge of semantic relation or verbal cognition यदोपस्थापस्य येन विना नान्वयबोधविषयत्वं तस्य तेनाकाङ्क्षा सा चार्थनिष्ठा BhāṭṭCin.i.50.15 (*on* i.1.4); शब्दोपस्थितस्यैवान्वयबोधविषयत्वम् इति नियमश्च संज्ञाशब्दव्यतिरिक्तविषयः MayūMāli.58.20 (*on* i.4.2)

**अन्वयबोधसमर्थ** (anvayabodha-samartha) *adj.* competent in (producing) the knowledge of semantic relation अनासन्नमपि आसन्नत्वभ्रमेण वा अन्वयबोधसमर्थमेव TattvCin.iv.(1).235.3; अन्वयबोधसमर्थत्वे सति अजनिततात्पर्यविषयान्वयबोधत्वमाकाङ्क्षेति केचित् TattvCin.iv(1).237.5.

**अन्वयबोधसामग्री** (anvayabodha-sāmagrī) *f.* totality of causes of the knowledge of semantic relation आकाङ्क्षादेरन्वयबोधसामग्र्याः सत्त्वेऽनुभवानपलापात् TattvCin.i.348.1.

**अन्वयबोधहेतु** (anvayabodha-hetu) *m.* cause of the knowledge of semantic relation संनिधिश्च पदानां निरन्तरोत्पन्नत्वमात्रं तज्ज्ञानं चान्वयबोधहेतुः SarvaDaKau.54.7.

**अन्वयबोधहेतुत्व** (anvayabodhahetu-tva) *n.* the state of being the cause of the knowledge of semantic relation वृद्धव्यवहारे शब्दोपस्थापितेनैवान्वयबोधदर्शनाच्छब्दसंनिधेरेवान्वयबोधहेतुत्वकल्पने द्वारमित्यादौ शब्द एवाध्याहियेत TattvCin.iv(2).469.1.

**अन्वयबोधाकाङ्क्षा** (anvayabodhākāṅkṣā) *f.* expectancy for the knowledge of semantic relation अन्वयबोधाकाङ्क्षासत्त्वेऽपि रसोत्पत्त्यनुकूलाकाङ्क्षादिविरहो दोष इति ध्येयम् AlaṅkāŚe.6.1(46)

**अन्वयबोधाङ्ग** (anvaya-bodhāṅga) *n.* cause of the knowledge of semantic relation आसत्तिरन्वयबोधाङ्गमित्यासत्त्याभावादेवंविधशब्दान्नान्वयबोधः TattvCin.iv(1).242.2.

**अन्वयबोधानन्तरम्** (anvayabodhānantaram) *adv.* after the knowledge of semantic relation नद्यां घोष इत्यत्र गम्भीरनद्योरन्योऽन्यमन्वयबोधानन्तरं गम्भीरनदीपदयोरिव ... न वैयर्थ्यम् Nyāyāmr.460A.6; 460B.8; यथा गम्भीरायां नद्यां घोष इत्यत्र गम्भीरनद्योः परस्परमन्वयबोधानन्तरं विशिष्टार्थसंबन्धि तीरं लक्ष्यते AdvaiSi.696.15.

Bṛha.382.5 (*on* i.1.25); न ह्यन्तराकाङ्क्षा अन्वयहेतुः अपि तूभयाकाङ्क्षा Nyāy-KuA. ii.84.3.

**अन्वया** (anvayā) *f.* name of a lady (daughter of Siddhasena) सिद्धसेन इति श्रेष्ठा तस्यासीत्सान्वयाभिधा राजा PrabhāC. 60.23.

**अन्वयांश** (anvayāṁśa) *m.* part or aspect of semantic relation कारकपदानामन्वयांशे लक्षणा न सर्वत्र ŚrutaPra.iA.95.27 (*on* i.1.1); तात्पर्यविषयान्वयानुमावकत्वमेवाकाङ्क्षा वाच्या। तथा चान्वयांशो व्यर्थः AdvaiSi. 689.13; व्युत्पत्तिग्रहकाले शब्दानां पदार्थमात्रे सामर्थ्यग्रहणे सत्यन्वयांशे ... पदार्थानां परस्परान्वयविषयिणी वाक्यार्थप्रतिपत्तिर्न स्यात् ŚivārkaMaDī. i.177.9 (*on* i.1.4); पदार्थान्तरमनन्तर्भाव्य केवलान्वयांशान्तर्भविण शक्तिग्रहस्य ... अनुपयुक्तत्वात् ŚaktiVā.31.15;अन्वयांशे शक्तिग्रहस्य शाब्दबोधेऽवश्यापेक्षणीयत्वात् ŚaktiVā.32.1; 201.20; यदि वान्विते शक्तिः परं त्वन्वयांशे सैवाज्ञाता पदार्थांशे च सैव ज्ञातोपयुज्यते VaiyāBhū.240.16 (*on* 64); 246.11 (*on* 65)

**अन्वयांशशक्ति** (anvayāṁśa-śakti) *f.* expressive power in the part or aspect of semantic relation संसर्गरूपवाक्यार्थावगमेऽपि तस्य शाब्दत्वसिद्धये वाक्यस्य शक्तिः कल्प्यते .: सा चाज्ञातैव स्वरूपेण हेतुः अन्वितशक्तिवादिमते अन्वयांशशक्तिवत् BhāṭṭCin. i.61.27 (*on* i.1.4); तात्पर्यज्ञानरूपामेवोपस्थितिमादायान्वयांशशक्तिग्रहः VaiyāBhū. 241.7 (*on* 64)

**अन्वयाकृतिसंपन्न** (anvayākṛti-sampanna) *adj.* endowed with (noble) family and form अन्वयाकृतिसंपन्नं तस्मादङ्गिरोविदम्। गोत्राङ्गिरसवासिष्ठं राजा कुर्यात्पुरोहितम् AVPari. 3(3).6.

**अन्वयाख्यानपूर्वम्** (anvayākhyānapūrvam) *adv.* as preceded by the telling or mentioning of family कलिङ्गसेना स्वपितुर्मातुश्च निकटं ययौ। तत्र नामान्वयाख्यानपूर्वं चैतामदर्शयत् KathāSaSāg. vi.3.32.

**अन्वयागत** (anvayāgata) *adj.* A come down through family-tradition द्वेव पादानां (देवपादानां) वयमन्वयागता भृत्या आपत्स्वप्यनुगामिनः Tantrākhyā.9.24; PañcT. 1.38(1) (30.5); Pañcā. 10.27; सर्वथा विभावितं त्वयात्मीयमन्वयागतं मन्त्रित्वमनेनागसेन। नूनं पितापि त एवंलक्षण आसीत् Tantrākhyā. 44.20; PañcT. 1.148 (1) (149.12); Pañcā. 107. 20; स राजा मेघवर्णस्तान् प्रत्येकं प्रष्टुमारब्धः। तस्य चान्वयागताः पञ्च सचिवाः Tantrākhyā. 91.4; Pañcā. 175.6; तात, त्वमस्माकं चिरंतनो(ऽन्वयागतः) सचिवः PañcT. 3.4 (5) (278.5); तस्यान्वयागतमहाप्रतिहारिमुख्यस्संस्तंभिताखिलविरोधिनराधिपौजाः EI. iv. 316.4; B continued in family, hereditary तदेवं देव, वाक्कृतादस्माकं उलूकैः सह वैरम्। (v.l. तद्वत्स एवमस्माभिः सह वैरं कौशिकानामन्वयागतम्) PañcT. 3.56 (3) (312.3); वारणो मेघकान्तस्य शेषाणामन्वयागताः। ध्वजेषु चिह्नतां याताः भावाः PadmP. (Ra.) 54.59; C got by inheritance, i.e. inherited heirloom गृहीतविद्यः प्रतिग्रहजयक्रयनिर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत KāmSū. 43.15 (1.4) (JayaMa. पितृपितामहागतैः); 'अन्वयागतं' पितृपैत्रामहादि ManuBh. i.405.27 (*on* 4.226); VīraMi. (Śrāddha.) 32.29; असकृत्प्रतिग्रहेण भवति स्वाम्यं दोषस्तु पुरुषस्य। तेनान्वयागतमितीदशमशुद्धमेव ManuBh. ii.302.5 (*on* 9.209); (सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः) दायोऽन्वयागतं धनम् ManuBh.ii. 363.7 (*on* 10.115); ii.429.8 (*on* 11.184); SmṛtiCan. ii.450.19; ManvaMu. 447.9 (*on* 10.115); जीमूतकेतुरित्यासीत् ...। विद्याधरेश्वरः ...। तस्यासीत्स्वगृहोद्याने कल्पवृक्षोऽन्वयागतः KathāSaSāg. xii.23.7; (अन्वयागतं धनं सप्तविधम्) अन्वयागतं दायप्राप्तम् Catur Cin. iii (1).527.3; VīraMi. (Śrāddha.) 33.9; विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम्। ... स्थावरं सप्तधा कृतम्। ... अन्वयागतं पित्रादिक्रमोपात्तम् VīraMi. (Vyavahāra.) 153.3.

**अन्वयागतकुलदेवता** (anvayāgata-kuladevatā) *f.* family goddess who has come down through tradition तमभिषेकमण्डपम् ... अन्वयागतकुलदेवतोपकण्ठपरिकल्पितसकलकुलधनायुधम् ... अहं संजग्मे YaśasCam.i.320.3.

**अन्वयागतनिवास** (anvayāgata-nivāsa) *m.* dwelling or accomodation come down by inheritance, i.e. inherited house रत्नप्रभः ... नीतिवाक्यमनुस्मृत्य मूलधनप्रदानेनान्वयागतनिवासनिवेदनेन च ... सुदत्तं साधुं समाश्वासयत् YaśasCam.ii.370.11.

**अन्वयागतप्रजाप्रणय** (anvayāgata-prajāpraṇaya) *adj.* wherein the affection for subjects has come down through tradition सचिवः यः खलु मया तत्रान्वयागतप्रजाप्रणये जनपदविषये सर्वर्द्धिसमृद्धेऽपि व्रतप्रश्रिताशयतया त्रिविधास्वपि स्त्रीषु महर्षिरिवासंजातस्मरशरशरव्यहृदयः YaśasCam. i.407.2.

**अन्वयागतविद्य** (anvayāgata-vidya) *adj.* having learning come down through tradition अन्वयागतविद्यानामन्वयागतसंपदाम्। विदुषां च प्रभूणां च हृदयं नावलिप्यते Subhāṣitaratnabhāṇḍāgāra 156.127.

**अन्वयागतसंपद्** (anvayāgata-sampad) *adj.* having wealth come down by inheritance अन्वयागतसंपदाम्। ... प्रभूणां च हृदयं नावलिप्यते Subhāṣitaratnabhāṇḍāgāra 156.127.

**अन्वयाग्रहण** (anvayāgrahaṇa) *n.* 1 non-perception of signification अपोहस्तत्प्रत्यक्षः केवलं शब्दलिङ्गावसेयः शब्दलिङ्गयोश्चान्वयाधीना प्रवृत्तिः न चान्वयग्रहणमसाधारणेन संभवति ... तेन चान्वयाग्रहणेऽपोहः कथमनुमीयेत NyāyRa. 584.20 (*on* 5(13). 71-72); 2 non-perception of invariable concomitance NyāyRa. 584.20 (*on* 5(13). 71-72)

**अन्वयातिरिक्तत्व** (anvayātirikta-tva) *n.* the state of being different from semantic relation कार्यं न समस्तपदसामर्थ्यप्रतियोगि अन्वयातिरिक्तत्वात् NyāyMa. 168.8.

**अन्वयात्मकवाक्यार्थ** (anvayātmaka-vākyārtha) *m.* sentence-meaning of the nature of semantic relation वेदार्थे व्यवहारस्योपायत्वमेकत्वाल्लोके वेदे च पदपदार्थयोः। नन्वेकत्वेऽप्यन्वयात्मकवाक्यार्थधीरहेतुः NayaVi. 264.7 (*on* i.1.24)

**अन्वयादर्शन** (anvayādarśana) *n.* A non-perception of semantic relation क्रियाकारकयोः ... श्रुतयोस्त्वपेक्षा सा च परस्परसंबन्धादपि निवर्तते इति नार्थान्तरान्वयप्रसङ्ग इति तन्नैवम् सत्यामप्यपेक्षायामन्वयादर्शनात् NyāyRaMā. 84.7; ननु संनिधियोगत्वे द्वे एव व्युत्पत्तावुपलक्षणं स्याताम्। किमाकाङ्क्षया। ... तयोस्सतोरप्याकाङ्क्षाविरहेणान्वयादर्शनात् TantrRaha. 30.20; B non-perception of syntactic relation गौरश्वः पुरुषो हस्तीत्याकाङ्क्षारहितेष्विह। अन्वयादर्शनात्तावदाकाङ्क्षा परिगृह्यते MānaMe. 99.4.

**अन्वयादि** (anvayādi) *adj.* 1A family etc. ब्राह्मोद्वाहविधानेन तदभावेऽपरो विधिः। दातव्यैषा सदृक्षाय वयोविद्यान्वयादिभिः VedaVyāSm. 2.5; मुनिः। अन्वयविद्याभ्यां वृत्तेन च समुच्छ्रितः। त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु। अन्वयादीनि त्रीणि शुक्लानि शुद्धानि येषां ते त्रिशुक्लाः Aparā. 285.3 (*on* 1.200); 1B tradition (of morality) etc. सृष्ट्याद्यं घस्मरः पुत्रं तमभिव्याददात्सुधा। भिनत्ति सर्वमर्यादां नान्वयाद्यप्यपेक्षते BṛĀraUBhVā. i. 2.182; 2A identity etc. (with individual self) यावत्त्वागमतः साक्षान्न वेत्त्यात्मानमद्वयम्। अन्वयाद्यात्मबोधार्थं तावत् तत् केन वार्यते BṛĀraUBhVā. ii.1.173; 2B connection or relation etc. अस्ति चास्य प्रधानस्य प्रसिद्धस्यान्वयादिना। स्वार्थतादिनिषेधेन साधिता पुरुषार्थता ĪśvaSi. (U.) 2.19; 2C semantic relation etc., cf. अन्वयाद्यनुपपत्ति 2B; 3A positive or logical reasoning etc. अन्वयादिनिषेधाय सर्वमात्मेति वाक्यतः। मैत्रेयीत्यादिको ग्रन्थस्तस्मादारभ्यते परः BṛĀraUBhVā.ii.4.18; 3B positive invariable concomitance etc. का चेयं नियतिः ... तस्मिन् सति भाव एव वा। ... न ... 'जातेरहेतुतापत्तेः ... अन्वयादेरयोगतः' TattvPradī. (Ci.) 322.15; 4 continuation etc., cf. अन्वयाद्यनुविधान A.

**अन्वयादिक** (anvayādi-ka) *adj.* family etc. चित्रलेखा तामेत्याश्वासयदातुराम्। मौत्सुक्यं व्रज गंधर्वि सिद्धस्तेऽद्य मनोरथः। एतस्यावगतं सर्वं देशनामान्वयादिकम् SkandP. iv.67.110; स वणिक्सुकुमारं तं दृष्ट्वा पृष्ट्वान्वयादिकम्। ज्ञात्वा कुलीनं सत्कृत्य स्वीचक्रे दैवयोगतः KathāSaSāg. xii.10.21.

**अन्वयादिक्रिया** (anvayādi-kriyā) *f.* process of connection or relation etc. अपुरुषतन्त्रत्वान्नात्मज्ञाने विधिर्भवेत्। अन्वयादिक्रिया त्वस्य तत्तन्त्रत्वाद् विधीयते BṛĀraUBhVā. ii.4.121.

**अन्वयादिरूपसापेक्ष** (anvayādirūpa-sāpekṣa) *adj.* depending upon forms or conditions like positive invariable concomitance etc. सामग्रीभेदः खल्वपि पक्षधर्मान्वयादिरूपसापेक्षमनुमानं व्याख्यातं शब्दे तु न तानि सन्ति रूपाणि NyāyMañ. i. 141.17.

**अन्वयादिविभिन्न** (anvayādi-vibhinna) *adj.* (used as noun) (one) distinct by race etc. अन्वयादिविभिन्नानां यथा सख्यमनीप्सितम्। मैत्रीर्विरोधमय्येवं सार्धं पुरुषवानरैः Bhaṭṭi. 9.132.

**अन्वयादिव्यवहार** (anvayādi-vyavahāra) *m.* verbal dealing with commonness etc. सामान्यमन्तरेणापि समानधर्ममूलान्वयादिव्यवहारोपपत्तेस्तत्र न सूत्रकारेण सामान्यग्रहणं कृतम् NyāyMañ. i.106.14.

**अन्वयादिसाचिव्य** (anvayādi-sācivya) *n.* help or assistance by existence etc. एक एव दण्डः कदाचिद्दण्डत्वेन भासते दण्डवति कदाचिदन्व(?न्व)यादिसाचिव्ये सति दण्डो घटकारणमिति ŚaṅkaVi. (Ā.) 258. 17.

**अन्वयादिस्मरण** (anvayādi-smaraṇa) *n.* recollection of concomitance etc. यद् वा अनुमानम्। न च तत् ... अन्वयादिस्मरणेन विना भवति NyāySu. (Ja.) 490 B. 8 (*on* iii.2.1)

**अन्वयादिस्वरूप** (anvayādi-svarūpa) *n.* nature of noble family etc. अन्वयादिस्वरूपमेतस्य स्वामिनैव पृच्छ्यमानमवगमिष्यामि UdaySuKa. 35.11.

**अन्वयादिहेतु** (anvayādi-hetu) *m.* cause or probans consisting of positive

invariable concomitance etc. न च प्रधानास्तित्वमपि प्रमाणवदन्वयादिहेतूनामसाधनत्वात् NyāyMañ. ii.63.5.

**अन्वयाद्यनुपपत्ति** (anvayādy-anupapatti) *f.* **1** untenability of continuation etc. अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति BrahmSūBh. (Śaṅ.) 351.16 (*on* ii.2.1); **2A** untenability of signification etc. लक्षणा नाम शक्यार्थे वाचकस्य पदस्य अन्वयाद्यनुपपत्त्या तत्संबन्धिपदार्थान्तरज्ञानहेतुः ... शब्दवृत्तिरित्युच्यते LalitāTriBh. 282.12 (*on* 15); **2B** untenability of semantic relation लक्षणिकेष्वपि शक्यार्थमादायैव पदस्य साधुत्वं, पदान्तरसंबन्धेऽन्वयाद्यनुपपत्त्या शक्यतावच्छेदकारोपेणैव लक्ष्यार्थबोधात् VaiyāSiMañ. 80.4; 116.6.

**अन्वयाद्यनुभव** (anvayādy-anubhava) *m.* experience of positive invariable concomitance etc. न चास्मिन् जन्मन्यन्वयाद्यनुभवोऽस्ति। जातमात्राणामुदाहृतत्वात् NyāySu. (Ja.) 490B.8 (*on* iii.2.1)

**अन्वयाद्यनुविधान** (anvayādy-anuvidhāna) *n.* **A** conformity with continuation etc. अन्वयाद्यनुविधानप्रतीतितौल्येऽपि जाग्रद्गजाद्यनुभव एव चक्षुरादिजन्यः SiddhāLeSaṁ.304.4; **B** conformity with semantic relation etc. प्रकर्षादिप्रतीतौ तदन्वयाद्यनुविधानं च द्योतकत्वेनान्यथासिद्धमेव VaiyāBhū. 209.7 (*on* 43)

**अन्वयाद्यपेक्षत्व** (anvayādyapekṣa-tva) *n.* the state of being dependent on existence etc. एक एव दण्डः कदाचिद्दण्डत्वेन भासते ... दण्डो घटकारणमिति तत्र दण्ड इति प्रतीतेः, न प्रतियोगिध्वंसापेक्षत्वम्, अन्वयाद्यपेक्षत्वं वा दृष्टानुसारित्वात् कल्पनायाः ŚaṅkaVi. (Ā.) 258.19.

**अन्वयाद्यभाव** (anvayādy-abhāva) *m.* absence of positive concomitance etc. पूर्वबुद्ध्यनुभूतेऽर्थे उत्तरबुद्धेः कार्यकारणभावात् स्मरणमपास्तम्। ... अन्वयाद्यभावान्न साधनत्वम् NyāySā. 36.17.

**अन्वयाद्यवधारण** (anvayādy-avadhāraṇa) *n.* ascertainment of positive invariable concomitance etc. महावाक्यार्थबोधे अवान्तरवाक्यार्थबोधो हेतुः तथैवान्वयाद्यवधारणात् VedāntPari. 213.3.

**अन्वयाद्यवलोकन** (anvayādy-avalokana) *n.* observation of positive semantic relation etc. वाक्यार्थप्रतिपत्तौ हि पदार्थ (v.l. °र्था) ज्ञानमेव च। प्रतिबन्धो यतस्तस्मादन्वयाद्यवलोकनम् TaiUBhāVā. 189.6 (2)

**अन्वयाद्यविलोचन** (anvayādy-avilocana) *n.* non-observation of semantic relation etc. वाक्यार्थप्रतिपत्तौ हि पदार्थज्ञानमेव च। प्रतिबन्धो यतस्तस्मादन्वयाद्यलोकनम् (v.l. °न्वयाद्यविलोचनम्) TaiUBhāVā. 189.6 (2)

**अन्वयाद्यसंभव** (anvayādy-asambhava) *m.* impossibility of invariable concomitance etc. कर्पासरक्तताद्दृष्टान्तोऽस्तीति चेत् तदसाधीयः। साधनदूषणयोरसंभवात्। तथा हि अन्वयाद्यसंभवान्न साधनम् SyādvāMañ. 18 (73)

**अन्वयाधिकरण** (anvayādhikaraṇa) *n.* name of a section (BrahmSū. i.1.4) (*lit.* chapter dealing with the topic of connection) सर्वत्र स्पर्शसंकरावभासः, न तत्त्वतः तथान्वयव्यतिरेकात्। ... त्वचा रत्नलेखाद्यग्रहणम्। तदुक्तमन्वयाधिकरणे भेदाभेदविरोधनिदर्शने विवरणकारैः NyāySiA. 251.4.

**अन्वयाधिगत** (anvayādhigata) *adj.* got by inheritance (अकृच्छ्राधिगतवित्तः) अन्वयाधिगतं निधिलाभात् वावाप्तं धनं येन। अन्यथा कृच्छ्रप्रदः स्यात् JayaMa. 308.6 (*on* 6.1)

**अन्वयाधिप** (anvayādhipa) *m.* master, i.e. founder of the family प्रभोर्बहुमतस्तस्य प्रथते कृष्णपंडितः। ... यजुर्वेदादिषु ख्यातिं यस्याप्तस्यान्वयाधिपः। वसिष्ठाद्यैर्भरद्वाजो वर्ण्यते वंशकर्तृभिः EI. xiv.73.49.

**अन्वयाधीन** (anvayādhīna) *adj.* [*f.* –ā] **1** dependent on positive invariable concomitance न चान्वयस्यानुमानाङ्गत्वे शाब्दे युक्तिर्वक्ष्यते। अत्रैव ज्ञातसंबन्धपदेन तस्योक्तत्वात्। अत एवान्वयाधीनत्वमनुमानस्य च स्थितमिति वक्ष्यति Kāśi. iii.79.22 (*on* 5(4).133); **2** dependent on signification अपोहस्त्वप्रत्यक्षः, केवलं शब्दलिङ्गावसेयः शब्दलिङ्गयोश्चान्वयाधीना प्रवृत्तिः NyāyRa. 584.18 (*on* 5(13).71-72)

**अन्वयाधीनजन्मत्व** (anvayādhīnajanma-tva) *n.* the state of having origin dependent on positive invariable concomitance अन्वयाधीनजन्मत्वात् अनुमानस्य च स्थितम् ŚlokaVār. 5(5).93 (429.4); अनुमानस्यान्वयाधीनजन्मत्वात् Kāśi. iii.201.6 (*on* 5(8).18); अन्वयावगतिपूर्विकैव तथोपपत्त्यवगतिः तथा सति चार्थापत्तिरनुमानमेवान्वयाधीनजन्मत्वात् NyāyKu. 223.14.

**अन्वयाधीनात्मलाभ** (anvayādhīnātmalābha) *adj.* having obtainment of one's own nature dependent upon positive invariable concomitance अन्वयाधीनात्मलाभमनुमानज्ञानम्, न च भूतलभावस्य सर्वैरभावैस्संबन्धो ज्ञायते Kāśi. iii. 205.20 (*on* 5(8).31)

**अन्वयानङ्गीकार** (anvayānaṅgīkāra) *m.* non-acceptance of semantic relation न चैवं विशिष्टविधिवेलायां खनित्रादेरन्वयानङ्गीकारात् न मत्वर्थलक्षणापत्तिः MīmāKau. i.165.2 (*on* i.4.2)

**अन्वयाननुभावकत्व** (anvayānanubhāvaka-tva) *n.* the state of not conveying semantic relation येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षा SiddhāMu. 52.12 (*on* 84); अखण्डार्थबोधे स्वरूपात्मकाभेदस्य ... परमते स्वरूपे तस्य तत्संसर्गावगाहिबोधस्वीकारेण तस्य ... स्वरूपे स्वरूपस्यान्वयाननुभावकत्वादिरूपाकाङ्क्षादि बोध्यम् LaCandr. 690.36.

**अन्वयानपेक्ष** (anvayānapekṣa) *adj.* not dependent on positive invariable concomitance यस्य ह्यन्वयनिबन्धनैव प्रत्यायनशक्तिः तदेव लिङ्गं शब्दस्त्वन्वयानपेक्षः स्वरसादेव शक्तो लिङ्गविलक्षणत्वान्नानुमानाय कल्प्यते NyāyRa.430.9 (*on* 5(5).95)

**अन्वयानभिधायिन्** (anvayānabhidhāyin) *adj.* not conveying semantic relation अन्वयशब्देन तज्ज्ञानमुपलक्ष्यते। ... अन्वयानभिधायिभिरपि पदैर्यद्यन्वयं प्रतिपद्यते। तदा गवादिपदैः अश्वादिकमपि प्रतिपद्येत NyāySu. (Ja.) 522B.5 (*on* iii.2.15)

**अन्वयानर्ह** (anvayānarha) *adj.* **1A** not fit for syntactic relation or construing परे तु डतरादिभ्य इति विरुद्धविभक्तिप्रक्रम्यन्तत्वादङ्क्स्येत्यनेनान्वयानर्हमिति डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थः LaŚabdeŚe. i.285.8; **1B** not fit for semantic relation, cf. **अन्वयानर्हता; 2** not fit for relation of similarity यत्रैकस्यैवार्थस्यानन्वितमन्वयानर्हमुपमानत्वमुपमेयत्वं च कल्प्यते यत्तत्रासावनन्वयोऽलंकार उदाहृतः AlaṅkāMañ. 11.9.

**अन्वयानर्हता** (anvayānarha-tā) *f.* the state of not being fit for semantic relation परमात्मलिङ्गानां भूताकाशेऽन्वयानर्हता आकाशशब्दस्य यौगिकार्थे ग्राह्ये सति ... मुक्तात्मपरमात्मविषयत्वेन संशयोत्थानं युक्तम् ŚrutaPra. ii.89.25 (*on* i.3.42)

**अन्वयानर्हत्व** (anvayānarha-tva) *n.* the state of not being fit for semantic relation आकाशश्रुत्या भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वन्यायस्त्वपरायणत्वादीनां भूताकाशेऽन्वयानर्हत्वाद् आकाशशब्दाभ्यासे सत्यपि तद्बाधेन परमात्मपरत्वं निर्णीतम् ŚrutaPra. ii.89.14 (*on* i.3.42); आकाङ्क्षाविरहेणानिर्धारितोभयरूपभावनामात्रस्य गुणफलाभ्यामन्वयानर्हत्वात् MayūMāli. 71.2 (*on* i.4.6)

**अन्वयानवगम** (anvayānavagama) *m.* non-perception of semantic relation प्रतिज्ञावाक्ये धर्म्युपसर्जनत्वेन धर्मनिर्देशः तथापि स न दोषाय ...। अवश्यंभावि च पुनरुद्धारणम्, अन्यथान्वयानवगमात् TātpaṬ.(U.)314.14 (*on* 5(4).38)

**अन्वयानिश्चय** (anvayāniścaya) *m.* non-ascertainment of semantic relation निश्चयशब्देन ज्ञानमेवाभिधीयते। अन्वयानिश्चये तेन ज्ञानमेवास्ति नान्वये PrakaPañ. 35.4.

**अन्वयानुगम** (anvayānugama) *m.* **1** knowledge of positive invariable concomitance किमिदानीमनुमानेऽपि प्रत्यक्षानुमानसमाहारजो विशिष्टबोधः। न। अनुमानस्यान्वयाधीनजन्मत्वात्। विशिष्टेनैव चान्वयानुगमात् Kāśi. iii. 201.6 (*on* 5(8).18); **2** knowledge of immanence सत्त्वरजस्तमोभिः ... सर्वासाम् ... भावव्यक्तीनामन्वयानुगमा दृश्यन्ते RājMār. 71.5.

**अन्वयानुगमन** (anvayānugamana)) *n.* ascertainment of positive invariable concomitance कार्यदर्शनात् विवेकावसायेऽपि साध्यसिद्ध्युत्तरकालभावी पक्षधर्मतावसायोऽन्वयानुगमनं च व्यर्थम् HetuBiṬ. 56.7.

**अन्वयानुपपत्ति** (anvayānupapatti) *f.* **A** untenability of semantic relation 'जातीनामन्वयानुपपत्त्या व्यक्तिरवसीयत' इति चेन्न परस्पराश्रयप्रसङ्गात् NyāyKuA. i.115.1; सामर्थ्यमात्रेणाप्यशाब्दस्यान्वयानुपपत्तेर्लिङ्गबलाच्छ्रुतिकल्पनामाह VedāntKa. 421.23 (*on* iii.3.25); यत्र प्रयुक्तस्य शब्दस्यार्थाविवक्षायामन्वयानुपपत्त्या[illegible] तत्रोद्देश्यविशेषणविवक्षा तत्र तत्राङ्गीकृता ŚrutaPra. iB.103.23 (*on* i.1.2); [illegible] तथापि मुख्येऽन्वयानुपपत्तिरेव लक्ष्ये लक्षणाबीजम् TattvCin. iv(2).691.5; [illegible] देवदत्त इत्यत्र तद्देशकालवैशिष्ट्यैतद्देशकालवैशिष्ट्ययोर्युगपदन्वयानुपपत्त्या [illegible] विशेषणत्यागेन देवदत्तपिण्डमात्रमेव लक्षणया बोध्यते VedāntRaMañ. [illegible] 62.16); आत्मशब्दः शरीरावयवपर उपचारात् अन्वयानुपपत्ते[illegible] Upask. 224.4 (*on* v.1.6); सर्वस्यापि वाक्यस्यावाच्ये [illegible] ... अन्वयानुपपत्तेः .... लक्षणाबीजस्य विध्यविधित्साधारण्याद् Nyāyāmṛ. [illegible] AdvaiSi. 376.5; Nyāyāmṛ. 463A.7; 'यष्टीः प्रवेशय' इत्यत्र [illegible] यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात् SiddhāMu. 49.7 (*on* 82); [illegible] योरर्थवादाः ... लक्षणादिकं हि तात्पर्यानुपपत्त्या वा स्यात्। [illegible] वा MīmāKau. iii (1).3.3 (*on* i.2.1); न चैवकारार्थस्या[illegible] पदार्थेष्वन्वयानुपपत्तिः BhāṭṭDī. iii.285.17 (*on* x.4.12); [illegible] लक्षणा ... प्रत्ययवाच्यफलभावनायाः समानपदोपात्तेन यागेन ... [illegible]

सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात् MīmāNyāPra. 195.25; 196.15; ब्रह्मपदवाच्यस्य ... अहंपदवाच्यस्य ... च ऐक्यबोधे उक्तविशेषणयोरपि ऐक्यमवश्यं बोध्यमित्यन्वयानुपपत्त्या लक्षणया शुद्धयोरैक्यबोधः GuruCandr. i.312.6; सोमपदे ... वाक्यार्थधीः स्वीक्रियते ... प्रथमं भावनायां यागस्य ... करणत्वेनान्वयानुपपत्तिः LaCandr. 377.30; लक्षणाबीजं तु तात्पर्यानुपपत्तिरेव न तु अन्वयानुपपत्तिः। VedāntPari. 208.1; न च काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्तेरभावात् ... लाक्षणिकस्य नानुभावकत्वसंभवः ... इति वाच्यम् ... लाक्षणिकत्यानुभावकत्वे ... अन्वयानुपपत्तेः ŚaktiVā.24.13;'रामार्जुनगतिस्तयो'रित्यत्रार्थान्तरविषयत्वेऽप्यन्वयानुपपत्तेरभावान्महति वैलक्षण्ये शब्दान्तरसंनिध्युदाहरणत्वायोगात् RasGaṅ. 151.16; अन्वयानुपपत्तिरपि लक्षणाबीजम् RasGaṅ. 545.10; व्रीहित्वजातेः ... अन्वयितावच्छेदकरूपेणानुपस्थितेस्तत्र पदार्थान्तरस्यान्वयानुपपत्तेरिति मन्यते VyutpaVā. 14.3; 157.3;(रचनानुपपत्तेश्च नानुमानम्) चशब्देनान्वयानुपपत्तिः समुच्चिता। न हि बाह्या घटादयः सुखादिरूपतयान्विताः GoviBh. 115.6 (on ii.2.1); अन्वयानुपपत्तेस्तात्पर्यज्ञाने एवोपयोगः सर्वेषां नानार्थत्वाद्य तदावश्यकत्वात् VaiyāBhū.194.18 (on 36); तस्य ... रमणीयादिपदेन च बोधने एकस्य निराकाङ्क्षत्वादन्वयानुपपत्तिः AlaṅkāKau. (Vi.) 67.6; 88.2; **B** untenability of signification (between word and meaning) पङ्कजादिपदे .. श्रोतुरन्वयानुपपत्तिं विना मण्डूकादिबोधाभावस्यानुभाविकत्वादतिप्रसङ्गनिराकरणोपायाङ्गीकरणमिति वैषम्यम् MīmāKau. i 243.13 (on i.4.12); **C** untenability of syntactic relation (between two words) एता इति पदेनेष्टकानां परामर्शे ... आवश्यकेन ऋचां परामर्शेन तासामाहुतिपदसामानाधिकरण्येनान्वयानुपपत्तेरैवैताभिरिति विपरिणामावश्यंभावादिन्द्राय(?न्द्रादय) एव देवताः BhāṭṭCan. 61.7 (on xiv.4.4)

**अन्वयानुपपत्तिधी** (anvayānupapatti-dhī) *f.* knowledge of untenability of semantic relation अर्थवादेषु प्राशस्त्ये ... तात्पर्यानुपपत्तिधीर्हेतुरस्तु, लाघवात्, न तु शक्तिलभ्यार्थानामन्वयानुपपत्तिधीः LaCandr. 701.35.

**अन्वयानुपपत्तिपरिहार** (anvayānupapatti-parihāra)) *m.* removal of untenability of semantic relation 'गङ्गायां घोषः' इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिः, तावताप्यन्वयानुपपत्तिपरिहारात् VaiyāSiMañ. 116.12.

**अन्वयानुपपत्तिपूर्विका** (anvayānupapatti-pūrvikā) *adj.(f.)* preceded by untenability of semantic relation अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव LaŚabdeŚe.i.422.1.

**अन्वयानुपपत्तिरूप** (anvayānupapatti-rūpa) *adj.* of the form of untenability of semantic relation सत्यादिपदानां लक्षणा च न स्यात् ... शक्यसंबन्धो लक्षणेति पक्षेऽन्वयानुपपत्तिरूपलक्षणाबीजाभावात् Nyāyāmṛ. 451A.9; वाक्यस्यपदस्यैव लक्षकत्वादनेकपदोपादानमिति निरस्तम्। अन्वयानुपपत्तिरूपलक्षणाबीजार्थमेव वाक्यस्यत्वस्यापेक्षणात् Nyāyāmṛ. 485 B.7; प्रकृष्टप्रकाशस्य द्रव्यस्य गुणस्य वा चन्द्रे अन्वयोपपत्तेः अन्वयानुपपत्तिरूपलक्षणाबीजाभावादिति – चेन्न AdvaiSi. 679.12; पादाम्बुजं भवतु ते विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः।... तत्र च मञ्जीरादिविशेषणानामन्वयानुपपत्तिरूपबाधकसत्त्वादुपमैव AlaṅkāKau. (Vi.) 413.2.

**अन्वयानुपपत्तिविरह** (anvayānupapatti-viraha) *m.* absence of untenability of semantic relation गोसदृशो गवय इति वाक्येऽन्वयानुपपत्तिविरहात्कथं लक्षणा Upask. 404.10 (on ix.2.5)

**अन्वयानुपपत्तिव्याप्यत्व** (anvayānupapattivyāpya-tva) *n.* [Inst.] as being pervaded by untenability of semantic relation अन्वयानुपपत्तिव्याप्यत्वेन वानुगमेऽन्वयानुपपत्तिरेव लक्षणाबीजम् TattvCin. iv (2). 694.5.

**अन्वयानुपपत्त्यभाव** (anvayānupapatty-abhāva) *m.* absence of untenability of semantic relation द्वितीयसूत्रगतं चोदनापदं मानान्तराप्राप्तिबाधरहितार्थकवाक्यपरं स्यादिति चेन्नैवम्। ... धर्मस्य वेदार्थत्वेन तद्विचारे वेदाध्ययनानन्तर्यतदर्थविवक्षाहेत्वोरन्वयानुपपत्त्यभावात् ŚivārkaMaDī. i.19.18 (on i.1.1); न च ... लक्षणाध्याहारादिना तत्प्रतिपादनम्। यथाश्रुतार्थप्रतिपादनेनैव उपपत्तौ अन्वयानुपपत्त्यभावेन तदसंभवात् BhāṭṭDī. i.20.14 (on i.2.1); अन्वयानुपपत्त्यभावात्र लक्षणेत्यर्थः। ननु अन्वयानुपपत्त्यभावेऽपि तात्पर्याल्लक्षणा स्यात् MayūMāli. 6.19 (on i.2.1)

**अन्वयानुपपत्त्यादि** (anvayānupapattyādi) *adj.* untenability of semantic relation etc. ततसंभवेऽर्थान्तरं न गृह्यते मुख्यार्थे अन्वयानुपपत्त्यादिमूलकलक्षणाकल्पने गौरवात् LaCandr. 763.41.

**अन्वयानुपलब्धि** (anvayānupalabdhi) *f.* non - obtainment of positive invariable concomitance पृथगननुभूयमानोऽपि बाह्योऽर्थः साकारज्ञानावभासान्यथानुपपत्त्यानुमीयते ...। तदिदमनुपपन्नम्, अन्वयानुपलब्धेः NyāyMañ. ii.105.25.

**अन्वयानुभव** (anvayānubhava) *m.* experience or cognition of semantic relation न च लाक्षणिकानामननुभावकत्वादन्वयानुभवः कथमिति वाच्यम् TattvCin. iv (2). 542.3; गङ्गायां घोष इत्यादौ तु यत्किञ्चिच्छक्तपदमादायान्वयानुभव इति संप्रदायः BhāṭṭCin. i.56.5 (on i.1.4); AdvaiSi. 704.6.

**अन्वयानुभवकरण** (anvayānubhava-karaṇa) *n.* distinct means or extraordinary cause of cognition of semantic relation काव्यस्थले च पदार्थज्ञानव्यापारकं उत्प्रेक्षादिसहकृतं मन एवान्वयानुभवकरणम् TattvCin. iv (2). 551.3.

**अन्वयानुभवजनकत्व** (anvayānubhavajanaka-tva) *n.* the state of being the producer of cognition of semantic relation यस्य पदस्य येन पदेन विनान्वयानुभवजनकत्वं नास्ति तस्य पदस्य तेन पदेन समभिव्याहार आकाङ्क्षा TarkKau. 16.24; कारकपदस्य क्रियापदेन विना घटकर्मकमित्यन्वयानुभवजनकत्वाभावात्कारकपदस्य क्रियापदेन सहाकाङ्क्षा TarkKau. 17.1.

**अन्वयानुभवजनन** (anvayānubhava-janana) *n.* production of cognition of semantic relation पदानामन्वयानुभवजननसामर्थ्यमेव शक्तिरित्युच्यते, एकैकपदार्थोपस्थितिस्तु स्मृतिरूपा न शक्तिसाध्या AdvaiSi.702.10; अन्वयानुभवजननसामर्थ्यरूपस्य च मूलसंबन्धस्य विद्यमानत्वात् ... वाक्येनान्वयानुभवजनने आकाङ्क्षायोग्यतासत्तिज्ञानं सहकारि BhāṭṭCin. i.50.1 (on i.1.4)

**अन्वयानुभवसंभव** (anvayānubhava-sambhava) *m.* possibility of cognition of semantic relation पदार्थशक्तत्वेन ज्ञातादेवान्वयानुभवसंभवात्र व्यक्त्यन्वययोः शक्तिः TattvCin. iv (2).699.6.

**अन्वयानुभवाभाव** (anvayānubhavābhāva) *m.* absence of the cognition of semantic relation न च ... शाब्दबोध इति व्यवहारोच्छेदापत्तिरिति वाच्यम्। अन्वयानुभवाभावे तत्पदव्यतिरेकप्रयुक्तत्वभ्रमसंभवात् BhāṭṭCin. i 50.28 (on i.1.4)

**अन्वयानुभवाभ्युपगम** (anvayānubhavābhyupagama) *m.* admission of the cognition of semantic relation सत्यादिपदानां सर्वेषामपि लाक्षणिकत्वे कथमन्वयानुभवोपपत्तिरिति चेत्, नैष दोषः, शक्यस्यैवान्वयानुभवाभ्युपगमात् AdvaiSi. 704.6.

**अन्वयानुभावक** (anvayānubhāvaka) *adj.* **A** conveying semantic relation सर्वपदलाक्षणिकत्वेऽपि न वेदान्तवाक्यानामन्वयानुभावकत्वानुपपत्तिः AdvaiSi.702.9; न चार्थाध्याहारवादिनाम् ... वर्तमानत्वादेर्बोध इष्ट एवेति वाच्यम्। ... तत्रान्वयानुभावकसाकाङ्क्षपदसत्त्वात् VyutpaVā. 197.2; **B** causing the knowledge of semantic relation पदार्थानामन्वयानुभावकत्वात् AdvaiSi. 702.80.

**अन्वयानुविधान** (anvayānuvidhāna) *n.* **1** conformity with positive invariable concomitance अन्वयानुविधानं च सामान्येषु न विद्यते। सदासत्त्वात्र नित्यानां व्यतिरेकस्तु संभवी TattvSaṁ. 777; तस्यान्वयानुविधानादेरनुमेयहेतुत्वे व्योमादावनुपपत्तेस्तदन्यत्वसिद्धिरिति चेन्न। अन्योऽन्याश्रयापत्तेः KhaṇḍanKhā. 1221.16; **2** prescription of application (of performance) व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम् BhāṭṭDī. i. 169.17 (on ii.4.1)

**अन्वयानुषङ्ग** (anvayānuṣaṅga) *n.* association with (inclusion of) presence, i.e. positive thing यस्यापि नाभावरूपो व्यतिरेकः तस्य भावरूपव्यवच्छेदे न भावसिद्धिः स्यादिति नान्वयानुषङ्गः तथानैरात्म्येऽपि न भावसिद्धिः स्यात् PramāVāSvopVṛ. 104.2.

**अन्वयानुसारिन्** (anvayānusārin) *adj.* following or conforming to syntactic relation or construing अन्वयानुसारी हि शास्त्रार्थावसायः ManuBh. i.94.17 (on 2.37)

**अन्वयान्तर** (anvayāntara) *n.* **A** another semantic relation अन्विताः प्रतिपन्ना अन्वयमपि प्रतीतं संपादयन्ति ... वाक्यान्तरे चान्वयान्तरस्यैव प्रतिपन्नत्वात्, तत्परतैव वाक्यस्य PrakaPañ. 412.3; **B** another syntactic relation or construing वाक्योक्तोपमायामिवकारस्य ... अन्वयान्तरमभ्युपगम्य ... उत्प्रेक्षासमासोक्त्योरङ्गता निर्वाह्या Kuval. 171 (248)

**अन्वयान्तरबोध** (anvayāntara - bodha) *m.* cognition of another semantic relation जनितान्वयबोधात् नान्वयान्तरबोधः TattvCin. iv (1).243.1.

**अन्वयान्तरशालिता** (anvayāntaraśāli-tā) *f.* the state of having another semantic relation न च ... अर्थानां वाक्यार्थे संबन्धानर्हत्वम्, न च तल्लक्षिताया अन्वितावस्थाया अन्वयान्तरशालिता TattvBi.156.10; न च पदार्थैर्लक्षितायाः पदार्थानामन्वितावस्थायाः पुनरन्वयान्तरशालिता ... इति चेन्नैवम् TattvPradī. (Ci.) 152.3.

**अन्वयान्तराभाव** (anvayāntarābhāva) *m.* absence of another semantic relation नाप्यन्वितस्य लक्ष्यस्यात्यभिधेयेन संबन्धोऽन्वितस्यान्वयान्तराभावात् तत इह न लक्षणा VedāntKa. 82.8 (on i.1.4)

**अन्वयान्तराभिधान** (anvayāntarābhidhāna) *n.* denotation of another semantic relation यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रचक्षते। तेन तेनान्वितः स्वार्थः

पदैरेवावगम्यते। न चैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यम् TattvCin. iv (1).296.3.

**अन्वयान्तरासंभव** (anvayāntarāsambhava) *m.* impossibility of another semantic relation न श्रौतस्यार्थस्यान्वयायोग्यत्वं, नाप्यन्वितावस्थस्यानवनसंबन्धार्हता। अन्वितार्थस्यान्वयान्तरासंभवात् PrakaPañ. 399.6.

**अन्वयान्वितशक्तिद्वय** (anvayānvita-śaktidvaya) *n.* pair of denotations in semantic relation and semantically related अन्विताभिधायित्वे हि पदानामवश्यमेव ... अन्वयोऽभिधातव्यः। ... ततश्चान्वयान्वितशक्तिद्वयकल्पनादृष्टकल्पना गुरुतरा स्यात् NyāyRaMā. 81.24.

**अन्वयापत्ति** (anvayāpatti) *f.* A undesired contingency of syntactic relation ऋद्धस्येति षष्ठ्यन्तस्यापि राजपुरुष इति पदोपात्ते राज्ञि अन्वयापत्तेः MīmāKau. ii.2.17 (*on* ii.3.1); B undesired contingency of semantic relation घटपदसमवायिकारणीभूताकाशोपस्थितौ तस्यापि स्मरणकर्मत्वेन अन्वयापत्तिः MīmāKau. iii (2).135.20 (*on* ii.1.50); न चैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयापत्तिः BhāṭṭDī. ii.87.21 (*on* iv.1.3); न ह्यत्र प्रतिरूपो जीवोऽणुत्वेन तदङ्गीकृतो मत्स्यादिरूपोपासक इत्युच्यते, बहिष्टस्य सर्वभूतान्तरात्मत्वस्यैकत्वस्य दुःखालेपस्य चान्वयापत्तेः GuruCandr. ii.304.12; सादृश्यस्य विधेयतया प्रतीतिरनुभवसिद्धा न सिध्येत्। ... 'वनं गज इव गृहं देवदत्तो गच्छति' इत्यादौ वनादेरन्वयापत्तेः AlaṅkāKau. (Vi.) 91.8.

**अन्वयापरनामन्** (anvayāparanāman) *adj.* having *anvaya* as second name इदं हि लिङ्गस्यानुमायामङ्गत्वम् यदन्वयव्यतिरेकौ ... अतो यथा व्यतिरेकोऽङ्गत्वम् एवमन्वयापरनामा युक्तिरपि Kāśi. iii.79.13 (*on* 5 (4).132)

**अन्वयापायहेतु** (anvayāpāya-hetu) *m.* cause of ruin or destruction of family कथमयं वैधेयो ममान्वयापायहेतुः ... प्रवाश(स?)वितव्यः YaśasCam. ii.342.16.

**अन्वयाप्रतिपत्ति** (anvayāpratipatti) *f.* non - congnition of semantic relation जैमिनिनापि यत्र पदसमूहे विभज्यमाने नैराकाङ्क्ष्येणान्वयाप्रतिपत्तिः तदेकं वाक्यमिति सूत्रितम् PrakaVi. 298.26.

**अन्वयाप्रतिपत्तितस्** (anvayāpratipatti-tas) *adv.* due to the non - cognition of semantic relation विनाभिधेयस्मरणमन्वयाप्रतिपत्तितः। तत्तत्पदार्थस्मृतयस्तेपामन्वयबोधिकाः TattvPradī. (Ci.) 149.6.

**अन्वयाप्रतियोगित्व** (anvayāpratiyogi-tva) *n.* the state of not being adjunct of semantic relation न चाधिष्ठाने अपूर्वमात्रे साधनत्वं, तस्य पदार्थैकदेशत्वेनान्वयाप्रतियोगित्वात् TattvCin. iv (2).390.4.

**अन्वयाप्रतिसंधान** (anvayāpratisandhāna) *n.* non-recollection of positive invariable concomitance अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्यादन्वयाप्रतिसंधानदशायां व्यतिरेक्युपन्यासस्यापर्यनुयोज्यत्वात् तदुक्तम् TattvCin. ii (1).618.2.

**अन्वयाप्रतीति** (anvayāpratīti) *f.* non - cognition of semantic relation अन्वयवान् ...। सोऽन्वयाप्रतीतौ न प्रतीत एव स्यात्, किं तु स्वरूपमात्रमेव PrakaPañ. 410.22.

**अन्वयाप्रयोजकत्व** (anvayāprayojaka-tva) *n.* the state of not being conducive to semantic relation न चैवमव्यवधानस्यान्वयाप्रयोजकत्वे समानपदप्रत्यासत्त्या यागस्यैव करणत्वोक्तिर्विरुध्येतेति वाच्यम् MīmāKau. iii (2).131.23 (*on* ii.1.49)

**अन्वयाप्रसिद्धि** (anvayāprasiddhi) *f.* non-establishment of positive invariable concomitance स्वरूपतस्तावदुदुम्बरेऽन्रत्वं पक्षधर्मेणाप्रसिद्धम् अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः TantrVā. 39,15 (*on* i.2.21); NyāySu. (So.) 75.22 (*on* i.2.21)

**अन्वयाबोध** (anvayābodha) *m.* non-cognition of semantic relation अग्निः करणत्वं ओदनः कर्मता पाकः कृतिः इष्टसाधनता इत्यादिपदेभ्यः अग्निनौदनं पचेतेत्यत्रेव अन्वयाबोधात् Tattv Cin. iv (1).233.5; iv (1).274.2; iv (2).378.2; तार्किकाणां मतेऽपि ...। व्यक्तिविशेषणत्वेन शक्त्योपस्थितस्य व्यक्तिनैरपेक्ष्येणान्वयाबोधात् LaCandr. 693.40; भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन ... सममेव जायते न त्वन्येन। ... पाकांशे वा तण्डुलस्यैवादरन्वयाबोधात्। अत्र VyutpaVā. 59.2; 'चन्द्रसादृश्यं मुखवृत्ति' इत्यत्रापि न व्यभिचारः। प्रकारतासंबन्धेन सादृश्यस्यान्वयाबोधात् AlaṅkāKau. (Vi.) 84.8.

**अन्वयाबोधकत्व** (anvayābodhaka-tva) *n.* the state of not producing cognition of semantic relation न च तादृग् भ्रान्तिविरहः ... आपाद्यः, ... न हि ... अत्र पदार्थानुपस्थापकत्वम्, न वा ... अन्वयाबोधकत्वम् AdvaiSi. 632.13; उद्देश्यविधेययोरन्वयाबोधकत्वेऽपि ब्रह्मणीत्यनेन ब्रह्मनिरूपितत्वरूपस्योद्देश्यस्य ... समर्पणेन ब्रह्मनिरूपिताधेयत्वे तत्तद्देशावच्छिन्नत्वलाभात् LaCandr. 12.2.

**अन्वयाबोधन** (anvayābodhana) *n.* absence of producing cognition of semantic relation नवीनास्तु ... असमुदितानां सत्यादिपदानां लक्षकत्वात्र वैयर्थ्यम् ... इत्याहुः। तत्र। ... सत्यज्ञानयोरन्योन्यमन्वयाबोधनात् Nyāyāmr. 460B.6.

**अन्वयाभरण** (anvayābharaṇa) *n.* ornament of family (लङ्का नाम नगरी) तस्यां च रक्षसामधीश्वरः पुलस्तेरपत्यम् अन्वयाभरणमम्भोजभुवो भगवतः ... अस्ति राजा विभीषण इति UdaySuKa. 84.19; अन्वयाभरणं देवी पितुरानन्दपारणम्। तमोहरणमर्यन्वकरणं सुषुवे सुतम् RājTa. (Jo.) 652.

**अन्वयाभरणदासकर्मन्** (anvayābharaṇa-dāsakarman) *n.* service of (king who is) ornament of family फलशङ्कया विहितझम्पयोः पुरा शशिसूर्ययोश्चकितयोश्युतं महः परिवृद्धतामिव नयत्यहर्निशं दधदन्वयाभरणदासकर्म यः (सचिवः) PṛthviVi. 9.43.

**अन्वयाभाव** (anvayābhāva) *m.* 1A absence of logical reasoning or inference B absence of positive concomitance 2A absence of connection or relation 2B absence of semantic relation 2C absence of syntactic relation or construing 3 A absence of descendent, offspring or progeny B absence of lineage 1A absence of logical reasoning or inference नाचेतन आत्मा अस्वातन्त्र्यप्रसङ्गाच्चक्षुरादिवदिति। अन्वयाभावादयुक्तम् NyāyVār. 352.18 (*on* iii.1.3); अदृष्टिरन्वयाभावो विपरीतश्रुतिर्भ्रमः। ... पूर्वपक्षेषु युक्तयः AnuVyā. 12B.5 (*on* 1.3); 1B absence of positive concomitance साधर्म्येणापि हि प्रयोगेऽर्थाद् वैधर्म्यगतिरिति। असति तस्मिन् (व्यतिरेके) साध्येन हेतोः अन्वयाभावात् NyāyBi. 3.27; विरोधादन्वयाभावाद्व्यतिरेकाप्रसिद्धितः NyāyVi.2.344; अन्वयाभावान्नैतदनुमानमिति चेन्न। केवलान्वयिनो व्यतिरेकाभावेन प्रमाणान्तरप्रसङ्गात् NyāySā. 33.6; यदि तु मा भूत् सामान्यं, विशेष एव हेतुरुच्यते, तदयुक्तम्। अपक्षधर्मत्वादन्वयाभावाच्च Kāśi. ii.63.7 (*on* 5 (2).105); न चासति तस्मिन् नानुमानाङ्गं संभवतीति तेयामन्वयाभावो न दोषायेति Kāśi. iii.80.5 (*on* 5 (4).133); iii.92.22 (*on* 5 (4).164); व्यक्ताव्यक्ते पक्षीकृत्यान्वयाभावेनावीत एव हेतुः त्रैगुण्याद् इति वक्तव्यः SāṁkhyaTaKau. 292.7 (*on* 14); व्यतिरेकाभावं प्रदर्श्यान्वयाभावं दर्शयति Loc. 25.12 (*on* 1.4); येऽपि तावत् ... धर्मा विकल्पास्पदीभूतास्तेऽप्यन्वयाभावात्र लिङ्गम् NyāyRa. 398.20 (*on* 5 (4).164); अन्वयाभावादिति चेत् एवमेव तावता विशेषेणानुमानेऽर्थापत्तिव्यवहारं न वारयामः NyāyKuA. ii (1).229.11; पृथिवीव्यवहारः पृथिवीत्वस्यान्वयव्यतिरेकाविति चेत्। न। पृथिवीत्वनिमित्तकत्वे पृथिवीव्यवहारस्य साध्ये अन्वयाभावात् Kiraṇā.43.9; साधर्म्येणापि प्रयोगे अर्थाद्वैधर्म्यगतिः, असति तस्मिन् साध्येन हेतोरन्वयाभावात् VyaktiVi. 82.20; 2A absence of connection or relation अनन्यत्वेऽन्वयाभावादन्यत्वेऽप्यनपाश्रयात्। न याति न च तत्रासीदस्ति पश्चात्र चांशवत् PramāVār. 1.153; अव्यवस्थया ह्युभयस्मिन् मनसि विपरिवर्तमाने संशयो भवति। न चासाधारणेन किंचिद् बुद्धावाधीयते, तस्य केनचिदन्वयाभावात् Kāśi.iii.61.7 (*on* 5 (4).88); विष्णुपुराणे अतिथिधर्मेण सहागतानां ब्राह्मणक्षत्रियवैश्यानाम् ... भोजनं दातव्यमिति प्रतिभाति तच्छ्राद्धव्यतिरिक्तविषयमेवेति वेदितव्यम्। अब्राह्मणानां श्राद्धेऽन्वयाभावात् CaturCin. iii (1). 440.22; यत्र तु ... भोक्तृसंस्कारे ... कर्तृसंस्कारे पुरुषस्य संस्कार्यत्वं तत्र तस्य ... समवायघटितसंबन्धेनान्वयाभावेन नोद्देश्यत्वविघातः MīmāKau. i.225.10 (*on* i.4.8); 2B absence of semantic relation अयशब्दप्रयोगः। तत्र ... नापि मङ्गलार्थो मङ्गलस्य वाक्यार्थेऽन्वयाभावात् BrahmSūBh. (Bhā.) 1.18 (*on* i.1.1); अनन्वितार्थमपार्थकमित्यर्थः। न वेदं निरर्थकं वाचकत्वात्। न चार्थान्तरमन्वयाभावात् TārkiRa. 338.10; अन्वयाभावस्तर्हि भवेत् TattvPrakā. 48B.2 (*on* i.3.16); तसिलप्रत्ययोऽत्र जनिकर्तृप्रकृतिरूपापादानपञ्चम्यन्तात्र भवति। जनिकर्तुः प्रपञ्चस्य ... 'यतो वा इमानि भूतानि जायन्ते' इति मूलश्रुताविव यच्छब्दनिर्दिष्टकारणसंबन्धित्वेनान्वयाभावात् ŚivārkaMaDī. i.116.8 (*on* i.1.2); घात्वर्थस्याप्यत्र कारकत्वे नान्वयाभावे तृतीयान्तानां ज्योतिष्टोमादीनामनन्वयापत्तिः MīmāKau. iii (2).31.17 (*on* ii.1.5); अनन्वये ... सादृश्यस्य द्वितीयसब्रह्मचारिनिवर्तमात्रार्थमुपात्तत्वेन स्वयमप्रतिष्ठानादचमत्कारितैव। तस्यान्वयाभावादनन्वयं तमाहुः RasGaṅ. 204.11; 225.9; 394.5; यज्ञस्य यः प्राग्भागस्तद्धर्म उपांशुत्वमिति पूर्वपक्षोऽनुपपन्नः। ... यज्ञस्य यत् प्राचीनं तेनोपांश्वित्यन्वयाभावात् MayūMāli. 585.13 (*on* ix.1.6); लक्षणत्वं वस्तुतदेव निमित्तम्। ... तद्योत्यसंबन्धेनान्वयाभावात्र द्वितीया LaŚabdeŚe. i. 540.14; ii.127.5; 2C absence of syntactic relation or construing नान्वयस्यात् शाब्दोऽस्त्येव समन्वय इति चेदर्थसंस्पर्शी शब्दः प्राप्नोति बहिरन्वयाभावात् NyāyMañ. i.370.6; सूक्तवाकमन्त्रेण पृथगुच्चारितानां देवतापदानामन्वयाभावात् NyāyMāVi. 651.16 (*on* xi.3.16); (गुणा हरौ। अधिगच्छ तान्) हरौ गुणाः सन्ति तानधिगच्छेत्यन्वयः। तत्र हरौ अधि अनयोरन्वयाभावात् समासो न जातः Prasā. i.473.6; i.492.10; ननु देशस्य प्रकृतेऽन्वयाभावात् कथं दिक्शब्दत्वम् MayūMāli. 725.18 (*on* x.5.2); 3A absence of descendent, offspring or progeny भार्यया ऊर्ध्वमन्वयाभावे भर्तरि भार्यारिक्थं भवेत्। अप्रजस्त्रीधनं भर्तुः SmṛtiCan. iii.664.10; नगरमिदं स्वामिना विरकालललितमन्वयाभावात्केन

परां कोटीं नीयते PrabaCin.109.22; निर्वपेदित्यनेनान्वयः। अन्वयाभावे तत्सकुल्येषु निर्वपेदित्यन्वयमुखेनाभिधानात् Subodhi. 30.4 (*on* 2.51); **3B** absence of lineage भ्रमहीने तु प्रासादे निरन्वयतां च विमृश्यान्वयाभावे धर्मसन्तानमेवास्तु ... इति बुद्ध्या विभाव्य ... ध्वजाधिरोपं मन्त्री कारयामास PrabaCin.87.11.

**अन्वयाभावतस्** (anvayābhāva-tas) *adj.* due to the absence of semantic relation सवनीयपुरोडाशे देवोत्कर्षो न विद्यते। अस्ति वा पश्वनङ्गत्वात्रान्वयाभावतोऽस्ति सः JaiNyāMā. 651.5 (*on* xi.3.16)

**अन्वयाभावदोष** (anvayābhāva-doṣa) *m.* defect of absence of connection or relation हृत्पद्मस्थत्वम्। ... तद्भवणोर्जीवस्यैव युक्तं न सर्वगतस्य हरेः। न चान्वयाभावदोषः TattvPrakā. 47B.8 (*on* i.3.14)

**अन्वयाभावप्रसङ्ग** (anvayābhāva-prasaṅga) *m.* **A** undesired contingency of absence of semantic relation विचारस्य ज्ञानद्वारैव मोक्षसाधनत्वज्ञापनम्। अन्यथा योग्यताविरहेणान्वयाभावप्रसङ्गात् NyāySu. (Ja.) 18A.10 (*on* i.1.1); **B** contingency of absence of syntactic relation जनिकर्तृविशेषणमन्यथैवार्थवदिति नैतद्युक्तम्। ... अपादानपञ्चम्यन्तस्य स्थित्यादिभिरन्वयाभावप्रसङ्गात् ŚivārkaMaDī. i.116.24 (*on* i.1.2); न च 'तज्जला'नित्यस्यापि ... जगदपृथक्सिद्धब्रह्मपर्यन्तत्वं वाच्यम्। तथा सति ... सर्वं ब्रह्मेति समानाधिकरणनिर्देशोपपादकतया तज्जलानित्यस्यान्वयाभावप्रसङ्गात् ŚivārkaMaDī. i.310.32 (*on* i.2.1)

**अन्वयाभावोदाहरण** (anvayābhāvodāharaṇa) *n.* example of the absence of significance अन्वयाभावोदाहरणानि संक्षिपति विप्रेति NyāyRa. 893.19 (*on* 7.170); YuktiSneha. 156.4 (*on* i.1.7)

**अन्वयाभिधान** (anvayābhidhāna) *n.* **A** denotation of semantic relation वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगिपदान्तरं कल्प्यते VedāntPari.238.2; द्वारमित्यादौ अन्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापकपदं विना अनुपपन्नम् VedāntPari. 239.1; **B** mention of positive concomitance द्विविधमेव हीति। न त्वत्रान्वयाभिधानमात्रेण केवलव्यतिरेकिशङ्का कर्तव्या NyāyVārPari. 749.6.

**अन्वयाभिधानादि** (anvayābhidhānādi) *adj.* mention of positive invariable concomitance etc. यत्र विषये केवलव्यतिरेकिणि। ए(वं सामान्यान्व)वमन्वयाभिधानादिना साधनं कार्यमिति नियामकं (मानं ना) नास्ति NyāySu. (Ja.) 473A.4 (*on* iii.2.1)

**अन्वयाभिधानोपयोगिन्** (anvayābhidhānopayogin) *adj.* conducive to the denotation of semantic relation यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्या अन्वयाभिधानोपयोगिपदान्तरं कल्प्यते, तत्र अभिधानानुपपत्तिः VedāntPari. 238.3.

**अन्वयाभिधायक** (anvayābhidhāyaka) *adj.* denotative or expressive of semantic relation यत्पदमन्विताभिधायकं तदन्वयाभिधायकमेव PrakaPañ. 410.15.

**अन्वयाभ्युपगम** (anvayābhyupagama) *m.* admittance of semantic relation प्रतीयमानार्थपरित्यागेनार्थान्तरपरत्वं वा, अशक्यार्थत्वं वा। नाद्यः ...। नान्त्यः ... शक्यैकदेशस्यान्वयाभ्युपगमात् AdvaiSi. 374.9; वृत्तित्व एव न शक्तिः सामानाधिकरण्यसंबन्धेन चन्द्रभेदस्य धर्म एव अन्वयाभ्युपगमात् AlaṅkāKau. (Vi.) 64.2.

**अन्वयायोग** (anvayāyoga) *m.* **1** untenability of succession or continuity यदि वा सर्वमेवेदं क्षणिकं स्यान्न वा तथा। क्षणिकत्वेऽन्वयायोगः क्रमिज्ञानं च नान्यथा TattvSaṁ. 906; **2A** untenability of syntactic relation न च ... फलभावनाया धात्वर्थाविरोधेऽर्थाक्षिप्तया धात्वर्थभावनयेद्विदादीनां संबन्ध इति वक्तव्यम्। ... अश्रुततया च तया शब्दान्तरस्यान्वयायोगात् ŚāstrDī. 59.5 (*on* i.4.2); नञर्थस्य न धात्वर्थेनान्वयः, ... नापि कलञ्जादिपदार्थैरन्वयः, ... भिन्नपदस्य नञोऽर्थेनान्वयायोगात् MīmāNyāPra. 261.2; **2B** untenability of semantic relation (रजतत्वादिजातिः) न तावत् परमार्थभूता। तस्या अपरमार्थान्वयायोगात्। नाप्यपरमार्थभूता। परमार्थान्वयायोगात् BrahmSūBh. (Rā.) 95.21 (*on* i.1.1); स्वतन्त्रेषु पदार्थेषु स्मारितेषु परस्परमन्वयायोगः Kiraṇā. 320.22; ग्रहैकत्वं ह्यप्राप्तत्वात्रानुवदितुं शक्यते संमार्गभावनया गुणत्वेन प्रधानत्वेन वा अन्वयायोगात् NyāySu.(So.) 47.14 (*on* i.2.7); सामादिना विरोधे कल्याकाङ्क्षाहेतुकसंबन्धस्य खनित्रादेरन्वयायोगात् MīmāKau.i.166.11 (*on*. i.4.2); ii. 111.9 (*on* ii.4.7); न च 'क्लृप्तीर्वाचयती'ति संख्यया क्लृप्तिभेदः ... अर्थरूपायाः क्लृप्तेरन्वयायोगेन क्लृप्तिपदस्य कल्पतामिति ... क्लृप्तिरूपार्थनिष्ठत्वामावात् MīmāKau. iii (2). 125.19 (*on* ii. 1.48); शब्दबोधे तु संप्रदानत्वस्योद्देश्यत्वेनान्वयायोगमते ... अध्वर्युद्देशेन यजुर्युक्तो विधीयते BhāṭṭDī. iii 268.9 (*on* x.3.21); 'दिशि दिशि जलजानि सन्ति कुमुदानि' इत्यत्रापि जलजादिपदानां लक्षणया योगार्थमात्रबोधकत्वम्, ... तादर्थ्यस्य ... स्वातन्त्र्येण कुमुदादावन्वयायोगात् RasGaṅ. 182.3; 250.8; धात्वर्थस्य विधेयत्वे हि ... करणत्वेनावगम्यमानानामपि वैयधिकरण्येनान्वयो न संभवति करणस्य करणान्तरेणान्वयायोगात् MayūMāli.56.2 (*on* i.4.2); 246.23 (*on* iii.3.7); नवचक्र इति ... जातावेकवचनमिति प्राञ्चः। तन्न। ... विशेषणोपात्तनवत्वसंख्याया जातावन्वयायोगात् SetuBa. 199.26; साक्षात्पदार्थसाक्षात्कारस्य धात्वर्थे साक्षादन्वयायोगात् VaiyāBhū. 207.18 (*on* 42); सर्वादीनीत्यस्य तद्विशेषणत्वात् तदन्तविधिरित्यपास्तम् ... रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगात् LaŚabdeŚe. i. 220.11; आह्लादकत्वस्य धात्वर्थतया नामार्थे मुख्याश्रयत्वादिभेदसंबन्धेनान्वयायोगात् AlaṅkāKau. (Vi.) 67.9; **2C** untenability of contact or relation द्रव्यस्य ... कथमुपांशुयाजात्वसंभवः। इतिकर्तव्यताकाङ्क्षालक्षणेन प्रकरणेनान्वयायोगेऽपि ... उपकारकत्वोपपत्तेः MīmāKau. i.200.18 (*on* i.4.4); **3** untenability of positive invariable concomitance यदनन्तधर्मात्मकं न भवति तत् सदपि न भवति यथा वियदिन्दीवरमिति केवलव्यतिरेकी हेतुः। साधर्म्यदृष्टान्तानां पक्षकुक्षिनिक्षिप्तत्वेनान्वयायोगात् SyādvāMañ. 22 (17)

**अन्वयायोग्य** (anvayāyogya) *adj.* **A** incompetent for semantic relation अन्वयायोग्ययोश्च पदार्थयोरन्वयासंभवान्न वाक्यार्थीभवनम् PrakaPañ. 337.11; NayaVi. 223.5 (*on* i.1.5); NyāyMa. 292.5; आगमः ...। प्रामाण्येऽप्यन्वयायोग्यपदार्थत्वान्न बोधकः SaṁviSi.95.26; वाच्येऽन्वयायोग्ये योग्यसम्बन्धस्यैव लक्षणावृत्तिर्निरूढा NayaVi. 276.1 (*on* i.1.26); अन्वयायोग्ययोर्हार्थयोरनेनैव शब्देनान्विताभिधेयौ NyāyRaMā. 118.12; न च गङ्गायां घोष इतिवत् पदार्थ एव अन्वयायोग्याः NyāyKuA. ii (1).199.14; अन्यदिच्छतश्चान्यत् कर्तव्यमन्वयायोग्यम् NyāyKuA. ii (2).94.5; यदि स्वरूपेणान्वयायोग्यस्यापि रसतमत्वारोपणस्य शक्यत्वात् हृष्टिविधिः तर्हि 'इयमेव जुहूः' इत्यादिष्वपि हृष्टिविधिः स्यात् ŚrutaPra.ii.548.25 (*on* iii.4.21); दध्नः उत्पत्तावन्वयायोग्यस्य विनियोगान्वयादिन्द्रियकामवाक्ये ... प्राप्तोत्पत्त्यनुवादेन दधिविधिः MīmāKau. iii (2). 268.14 (*on* ii.2.24); इदमेव हि केवलत्वमिह विवक्षितम् यदन्वयायोग्यार्थबोधकत्वम् RasGaṅ. 179.6; **B** incompetent for syntactic relation, cf. अन्वयायोग्यत्व **B**.

**अन्वयायोग्यता** (anvayāyogya-tā) *f.* the state of being incompetent for semantic relation को नाम लिङादिप्रत्ययार्थः न तावदपूर्वम् ...। क्रियाकार्ये व्युत्पन्नस्य चान्वयायोग्यतायामपि लक्षणादिभिरेव निर्वाहत्वात् NyāyPari. 394.7; प्रस्तुतविशेष्ये नास्त्यप्रस्तुतवृत्तान्तस्यान्वयायोग्यता Kuval. 61 (45)

**अन्वयायोग्यतानिमित्त** (anvayāyogyatā-nimitta) *n.* cause of the state of being incompetent for semantic relation विरोधस्य सर्वत्रान्वयायोग्यत्वेैव क्रोडीकारात्र पृथग्विषयलाभ इति चेत्। सत्यम्। तथाप्यन्वयायोग्यतानिमित्तस्य विरोधस्यैवोद्भटत्वात् तस्यैवोद्भाव्यत्वम् NyāyPari. 194.8.

**अन्वयायोग्यत्व** (anvayāyogya-tva) *n.* **A** the state of being incompetent for semantic relation विषयाक्षिप्तस्य संनिधाने प्रवृत्तक्रियत्वेनान्वयायोग्यत्वात् ... स्वर्गकामपदोपात्तस्यैव प्रेर्यत्वम् TātpaṬ. (U.) 190.17 (*on* 5 (0).15); उद्दिश्य हि मातरं न वन्ध्यात्वं विधातुं शक्यते, तस्या अन्वयायोग्यत्वेनान्विताभिधानस्यासंभवात् PrakaPañ.221.10; 331.7; 399.5; प्रत्यक्षादिविरोधे पदार्थानामन्वयायोग्यत्वादानायार्थानवबोधात् NyāyMa. 293.7; पदार्थसहचारिधर्मान्तरव्याप्तिमङ्गीकृत्य तत्तत्पदार्थव्यापकाभिमतवस्त्वन्तरविरोधापादनेनान्वयायोग्यत्वात् केचित्पदार्थां उद्धार्यन्ते NyāyKu. 103.7; न हि सिद्धस्य साध्यता संभवति। न चास्तिेति वाच्यम्। ... सति साकाङ्क्षत्वेऽन्वयायोग्यत्वं विरोधः NyāySu.(Ja.) 265 A.1 (*on* iii.1.2); फलभावनायां करणत्वेनान्वयायोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। तृतीयाभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य करणत्वेनान्वयायोग्यत्वात् MīmāNyāPra. 247.32; मन्त्रस्य कारकत्वेन क्रियेतरेणान्वयायोग्यत्वाद् अयोग्यतापराहतमव्यवधानम् MayūMāli. 840.4 (*on* xi. 4.15); **B** the state of being incompetent for syntactic relation पदम् ... वाचकशक्त्यनवधारणात् स्वार्थस्यापि तत्तदानीमवाचकम् अन्वयायोग्यत्वात् PrakaPañ. 405.10; इह च दर्शनोपसर्जनत्वादन्वयायोग्यत्वमुक्तम् Kāśi. iii.3.5 (on 5 (4).2); प्रत्यक्षादिविरोधे हि पदानामन्वयायोग्यत्वात् आम्नायार्थाबोधात् NayaVi. 223.11 (*on* i.1.5); व्युत्पत्तिसिद्धार्थस्वीकारे एव सर्वत्र स्वतःप्राप्तः। तस्य प्रमाणविरोधादन्वयायोग्यत्वे सति वृत्त्यन्तरकल्पनं प्राप्तम् ŚrutaPra. iB.209.16 (*on* i.1.13)

**अन्वयारम्भ** (anvayārambha) *m.* beginning of line or lineage आकण्ठतामस्य कल्याणराशेराशामुखललामभूतं चरितमन्वयारम्भादारभ्याद्भुततरसम् AvantiKa. 146.5.

**अन्वयार्थ** (anvayārtha) *m.* **1A** meaning of (the form of) semantic relation अन्वितेषु पदैरेवं बोध्यमानेषु शक्तिभिः। अन्वयार्थगृहीतत्वान्नान्यं शक्तिमपेक्षते PrakaPañ. 410.12; **1B** sense of association (श्रमणाः ... शुद्धोपयुक्तः शुभोपयुक्ताश्च) चकारोऽत्र अन्वयार्थे गौणार्थे ग्राह्यः TātpaVṛ. 339.9 (*on* 3.45); **2** [Loc.] for the sake of progeny or offspring पक्षस्थिते दैत्यगुरौ विवादं कृत्वा समं वाक्पतिनान्वयार्थे। य एव लेभे विजयप्रशस्तिं श्रेयान् हि राज्ञः कविपक्षपातः PṛthvīVi. 6.75.

नगम्भीरप्रत्यर्थात्यर्थवेदिता। भद्रमन्दमृगत्वं च तथा च प्रकृतित्रयम् Hastyāyur. 435.4 (3.8)

**अन्वर्थ** (anv-artha) *n.* kind of kiss (*lit.* appropriate) मृदु सममवपीड्याभ्यर्थितं चेति शेषेष्वपि कथितपदेषु प्रोक्तमन्वर्थमेतत् RatiRaha. 7.7.

**अन्वर्थ** (anv-artha) *m., n.* variety of sensation of elephant अत्यर्थोत्तानगम्भीरान्वर्थप्रत्यर्थकर्कशैः। सिद्धेनापि च नागानां वेदनं सप्तधा विदुः MātaLī. 8.18.

**अन्वर्थक** (anvartha-ka) *adj.* A agreeing with etymological meaning, having significant designation तच्छिष्यो यश्च विद्वान्विद्येश्वरो नाम कर्त्तुमन्वर्त्थकन्निर्जा[।*] सर्व्वविद्यास्समाधत्ते यथांबूनि महाबुधिः EI. xxiii.170.60; सोऽपि ... प्रियतमामनोरथमन्वर्थकं चिकीर्षुः ... प्र(प्रे?)याय च तन्महीश्वरगृहम् YaśasCam. ii.290.4; योगोऽवयवशक्तिस्तस्याः सत्त्वादन्वर्थकि योगरूढपदवाच्ये ... सर्वसंक्षोभिण्याद्याः देवताः चक्रे स्थिताः SetuBa. 327.17; B having designation conforming or appropriate to the object, i.e. sound, onomatopoetic, cf. अन्वर्थकनामधेय A.

**अन्वर्थकता** (anvarthaka-tā) *f.* the state of being significant स्तोत्रनाम्नोऽन्वर्थकताप्रदर्शनाय तन्निर्वक्ति LalitāSaBh. 14.17 (*on* 33); [Inst.] by way of being significant सर्वनामपदस्यान्वर्थकतया ... तदुपपत्तेः LalitāSaBh. 16.18 (*on* 37)

**अन्वर्थकत्व** (anvarthaka-tva) *n.* the state of being significant पुष्कमण्डलेष्टका उपदधातीत्यादिना श्रुतामण्डलादीष्टकानाम्नोऽन्वर्थकत्वाय परिमण्डलाद्याकारा भवेयुः BhāṭṭCan. 43.3 (*on* xiv.1.25)

**अन्वर्थकनामधेय** (anvarthaka-nāmadheya) *adj.* [*f.* –ā] A having designation conforming or appropriate to the object, i.e. sound, onomatopoetic श्लिष्टाधरोत्पादितपूत्निदानं पूत्कारमन्वर्थकनामधेयम् NāgaSa. 21.3; B having significant designation जोलेखा नाम तनया तस्याभूत्सुमनोरमा। ... ययामति विधातव्ये तदीये रूपनिर्णये। तेनेयं रसनान्वर्थनामधेयाभिजायते KathāKau.2.7.

**अन्वर्थकृताह्वय** (anvarthakṛtāhvaya) *adj.* who has made (his) name significant वसुदत्तायां जातः श्रुतधराभिधः। कात्यायनो वररुचिश्चेत्यन्वर्थकृताह्वयः BṛKathāMañ. i.2.15.

**अन्वर्थगुरुसंज्ञा** (anvartha-gurusañjñā) *f.* weighty and significant designation 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इत्यन्वर्थगुरुसंज्ञां विधाय SiddhāSi. i.19.3.

**अन्वर्थग्रह** (anvartha-graha) *m.* perception or understanding of etymological meaning अप्रत्यय इति प्रत्ययग्रहणेन न संज्ञाग्रहः किं त्वन्वर्थग्रहः Prasā. i.25.10.

**अन्वर्थग्रहण** (anvartha-grahaṇa) *n.* perception or understanding of the etymological meaning सर्वनाम्नः स्मै आमि सर्वनाम्नः सुट् इति। अन्वर्थग्रहणं तत्र विज्ञास्यते। सर्वेषां यन्नाम तत्सर्वनाम MahāBh. i.88.19 (*on* i.1.27); i.227.1 (*on* i.2.51); i.472.16 (*on* ii.4.1); ii.303.6 (*on* iv.3.3); नेदं पारि-भाषिकस्यानुदात्तस्य ग्रहणम्। किं तर्हि। अन्वर्थग्रहणम्। अविद्यमानोदात्तं तस्य स्वरित इति MahāBh. iii.120.19 (*on* vi.1.223); iii.415.10 (*on* viii.2.81); अप्रत्यय इति। नेह संज्ञाग्रहणम्। किं तर्हि। अन्वर्थग्रहणम्। प्रतीयते विधीयत उत्पाद्यत इति प्रत्ययः Nyās. i.131.19 (*on* i.1.69); पद्यते प्रतीयतेऽनेनार्थ इति पदम् इति अन्वर्थग्रहणात् Pradī. viii.150.16 (*on* viii.2.107) [the literal acceptation of the meaning of a word (as opposed to the conventional), MW.; Apte]

**अन्वर्थतस्** (anvartha-tas) *adv.* in the real sense (of the word), i.e. appropriately तातं निपात्य सह बन्धुजनाश्रुतो यैरन्वर्थतोऽपि ननु राक्षस राक्षसोऽसि MudrāRā. 5.7; स नरवरः ... विस्मितमतिः 'वणिक्पते त्वमेवात्रान्वर्थतः सत्यघोषः ...' इति प्रतीतिभिः ... भद्रमित्रं कथंकारं न श्लाघयामास YaśasCam. ii.348.7 (*on* ii.7.7)

**अन्वर्थता** (anvartha-tā) *f.* 1 the state of what is agreeing with etymological meaning, the state of being significant पृथिवीवल्लभशब्दो येषामन्वर्थ्थताञ्चिराज्ञातः EI. vi. 4.2; मनुः ... सीमविधिं व्यधात्। अतः सीमंकराख्यां तैर्लम्भितोऽन्वर्थतां गताम् MahāP. 3.111; सन्नाहवद् भृ(क्ष*)शमिमामवता धरित्रीमन्वर्थतान्निजमनीयत येन नाम। अवनिर्व[र्]र्म्मणि EI. ix.8.21; आलिङ्गनेत्यादि। बाभ्रव्यस्य शिष्याः पुनरन्वर्थतामाहुः - अष्टधा विकल्पभेदादिति JayaMa. 96.11 (*on* 2.2); (सर्वत्र संज्ञार्थेनैव कर्मातिदेशः।) सर्वत्रेति। चुम्बनादिष्वपि संज्ञार्थेन कर्मातिदेश इत्यन्वर्थतां दर्शयति JayaMa. 97.15 (*on* 2.2); (शृङ्गार इति संज्ञितः) न भ्रान्तिजनकः संश्रीयत इत्यनेनान्वर्थतां पराकरोति। तथा हि – उणादिषु शृङ्गारशब्दो निपातित इति AbhinBhā. i.313.5 (*on* 6.52); क्षोभेण चलचित्ततया सहृदयस्य न चेति तत्सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः Loc. 110.26 (*on* 2.28); Kāvyānu. (He.) 125.13; अन्वर्थत[ां*]न्निजमजीगमदुद्धतं यः EI. vi.354.47; आ(अ)म्लान° °द्विषद् अन्धकारः। अन्वर्थतां समनुसृत्य कविश्च (प्र)धानैर्यः प्रोच्यते ननु EI. xii.277.72; अन्वर्थता तु अर्थवदनर्थकसंभवेऽर्थवतो ग्रहणहेतुः PadMañ. *on* KāśiVṛ. *on* P. iii.1.5 (343.10); न खलु विभावानुभावव्यभिचारिण एव रसः। अपि तु तेभ्य एव रस इति सतोऽपि क्रमस्योत्पलदलशतव्य(v.l.प्र) तिभेदवद्विभावादिप्रतीतावाशुभावित्वेनासंलक्ष्यमाणत्वादसंलक्ष्यक्रमव्यङ्ग्य इत्यन्वर्थतामप्यसावाश्रयति Ekāva. 3.1 (7) (86.3); शासितर्यविनीतानां नरेन्द्र त्वयि शासति। मध्यस्थतास्य लोकस्य चिरेणान्वर्थतां गता PratāYaBhū. 211.5; मोक्षशब्दस्यान्वर्थतां दर्शयति - सोऽयमिति YuktiSneha. 125.38 (*on* i.1.5); (उपसर्जनं पूर्वम्) अत्र चोपसर्जनमिति महासंज्ञाश्रयणेनान्वर्थता विज्ञायते Prasā. i.471.9; तत्र स्पृष्टकमाद्यं विद्धकमुक्तं ततः पुनः परतः। उद्धुष्टकपीडितके ततः परेऽन्वर्थता चैषाम् KandaCū. ii.2.8; यत्रान्वर्थतादिकं गमकं, तत्रेति भावः PariVṛ.(Nī.) 42.8; आगमशब्दस्यान्वर्थतां दर्शयितुमाह आसमन्तादिति Bhāsk. ii.87.15 (*on* ii.3.2); तस्मिन् ... रत्नं समुन्मिषति ... श्रीवेङ्कटक्षितिभृतः सुकृतैकयोगादन्वर्थतामुपगता ननु रत्नगर्भा ĀnandRa. 3.14; [Inst.] on account of the state of what is agreeing with the etymological meaning (स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम्) सौष्टवेत्यादिना लक्षणैकदेशेन वैष्णवमेव स्फुटयति। अन्यथा विष्णुत्वादावपि कस्यचित्संभावना भवेदन्वर्थतया AbhinBhā. i.229.12 (*on* 5.67); प्रत्यादेः क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः LaŚabdeŚe. i.472.13; 2 the state of what is agreeing with the true meaning (of the word) (वहिर्गीतमिदं स्मृतम्) न च सर्वथा निर्निबन्धनमेवेदमिति दर्शयितुं चकारेणान्वर्थताप्यस्तीति सूचयति AbhinBhā. i.223.18 (*on* 5.43); प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम् KāvyPra. 504.1; 3 the state of being what is conforming or appropriate to the object स राजवृद्धः ...। धर्मात्मजाय धुरि कंसभिदोऽर्धभावादन्वर्थतामथ विभज्य ददौ स्वनाम्नः BhārCam. 2.117 (comm. धृतराष्ट्र इति संज्ञाया अन्वर्थतां धृतराष्ट्रत्वम्, राज्यधारणमिति यावत्)

**अन्वर्थताद्वैविध्य** (anvarthatā-dvaividhya) *n.* twofoldness of the state what is agreeing with etymological meaning अलीकत्वाद् व्याजरूपा स्तुतिः व्याजेन निन्दामुखेन वा स्तुतिरित्यन्वर्थताद्वैविध्यमधितिष्ठन्ती न द्वैविध्यमतिवर्तते Ekāva. 8.30(7)(270.7)

**अन्वर्थताविज्ञान** (anvarthatā-vijñāna) *n.* knowledge of the state of being a name or term what is agreeing with etymological meaning अन्वर्थत्वप्रतिपत्त्यर्थं महासंज्ञाकरणं तेन अन्वर्थताविज्ञाने समुदायस्यैव संज्ञा PadMañ. *on* KāśiVṛ. *on* P.vi.1.5 (452.10); महत्याः संज्ञायाः करणमन्वर्थताविज्ञानार्थमुपोद्यारितं पदमुपपदम् Prasā. i.560.17.

**अन्वर्थताश्रयण** (anvarthatāśrayaṇa) *n.* act of resorting to the state of what is agreeing with etymological meaning बहुगणेत्यत्र तु 'संख्या' इत्यन्वर्थताश्रयणाल्लौकिकार्थग्रहणात् विनापि वतिनातिदेशपक्ष उपन्यस्तः Pradī. i. 442 B.2 (*on* i. 1.56); अप्रस्तुतस्य प्रशंसाकथनमित्यन्वर्थताश्रयणसामर्थ्यादप्रस्तुतस्य वाच्यत्वमत्र सूत्रेऽनुपात्तमपि लभ्यते Ekāva. 8.27(4) (263.6)

**अन्वर्थत्व** (anvartha-tva)) *n.* the state of what is agreeing with etymological meaning पदं न तावत्किंचित्साक्षादेतस्य वाचकमस्ति। यत्त्वपूर्वमिति तदन्वर्थत्वात्सुतरामस्तित्वं बाधते TantrVā. 360.20.(*on* ii.1.5); समा कालविभागः स्यात् सुदुसावर्हगर्हयोः। सुषमा दुःषमेत्येवमतोऽन्वर्थत्वमेतयोः MahāP. 3.19; अन्वर्थत्वात् प्रत्यक्षशब्दस्य अवश्यमेव तेनेन्द्रियजन्मना भवितव्यम् Kāśi. i.216.18 (*on* 4.29); अन्वर्थत्वादेव च संज्ञाभूतानामपि संज्ञाभावः PadMañ. *on* KāśiVṛ. *on* P.i.1.27 (134.14); PadMañ. *on* KāsiVṛ. *on* P.vi.1.5 (452.10); उपसर्जनस्याव्ययत्वप्रतिषेधार्थं परमश्च इत्यादौ तदन्तस्याव्ययत्वप्रतिपत्त्यर्थमव्ययसंज्ञाया अन्वर्थत्वं दर्शयितुम् ... श्रुतिमाह Prasā. i. 316.16; i. 623.17; सूत्रार्थस्तु सत्त्रे गृहपतिरेव यजमानसंस्कारान् कुर्यात् गृहेऽस्य कर्मणः पतिरित्यस्य संयोगात्तत्रैव समाख्याया अन्वर्थत्वात् MayūMāli. 883.4 (*on* xiii. 4.14); ऋतम् - सत्यं बिभर्तीति ऋतंभरा इत्यन्वर्थत्वात्, तेनासत्याया लोकप्रसिद्धेर्न लोकप्रसिद्धित्वम् Bhāsk. ii.176.21 (*on* ii.4.11); संज्ञायाः अन्वर्थत्वमपि भाष्यकृदूहितमेव LaŚabdeŚe. i.219.13; i.470.6; यत्त्वर्थगताप्राधान्येनान्वर्थत्वेऽपि पूर्वकायादौ न दोषः LaŚabdeŚe. i.528.7.

**अन्वर्थत्वविरोध** (anvarthatva-virodha) *m.* opposition to the state of what is agreeing with etymological meaning बहुव्रीहौ त्वेकविभक्तीत्येवोपसर्जनत्वमित्यनुपदमेव स्फुटीभविष्यति अन्वर्थत्वविरोधान्नानेनेति LaŚabdeŚe. i.528.6.

**अन्वर्थत्वानुक्ति** (anvarthatvānukti) *f.* non-mention of the state of what is agreeing with etymological meaning अनेकवचनमुपसर्जनार्थं, न वैकविभक्तित्वादिति। वार्त्तिककृतान्वर्थत्वानुक्तेस्तद्रीत्या प्रयोजनवार्त्तिकम् न वा LaŚabdeŚe. i.529.13.

**अन्वर्थदिग्देशनिवृत्तिता** (anvarthadigdeśanivṛtti-tā) *f.* the state of being significant abstinence from (moving to different) directions and regions स्थूलमहिंसामपि सत्यवाक्यमचोरतादाररतिव्रतं च। भोगोपभोगार्थपरिप्रमाणमन्वर्थदिग्देशनिवृत्तितां च VarāṅgaC.22.29.

**अन्वर्थनामक** (anvarthanāma-ka) *adj.* **A** having significant name अस्तीह वज्रकूटाख्यं पृष्ठे हिमवतः पुरम्। वज्रसारमयत्वाद्यत्ख्यातमन्वर्थनामकम् KathāSaSāg. viii.1.5; स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः। स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ SaṁgīRa. i.151.5(1(6).2); रूक्षः स्निग्धत्वनिर्मुक्तः स्फुटितोऽन्वर्थनामकः। एरण्डकाण्डनिःसारो निःसार इति कीर्तितः SaṁgīRa. ii.165.16 (3.79); निकृतेः करुणायाश्च स्थायास्त्वन्वर्थनामकाः SaṁgīRa. ii.178.7 (3.143); iii.231.4(6.18); **B** having name conforming or appropriate to the object, i.e. sound, onomatopoetic अस्यामेवोज्ञयिन्यां स घूतकारोऽभवत्पुरि। पूर्वं ठिण्ठाकरालाख्यो विषमोऽन्वर्थनामकः KathāSaSāg. xviii.2.72.

**अन्वर्थनामत्व** (anvarthanāma-tva) *n.* the state of having significant name स्तोकः कृतः स्खलित इत्यमी। फूत्कारदोषाः ... एवमन्वर्थनामत्वान्नोच्यते लक्षणं पृथक् SaṁgīRa. iii.358.3 (6.658)

**अन्वर्थनामधेय** (anvartha-nāmadheya) *adj.* having significant name स्वस्य स्वेनोपमा या स्यादनुगाम्येकधर्मिका। अन्वर्थनामधेयोऽयमनन्वय ईरितः CitraMī. 42.7.

**अन्वर्थनामधेय** (anvartha-nāmadheya) *n.* word or expression *anvartha-nāmadheya* अन्वर्थनामधेय इति तु न लक्षणान्तर्गतम्। किं तु स्वेन स्वस्योपमाप्यनुगाम्येकधर्मा चेदेवानन्वयो नान्यथेत्यत्रोपपत्तिमात्रपरम् CitraMī. 42.13.

**अन्वर्थनामन्** (anvartha-nāman) *adj.* having designation agreeing with etymological meaning, having significant name संजयो नामतश्च त्वं न च पश्यामि तत्त्वयि। अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः MahāBhā. v.132.7; शो[भ]नः ...। तेन समरसाहसप्रदर्शनप्रसन्नतैलपदेवप्रसाद[आ]सादित° ... सामन्तचूडामणि° ... °अन्वर्थनाम्ना ... विष्णुभट्टाय ... त्रिं[श]मूनिवर्त्तनक्षेत्रं दत्तवान् (Read °त्तम्) EI. iv. 206.17; प्रमाणपञ्चका ज्ञानादपूर्वं षष्ठगोचरः। तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते TantrVā. 360.10 (*on* ii.1.5); वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि। ... न चापूर्वे तानि प्रवर्त्तन्ते। तस्मात्सर्वप्रमाणापूर्वत्वात् अन्वर्थनामैवासद्रूपपूर्वं प्रतिपत्तव्यम् TantrVā. 360.10 (*on* ii.1.5); जातकर्मणि निर्वृत्ते प्राप्ते च द्वादशेऽहनि। अन्वर्थनाम्नस्तनयानकुर्वन्राजमन्त्रिणः BṛKathāŚloSaṁ. 6.6; या एताः कारणस्यावस्थास्तत्संपादकत्वकर्तुरितिवृत्तं पञ्चधा विभक्तम्। त एव मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्या अन्वर्थनामानः पञ्चसन्धय इति वृत्तखण्डाः Loc. 149.16 (*on* 3.1); हरिः ... मामेवमादिशत्। प्रपञ्चबुद्धिरन्वर्थनामायं मण्डलार्चने। पुत्र श्मशाने नीत्वा त्वामुपहारीकरिष्यति KathāSaSāg. vii.4.59; गते प्राणधरे तस्मिन्नहमन्वर्थनामनि। प्रभाते भावि संभाव्य राजतो भयमेककः KathāSaSāg. vii.9.43; यस्यां सदैव सर्वार्थसमृद्धिसुखितो जनिः। केवलं रत्नदीपानामासीच्छश्वदनिर्वृतिः। तस्यामन्वर्थनामाभून्महासेनो महीपतिः KathāSaSāg. xii.34.43; श्रीमान् विक्रमसिंहभूपतिरभूदन्वर्थनामा समं सर्व्वासा(शा)प्रसरद् विभासुरयशः स्फारस्फुरत्केसरः EI. ii.238.25; साभूतकूलंकषान्वर्थनामाम्भोभिस्तदुत्थितैः स्नात्वा पीत्वा पयश्चास्यां भैमी निन्ये परिश्रमम् PāṇḍaC. 6.649; श्रीशंकरप्रियेणोक्तः प्रचुरस्थूलतायुतः। कोमलोऽन्वर्थनामैव कोकिलाध्वनिवन्मतः। ... ध्वनिः SaṁgīRa. ii.165.3 (3.73); रक्तेरुत्कर्षतो रक्तेरुक्ताः स्थाया मनीषिभिः। द्रुतस्यान्वर्थनामानो भृतस्य भरणाद् ध्वनेः SaṁgīRa. ii.177.2 (3.132); तुल्यधर्मेण योगो जातोऽस्यामित्यन्वर्थनामा तुल्ययोगिता EI. xiv.236.11; i.363.6; xiii.126.7; iii.157.7; iv.12.8; ix.332.7; 'रामरावणयोर्युद्धं रामरावणयोरिवे'त्यादावनुपमत्वद्योतनायाभेदे निबध्यमाने उपमानोपमेयभावो नान्वेतीति अन्वर्थनामानन्वयालंकार इत्याहुरालंकारिकाः ŚivārkaMaDī. i.432.27 (*on* i.3.13)

**अन्वर्थनामन्** (anvartha-nāman) *n.* significant name बोधिसत्त्वो महासत्त्वो धीमांश्चैवोत्तमद्युतिः। ... धार्मिकस्तथा। एतानि षोडश सर्वबोधिसत्त्वानामन्वर्थनामानि सामान्येन MaYānaSū. 174.7(19.75);; पुत्रोऽभवत्तस्य ... शिवगुर्वभिख्यः। ... तस्यान्वर्थनामाकृतलब्धवर्णः ŚaṅkaDigVi.(Mā.)2.5; सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्। इत्यत्राप्युपमा न स्यात् न ह्यत्रान्वर्थनामरूपशब्दसाम्यं विना किंचिदर्थसाम्यं कविविवक्षितमस्ति Kuval.171 (333)

**अन्वर्थनामभाज्** (anvarthanāma-bhāj) *adj.* having significant name पित्रोर्निर्दिशवर्ती यस्स पुत्रोऽन्वर्थनामवान् (v.l. °भाक्) ŚukraNī.4(1).14.

**अन्वर्थनामभू** (anvarthanāma-bhū) *f.* abode, i.e. object having significant name सदस्याश्च वचः प्रोचुर्गुटिकैव वचः क्षमा। अनेडमूक एवायं भिक्षुरन्वर्थनामभूः PrabhāC.97.25.

**अन्वर्थनामभृत्** (anvarthanāma-bhṛt) *adj.* bearing significant name जितशत्रुर्धरित्रीशस्तत्रास्त्यन्वर्थनामभृत्। युक्तं तस्य महादेवी जयश्रीरिति विश्रुता SamarāSaṁ. 9.693.

**अन्वर्थनामयुक्त** (anvarthanāma-yukta) *adj.* possessing significant name विजयो नाम राजेन्द्रः ... तस्य ... तनयद्वयम्। ... वज्रबाहुस्तयोराद्यो द्वितीयश्च पुरंदरः। अन्वर्थनामयुक्तौ तौ रेमाते भुवने सुखम् PadmP. (Ra.) 21.77.

**अन्वर्थनामवत्** (anvarthanāma-va(n)t) *adj.* having significant name पित्रोर्निर्दिशवर्ती यस्स पुत्रोऽन्वर्थनामवान् ŚukraNī.4(1).14.

**अन्वर्थनामाय** (anvarthanāmāya-) *denom.* to make one's name significant कुमार इंमडिनसिहेंद्रः (Read; नृसिंहेंद्रः) ... य(ī)(?व)स्तादृङ् महिमानमात्मगुरुमप्यौदार्यशौर्य्य(ī)दिभिः संख्यामत्सरिभिर्गुणैरतिपतन्नन्वर्थनामायते EI. vii. 82.41.

**अन्वर्थनिबन्धन** (anvartha-nibandhana) *n.* (semantic) relation with etymological meaning (अप्रस्तुतप्रशंसा) मुख्यार्थबाधादिसमस्तहेतुयोगादसौ लक्षणयैव युक्ता। विरोधमन्वर्थनिबन्धनादिभेदस्थितेनापि च पञ्चधैव AlaṅkāRa. 38 (12)

**अन्वर्थपर्याय** (anvartha-paryāya) *m.* synonym agreeing with etymological meaning दुःखमिति समुदयः। लक्ष्यत इति लोकः। ... भवतीति भवः। इत्येते सास्रवाणां धर्माणामन्वर्थपर्यायाः AbhidhKoBh.5.18 (*on* 1.8)

**अन्वर्थबल** (anvartha-bala) *n.* [Abl.] on the strength of etymological meaning बालतरवश्चोर्ध्वं गच्छता, उपर्युत्तानेन अर्धेन्दुरित्यन्वर्थबलाल्लब्धम् AbhinBhā.ii.36.8 (*on* 9.44); 'प्रयत्नपरिबोधितः ... गुरुरद्य भारो भुवः।' ... अत्र चान्वर्थबलादेवाधिगतेः पदादिदोषाणां विशेषलक्षणं न प्रणीतम् Kāvyānu. (He.) 231.22; अजा व्रीहयः सप्तवार्षिका उच्यन्ते। न जायन्ते इत्यन्वर्थबलात् Pañcā. 191.14; आश्चर्यकारित्वाद् वा चित्रमित्यन्वर्थबलात् ... गतप्रत्यागत° ... °गतिचित्रमत्र संगृहीतम् Ekāva.7.8 (13) (191.3)

**अन्वर्थभाव** (anvartha-bhāva) *m.* nature of agreeing with the etymological meaning लोकेऽप्यन्वर्थभावं न हि दधति महावृक्षमुख्याः समाख्याः TattvMu. 3.13 (*but* comm. अनुमतार्थकत्वम्, अनुमतावयवार्थकत्वम्)

**अन्वर्थम्** (anvartham) *adv.* **1** with proper reference, properly, appropriately अग्निमुपतिष्ठेरन् ... यस्त आत्मा यत्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् LāṭyāŚS. iii.11.3 (comm. अर्थानुसारेण); DrāhyŚS. x.4.7; उद्गाता ... कूर्चावधस्तादुपोह्याभिमृशेत् ... शाकररैवते तिरश्ची इत्येतैः पृथगङ्गान्यन्वर्थम् LāṭyāŚS. iii.12.6; नमस्ते वामदेव्याय ... इत्येतैः पृथगङ्गान्यन्वर्थम् DrāhyŚS.x.3.6; अन्वर्थम् उपदिशति (इयम्) Cārud. 1.28 (20); **2** in agreement with etymological meaning, significantly अभेदप्राणत्वादत एवाभेद इत्यन्वर्थं संज्ञा AlaṅkāRa. 22 (34); कृष्णोपज्ञं ततोऽन्वर्थमानन्दपुरमित्यभूत् PāṇḍaC. 14.258; **3** in accordance with the object, accordingly अन्वर्थमिच्छया शस्त्ररज्जुबन्धनवह्निषु। विषप्रतापादिमृते ... सद्यः शौचं मनुष्याणाम् BrahmP. 221.152.

**अन्वर्थमहिमन्** (anvartha-mahiman) *n.* power of etymological meaning अभिनवपदपदार्थपर्यालोचनेन मन्दबुद्धीनां चितो ज्ञानस्य त्राणाद्वा चित्रमित्यन्वर्थमहिम्ना निष्कण्ठ्यनिरोष्ठ्यनिस्तालव्यादिस्थानचित्रं च स्वीकृतम् Ekāva. 7.8 (191.6)

**अन्वर्थमुक्तावली** (anvartha-muktāvalī) *f.* title of a work, pw.

**अन्वर्थमुद्रा** (anvartha-mudrā) *f.* mark or stamp (for quality) agreeing with etymological meaning दिश्युत्तरस्यां निकषा हिमाचलं चकास्ति शैलः किल गन्धमादनम्। अन्वर्थमुद्रां निजनाम्नि योजयन् Kauntey.1.1.

**अन्वर्थयत्** (anvarthayat) *adj.* making or rendering (the name) significant अभवत्कुमारः। अन्वर्थयन्स्वामरिमर्दनाख्याम् ŚivLī. 21.1.

**अन्वर्थयुक्त** (anvartha-yukta) *adj.* meaningful, significant भद्रं तेऽत्र कृतं नाम नारदेन ... अन्वर्थयुक्तं विप्रेन्द्र BhaviP. 770.A12 (*on* (4)114.23); कियती विक्रमश्लाघा क्रियते जयिनस्तव। अन्वर्थयुक्तं नामैव यस्य लोकेषु गीयते RāmāMañ. 270.26.

**अन्वर्थरम्याक्षरसौकुमार्य** (anvartharamyākṣarasaukumārya) *adj.* having significant meaning, beautiful letters and softness अन्वर्थरम्याक्षरसौकुमार्यमहो कृतं नाम यथेदमस्याः। उन्मादयन्तीति ... सोन्मादमिवाकरोन्माम् JātaMā. 83.15(13.12)

**अन्वर्थवत्** (anvartha-va(n)t) *adj.* [*f.* -ī] having significant or etymological meaning यस्समरघट्टलाख्यामन्वर्थवतीन्दधाररणरौद्रः EI. i.13.8; भाष्यकृतान्वर्थवत्त्वपदस्यैव श्रौतार्थवत्त्वपरतया व्याख्यातत्वात् सूत्रान्तरव्याख्यानार्थं यदि चेत्यस्मात्प्राक् पठितमित्यदोषः NyāySu. (So.) 88.11 (*on* i.2.26)

**अन्वर्थवाचिन्** (anvartha-vācin) *adj.* expressive of etymological meaning अन्वर्थवाची शब्दो न व्येति कदाचनेति GopBr. i.1.26 (18.13); PraṇU. 35.8.

**अन्वर्थविचारण** (anvartha-vicāraṇa) *n.* appropriate consideration कस्याप्यतिशयस्योक्तिरित्यन्वर्थविचारणात्। प्रायेणामी अलङ्कारा भिन्ना नातिशयोक्तितः Candrā. 5.123.

**अन्वर्थवेदन** (anvartha-vedana) *adj.* who understands the conforming object, i.e. the intention यतयाते वेदयते न बिभेति न मुह्यति। यो गजस्तं विजानीयात् प्राज्ञस्त्वन्वर्थवेदनम् MātaLī. 8.22.

**अन्वर्थवेदना** (anvartha-vedanā) *f.* understanding of the conforming object, i.e. the intention मेघभेरीस्वनाद्भीतिं नैति हृष्यत्यनाकुलः। समानीतो वनात्कर्मकाले सो(ऽस्या)न्वर्थवेदना Mānaso. iv.3.428.

**अन्वर्थवेदिन्** (anvartha-vedin) *adj.* A knowing or understanding the conforming object, i.e. intention or order (of the driver) कालिङ्गवनजन्मानः ... बलिनोऽन्वर्थवेदिनः ... प्रेक्षणी(य)विग्रहाश्च वारणपतयः AvantiKa. 83.12; इन्द्रस्तम्बेरमः ... सोऽनुवर्ण्यते अन्वर्थवेदी कल्याणः MahāP. 22.39; अन्वर्थवेदी बलवान् भद्रो ज्ञेयो मतङ्गजः ViṣṇuDhaP. i.251.17; VīraMi. (Lakṣaṇa.) 330.3; स्वाचारोऽन्वर्थवेदी ... दीर्घहस्तः ... शोभते भूप भद्रः (हस्ती) YaśasCam. i.492.5; धीरमन्वर्थवेदिनम्। ... नागमारोहेत् Mānaso. ii.20.1195; iv.3.438; अन्वर्थवेदी विज्ञेयो भद्रजातिर्वरो गजः Mānaso. iv.3.611; अन्वर्थवेदी शूरश्च ... एवम् ... कीर्तितम् ... मद्रलक्षणम् Hastyāyur. 424.15 (3.8); महान्तोऽपि हि संघाताः ...। नालमेकस्य करिणः सत्त्वस्यान्वर्थवेदिनः Hastyāyur. 696.17 (4.32); सार्थिकोऽन्वर्थवेदी। ... भद्रनामा MātaLī. 1.27; 11.41; अन्वर्थवेदी शूरश्च ... स भद्रः परिकीर्तितः (गजः) ŚārṅgaPa. 1581; अन्वर्थवेदी संकेताभिज्ञः VīraMi. (Lakṣaṇa.) 330.4; **B** knowing the conforming object, i.e. the intention (of the lover) अथ बुद्ध्वानुकूलं मामियमन्वर्थवेदिनम्। ... गाढमङ्कमपीडयत् BṛKathāŚloSaṁ. 11.73.

**अन्वर्थशिल्पयुक्त** (anvarthaśilpa-yukta) *adj.* furnished with appropriate art अन्वर्थशिल्पयुक्तो बहुपुस्तोत्यानचित्रनेपथ्यः। ... ज्ञेयः संक्षिप्तको नाम NāṭyaŚā. 20.68 (11)

**अन्वर्थसंज्ञ** (anvartha-sañjña) *adj.* 1 having significant name अन्वर्थसंज्ञं पादत्रं बलहक्शुक्रकरणम् AṣṭāSaṁ. i.79.20 (1.12); (used as noun) (one) having significant name ततो रत्नाकरः स्वस्माच्छ्रीजनेरनुभावतः। बभूवान्वर्थसंज्ञो वै संपूर्णक्षयरत्नवान् SkandP.ii (9). 15.42; 2 having the name conforming or appropriate to the object रेखात्रयं पृष्ठकुचेऽथ गुह्ये कृतं भवेदुत्पलपत्रवद्यत्। अन्वर्थसंज्ञं प्रवदन्ति तद्धि AnaṅgaRa. 9.28.

**अन्वर्थसंज्ञक** (anvarthasañjña-ka) *adj.* [*f.* - ā, - ikā ] having significant name or designation धनं बन्धुगृहक्षेत्रपशुप्रभृतयः सुताः। पालान्ताः ... अन्वर्थसंज्ञकास्ते च कुटुम्बार्थं सदोद्यताः PadmP. (Ra.) 48.160; निरन्तरप्रभारूपसौभाग्यबल्योगतः। अन्वर्थसंज्ञके देवि NityāṢoḍa. 327.11 (8.148); कुलकौलिकयोगिन्यः ...। अन्वर्थसंज्ञके ... चक्रे सर्वार्थदायके त्रिपुराश्रीमहेशानि ... एताः सर्वाः समर्चयेत् NityāṢoḍa. 328.7 (8.153); पूज्याः क्रमेण देवेशि सर्वास्त्वन्वर्थसंज्ञिकाः TantrRā. 4.80; प्राग्वदिन्द्रादिभिः सर्वाः क्रमादन्वर्थसंज्ञकाः TantrRā. 19.15.

**अन्वर्थसंज्ञा** (anvartha-sañjñā) *f.* A name or term agreeing with etymological meaning, significant name or designation महत्याः संज्ञायाः करण एतत्प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत। संख्यायतेऽनया संख्येति MahāBh. i.81.28 (*on* i.1.23); i.324.8 (*on* i.4.23); किमर्थं महती संज्ञा क्रियते। अन्वर्थसंज्ञा यथा विज्ञायेत। कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः MahāBh. i.346.16 (*on* i.4.83); ii.3.7 (*on* iii.1.1); अन्वर्थसंज्ञा चेयं महती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति KāśiVṛ. *on* ii.1.5; अन्वर्थसंज्ञैव परं त्रिमार्गगा ययावसंख्यैः पथिभिश्चमूरसौ ŚiśuVa. 12.23; समानो वर्णः सवर्ण इति अन्वर्थसंज्ञेयम् Nyās. i.56.14 (*on* i.1.9); i.117.22 (*on* i.1.60); एकः। द्वौ। बहवः। सर्वैऽप्यमी लिङ्गार्था अन्वयित्वात्। एकमर्थं द्वौ बहून्वा वक्तीत्यन्वर्थसंज्ञया KātanVṛ. *on* ii.4.17; (हिता नाम हि ता नाड्यः) संसारापनोदनक्षमत्वाद्धिता इत्यन्वर्थसंज्ञैवेयमित्यवगन्तव्यम् BālaKrī. ii. 42.23 (*on* 3.108); उपक्रमः ... ततोऽनुयोगं प्रथमं प्राहुरन्वर्थसंज्ञया MahāP. 2.106; 22.102; इन्द्राणीति शचीप्रोक्तत्वादन्वर्थसंज्ञया व्यपदेशः JayaMa. 137.17 (*on* 2.6); पाणिनीयलक्षणानुरोधेन लौकिकप्रयोगानुरोधाच्च संप्रदानमिति नेयमन्वर्थसंज्ञा TātpaṬ. (Vā.) 368. 10 (*on* ii.1.16); कृच्छ्र इति चान्वर्थसंज्ञेयं तपोरूपत्वेन क्लेशसाध्यत्वात् Mitā. 514.23 (*on* 3.314); यथाशास्त्रं परिणीतायां द्विजातीस्त्रियामुत्पन्न औरसः पुत्रः। अन्वर्थसंज्ञा चैषा, तेनोरसि भव औरसः Aparā. 735.17 (*on* 2.128); उपलक्षणनामैतदन्वर्थसंज्ञा तूपरंजकसमेति TārkiRa. 300.9; प्रतिज्ञाग्रहणमुक्तमात्रोपलक्षणम्। अन्वर्थसंज्ञेयमेव उपलक्षणनामैव प्रतिज्ञाहानिः TārkiRa. 324.3; अर्थानुगता संज्ञा अन्वर्थसंज्ञा PadMañ. *on* KāśiVṛ. *on* P.ii.1.92 (486.15); अन्वर्थसंज्ञेयं महती उपपदमिति PariVṛ. (Sī.) 60.20; सामान्यछलमित्युपलक्षणसंज्ञा। अन्वर्थसंज्ञा तु तात्पर्यछलमित्येव NyāyPari. 219.13; सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञा Prasā. i.134.10; Prasā. i.316.26; समास इत्यन्वर्थसंज्ञेयम् MayūMāli. 742.22 (*on* x.6.4); सम्यक् प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थसंज्ञां स्वीकृत्य स्वस्वत्वत्यागपूर्वकत्यागोद्देश्यत्वं चतुर्थ्यर्थ इति तु वृत्त्यनुसारिणः VaiyāBhū. 112.4 (*on* 24); अन्वर्थसंज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम् LaŚabdeŚe. i.177.13; अन्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतया ... इत्यपास्तम् LaŚabdeŚe. i.220.8; i.397.5; **B** proper technical term योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति TattVai. 7.14 (*on* 1.2) [a term whose meaning is intelligible in itself (opposed to such technical terms as *bha*, *ghu*, etc.), MW.; a proper name the meaning of which is obvious, APTE]

**अन्वर्थसंज्ञाकरण** (anvarthasañjñā-karaṇa) *n.* the act of giving significant name or designation अन्वर्थसंज्ञाकरणम् तु पूर्वोक्तयोर्दर्शनयोरन्तराभ्युपगमसूचनार्थम् Nyās. i.53.27 (*on* i.1.8); i.81.16 (*on* i.1.37); अन्वर्थसंज्ञाकरणद्वारेण ये क्रियां द्योतितवन्तो न तु संप्रति द्योतयन्ति ते कर्मप्रवचनीयसंज्ञा भवन्ति Nyās. i. 316.21 (*on* i.4.83); अन्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते Pradī. i.308A.10 (*on* i.1.23); अन्वर्थसंज्ञाकरणादेव सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणानां प्रत्ययार्थानां सद्विशेषणां चोपोद्यारितत्त्वाभावादुपपदसंज्ञा न भवति Pradī. iii.132B.29 (*on* iii.1.92)

**अन्वर्थसंज्ञाज्ञापन** (anvarthasañjñā-jñāpana) *n.* act of reminding the significant name or designation (अनुमानम्) इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वेनाक्षोद्भवत्वमनुमाय तेन प्रत्यक्षं लक्ष्यते। तत्रान्वर्थसंज्ञाज्ञापनं प्रयोजनम् NyāySu.(Ja.)243B.8 (*on* ii.1.2)

**अन्वर्थसंज्ञाद्योतित** (anvarthasañjñā-dyotita) *adj.* indicated by significant name or designation तामिस्रप्रभृतींस्तापनपर्यन्तानेकविंशतिनरकानन्वर्थसंज्ञाद्योतितावान्तरभेदान् ... अनाचरितप्रायश्चित्ताः पुरुषाधमाः प्राप्नुवन्ति Mitā. 407.3 (*on* 3.222)

**अन्वर्थसंज्ञाप्रदर्शन** (anvarthasañjñā-pradarśana) *n.* illustration of significant name or designation पुनरार्यावर्त्तानुवादोऽन्वर्थसंज्ञाप्रदर्शनार्थः, आर्यास्त्रयो वर्णा आवर्त्तन्ते यस्मिन्निति ततश्चार्यैरत्रैव वस्तव्यम् VīraMi. (Paribhāṣā.) 57.12.

**अन्वर्थसंज्ञावगमित** (anvarthasañjñāvagamita) *adj.* conveyed by significant name or designation अन्वर्थसंज्ञावगमितं वाक्करणकमनोविरूक्षणलक्षणं सामान्यलक्षणम् DaṇḍaVi. 196.14.

**अन्वर्थसंज्ञावत्** (anvarthasañjñā-va(n)t) *adj.* having significant name or designation तामिस्रादीनेकविंशतिनरकानन्वर्थसंज्ञावतः ... नराधमाः अकृतप्रायश्चित्ता यान्ति VīraMi. 915.25 (*on* 3.222-225)

**अन्वर्थसंज्ञाविज्ञान** (anvarthasaṁjñā-vijñāna) *n.* distinct knowledge of the significant name or designation कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं संप्रदानसंज्ञं भवति। अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते KāśiVṛ. *on* i.4.32; लेपनं लेपः। अनुपलब्धिरनुच्चारणमित्यर्थः। न चादर्शनमित्येतच्छब्दरूपमेवाभावात्मकम्। किं तर्हि? तदर्थः। तस्माद् अन्वर्थसंज्ञाविज्ञानादर्थस्यैवैषा संज्ञा Nyās. i.117.24 (*on* i.1.60); कैश्चिदन्वर्थसंज्ञाविज्ञानाद्ददातिविषय एव संप्रदानसंज्ञेत्यभ्युपगतम् Pradī. i.257B.22 (*on* i.4.32); iv. 166A.17 (*on* i.4.32); iv.249A.20 (*on* v.1.10); उपसर्जनप्रतिषेधः ... न वक्तव्यः, अन्वर्थसंज्ञाविज्ञानादेव सिद्धम् PadMañ. *on* KāśiVṛ. *on* P.i.1.27 (134.12); सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानाल्लभ्यते Prasā. i.140.8; i.158.6.

**अन्वर्थसंज्ञाविज्ञानार्थम्** (anvarthasañjñāvijñānārtham) *adv.* for the sake of distinct knowledge of the significant name or designation महासंज्ञाकारणमन्वर्थसंज्ञाविज्ञानार्थम् PadMañ. *on* KāśiVṛ. on P.i.1.7(90.9); अन्वर्थसंज्ञाविज्ञानार्थं महती संज्ञा क्रियते Prasā. i.399.16.

**अन्वर्थसंज्ञासामर्थ्य** (anvarthasañjñā-sāmarthya) *n.* competency or strength of the name or designation क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्, तद्राजमाचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात् SiddhāKau. 237B.5 (*on* iv.1.168)

**अन्वर्थसमाख्या** (anvartha-samākhyā) *f.* significant designation प्रतिरोधसम इति लक्षणसंज्ञाकल्पनमुचितम्। अन्वर्थसमाख्यासिद्धावुपलक्षणसंज्ञानिवेशस्य निष्फलत्वात् NyāyPari. 237.1; शब्दानुशासनमित्यन्वर्थसमाख्योपादाने तदीयवेदाङ्गत्वप्रतिपादकप्रयोजनान्वाख्यानसिद्धेः SarvaDaSaṁ. 13.43.

**अन्वर्थाख्यायक** (anvarthākhyāyaka) *adj.* which expresses the etymological meaning (रूपनिर्वर्णनायुक्तं तद्रूपकमिति स्मृतम्) रूपकशब्दस्यान्वर्थाख्यायकमेतत् AbhinBhā. ii.326.13 (*on* 16.58)

**अन्वर्थादिसंज्ञक** (anvarthādi-sañjñaka) *adj.* having significant etc. designation ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञकः RāmPūTāU.1.11.

**अन्वर्थान्वित** (anvarthānvita) *adj.* having significant (name or designation) इत्यन्वर्थान्वितः काले दीपकर्णसुतो नरपः। ररक्ष वसुधां धन्वी BṛKathāMañ. i.3.34.

**अन्वर्थाभिख्य** (anvarthābhikhya) *adj.* having significant name or designation तदुपलक्षितोऽयमनुप्रास इत्यन्वर्थाभिख्यः Ekāva. 7.4(4) (187.7)

**अन्वर्थाभिध** (anvarthābhidha) *adj.* [*f.* –ā] having significant name or designation इत्यन्वर्थान्वितः (v.l. °भिधः) काले दीपकर्णसुतो नृपः। ररक्ष वसुधां धन्वी BṛKathāMañ. i.3.34; तस्य भार्यायां भूपतेरुदपद्यत। एकैव लावण्यवती नामान्वर्थाभिधा सुता KathāSaSāg. xii.31.7; xviii.4.166.

**अन्वर्थाभिधत्व** (anvarthābhidha-tva) *n.* the state of being a name agreeing with the etymological meaning उपमेयेनोपमेत्यन्वर्थाभिधत्वम् RasGaṅ. 268.19.

**अन्वर्थाभिधान** (anvarthābhidhāna) *adj.* [*f.* –ā] having name agreeing with the etymological meaning or significant designation सहजेनागन्तुकेन वा लक्ष्मणा यद् वस्त्वन्तरेण वस्त्वन्तरं निगूह्यते तदन्वर्थाभिधानं मीलितम् AlaṅkāSa. 167.11; लतारेचितकौ हस्तौ वृश्चिकाङ्घ्रिः समुन्नतम्। उरो यत्र तदन्वर्थाभिधानं गरुडप्लुतम् SaṁgīRa. iv.225.8 (7.693); प्रक्रमभङ्गः ...। प्रक्रमस्य प्रस्तावस्य भङ्गः इति कृत्वान्वर्थाभिधानोऽयम् Ekāva. 6.3 1/2 (1) (168.2); 8.6 (5) (212.7); इमां रत्नप्रभामन्वर्थाभिधानां पृथ्वीम् JñānBiPra. 34.23.

**अन्वर्थाभिधान** (anvarthābhidhāna) *n.* name agreeing with etymological meaning, significant designation समुच्चय इत्यन्वर्थाभिधानबलादिहान्यस्य तुल्यकक्ष्यतयैवोपादानम् Ekāva. 8.58 (3) (313.3); सकलभुवनसारभूतं प्रतापरुद्रं विषयीकुर्वतश्चिरादस्यालङ्कारस्य सारत्वमित्यन्वर्थाभिधानम् PratāYaBhū. 471.2.

**अन्वर्थार्थानुसार** (anvarthārthānusāra) *m.* [Inst.] in accordance with appropriate or proper meaning वाक्यार्थनिष्ठत्वेनाध्यवसानस्यात्र तस्यां च तुल्यत्वेऽप्यतिशयोक्तिरित्यन्वर्थार्थानुसारेण यत्रार्थस्यातिशयविवक्षा तत्र अतिशयोक्तिः AlaṅkāRa.37(33)

**अन्वर्थाश्रय** (anvarthāśraya) *m.* [Inst.] by way of resorting to etymological meaning अन्वर्थाश्रयेण अस्य परिहारस्य उक्तत्वात् अत्र सूक्ष्मेक्षिका न कृता Pradī. ii.40B. 4 (*on* i.2.43)

**अन्वर्थाश्रयण** (anv-arthāśrayaṇa) *n.* [Abl.] by way of resorting to etymological meaning शब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा। साम्यमित्यन्वर्थाश्रयणात् AlaṅkāSa. 74.9.

**अन्वर्थिकी** (anvarth-ikī) *adj.* (*f.*) agreeing with etymological meaning ज्ञानं तारकमिति तारयति अगाधात् संसारसागरात् योगिनम् इति अन्वर्थिक्या संज्ञया तारकमित्युच्यते RājMār. 63.19.

**अन्वर्थिन्** (anv-arthin) *adj.* (used as noun) (one) who is dependent upon the wealth of one साक्षिणः ...। प्रतिषिद्धाः स्यालसहायान्वर्थिधनिकधारणिकवैरिन्यङ्गधृतदण्डाः ArthŚā. ii.67.9(3.11) (comm. अर्थिनमनुगतस्तदुपजीवी)

**अन्वर्थीकर्तुम्** (anvarthī-kartum) *inf.* to make (the term) agree with etymological meaning गृहमकृत शत्रुमल्लो गिरि(Read °री)न्द्रकन्यापतेर्गिरावस्मिन्। गिरिशस्य गिरिश[ं सं]ज्ञामन्वर्थीकर्तुमर्त्यपतिः EI. i. 60.7.

**अन्वर्थीकृताख्याक्षरा** (anvarthīkṛtākhyākṣarā) *adj.* (*f.*) having the letters which have made the name significant विधिनान्वर्थीकृताख्याक्षरा राजिः ... समीक्षामहे RājTa. (Prā.) 429.

**अन्वर्थोपदर्शनार्थम्** (anvarthopadarśanārtham) *adv.* for the sake of indicating etymological meaning अर्जितस्येत्येकवचनमेकैकस्य द्रव्यस्यार्जनवर्धनयोरर्थतत्त्वे द्वाविति (v.l. °वर्धनयोरन्वर्थोप KSS.Ed.)दर्शनार्थम् JayaMa.13.8 (*on* 1.2)

**अन्वर्धमासम्** (anvardhamāsam) *adv.* every half month [इमे खलु आयुष्मन्तः चत्वारः पाराजिका धर्मा अन्वर्धमासं प्रातिमोक्षसूत्रोद्देशमागच्छन्ति] PrātiSū. 7.17; भिक्षोरन्तिकाद् भिक्षुणीनामुपसंपत् भिक्षुणीभावः। अन्वर्धमासमववादो ग्राह्यो भिक्षोरन्तिकात् Sphuṭā. iv.37.8 (*on* 4.26) [DBHS.]

**अन्वर्धसंमित** (anvardha-sammita) *adj.* measuring, i.e. amounting to one and a half मादीर्घं क्षम कालं त्वं मासमध्यर्ध(v.l. °मन्वर्ध)संमितम्। पूर्णे त्रयोदशे वर्षे राज्ञो राज्ञी भविष्यसि MahāBhā.iv.20.13.

**अन्वव्** (anv-av-) I.P. **1** to protect subsequently आ तें सुपर्णा अमिनन्तँ एवैः ... ; आप्रुषायी पुनन्तिं ययोरनुं प्रदिवः श्रुष्टिमावः ṚV. iii.50.2 (Sāy. अव रक्षणादिषु); अनु विभावरि व्यावर्ज्योतिषा तमः। उषो अनुं स्वधामव ṚV. iv.52.6; अनु त्वेन्द्रोऽवत्वनु बृहस्पतिरनु त्वा सोमोऽन्वग्निरावीत् AV.(P.) iv.3.5; अनु त्वा मित्रावरुणा इहावताम् AV. (P.) iv.3.6; अनु त्वा विश्वे अवन्तु देवाः KāṭhS. 37.9(iii.90.10); अनुत्वामित्रावरुणाविहावतम् TaiBr. II.vii.8.2; अनुत्वावतु सविता सुवेन TaiBr. II.vii.16.2; अनु मामिन्द्रो अनु मां बृहस्पतिरनु सोमो अनु वाग्देव्यावीत् AitĀ. v.1.1(13); **2** to encourage अनुं त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् ṚV. viii.7.24 (*but* Sāy. अरक्षन्); तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम् ṚV. x.113.1 (but Sāy. रक्षताम्)

**अन्ववकिरण** (anv-avakiraṇa) *n.* **i** act of scattering about सिकता श्राद्धे पवित्रं यद्यध्यवसनाय यद्यन्ववकिरणाय BaudhGS. ii.11.62; **ii** act of scattering or strewing from the right to left, i.e. clockwise अन्ववकिरणं प्रदक्षिणेन विकिरणम् BālaKrī. i.155.21 (*on* 1.227) [scattering about successively, APTE]

**अन्ववकीरयत्** (anv-avakīrayat) *adj.* scattering or strewing about (हवींषि) यातुधानाः ... नावेक्षेरन् कथञ्चन। तस्मात्परिवृतिं दद्यात्तिलैश्चान्ववकीरयन् VāyuP. ii.21.44.

**अन्ववकीर्य** (anvavakīr-ya) *ger.* having scattered or strewn about यवैरन्ववकीर्याथ भाजने सपवित्रके।... यवान् ... क्षिपेत् YājñaSm. 1.230; AgniP. 163.4; प्रादक्षिण्येन यवैरन्ववकीर्य Mitā.78.27 (*on* 1.230); आवाहनं कृत्वा द्वे पवित्रवती पात्रे यवैरन्ववकीर्य पात्रयोर्यवानप्रक्षिप्य Aparā. 479.24 (*on* 1.230); आवाहनानन्तरं यवैर्देवश्राद्धभूमीमन्ववकीर्य VīraMi.296.15 (*on* 1.230)

**अन्ववकृ** (anv-avakṛ-) VIII.P. to despise, to refuse तां अग्निर्नान्ववाकरोत् MaiS. i.8.4(i.120.17)

**अन्ववकॄ** (anv-avakṝ-) VI.P. to scatter or strew about, MW.

**अन्ववक्रम्** (anv-avakram-) I.P. **Ai** to descend or enter into, to move towards स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ŚatBr. XIV.vii.2.1; BṛĀraU. iv.4.1; सविज्ञानो भवति। सविज्ञानमेवान्ववक्रामति BṛĀraU. iv.4.2; हृदयमेव पुण्डरीकाकाशमन्ववक्रामति अन्वागच्छति BṛĀraUBh. (Śaṅ.) 602.16 (*on* iv.4.2); **Aii** to enter in succession अभ्याददान एवायमन्ववक्रामतीश्वरः BṛĀraUBhVā.iv.4.44; **B** to step in, i.e.to become one with संज्ञानमेवान्ववक्रामति ŚatBr. XIV. vii.2.3.

**अन्ववगत** (anv-avagata) *adj.* come together, assembled ऋचा स्तवे क्रियमाणेऽसुरा अन्ववगताः ŚābaBh. 1721.22 (*on* ix.2.30)

**अन्ववगा** (anv-avagā-) II.P. [*gā* as substitute for *iṇ* (to go) mostly in aor., P. ii.4.15] to go away after यत्पुनः प्रसलवि त्रिः पर्येति तद्यानेवामुंष्मिन्न्वान् पितृनन्ववागात्तेभ्य एवैतत् पुनरपोदेति ŚatBr. II. vi.1.15 [to go and join another, MW.]; cf. अनुगा.

**अन्ववगाह्** (anv-avagāh-) I.Ā. (pass.). to be dived or plunged into यदात्यर्थं गजस्तां तु (?) सासान्ववगाह्यते। मुक्तो वा निशि जागर्ति Hastyāyur. 248.14 (2.41)

**अन्ववचर्** (anv-avacar-) I.P. to wrong or to attack intentionally, to insinuate or to rush in stealthily, to attack यत्तः खलु वै यज्ञस्य वितंतस्य न क्रियते तदनुं यज्ञः रक्षांस्यवचरन्ति TaiS. VI.iv.9.5; शरद् वै रुद्रस्य स्वसाम्बिका तामेषोऽन्ववचरति तस्मादेष शरदि भूयिष्ठं हन्ति KāṭhS. 36.14 (iii. 81.4); यद् वै यज्ञस्यं वास्तव्यं क्रियते। तदनुं रुद्रोऽवचरति TaiBr. I.iv.4.7 (comm. तदनु तेनैव हेतुना ... अवेत्य अपकारं करोति); यत्र वै शुक्संन्नवानिति तदसुररक्षसानि यज्ञमन्ववचरन्ति तत्प्रतिगरेण संदधाति ŚatBr. IV.iii.2.6; ŚatBr. (K.) V.iii.3.4.

**अन्ववचार** (ánv-avacāra) *m.* act of wronging or attacking intentionally, rushing in stealthily यदतिरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्यं शये रक्षसामनन्ववचाराय TaiS. VI.iv.9.5; यत्र वै शुक्संन्नवानिति ... तत् प्रतिगरेण संदधाति नाष्ट्राणां रक्षसामनन्ववचाराय ŚatBr. IV.iii.2.6 [descending and following, APTE]; cf.अन्ववचार.

**अन्ववजि** (anv-avaji-) I.P. to win over, to conquer यं तं समयां परिदीनं प्रहरेत् तदनु रक्षांसि यज्ञमेवजयेयुः MaiS. iii.9.5 (iii.121.16); iii.10.6 (iii.138.10); अदत्तं वै तया भवत्युत वै कलारमेवान्ववजयति JaimiBr. 2.257.

**अन्ववजिगांस** (anv-avajigāṁsa-) *desid.* [*but* VIŚVA. अन्ववगम्] to seek or desire to follow तमेषामसुरा यज्ञमन्ववजिगांसन् तत्रान्ववायन् TaiS. III. ii.2.3.

**अन्ववजिगांसत्** (anv-avajigāṁsat) *adj.* desiring to follow तमेषामसुरा यज्ञमन्ववजिगांसन्तं नान्ववायन् BaudhŚS. ii.165.2.

**अन्ववज्वालिनी** (anv-avajvālinī) *f.* name of a protecting goddess (in the second enclosure) (*lit.* flaming or blazing along) गोपायिका। अन्ववज्वालिनी ... द्वितीयावरणम् VīraMi. (Rājanīti.) 390.3.

**अन्ववतप्** (anv-avatap-) I.P. to suffer after, to be tormented, to be repented after अन्ववतप्त पापेन कर्मणा CāndraVṛ. *on* i.1.79; KāśiVṛ. *on* P. iii.1.65; JaineVṛ. 95.4 (*on* iii.1.56); KātanVṛ. *on* iii.2.30.

**अन्ववदताम्** (anvavadatām) JaimiBr. 3.332 [VIŚVA.][better अन्ववन्दन् ताम्]

**अन्ववदिश्** (anv-avadiś-) VI.P. to point out पुरस्तादपात्तं तृणमध्वर्युरनुप्रहरति ... त्रिरङ्गुल्यान्ववदिशति BhārŚS. iii.6.10; HirŚS. ii.4.28 (218.11)

**अन्ववदृश्** (anv-avadṛś-) I.P. [*but* VIŚVA. अन्ववपश्] to see or notice, i.e. to become aware of ते (देवाः) तपोऽतप्यन्त। त एत(तां) विराजं यज्ञमपश्यन्। ... त एकमहर्नाश्नन्। तस्यै नियानमन्ववापश्यन् JaimiBr. 2.158.

**अन्ववधा** (anv-avadhā-) III.U. **Ai** to put into, i.e. pour successively अथ फेनं जनुयित्वान्ववदधाति ŚatBr. VI.v.1.3; **Aii** to put or place (उखायाम्) जाते काम्यमन्ववदध्यादिति बौधायनः BaudhŚS. iii.120.4; दर्व्यामुपस्तीर्य ... दर्वीं पूरयित्वाप्रमुष्टं च दर्व्युदायुवनमन्ववदधाति BhārŚS. viii.14.4; HirŚS. iv.4.61 (433.19) (*but* comm. अवधानेने स्थापयति); अग्निहोत्रोच्छेषणमन्ववधाय ... परिवासनशकलमन्ववदधाति ĀpaŚS. i.13.15; सप्तानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति। तस्मिन्प्रतिप्रस्थाता मारुत्या अन्ववदधाति ĀpaŚS. viii.7.3; viii 2.16; **B** to put or place, to equip with, to supply or provide with ते वै (देवाः) तथा करवामेत्यब्रुवन् यथा नो नान्वागच्छादिति। तस्मै व पाप्मानमन्ववदधामेति। तस्मा एतं पाप्मानमन्ववादधुः। स्वप्नं तन्द्रीं मन्युमशनयामक्षकाम्यां स्त्रीकाम्यामिति JaimiBr. 1.97.

**अन्ववधान** (anv-avadhāna) *n.* act of putting (into the cauldron) (उखायाम्) काम्यस्यान्ववधान इति BaudhŚS. iii.120.4.

**अन्ववधाय** (anvavadhā-ya) *ger.* **A** having placed or put successively प्रथमे चतुरात्र आग्नेय आज्य आग्नेयमष्टाकपालं सायंप्रातरन्ववधाय जुहोति BaudhŚS. ii.274.11; तूष्णीमितराण्यन्ववधाय ... प्रच्छाद्य .... उपोषति ĀpaŚS. xv.4.12; xvi.5.9; यथाखातमितरा अन्ववधाय वँशमाधीयमानमुत्तरेण यजुषाभिमन्त्रयते ĀpaGS. vii.17.5; **B** having put into, i.e. poured यज्ञस्य संततिरसि .... इत्यग्निहोत्रोच्छेषणमन्ववधाय ... परिवासनशकलमन्ववदधाति ĀpaŚS. i.13.15; vii.24.12; **C** having resorted to तं पुराणाग्निदेशमेवान्ववधाय आश्रित्यापरं यजेत पुनर्यजेतेत्यर्थः BhāṭṭCan. 23.16 (*on* xiii.3.11)

**अन्ववनी** (anv-avanī-) I.P. **A** to lead into, to take into subsequently यंत् पांत्रेण जुहुयांद् रुद्रं प्रजास्वन्ववनयेत् MaiS. i 10.20(i.160.9); iii.3.4 (iii.37.2); यंन्मध्यतः प्रतिहर्त्रे दर्यान्मध्यतो रुद्रमन्ववनयेत् MaiS. iv.8.3 (iv.111.1); KāṭhS. 36.14 (iii.80.20); यथा क्षेत्रपतिः क्षेत्रेऽन्ववनयत्येवमेवैतदग्निना मुखेनेमांल्लोकानभिजयन्तो यन्ति KāṭhS. 24.10 (ii. 102.6); KapiKaS.38.3 (208.1); GopBr. ii.2.8 (173.13); **B** to enter secretely, to insinuate यावदु ह वै न वा शस्यते तावदीश्वरा असुरा रक्षांसि च यज्ञमन्ववनयन्ति GopBr. ii.5.5 (232.3)

**अन्ववपा** (anv-avapā-) I.P. to drink after others, cf. अन्ववयातोस्, PW.; MW.

**अन्ववपातिन्** (anv-avapātin) *adj.* flying down after, trooping down upon ता अस्य प्रजा वरुणगृहीता मरुतो रन्ध्रा अन्ववपातिनो व्यमिमथिषत JaimiBr. 2.231.

**अन्ववपातोस्** (anv-avapātos) *inf.* to drink after others यदिदमास्थानं स्वरोस्तत ईश्वरा यदि नासुररक्षांस्यन्ववपातोः KauṣiBr.10.2 (45.23); यावदु ह वै न वा स्तूयते न वा शस्यते तावदीश्वरा यदि नासुररक्षांस्यन्ववपातोः KauṣiBr.17.9(78.14)

**अन्ववप्लु** (anv-avaplu-) I.Ā. to dive after अप्सु वा अश्वंस्य तृतीयं प्रविष्टम्। तदंनुवेनन्वर्वप्लवते TaiBr. I.iii.5.2 (Sāy.अश्वस्तदंशजातमनुवेन् कामयमानोऽनु प्रायेणावप्लवते (ASS. Ed.) (*but* VIŚVA. अवप्लु) [MW.]

**अन्ववमृश्** (anv-avamṛś-) VI.P. to touch or come in contact with or along, MW.

**अन्ववमृश्य** (anvavamṛś-ya) *ger.* having touched or come in contact with दक्षिणेन हस्तेन दक्षिणमंसमुपर्युपर्यन्ववमृश्य हृदयदेशमभिमृशति HirGS. i.5.11; i.21.3; ĀgniveGS. i.1.3 (8.15); दक्षिणेन पाणिना दक्षिणमंसमन्ववमृश्यानन्तर्हितं नाभिदेशमभिमृशेत् GobhiGS. ii.6.3; ii.10.28; DrāhyGS. ii.4.15; JaimiGS. 1.12 (11.14)

**अन्ववयज्** (anv-avayaj-) I.P. to offer to, to oblate मध्यतो रुद्रमन्ववयजेत् GopBr. ii.3.19 (205.12)

**अन्ववयत्** (anv-avayat) *adj.* going after, i.e. following, being in harmony with पश्याम: खलु पदानुरूपान् स्तोभानृचोऽन्ववयतः NidāSū. 60.13 (3.12)

**अन्ववरुध्** (anv-avarudh-) VII.U. to obstruct, to confine to अन्ववरुणद्धि गां व्रजम् MahāBh. i.334.6 (*on* i.4.51); (pass.) to be obstructed, to be confined कर्मकर्तरीत्येव। अन्ववारोधि गौर्गोपालकेन KāśiVṛ. *on* P.iii.1.64; (pass. refl.) to be obstructed or confined by oneself रुधिर्, आवरणे, अस्मात्परस्य चूलेः कर्मकर्तरिचिणादेशो न भवति। अन्ववारुद्ध गौः स्वयमेव KāśiVṛ. *on* iii.1.64; भावे कर्मण्यात्मनि ञिर्न भवति। अन्ववारुद्ध गौः स्वयमेव JaineVṛ. 95.1 (*on* ii.1.55)

**अन्ववरुह्** (anv-avaruh-) I.P. to descend, to enter into अथ ह वै रेतः सिक्तं प्राणोऽन्ववरोहति ŚatBr. IX.v.1.68 [to ascend or enter upon after another, MW.]

**अन्ववरुह्य** (anvavaruh-ya) *ger.* having descended स इह देवसाक्ष्ये च मनुष्यसाक्ष्ये च .... शाकटीमन्ववरुह्याह्वयेद् राज्ञोऽप्रत्यारोहाय NidāSū. 53.8 (3.8)

**अन्ववलम्ब** (anv-avalamba) *adj.* hanging down on दक्षिणं बाहुमुद्धृत्य शिरोऽवधाय सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमन्ववलम्बं भवत्येवं यज्ञोपवीती भवति GobhiGS. i.2.2; i.2.3.

**अन्ववलुप्** (anv-avalup-) VI.P. (pass.) to be suppressed after, to be cut off or lost subsequently छन्दसां वा अन्ववलुप्तिं यजमानोऽन्ववलुप्यते PañcBr. vi.3.12 (comm. अनुक्रमेणालुप्यते नश्यति) [to drop off after another, MW.]

**अन्ववलुप्ति** (anv-avalupti) *f.* subsequent suppression or loss छन्दसां वा अन्ववलुप्तिं यजमानोऽन्ववलुप्यते PañcBr. vi.3.12.

**अन्ववश्चुत्** (anv-avaścut-) I.P. to cause to trickle down, i.e. to pour (in drops) after आज्यं प्रश्चोत्यापिदधदिवाप्रक्षिणन्हुत्वाज्येनान्ववश्चोतयति ĀpaŚS. ii.19.7.

**अन्ववसज्यविधि** (anvavasajya-vidhi) *m.* injunction (of property) having connection (with substance) (सोऽन्ववसज्यविधिः?) सोऽयमाहत्य पार्ष्टिकेषु उक्थ्येषु अतिग्राह्या न गृह्येरन् SaṅkarKāBh. 153.12 (*on* iii.3.3)

**अन्ववसर्ग** (anv-avasarga) *m.* act of slackening or loosening (of articulatory limbs) अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि (शब्दस्य) TaiPrāti. 22.10 (comm. गात्राणां विनतता); MahāBh. i.207.8 (*on* i.2.30); अन्ववसर्गो गात्राणां शिथिलता MahāBh. i.207.9 (*on* i.2.30); अनुदात्तः। यस्मिन्नुच्चार्यमाणे गात्राणामन्ववसर्गो भवति KāśiVṛ. *on* i.2.30; अन्ववसर्ग इत्यस्य विवरणं मार्दवमिति। शैथिल्यमित्यर्थः Nyās. i.170.2 (*on* i.2.30); PadMañ. *on* KāśiVṛ. *on* P.i.2.30(311.10); चतुर्थमन्द्रातिस्वर्यास्तावत् स्वरा अवक्षेपिणः अन्ववसर्गमार्दवादिभिरवक्षिप्यमाणत्वात् MayūMāli. 599.12 (*on* ix.1.17); **2** permission (to do as one likes) अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु P.i. 4.96; SaraKaṇṭhā. (Gr.) i.1.172; अन्ववसर्गः कामचारानुज्ञा KāśiVṛ. *on* i.4.96; अन्ववसर्गः स्वरानुज्ञा Prasā. i.403.15.

**अन्ववसाय** (anvavasā-ya) *ger.* **1A** having adhered to or clung to यंस्यांहितेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेत् तंत एवं प्राञ्चमुद्धृत्यान्ववसांयाग्निहोत्रं जुहुयात् MaiS. i.8.8 (i.128.4); योऽस्याग्निः पुरां चितः स्यांत्तमन्ववसाय यजेत MaiS. iii.4.5 (iii.51.9); पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात् KāṭhS. i.6.6 (i.55.8); KapiKaS. 4.5 (42.19); तदाहुरुत्तरवेदिर्वाविषा योऽस्य पूर्वोऽग्निश्चितस्यात् तमन्ववसाय यजेत KāṭhS. 22.2 (ii.58.16); अहुते चेत्प्रातरपरो वानुगच्छेत् ...। त्वरमाणः पूर्वमग्निमन्ववसाय ततः पश्चात्प्राचीनमुद्धृत्य जुहुयात् AVPrāyaścitta 5.1. (*on* i.3.26); **1B** having considered or decided as यदि त्वरेत पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात् BhārŚS. ix.12.6; यदि त्वरेत पूर्वमन्ववसाय ततः प्राङ्दुधृत्य जुहुयात् ĀpaŚS. ix.9.8; HirŚS. xv.3.7 (292) (comm. आहवनीयमेव गार्हपत्यं परिकल्प्य); **2** having reached up to, having come near वर्ष्यमुदकमन्ववसायैतेनैव प्रजाकामो यजेत ... इति विज्ञायते BhārŚS. viii.25.7; ĀpaŚS. viii.22.6; HirŚS. v.6.12 (492); यदीष्ट्या यदि पशुना यदि सोमेन यजेत योऽस्य पुराग्निस्तमन्ववसाय यजेत ĀpaŚS. xvii.24.13; शुनासीर्येण ग्रामकामोऽन्नाद्यकामः ...। उदकमन्ववसाय तस्योदकार्यान् कुर्वीत् VārāŚS. I.vii.5.7; यत्रैवास्य पूर्वोऽग्निश्चितः स्यात्तदपरमन्ववसाय यजेत HirŚS. xii.7.24 (118); SaṅkarKāBh. 32.14.

**अन्ववसायिन्** (anvavasāy-ín) *adj.* [*f.* –inī] *adj.* adhering to, dependent on यत् पृश्निस्तेनं मारुतः समृंद्धै पृश्चात् पृंश्निसक्थो भंवति पश्चादन्ववसायिनीमेवास्मै विशं करोति TaiS. II.i.3.3; अनुयुवं न्वाअयमध्वयुर्यजमानमकह्विषतो भ्रातृव्यस्यान्ववसायिनम् ŚatBr. XI.iv.2.13.

**अन्ववसित** (anv-avasita) *adj.* [*f.* –ā] **1A** infested or seized by एतद्ध वा एकं वाचोऽनन्ववसितं पाप्मना यन्निरुक्तम् KauṣiBr. 11.1 (49.10) [VIŚVA-], cf. अनन्ववसित; **1B** reached up to, come near यथा नदीमन्ववसितो ग्रामः इति नदीसामीप्यं गम्यते SaṅkarKāBh. 32.13 (*on* i.3.26); **1C** seized by, bound to, surrounded by भर्तुर्मृगानुगस(म)मन्वगमनञना ये तैः सिन्धुरन्ववसितो वनराजिमाप Rāvaṇā. 3.42; **2** adhered to, resorted to नदीमन्ववसिता सेना। नद्या सहेत्यर्थः CāndraVṛ. *on* ii.1.57; Nyās. i.317.16 (*on* i.4.85); SaṅkarKāBh. 32.23 (*on* i.3.27); Siddhā-Kau.139A.5 (*on* i.4.85); पर्वतमन्ववसिता सेना। पर्वतेन संबद्धेत्यर्थः KāśiVṛ *on* i.4.85; [connected with, bound or fastened to, APTE]

**अन्ववसृज्** (anv-avasṛj-) VI.P. **1A** to let go along or towards, to let go after नानु वर्षट् करोति यदंनुवषट् कुर्याद् रुद्रं प्रजा अन्ववंसृजेत् TaiS. VI.v.6.6; अग्निना वै देवंतया विष्णुना यज्ञेन देवा अंसुरान् प्रव्लीय वज्रेणान्ववासृजन् MaiS. i.6.6 (i.96.14); यंजमानः सपंत्नं भ्रांतृव्यम् ... यज्ञेन प्रव्लीय

भवति VivaPraSaṁ.134.18; 3 being present or inherent in, being continued घटशरावादयो भेदाः ... मृदात्मतया अन्वीयमानाः मृदात्मकसामान्यपूर्वका लोके दृष्टाः BrahmSūBh. (Śaṅ.) 350.11 (*on* ii.2.1); मृदादीनां कार्येऽन्वीयमानानामुपादानत्वोपलम्भात् VedāntKa. 278.7 (*on* ii.2.20); 4 (used as noun) (thing) to which something corresponds यद्य परब्रह्मविवर्तित्वमखिलभेदानामित्युक्तं तदयन्वेत्रन्वीयमानद्वयाविनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नात्येव SyādvāMañ.13(145)

**अन्वीयमानता** (anvīyamāna-tā) *f.* the state of being semantically related अन्वीयमानतार्थानामभिधानाद्विना कुतः NyāyMañ. i.370.26.

**अन्वीयमानत्व** (anvīyamāna-tva) *n.* the state of being semantically related (नियोगस्य) तस्य च नियोज्यविशेषणत्वेनान्वीयमानत्वात् PrakaPañ.459.22.

**अन्वीयमानवचनत्व** (anvīyamānavacana-tva) *n.* the state of being that (the word) which conveys the semantically related (meaning) अन्वीयमानवचनत्वमतोपपत्तौ कार्यान्वयान्वयिविशेषणगीर्वृथेति SaṁkṣeŚā.1.349 (i.259.5)

**अन्वीयमानाभिधान** (anvīyamānābhidhāna) *n.* denotation of or reference to the semantically related (meaning) अन्या तु वाचोयुक्तिः कैश्चित्कृता अन्वीयमानाभिधानमभिधीयमानान्वयश्चेति NyāyMañ. i.370.17.

**अन्वीयिवत्** (anvīyi-va(n)t) *adj.* who has followed गते देवे ययौ सूर्योऽप्यदृश्यताम्। सतां कृत्योपकारं तं हर्षादन्वीयिवानिव PāṇḍaC. 9.352.

**अन्वीश** (anv-īśa) *m.* name of one of the fifty six Rudras in the Tantra (*lit.* highest lord) पञ्चाशदधिका षष्टिर्भुवनैस्तुल्यसंज्ञिताः। तावन्त एव रुद्राश्च ... अन्वीशोऽस्त्रातिकेशश्च AgniP. 85.6.

**अन्वीश्वरम्** (anvīśvaram) *adv.* near the lord अन्वीश्वरं तत्र विवेचितासावनुप्रधानं जनता विनेशा Rāvaṇā. 4.3.

**अन्वृ** (anv-ṛ-) III.P. A to follow in rising, to follow close आ रुक्मैरा युधा नरं ऋष्वा ऋष्टीरसृक्षत। अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः ṚV.v.52.6 (Say. अनु अह अनुगच्छन्त्येव ... अर्त निरगात्); B to pursue, to chase अन्वारत् कुम्भकर्णं मरुत्सुतः Bhaṭṭi. 15.57; C to follow the course of उर्वीश्वराः ... स्वां वृत्तिमन्वैयरुः MahāP. 42.205.

**अन्वृचम्** (anvṛcám) *adv.* at each and every verse, verse after verse उभयीर्गायत्रीश्च त्रिष्टुभश्चान्वाह। तासामुक्तो बन्धुरुक्तन्वेवान्वृचं हिरण्यगर्भवत्याघारमाघारयति ŚatBr. Vi.ii.2.5; VI.ii.2.10; उत्तमेऽन्वृचमभ्यासाश्रुतरक्षराः ĀśvaŚS. II.i.10.6; II.ii.1.12; अयं नो नभसस्पतिरिति पत्येऽस्मान्(नं) संप्रोक्ष्यान्वृचं काशीनोऽप्यावापयति KauśiSū. 21.7; 28.3; 35.14; 38.2; निर्लक्ष्म्यमिति पापलक्षणाया मुखमुक्षत्यन्वृचं दक्षिणात्केशस्तुकात् KauśiSū. 42.19; 49.13; उदीरतामिति तिसृभिरुदपात्राण्यन्वृचं निनयेत् KauśiSū. 87.29; AVPari. 44 (3).4; अपश्यं प्रजावान्प्रजापत्येऽन्वृचं यजमानपत्नीहोत्राशिषः SarvaAnu. 10.183 (46.4)

**अन्वृज्** (anv-ṛj-) I.U. 1 to obtain (यजमानाः) एतेऽनवारमपारं प्र प्लवन्ते ये संवत्सरमुपयन्ति यद् बृहद्रथन्तरे अन्वर्जेयुर्यथा (better था ASS.Ed.) मध्ये समुद्रस्य प्लवमन्वर्जेयुः TaiS.VII.v.3.2; KāṭhS. 33.5 (iii.30.20); 2 to stand or be firm, to hold firm अध्वर्युरा परिव्ययणात्रान्वर्जेत्परिवीता वाऽएतऽएताः रात्रिं वसन्ति ŚatBr. III.vii.2.4; IV. vii.2.4; यत्सादयित्वा नान्वर्जति तेनो अध्वर्युश्च यजमानश्च जीवतः ŚatBr. (K.) V.i.1.14.

**अन्वृज** (anv-ṛja) (= anv-ruja) *m.* disease of cold यस्साकमुत्पादयसि बलासं कासमन्वृजुम्(अन्वृजम् VIŚVA.)। भीमास्ते तक्मन् हेतयस्ताभिस्स परि वृङ्धि नः AV. (P.) v.21.6.

**अन्वृजु** (ánv-ṛju) *adj.* [AltGr. II.i.232; II.i.69, *nt.*] A moving in the right way यस्साकमुत्पादयसि बलासं कासमन्वृजुम्?। भामास्ते तक्मन् हेतयस्ताभिस्स परि वृङ्धि नः AV. (P.) v.21.6; B going or moving straightforward इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद्ग्रामकाम इन्द्रमेवान्वृजुं स्वेन भागधेयेनोपधावति TaiS. II.ii.8.1 (BhaṭṭaBhā. अनुक्रमेणार्जयति प्रापयति विधेयीकरोति इत्यन्वृजुः); BaudhŚS. ii.127.8; HirŚS.xxii.3.2 (760.19); इन्द्रायान्वृजवा एकादशकपालं निर्वपेत् निर्वपेज्ज्यैष्ठ्यबन्धुरिन्द्रियं वै ज्येष्ठबन्धुरिन्द्रियेणैवैनानन्वृजूकुरुता इन्द्राय ...निर्वपेत् MaiS. ii.2.10 (ii.23.11); KāṭhS. 10.9 (i.135.10)

**अन्वृत्** (anv-ṛt-) I.U. [P.iii.1.29; CāndraVyā. i.1.48; SaraKaṇṭhā. (Gr.) i.3.66; DhātuPā.(Śāk.) 292] 1 to go after, to follow इदं तद्युजं यदवर्त्स योषां जायां जिज्ञासे मनसा चरन्तीम्। तामन्वर्तिष्ये सखिभिर्नवग्वैः AV. xiv.1.56; 2 to hate or shun each other, to censure each other वाचं वां एतंद्वा निष्क्रीणातीति तेऽब्रुवन्नन्वृतीयामहा इति तामन्वार्तीयन्त तदन्वृतस्य जन्म MaiS. iii.7.3 (iii.78.1); ये वाचा व्यक्रेष्महीति तेऽन्वार्तीयन्तास्माकं सोमोऽस्माकं सोमक्रयणीति KāṭhS. 24.1 (ii.90.9); KapiKaS. 37.2 (195.19)

**अन्वृतु** (anvṛtu) *adv.* A in every season, season after season (युधिष्ठिरः) शशास गामिन्द्र इव ...। नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः। फलन्त्योषधयः सर्वाः काममन्वृतु तस्य वै BhāgP. i.10.5; B according to season, in due season BhāgP. i.10.5 (Vīrarāghava ऋत्वनुकूलम्)

**अन्वृध्** (anv-ṛdh-) IV.P. [*but* MW. VI.P.] to accomplish, to carry out इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ṚV. viii.48.2; कृष्यां क्षेत्रयोरन्वृधुर्मयि देवा राष्ट्रभृतस्तद् अक्रन् AV.(P.) v.29.7.

**अन्वृधत्** (anv-ṛdhát) *adj.* carrying out, fulfilling अनु व्रतान्यदितेर्ऋधन्तः ṚV. vii.87.7.

**अन्वे** (anv-e-) II.P. 1A to come after, to follow (as an attendant) अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत AV. iii.8.6; जिह्वाया अग्रे मे मधु जिह्वामूले मधूलकम्। यथा मां कामिन्यसेवा? मामन्वायसि AV. (P.) ii.9.2; मृत्योः पदं योपयन्तो अन्वेत AV. (P.) v.13.9; xvii.37.7; xix.10.13; उक्थ्यं हुतं सोमा अन्वायन्ति TaiS. VI.v.1.4; एनमाह्रियमाणं पर्शवोऽन्वायन्ति MaiS. i.6.11 (i.103.7); iii.7.9 (iii.88.14); यदेतत्पात्रं भूयिष्ठाः सोमा अन्वायन्ति तस्मादेकः श्रेष्ठः यन्तं बहवः पश्चादनुयन्ति MaiS. iv.6.5 (iv.85.18); KāṭhS. 27.10 (ii.150.15); यावन्तो व पुण्यमन्वायन्ति सर्वेभ्यस्तेभ्य आतिथ्यं क्रियते KāṭhS. 24.8 (ii.98.15); ययुर्नामास्यादित्यानां पत्वान्वेहि KāṭhS. v.1.3 (v.152.3); छन्दांसि ह सोमं राजानं क्रीतमन्वायन्ति KapiKaS. 38.1 (204.10); AitBr. 3.4 (65); एतौ प्रगाथावस्तुतौ सन्तौ पुनरादायं शस्येते तच्छस्त्रेण स्तोत्रमन्वैति AitBr. 12.6 (330); तं हैयमन्वेयाय KauṣīBr. 12.3 (54.8); मा नो अन्वागादघम् GopBr. i.2.7 (39.12); द्विर्दिर्नाराशंसानुप्रकम्पयन्त्येतत्पात्रं नाराशंसा अन्वायन्ति BaudhŚS. i.230.2; प्रस्तोतः श्येतेनान्वेहीति प्रस्तोतारमाह BaudhŚS. i.289.18; ii.81.6; ii.110.8; अध्वर्युः पूर्वाभिः स्तोकीयाभिरन्वैति BaudhŚS. ii.211.1; ii.228.11; ददाति ... दक्षिणाम् ... प्राचीं होत्रे। प्रतीचीमध्वर्यवे। एतदेवान्वायन्ति होत्रकाः HirŚS.xiv.2.45 (227.13); अनुमायन्तु देवता अनुब्रह्म सुवीर्यम्। अनुक्षत्रं तु यद्बलमनु मामेतु मद्यशः MānGS. i.13.7; VārāGS. 15.4; मम चित्तं चित्तेनान्वेहि HirGS.i.5.11; ĀgniveGS.i.1.3(8.16); मुनिः ... तानुवाच नृपात्मजान्। ... मामन्वेत यथाक्रमम् Saund. 1.29; 1B to come towards यदा वै त्वां फल्गुनवेगनुन्ना ...। अन्वेतारः कङ्कपत्राः शिताग्रास्तदा तस्यस्यर्जुनस्याभियोगात् MahāBhā. viii.27.31; 1C to come along तस्य दक्षिणमन्वागात्कौसल्या बाहुमङ्गना। वामं चास्यान्वगात्पार्श्वं कैकेयी Rāmā. ii.37.4; 1D to approach मनुष्या अदेशज्ञानवन्तो नित्यमेव देशज्ञं दैशिकमन्व(न्वे)युः KāśyaS. 62A.9; 2 to come down सुचेतऽयन्वेहि पय अऽग्नेत्रेत्यध्वरे गिरः DvyāśraKā. 1.70.

**अन्वे** (anve) *ind.* kind of indiclinable particle अथोमथोनो ... अन्वेनन्वः SaraKaṇṭhā. (Gr.) i.1.20.

**अन्वेक्षण** (anv-ekṣaṇa) *n.* act of examining or investigating अन्वेषणान्वेक्षणमार्गणानि संवीक्षणं स्यान्मृगणामृगश्च गवेषणं ना विचयः KośaKaTa. 2.737.

**अन्वेक्षमाण** (anv-ekṣamāṇa) *adj.* A seeing, i.e. inquiring राजा दशरथः ... अवेक्ष (v.l.अन्वेक्ष)माणश्चारेण ...। नाध्यगच्छद्विशिष्टं वा तुल्यं वा शत्रुमात्मनः Rāmā. i.7.16; B waiting for प्रमुमुखकृतऊर्ध्वरीक्षणैरक्षमेषु क्षितिपतिपुरणायान्वेक्षमाणेष्वनुज्ञाम्। ... अभिससर्ज ... बाचमुद्धैः सुबाहुः Kapphiṇā.4.2.

**अन्वेक्ष्य** (anvekṣ-ya) *ger.* having investigated or examined (काममालिन्ये धीमहि) कामेति इदं कृत्यमित्यन्वेक्ष्य 'कात्यायनाय विद्महे ...' इति तु नारायणे पाठः BālamBha. i.602.22 (*on* i.285-290)

**अन्वेतवे** (ánv-etave) *dat. inf.* [P. iii.4.9] to go after, to follow सूर्यस्येव वक्षथो ज्योतिरेषाम् ...। वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ṚV. vii.33.8 (Sāy.अन्वेतुम्); Nir. 11.20 (195.20)

**अन्वेतवै** (ánv-etavái) *dat. inf.* [VājaPrāti. 2.47; P. iii. 4.14; vi.2.51; KāśiVṛ. *on* iii.4.14; vi.2.51; Pradī. ii.323B.13 (*on* ii.1.17)] to move along उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ṚV. i.24.8; TaiS. I. iv.45.1; MaiS. i.3.39 (i.45.3); KāṭhS. 4.13 (i.37.14); KapiKaS. 3.11 (34.10); VājaS. 8.23 (Mahīdhara अन्वेतुमनुक्रमेणान्वेदं गन्तुम्) VājaS (K.) 9.4); ŚatBr. IV.iv.5.4; ŚatBr. (K.) V.v.3.3; BaudhŚS. i.260.14; आ नो दधिक्राः पथ्यामनक्त्वृतस्य पन्थामन्वेतवा उ ṚV. vii.44.5 (Sāy.अनुगन्तुम्)

**अन्वेतव्य** (anv-etavya) *adj.* [*f.* –ā] 1A to be syntactically related or to be construed with भेदव्यपदेशाद्यान्यः। अयमन्यशब्दः पूर्वापरसूत्रेष्वन्वेतव्यः ŚrutaPra. iB.247.26 (*on* i.1.22); द्वन्द्वात्परत्वात्समशब्दः प्रत्येकमन्वेतव्यः NyāyPari. 236.4; पदचतुष्टयमुत्तरत्र पठ्यमानं पूर्वत्र सर्वत्रान्वेतव्यम् LalitāSaBh. 203.16 (*on* 242); 1B to be semantically related or connected 'व्रीहिभिरयजेत' इति विपरिणामेन प्रधानभूता क्रिया द्रव्यव्यवधानमन्तरेण साक्षादेव नियोगेऽन्वेतव्या NyāyMāVi. 67.16 (*on.* ii.1.3); 2 to be known, i.e. conveyed स्वर्गस्तु पदान्तरोपात्ततयाऽऽक्यैन भाव्यतयान्वेतव्यः NyāyMāVi. 302.19 (*on* vi.1.1)

**अन्वेतुकाम** (anvetu-kāma) *adj.* [*f.* –ā] **1A** desirous of going after or following अन्वेतुकामोऽवमताङ्कुशग्रहः …। स्थूलोच्चयेनागमदन्तिकागतां गजोऽग्रयाताग्रकरः करेणुकाम् ŚiśuVa. 12.16; **1B** desirous of following (in death) कृष्णाथ गिरमादधे। … कान्तमन्वेतुकामाहमारोहामि स्वयं चिताम् PāṇḍC. 7.619; **2** meant for being syntactically related or construed with तत्त्वमस्यादिवाक्यानि भेदाभेदवाक्यानां परस्परविरुद्धानामविरुद्धमन्वेतुकामानि भिन्नाभिन्नब्रह्म प्रतिपादयन्ति VedāntRaMañ. 2.7 (91.11)

**अन्वेतुम्** (anv-etum) *inf.* **1A** to go after, to follow प्रयान्तमथ राघवम्। यदा न शेकुरन्वेतुं पौराणां ताः स्त्रियस्तदा। न्यवर्तन्त Rāmā. ii.952* (2); सरमा … उवाच …। न हि मे क्रममाणाया निरालम्बे विहायसि। समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा Rāmā. vi.25.4; **1B** to reach (नाभीह्रदे तव विराजति रोमवल्ली) मन्ये सुदुष्कृतभरो हृदये स्थितं तमन्वेतुमावसति रोमलताच्छलेन RomāŚ.61; **2A** to relate syntactically or to construe न च पशुविशेषणं परेणान्वेतुं योग्यम् TantrRa. 54.13; पदैकदेशस्य धातोः पदान्तरेणान्वेतुमयोग्यत्वात् NyāyMāVi. 314.13 (*on* vi.2.5); प्रथमद्वितीयचरणस्थयोः स्तनपाण्योः … त्वदरिमृगदृशामिति षष्ठ्यन्तमन्वेतुं शक्नुयात् RasGaṅ. 357.9; **2B** to relate semantically 'व्रीहीनवहन्ति' … इत्यादिप्रयोगेषु व्रीह्यादिशब्दानां व्यक्तिरर्थः। कुतः। अवहननादिक्रियाभिर्व्यक्तेरन्वेतुं शक्यत्वात् NyāyMāVi. 39.10 (*on* i.3.10); अप्रकृतवर्णनस्याप्यप्रस्तुतप्रशंसारूपेण … अन्वेतुं योग्यत्वात् CitraMī. 78.18; इष्टविशेषाकाङ्क्षायां यदिच्छाविषयत्वेन निबद्धं विशिष्योपात्तं च तस्यैव तथात्वेनान्वेतुमुचितत्वात् ŚivārkaMaDī. i.42.31 (*on* i.1.1); ii.423.5 (*on* iv.1.1); व्यापारसामान्यस्य विशेषोपेक्षैव इतिकर्तव्यताकाङ्क्षा। तस्यां चाकाङ्क्षायां व्यापारविशेष एव प्रयाजादिरूपोऽन्वेतुं योग्यः MīmāKau. i.154.4 (*on* i.4.1); **3** to connect नान्वेतुं योग्यः क्रम इह विदितः सृष्टौ। प्रत्यासन्नोऽपि श्रुतिकथितलये श्रौतः NayaMañ. II. iii.8.16.

**अन्वेतृ** (anv-etṛ) *adj.* **1** (used as noun) thing which corresponds to यच्च परब्रह्मविवर्तवर्तित्वमखिलभेदानामित्युक्तं तदप्यन्वेत्रन्वीयमानद्वयाविनाभावित्वेन पुरुषाद्वैतं प्रतिबध्नात्येव SyādvāMañ.13(145); **2** concomitant, cf. अन्वेतृत्व.

**अन्वेतृत्व** (anvetṛ-tva) *n.* the state of being concomitant, i.e. concomitance अन्वयो न च शब्दस्य प्रमेयेण निरूप्यते। व्यापारेण हि सर्वेषामन्वेतृत्वं प्रतीयते TattvSaṁ. 1494.

**अन्वेतोस्** (anv-etos) *inf.* to come down, to befall upon उक्थानामनु समरमीश्वरो यजमानं श्रेयोऽन्वेतोः KauṣīBr. 11.8 (52.12); 27.1 (129.18)

**अन्वेत्य** (anvét-ya) *ger.* **1A** having followed (as an attendant), having gone after तौं वैं तंत्रैवं श्वौं भूतें यज्ञायुधैरन्वैत्याग्निं मथित्वाग्नंये सुरभिमंतेऽष्टांकपालं निंरवपताम् MaiS.ii.1.3 (ii.4.7); अङ्गिरसोऽन्वे॒त्याग्नि॒मृदु॒रिवा॒पि कथं॒ नः प्र॒हितो न॒ प्रैत्या॒गाः ŚatBr. (K.) IV. v.1.9; (ब्रह्मा) दक्षिणेनास्ते … कर्मणः कर्मणो वा सहितस्तत्तदेवान्वेत्य KātyŚS. xi.1.8 (comm. अनुगम्य तत्र गत्वा इत्यर्थः); सदोहविर्धानेषु संमीयमानेष्वन्तरेण चात्वालोत्करावन्वेत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशति HirŚS. x.8.23 (1109.2); **1B** having followed along तीर्थेनान्वेत्य परेण विहारं दक्षिणातिक्रम्य यज्ञोपवीत्यप्रमत्तो दक्षिणत आसीत MānŚS. 139.16; **2** having reached, i.e. spread through संसृष्टा संनिपतिता पृथग्वा कुपिता मलाः। रसाख्यं धातुमन्वेत्य पक्तिं स्थानान्निरस्य च। … संतापमधिकं देहे जनयन्ति CaraS. vi.3.130 (1941 Ed.)

[1]**अन्वेष्** (anv-eṣ-) I.U. [cf. अन्विष् MW.] **1** to search, to find, to look for विलपन्ती सा राज्ञो भार्या … अन्वेषति स्म भर्तारं वने MahāBhā. iii.60.17; यमन्वेषसि राजानं नलम्… अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् MahāBhā. iii.61.29; यामोषधिमिवायुष्मन्नन्वेषसि महावने Rāmā. iii.63.14; किमिदं नष्टगोयूथ इव गोपालको नवपदान्यन्वेषसे PadmPrā. 5.18; सर्व एवायमागममनागमं वा प्रवृत्तिकामोऽन्वेषते प्रेक्षापूर्वकारी न व्यसनेन PramāVārSvopVṛ. 73.8; तातस्याङ्कगतश्च वक्षसि कुचावन्वेषते व्याकुलः YaśasCam. i.232.10; अङ्के कृत्वा तनयममलं ग्राममन्वेषते हि Lokokti. 80; **2** to seek श्रुत्वा वस्तु समग्रं तद् धर्मात्मा धर्मसंहितम्। व्यक्तमन्वेषते भूयो यद् वृत्तं तस्य धीमतः Rāmā. i.3.1; मृत्युमन्वेषसे ध्रुवम् Rāmā. iii.3.9; इह प्रेक्षापूर्वकारिणः पुरुषार्थसम्पदमभिवाञ्छन्तः … प्रथममन्वेषन्ते NyāyMañ. i.2.9; i.169.2; नष्टमन्वेषते नाष्टिकः। नष्टमस्यास्तीत्येवं ठनि कृते प्रज्ञादित्वात्स्वार्थिकोऽण् कर्तव्यः ManuBh. ii.168.20 (*on* 8.202); अन्वेष्यतां वह्निर्यत्र तिष्ठति साम्प्रतम् SkandP.vii(3). 30.16; प्रदानसमयं प्राप्ता वरमन्वेषते शुभा LiṅgaP.ii.5.57; पतिमन्वेषते बाला धर्मवन्तम् PadmP.ii.35.28; यथा सः … अन्वेषते वरम् PāṇḍaC. 1.438; **3** to follow एष … गतौ। … एषते। अध्येषते अन्वेषते DhātuPra. 1.620 (46.7)

[2]**अन्वेष्** (anv-eṣ-) VI.P. to look for स्वाहा …। सा तस्य छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी MahāBhā. iii.213.50; भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीडयान्वितः MahāBhā. iii.238.4.

[3]**अन्वेष्** (anv-eṣ-) IV.P. to search अन्वेष्यामि सुखेनैव भीममत्यन्तवत्सलम् PāṇḍaC. 7.597; अन्विष्यामो भूविवराण्यप्यथ च द्याम् ŚaṅkaDigVi. (Mā.) 10.31.

**अन्वेष** (anv-eṣa) *m.* **1A** act of searching or looking स तु देशो दुरन्वेषो गुहागहनवान्महान् Rāmā. iv.47.5 [मार्गणम् … अन्वेषे AnekāSaṁ. 3.210; ViśvaPra. 52.60; ViśvaLoK. 111.71, KośaKaTa.2.2042]; **1B** one who searches, searcher पतिप्राप्त्याशयाश्वास्य सुतां तां प्राहिणोच्च सः। अन्वेष(?षा)न्केसटपितुः पार्श्वं पाटलिपुत्रकम् KathāSaSāg. xviii.4.310; **2** examination, investigation वयं तत्त्वान्वेषान्मधुकर हताः Śāk. 1.23; **3** act of seeking एषणो लोहवाणे स्यादन्वेषे त्वनुपूर्वकम् ViśvaLoK. 106.40.

**अन्वेषक** (anv-eṣaka) *adj.* **1** who searches or looks for एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवंगमाः Rāmā. iv.61.11; कुमारः प्राह तातस्यान्वेषकेषु नरेष्वहम्। इहागत्य निवृत्तेष्वग्रतो गन्तुं समुत्सहे SamarāSaṁ. 7.265 [अन्वेषको मार्गयिता विचेता गवेषकश्चानुपदीक्षकश्च ŚabdaRa. (Vā.) 3202]; (used as noun) (one) who searches इत्युक्तेऽन्वेषकै रूपवती पितरमभ्यधात् KathāSaSāg. xviii. 4.314; अन्वेषका गृहं प्राप्ताः गोविन्दस्य खशेशितुः RājTa. (Jo.)836; **2** who examines or investigates पूजां संत्यज्य गमनं शूलं चाकस्मिकं प्रभोः। सहेतुकं विदन् शूरो वृत्तान्तान्वेषकोऽभवत् RājTa. (Ka.) 5.54; (used as noun) (one) who investigates प्रालेयसंघातशिलासभायामन्वेषकैरैक्ष्यत राक्षसेन्द्रः RāmC. 23.5.

**अन्वेषकजन** (anveṣaka-jana) *m.* person who searches प्रतिपथमतिसत्वरं प्रधावद्भिरन्वेषकजनैरन्तर्व्याकुलीभूतेव राजधान्यपि मुहूर्तमेकं बभूव UdaySuKa. 107.7.

**अन्वेषण** (anv-eśaṇa) *n.* **1Ai** act of searching or finding **1Aii** act of searching (for hunting etc.) **B** act of searching (as a characteristic of juncture or division of drama viz. development (*garbhasandhi*)) **2A** examination **B** asking, inquiry **3A** act of seeking, i.e. aiming at **3B** act of seeking **3C** act of accomplishing or obtaining **4** act of looking after or protection **5** knowing or ascertaining **1Ai** act of searching or finding out दमयन्ती …। दूतीं प्रस्थापयामास नैषधान्वेषणे नृप MahāBhā. iii.71.34; iv.24.9; करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि। युयुधानमनन्विष्य लोको मां गर्हयिष्यति MahāBhā. vii.102.12; xiii.52.39; (सीतायाः) तस्या ह्यन्वेषणे श्रीमन्क्षिप्रमेव यतावहे Rāmā. iii.59.16; Rāmā. (Gorr.) iii.68.9; सिद्धार्थं शंस मां तस्मै (भरताय) …। मैथिल्यन्वेषणं चैव Rāmā. vi..113.9; तदा प्रभृति वै भ्राता भ्रातुरन्वेषणे नृप। प्रयातो नश्यति HariVaṁ. 3.22; ViṣṇuP. i.15.100; VāyuP. ii.4.155; BrahmP. 3.24; भ्रातश्चेद् विरतिर्भवेद् दृढतरा यस्य स्रगादौ सदा। तस्यैषा यदि नास्ति हन्त सुतरां व्यर्थं तदन्वेषणम् VijñāŚ. 52; नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी BṛhaspSm. 112.76; SmṛtiCan. iv.348.14; विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम्। रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ RaghuVa. 12.11; SūktiRa. 41.6; सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा। तदन्वेषणाय प्रयतिष्ये Mālavikā. 1.6 (22); तत्खलु मन्त्रपत्रं सदन्वेषणाय ममायमारम्भः Vikramo. 2.19 (12); त्वमभिज्ञोऽस्यस्य कर्मणः शक्तियुक्तत्वात् (v.l. अहं हिरण्यकश्च तावद् द्वाप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात्) PañcT. 2.77(38)(252.5); किमयं ममान्वेषणाय तातस्य व्यूहः समायातः VāsaDa. 292.2; ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीम्। कुशलोऽन्वेषणस्याहमायुक्तो दूतकर्मणि Bhaṭṭi. 8.115; देवादेशादिदानीमन्वेषणं प्रति … क्रियते यत्नः HarṣaC. 312.1; (अहम्) देवस्यान्वेषणाय दिक्षु भ्रमन् … उपधाय वामभुजमशयिषि DaśKuC. 92.1; स्थितायास्तत्र ते पद्मः पश्चात्तापसमाकुलः। पुनरन्वेषणं साध्वि करिष्यति न संशयः PadmP. (Ra.) 98.99; प्रैषान्वेषणपृष्टाख्यानानुषङ्गप्रयोगिताः। सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः TantrVā. 416.10 (*on* ii.1.32); वेलातटे जलनिधेरपि ते विनिद्रमन्वेषणाय समयो गमितः कपीन्द्रैः ĀścaCū. 6.19; मम प्राणाधिके प्रिये …। तवैवान्वेषणं कृत्वा भ्रमामि जगतीतलम् BrahmVaiP. i.10.33; i..10.42; राजा …। उत्थायान्वेषणं चक्रे मेषयोः ViṣṇuDhaP. i.135.7; प्राणहिता यकाः। दृष्टैकैका च सास्माभिः द्वितीया न क्वचित्पुनः। अन्वेषणं प्रयत्नेन विधाय निजमन्दिरे। समर्पय BṛKathāK. 68.47; 138.12; 153.8; गुणानां त्वेतदीयानामन्वेषणमनर्थकम् BṛKathāŚloSaṁ. 22.79; लक्षणा। न च प्रयोजनमवगमयतः शब्दस्य बाधकयोगः। तथाभावे तत्रापि निमित्तान्तरस्य प्रयोजनान्तरस्य चान्वेषणेनावस्थानात् Loc. 54.26 (*on* 1.20); अन्वेषणाय तस्यास्तर्कयन्नवस्थितिं त्रिदिवमन्दिरेषु … अवतस्थे (राजा) UdaySuKa.74.23; 101.2; 107.24; अन्वेषणे सुररिपोर्यत्नस्तूर्णं विधीयताम् RāmāMañ.175.2; नारदस्तु प्रतिज्ञाय तस्या अन्वेषणाय वै। जगाम BṛDharmaP.

i.41.15; सनत्कुमारस्यान्वेषणायाटतोऽटवीम्। एको महेन्द्रसिंहस्य जगाम परिवत्सरः TriśaŚaPuC. iv.7.147; इत आरभ्य ... तद्वार्तान्वेषणाय गतश्चिरयति वसन्तकः इति वत्सराजोक्ति यावदन्वेषणम् Kāvyānu. (He.) 398.13. SāhiDa. 300.11; मार्ग अन्वेषणे DhātuPra.10.288 (147.6); अहमपि तस्यैवान्वेषणाय प्रवृत्तास्मि GopāKeCan. 133.20; प्रातरन्वेषणे पूर्वप्रतोलीद्वारि दूरतः। दग्धमानुषसंस्थानो भस्मराशिरदृश्यत PāṇḍaC. 2.114; चेटी दध्यौ मुनेरन्वेषणाय प्रेषिता ह्यम् SamarāSaṁ. 4.638; विपादः ...। ज्येष्ठमध्यकनिष्ठेषु स त्रिधा कथ्यते बुधैः। सहायान्वेषणोपायचिन्तादि ज्येष्ठतो भवेत् BhāvPra. (Śā.) 22.3(1); व्याधिवध-बन्धशुल्कग्रहणेष्वन्वेषणे च नष्टस्य। प्रस्थानाद्विपरीतः शकुनः शस्तः प्रवेशे च ŚārṅgaPa. 2757; न ह्यस्य (आत्मनः) घटादेरिवान्वेषणं युज्यते Tattv-Prakā. 193A.12 (on iii.4.34); निर्मुच्य सर्ववासांसि न ददर्शाथ कुत्रचित्। पश्चादानीय तं बालं तथैवान्वेषणं व्यधात् (नृपः) KathāKau. 4.113; ततोऽन्य-पुत्रसाहस्रं तेषामन्वेषणं गतम्। अद्यापि न निवर्तन्ते BallāC. 49.1; यत्र तपोवनादौ ब्राह्मणस्यान्वेषणं कर्तुमुचितं तत्र गत्वैनं प्राप्नुहि ŚivārkaMaDī. i.479.22 (on i.3.34); इन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता Sāy. on RV. x.108.1; न नागराजनिलये मेऽन्वेषणं कुर्वतश्चक्षुर्गोचरमागतः सुरपतिः Manmatho. 4.1 (641.5); [मासान्वेषणयोर्मार्गः AnekāSa. 220; AnekāK. 109; Abhidhā-RaMā.5.21; TrikāŚe. iii.3.66; मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनि Vaija. 217.46; AnekāSaṁ. 2.40; ViśvaPra. 26.25; MediK. 23.15; AnekāTi. 2.223; NānārthMa. 289; ŚabdaRa. (Vā.) 3966; मार्गणः ... याञ्चान्वेषणयोरपि DharK. 664; MediK. 52.72; NānārthMa. 603; ŚabdaRa. (Vā.) 4297; श्राद्धार्थं ब्राह्मणान्वेषणे स्यादन्वेषणा ParyāŚaRa. 809; MediK. 23.16; ŚabdaRa. (Vā.) 3965; NānārthāSaṁ. i.130.1021; ŚabdaRaSaK. 114.12; अन्वेषणान्वेक्षण-मार्गणानि संवीक्षणं स्यान्मृगणा मृगश्च। गवेषणम् KośaKaTa. 2.737; मार्गः स्यात्पथि मासेऽपि तथैवान्वेषणेऽपि च ŚabdaRaSaK. 61.3]; **1Aii** act of searching (for hunting etc.) सिंह आह। भो गच्छान्वेषय किंचित् सत्त्वम् ... तदाकर्ण्य शृगालोऽन्वेषणं कुर्वन् कंचित् समीपवर्तिनं ग्राममासादितवान् PañcT. (Kos.) 4.33 (10) (214.20); Pañcā. 236.24; पशूनामन्वेषणेऽस्मन्नियोगः Hitopa. 2.30 (3); (वज्रमुकुटः) मृगान्वेषणाय कौतुकवशाद्वनं प्रविवेश VetāPañ. (Jam.) 14.10; **1B** act of searching (as a characteristic of development juncture or division of drama viz. *garbhasandhi*) उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा। पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः NāṭyaŚā. 1941; Kāvyānu. (He.) 397.4; 397.25; गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः DaśRū. 1.36; BhāvPra. (Śā.) 209.22- (7); PratāYaBhū. 110.14; RasāSu. 225.8 (3.49); एवं स्वयंभूदेव-प्रसादरूपस्य बीजस्यान्वेषणाद्गर्भसंधिः PratāYaBhū. 175.10; **2A** examination; investigation हते तु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत्। लाला भवति दष्टेषु एवमन्वेषणं भवेत् ParāSm. 9.50; वृत्तान्तपर्यवसायी च वेदस्तत्र प्रामाण्यमप्रतिपद्यमानस्तुतौ सत्यत्वान्नान्यत्रान्वेषणमर्हति TantrVā. 27.8 (on i.2.10); प्रमाणान्तरमूलत्वादस्यार्थस्य तदनुसार्यन्वेषणं कार्यम् BālaKrī. i. 292.19 (on 2.284); न च मानेन विषये बाधितेऽन्वेषणं पुनः। कार्ययुक्त्योः क्वचिद्दृष्टम् BṛĀraUBhVā. (Sambandha.) 848; स्फुटतरभासमाननीलसुखादिप्रमान्वेषणद्वारेणैव पारमार्थिकप्रमातृलाभ इह उपदिश्यते PratyabhiVi. i.35.1 (on i.1.1); ईदृङ् न युज्यते राजन् सत्यस्यान्वेषणं कलौ RājTa. (Ka.) 4.101; 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इत्याद्याः श्रुतयः ... मूलस्यान्वेषणं दर्शयन्त्यः ... जगत्कारणं दर्शयन्ति PrakaVi. 85.20; शास्त्रमेव मूलम्। ननु तदपि कथं मूलम्। यत्नेनान्वेषणेऽप्यनुपलब्धेः TantrRaha. 39.16; स्फुटतरं भासमानाः ये नीलसुखादयस्तेषां प्रमाया अन्वेषणेन किंमूला इति विचारणेन परप्रमातुः प्राप्तिः Bhāsk. i.34.21 (on i.1.1); **2B** asking, inquiry अन्वेषणं 'कोऽसि कतमोऽसि' इति ŚābaBh. 435.4 (on ii.1.32); अनुरूपयत्नेन सम्यगन्वेषणे कृते। मूलाभावात्र विज्ञातं भवेद्बाधकबाधकम् TattvSaṁ. 2869; मुनिः ... आगतोऽन्वेषणं कर्तुम् Hastyāyur. 6.14 (1.1); 18.1 (1.1); एषण्यान्वेषणं कर्म व्रणावस्थाविकल्पितम् Hastyāyur. 357.19 (3.1); [अन्वेषणे च परीष्टिः AnekāK. 175; परीष्टिः ... अन्वेषणे MediK. 38.48; ŚabdaRaSaK. 89.19; KośaKaTa. 2.4559]; **3A** act of seeking, i.e. aiming at यदि नाम बदरमात्रं किमपि विद्यते किं तस्यान्वेषणेन ... फलं विजिज्ञासितुः स्यात् ChāndoUBh. 474.1 (on viii. 1.2); 507.6 (on viii. 7.1); अन्वेषमाणाः किं तत् यन्नित्यं विज्ञेयमिति तत्प्राप्त्यर्थं यथाकामं यतिष्याम इत्येवं तदन्वेषणं कुर्वन्तः ... आचार्यमुपजग्मुः PraśnaUBh. 238.17 (on 1.1); (ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः) यत्पदं वैष्णवं तत्परिमार्गितव्यम्, परिमार्गणम् अन्वेषणं ज्ञातव्यमित्यर्थः GītāBh. (Śaṅ.) 435.10 (on 15.4); VīraMi. (Bhakti.) 159.30; नास्त्यात्मनः पर्येषणम् अन्वेषणं गच्छेत् प्रत्यर्थिषु प्रतिपक्षभूतदेहेन्द्रियादिषु देहेन्द्रियतद्धर्मानात्मत्वेन न गृह्णीयात् SanatBh. 267.2 (on 2.46); सर्वसंन्यासपूर्वकम्। आत्मनोऽन्वेषणं साक्षादापस्तम्बोऽब्रवीन्मुनिः BṛĀraUBhVā. (Sambandha.) 221; परिव्राज्यस्वरूपक्रमं नो ब्रूहीति नारदेन प्रार्थितः परमेष्ठी ... संसारार्तिनिवृत्त्यन्वेषण इति निश्चित्य नारदम् .... आह पितामहः NāraPaU.2; तत्किं ब्रह्मेति श्रुतिष्वन्वेषणे ... ब्रह्मबुद्धिः प्रसजति ŚivārkaMaDī. i.105.22 (on i.1.2); **3B** act of seeking कार्यस्यान्वेषणं विरोधः स्यात् RasāSu. 233.20 (3.70); केशसंयमनकार्यस्यान्वेषणादिबोधः SāhiDa. 319.6; गेपु अन्विच्छायाम्। ... अन्विच्छा अन्वेषणम् SiddhāKau. 370B.17 (on vi..4.106); अस्तव्यस्तस्य कार्यस्य वि(रो?बो)धोऽन्वेषणं भवेत् SāhiSā. 1.104; **3C** act of accomplishing or obtaining प्रत्यहिकस्य क्षुदुःखस्य निराकरणवदेव तेन धनादिना दुःखनिराकरणस्य चेष्टनादन्वेषणादित्यर्थः SāṁkhyPraBh. 8.13 (on 1.3); **4** act of looking after or protection आर्ता यत्नेन संरक्ष्याः ...। तेषामन्वेषणं कार्यं पानान्नशयनासनैः Mānaso. i.19.138; **5** act of knowing or ascertaining अन्वेषणं निक्षेपादिरस्मिन् जनेऽस्तीत्यवधारणम् SmṛtiCan. iv. 424.16.

**अन्वेषणकाम्या** (anveṣaṇa-kāmyā) *f.* [Inst.] with an intention of or desire for searching गते पुत्रे नृपः ...। प्रेरयामास दूतांस्त्वंस्तस्यान्वेषणकाम्यया DevīBhāP. vii.15.58.

**अन्वेषणकारण** (anveṣaṇa-kāraṇa)) *n.* cause of searching शैलेन्द्रकन्या तं विष्णुं जगतां परिपालकम्। संबोध्य कथयामास तवान्वेषणकारणम् Brahm-VaiP. iii.15.12.

**अन्वेषणकारिन्** (anveṣaṇa- kārin) *adj.* who is carrying out a search न दृष्टस्तस्करो राजन् मयान्वेषणकारिणा BṛKathāK. 63.67.

**अन्वेषणक्रम** (anveṣaṇa-krama ) *m.* order of searching as a characteristic of denouement or conclusion (*nirvahaṇasandhi*) ग्रथनं कथ्यतेऽस्माभिः कार्यस्यान्वेषणक्रमः SāhiSā. 1.104.

**अन्वेषणक्लान्त** (anveṣaṇa-klānta ) *adj.* tired or exhausted because of searching क्वचिद् ... (अ)न्वेषणक्लान्तहरिशकुलगलरन्ध्रोज्झितैः ... मौक्तिकैः स्तबकिततलम् ... अम्भोनिधिमपश्यम् TilaMañ. 121.21.

**अन्वेषणगुणगान** (anveṣaṇa-guṇagāna ) *n.* act of praising the qualities of seeking, i.e. aiming at अन्वेषणगुणगाने कृते तामिः एतदेवोक्तम् AṇuBh. 257.19 (on iii 3.50)

**अन्वेषणतत्पर** (anveṣaṇa-tatpara ) *adj.* **1** intent on or engaged in seeking क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ। उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ PañcT. (Kos.) 3.89(163.16); 3.111(167.19); **2** intent on or engaged in searching कथं मे सहचरश्चिरयतीति तदन्वेषणतत्परस्तत्पद-पङ्क्त्यनुसरणेन सुवर्णसिद्धः प्रस्थितः PañcT.(Kos.) 5.30(46) (243.1); (रामः) तदन्वेषणतत्परः। सुग्रीवाद्यैर्लक्ष्मणेन विचारं कृतवान् सः ŚivaP.iv.31.5 (386A.7)

**अन्वेषणपर** (anveṣaṇa-para ) *adj.* [*f.* –ā] intent on or engaged in searching सुवर्णम् ...। न लब्धं तेन भूपाल अन्वेषणपरेण च SkandP. vii (3). 26.4; शश्वदन्वेषणपरादपि विद्याधरगणादाकर्णिते त्वदर्शनेन दूयमानः कतिपयान्यपि दिनान्ययापयम् TilaMañ. 395.2; सीता हृता... रावणेन। अन्वेषण-परस्तस्याः किष्किन्धाख्यां पुरीमगात् ŚivaP. iv.31.4 (386 A.6); ज्येष्ठपत्नी ...। 'यत्र कुत्र शरीराणि जीवहीनानि ... तानि सर्वाणि चिंतिं यान्तु' ...। अवादीदपि तद्वादादन्वेषणपराभवत् ŚaṅkaVi. (Ā.) 245.18.

**अन्वेषणपरायण** (anveṣaṇa-parāyaṇa ) *adj.* devoted to searching or finding out देवस्यान्वेषणपरायणोऽहम् DaśKuC. 20.26.

**अन्वेषणपरिश्रान्त** (anveṣaṇa-pariśrānta ) *adj.* fatigued or exhausted because of searching अन्वेषणपरिश्रान्तः स ददर्श महामनाः। साश्वं हतं प्रसेनं तम् VāyuP. ii.34.38.

**अन्वेषणप्रकार** (anveṣaṇa-prakāra ) *m.* procedure or manner of investigation भर्त्रादीनां त्विदानीं सामान्येनाविज्ञातकर्तृकवधनिष्पत्त्यावन्वेषणप्रकारमाह BālaKrī. i. 292.11 (on 2.284)

**अन्वेषणप्रयास** (anveṣaṇa-prayāsa ) *m.* effort for searching स चान्वेषणप्रयासो वरमुदयसुन्दर्याः क्रियते UdaySuKa. 120.18.

**अन्वेषणभूमि** (anveṣaṇa-bhūmi ) *f.* matter or subject of searching यदाहोद्भटः–यासावन्वेषणभूमिरवमृष्टिरवमर्श इति तद्वेदं व्याख्यानं लक्ष्यविरुद्धम् AbhinBhā. iii.28.17 (on 19.42)

**अन्वेषणमति** (anveṣaṇa-mati ) *adj.* intent on obtaining सः यतिः ... वैरनिर्यातनमनोरथरयसारथिमन्वेषणमतिरासीत् YaśasCam. ii.353.2.

**अन्वेषणरस** (anveṣaṇa-rasa) *m.* desire for searching अहमन्वेषण-रसैकहृदया ... रावणीयमुद्यानमितस्ततो भ्रमन्ती ... श्यामलितमास्पदं शिंशुपाद्रुमस्य दृष्टवती UdaySuKa. 109.28.

**अन्वेषणवत्** (anveṣaṇa-va(n)t) *adj.* associated with, i.e. carrying out searching viz. development फलप्रधानोपायस्य प्रागुद्भिन्नस्य किंचन। गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः SāhiDa. 300.6.

**अन्वेषणश्रम** (anveṣaṇa-śrama) *m.* exertion of searching अनम्यस्रष्टुमुचितं त्यक्तुं नेशोऽस्मि ते वपुः। को हि हस्तात्परित्यज्य कुर्यादन्वेषणश्रमम् BṛKathāMañ. ix.2.514.

**अन्वेषणहेतु** (anveṣaṇa-hetu) *m.* [Dat.] for the sake of searching कपीन् संप्रेषयामास चतुर्दिक्षु ...। हनुमत्प्रमुखान् रामस्तदन्वेषणहेतवे ŚivaP. iv.31.6 (386A.8)

**अन्वेषणहेतुक** (anveṣaṇahetu-ka) *m.* cause of searching शिवा सभायां वै सर्वं शंकरं शंकरम्। ... संबोध्य कथयामास तवान्वेषणहेतुकम् ŚivaP. ii (4).4.47 (197B.7)

**अन्वेषणा** (anv-eṣaṇā) *f.* [P. iii.3.107; Vār. 2 *on* P. iii.3.110] **1** act of searching **2** act of asking, inquiry **3A** act of seeking **B** act of seeking, i.e. aiming at **4** act of knowing or understanding **5** act of looking out or considering **6** the word or expression *anveṣaṇā* **7** examination or investigation **1** act of searching or fining out यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छ ChāndoU. iv.1.7; यद्येवं कर्तुमन्विच्छति कर्तुमन्वेषणा अत्रापि प्राप्नोति MahāBh. ii.15.6 (*on* iii.1.7); यत्र ब्राह्मणस्य ब्रह्मविद एकान्तेऽरण्ये नदीपुलिनादौ विविक्ते देशे अन्वेषणा अनुमार्गणं भवति, तत् तत्र ... गच्छ ChāndoUBh. 208.7 (*on* iv.1.7); अन्वेषणा विधेरस्य क्रियते क्वापि शंकर BṛKathāK. 99.26; 154.8; कालिन्द्याः ... जले मग्नस्य ... अहेः कुतोऽन्वेषणा SubhāRaK. 40.1; [पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा AmaK. 1416; KośaKaTa. 1.5650; KalpaK. 81.111; मार्गणा तु गवेषणा। पर्येषणा परीच्छा च मृगणान्वेषणा Vaija. 93.121; NāmMāli. 390; श्राद्धार्थं ब्राह्मणान्वेषणे स्यादन्वेषणा ParyāŚaRa. 809; मार्गः परीष्टिरन्विष्टं मृगणान्वेषणा तथा। पर्येषणा चान्वीक्षा च ŚabdaRa. (Vā.) 2514; मार्गः ... अध्वान्वेषणामासभिदासु KośaKaTa. 2.4086]; **2** act of asking, inquiry अर्थेन तु समोऽनर्थो यत्र लभ्येत नोदयः। न तत्र विपणः कार्यः (v.l. [तत्रा]न्वेषणा कार्या) खरकण्डूयितं हि तत् MahāBhā. iii. 34.64; सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तं किं न प्राप्तमित्यन्वेषणायामप्राप्तमात्रविषयोपसंहारात् विधिर्भावनाधात्वर्थयोरनुवादः TantrVā. 494.15 (*on* ii.2.16); **3A** act of seeking पारंपर्यतोऽन्वेषणा बीजाङ्कुरवत् SāṁkhyaPraSū.1.122; (निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च। सर्वैरुपायैरन्विच्छेत्)। 'अन्वेषणा' तत्त्वपरिज्ञाने यत्नः सर्वप्रमाणव्यापारेण ManuBh. ii.164.22 (*on* 8.190); एषणा। पर्येषणा। अन्वेषणा। समन्वेषणा MahāVyu. 245. 871; **3B** act of seeking, i.e. aiming at अन्वेषणाविजिज्ञासयोः कर्तृत्वेनोपासको हि बुद्धिस्थः ŚrutaPra. ii.35.25 (*on* i.3.13); **4** act of knowing or understanding सदसद्भ्यामनिर्वाच्यां तामविद्यां प्रचक्षते। वस्तुनोऽन्वेषणान्त(णा त)स्यां बाह्याभ्यन्तरवर्तिनाम्(नः)। न युज्यते VibhraVi. 29; **5** act of looking out or considering कः पुनरसौ द्रव्यविशेषो यस्य तद्धितेन देवतोक्तेत्यन्वेषणायामयमित्यामिक्षापदेनोपनीयते TantrVā. 533.4 (*on* ii.2.23); **6** the word or expresssion *anveṣaṇā* युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम्। इषेरनिच्छार्थस्येति वक्तव्यम्। अन्विष्यते अन्वेषणा MahāBh. ii.154.11 (*on* iii.3.107); KāśiVṛ. (*on* iii.3.107); इषेरनिच्छायां युज् भवति अन्वेषणा, पर्येषणा CāndrVṛ. *on* i.3.90; JaineVṛ. 128.12 (*on* ii.3.89); कीर्तयतेरिषेश्च क्तिर्युश्च भवति। ... इष गतौ। ... अन्वेषणा KātanVṛ. iv.5.86; DhātuPra. 4.21 (90.16); **7** examination or investigation, cf. अन्वेषणाकृते.

**अन्वेषणाकृते** (anveṣaṇā-kṛte) *adv.* for the sake of investigation or examination धनश्रीः ...। उक्ता च मां महाराजः प्रैषीदन्वेषणाकृते SamarāSaṁ. 4.657.

**अन्वेषणातुर** (anveṣaṇātura) *adj.* desirous, i.e. engaged in searching लक्ष्मणः ...। अटवीं पादपद्माभ्यां बभ्रामान्वेषणातुरः PadmP. (Ra.) 43.115.

**अन्वेषणान्विता** (anveṣaṇānvitā) *adj.* (*f.*) engaged in searching भटस्योरसि कामिनी। दृष्टा देवपुरन्ध्रीयं भर्तुरन्वेषणान्विता YogVā. iii. 34.22.

**अन्वेषणार्थ** (anveṣaṇārtha) *m.* [Dat.] for the sake of searching or finding च्युतमतिरतिरस्यान्वेषणार्थे ... स्त्रीमण्डली हिण्डते स्म HariVi. 2.15.

**अन्वेषणार्थम्** (anveṣaṇārtham) *adv.* **A** for the sake of searching or finding out भीमः .... सात्यकिश्च ...। अन्वेषणार्थं पार्थस्य ...। प्रविष्टौ भारतीं सेनाम् MahāBhā. i.145*(2); iii.62.39; इन्द्रे जीवति मे कान्ते कथमन्यं करोम्यहम्। अन्वेषणार्थं गन्तव्यं मया तस्य महात्मनः DevīBhāP. vi.8.23; ददौ तस्मै संदेशं पार्थिवात्मजा। अन्वेषणार्थमेवास्य दयितस्य KathāKau. 8.70; **B** for the sake of searching (for recovering debt) (काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत्) प्रतीते प्रतिपन्नेऽन्वेषणार्थं कल्पित इति यावत् SmṛtiCan. iv.349.1; नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् KātySm. 532; SmṛtiCan. iv.348.18.

**अन्वेषणावस्था** (anveṣaṇāvasthā) *f.* the state or condition of searching नाशावस्था अन्वेषणावस्था च यथारुचि गर्भे ... निवन्धनीया AbhinBhā. iii.28.12 (*on* 19.42)

**अन्वेषणासहिष्णुत्व** (anveṣaṇāsahiṣṇu-tva) *n.* the state of not being the bearer of examination or investigation नान्वेष्यं चात्र कारणमित्युक्तं तत्कस्मादिति चोदिते प्रत्याह अन्वेषणासहिष्णुत्वात् NaiṣkaSi. 147.3.

**अन्वेषणीय** (anv-eṣaṇīya) *adj.* [*f.* –ā] **1A** to be sought **B** to be sought, i.e. to be aimed at **2** to be searched, to be found out **3** to be known or understood **4** to be looked after, i.e. to be cared **5** to be examined or investigated **6** word or expression *anveṣaṇīya*; **1A** to be sought राजवाहनः ... आगतां प्रियवयस्यामालोक्य पादपमूलमन्वेषणीया लतेव बालचन्द्रिकागतेति संतुष्टमनाः ... अपृच्छत् DaśKuC. 30.4; एकरूपं सामान्यं क्षत्रियादिषु त्रिष्वप्यनुगतं ब्राह्मणेभ्यो व्यावृत्तं किंचिदप्रतिग्राहकत्वमन्यद्वा कर्मान्वेषणीयम् Śarka. 31.20; ततस्ततोऽप्यर्थक्रियाधिगमः परा(?रो)ऽन्वेषणीय इत्यनवस्था PramāVāBh. 4.11; सपिण्डानां तु स्मृत्यन्तरसमाचारावन्वेषणीयौ ManuBh. i.452.8 (*on* 5.65); न वै कश्चिदतीन्द्रियोपाधिः प्रमाणसिद्धोऽस्ति यस्याभावे प्रमाणमन्वेषणीयम् NyāyKuA. i.181.2; शुभाशुभाप्तेः कालस्य ग्रहचारो हि कारणम्। तस्मादन्वेषणीयं तत् कालज्ञानाय धीमता NāraS. 2 (8).13; किं तदित्यल्पे विद्यते यच्छ्रुत्युपपत्तिभ्यामन्वेषणीयम् PrakaVi. 243.19; एतेष्वधिकरणेषु नाध्यायादिसंगतिरन्वेषणीया TattvPrakā. 199B.11 (*on* iv.1.1); जीवादन्यत्र क्वचिदपहतपाप्मत्वादिसिद्धिरन्वेषणीया ŚivārkaMaDī. i.11.33 (*on* i.1.1); अन्ये च नियमास्तत्र तत्रान्वेषणीयाः NirṇaSi. 20.4; **1B** to be sought, i.e. to be aimed at (पदं तत्परिमार्गितव्यम्) परिमार्गितव्यम् अन्वेषणीयम् GītāBh. (Rā.) 599.24 (*on* 15.4); अन्वेषणीय आत्मा स्यादस्वातन्त्र्यं तथात्मनः ĪśānŚiPa. ii.1.38; **2** to be searched or found out कर्तुमिच्छति यः पुण्यं मम मूर्तिप्रतिष्ठया। अन्वेषणीयस्त्वाचार्यस्तेन लक्षणसंयुतः PañcRā. (Ha.) i.2.11; दर्शनासिद्धे वस्तुनि युक्तिरन्वेषणीया NyāyRa. 553.9 (*on* 5(12).29); YuktiSneha. 102.32 (*on* i.1.5); त्वया ... दृष्टाश्च त्रिभुवनविवरवर्तिनो युवानः तेषां मध्ये ... कथमसौ ज्ञातव्यः कथं चान्वेषणीयो विसंकटाभोगदुर्विगाहेऽत्र त्रिभुवने UdaySuKa. 100.22; विनाशतत्कल्पना कल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम् BrahmSūBh. (Rā.) 124.13 (*on* i.1.1); 478.15 (*on* ii.2.9); (कृष्णः) आवाभ्यां समवेदनाभ्यामन्वेषणीयः GopāKeCan. 133.8; निवृत्त्युपाय एवान्वेषणीयः प्रेक्षावता SarvaDaSaṁ. 16.873; न च ... सर्वत्रानिष्टमन्वेषणीयम् NyāyKu. 72.18; न च स्थापितस्वरूपादिमत्प्रमाणमनादृत्य मानान्तरमन्वेषणीयम् NyāyPari. 167.5; अपि च स्वयं चेत्तत्र साध्यज्ञापनाय प्रवर्तेत ततो दृष्टान्तान्तरमन्वेषणीयम् NyāyPari. 254.3; दृष्टः क्वापि स केशवो व्रजवधूमादाय कांचिद्गतः सर्वा एव हि वञ्चिताः खलु वयं सोऽन्वेषणीयो यदि। द्वे द्वे गच्छतः Subhāṣi. 100; उच्चारणं न प्रयोजकम् ... तत्र प्रयोजकापेक्षणे अन्यदेव किंचित् प्रयोजकमन्वेषणीयम् PūrvottaVāNaMā. 266.7; द्वित्रेषु दिनेषु मनोविनोदनसाधनमन्यत्रान्वेषणीयम् RasSa. 227(1); **3** to be known or understood रुद्रावित्यत्र प्रयोगे एकशेषोऽन्वेष्योऽन्वेषणीयः KāvyālaṅSūVṛ. (*on* v.2.163.19); 74.7 (*on* v.2.54); अतो वै ब्रह्मवैरूप्येण तदुपादेयत्वासंभवात् तत्स्वरूपमुपादानं किंचिदन्वेषणीयम् GoviBh. 91.5 (*on* ii.1.5); **4** to be looked after, i.e. to be cared अन्वेषणीयाः स्वयमेव तावत्प्रजाः PāṇḍaC. 13.1109; **5** to be examined or investigated नात्र जल्पमार्गवत् पुरुषप्रतिभा अन्वेषणीया SmṛtiCan. iii.57.5; अन्वेषणीयं किमनाहते ते तत्त्वम् ŚivLī. 22.59; **6** the word or expression *anveṣaṇīya* छिन्नं भिन्नं मृतं नष्टम् ...। इत्याद्यान्न वदेच्छब्दान्। ... ब्रूयात्... नष्टमन्वेषणीयं च ŚivU. 7.83.

**अन्वेषणीयचरण** (anveṣaṇīya-caraṇa) *n.* foot which is to be sought after भगवानरविन्दनाभः ...। तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः BhāgP. iii.15.37.

**अन्वेषणीयत्व** (anveṣaṇīya-tva) *n.* **1** the state of being what is to be searched or found अन्तरङ्गज्ञापकाभाव एव बहिरङ्गस्यान्वेषणीयत्वात् NyāySu. (Ja.) 10B.2 (*on* i.1.1); **2** the state of being what is to be obtained विशिष्टब्रह्मण एव संशयेन विशिष्टाज्ञाननिवृत्त्यर्थं विशेषोपरागेणैव ब्रह्मज्ञानस्य अन्वेषणीयत्वात् JñānBiPra. 27.4.

**अन्वेषणोपाय** (anveṣaṇopāya) *m.* means of searching or finding किमन्यमन्वेषणोपायमासूत्रयामीति समुचितानुष्ठानमूढः ... विहंगकोलाहलमशृणवम् UdaySuKa. 30.22.

**अन्वेषत्** (anv-eṣat) *adj.* [*f.*-*atī*, *antī*] **1** searching, looking for, finding वैदर्भी विचरत्येका नलमन्वेषती तदा MahāBhā. iii.61.9; iii.61.32; अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः MāhāBhā. iii.67.21; (राघवयोः) तयोरन्वेषतोरेवं

सर्वं तद्बलमोजसा। संजज्ञे विपुलः शब्दः Rāmā. iii.65.12; अन्वेषप्रतिरथो लोकानतति कण्टकः BhāgP. iii.18.23; त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः। अन्वेषन्ती वनं माता दावाग्निं सा प्रवेक्ष्यति BhāgP. iv.9.23; ततो द्विजा गते देवे मत्वा तं शंकरं विभुम्। अन्वेषन्तोऽपि यत्नेन न चापश्यन्त तं PadmP.v.17.78; राजा प्राह ... दुहितेयम् ... श्रीमती नामतः। प्रदानसमयं प्राप्ता वरमन्वेषती ŚivaP. ii.(1).3.14 (39A.16); विधिना गजचारिणः। प्रेषयामासुः ...। अन्वेषद्भिर्वने नागानथ दृष्टं तु तैः पदम् Hastyāyur. 4.10 (1.1); 2 seeking गतिर्गङ्गा तु भूतानां गतिमन्वेषतां सदा AgniP. 110.2.

**अन्वेषदुःख** (anveṣa-duḥkha) *n.* grief or pain of searching ततः प्रभृति न भ्रातुः कनीयान् मार्गमिच्छति। अन्वेषदुःखमाप्नोति तेन तत्परिवर्जयेत् PadmP. v.6.12.

**अन्वेषमाण** (anv-eṣamāṇa) *adj.* [*f.* –ā] 1A seeking, i.e. aiming at ते हैते ब्रह्मपरा ब्रह्मनिष्ठा परं ब्रह्मान्वेषमाणाः PraśnaU.1.1; अन्वेषमाणाः किं तत् यन्नित्यं विज्ञेयमिति तत्प्राप्त्यर्थं यथाकामं यतिष्याम इत्येवं तदन्वेषणं कुर्वन्तः PraśnaUBh. 238.16 (*on* 1.1); ते हैते भारद्वाजादयः ... परमार्थं ब्रह्म अन्वेषमाणाः ... प्रतिपेदिरे VedāntKa. 187.9 (*on* i.3.38); 1B seeking सर्वेषामेव भूतानाम् ...। गतिमन्वेषमाणानां नास्ति गङ्गासमा गतिः KūrmaP. 354.15 (1.37); SkandP. ii(8).6.103; SiṁhāDvā. 129.7; 2 searching, finding out, looking for (एकलव्यम्) तं ततोऽन्वेषमाणास्ते वने ... ददृशुः पाण्डवाः MahāBhā. i.123.22; ix.29.6; सोऽन्वेषमाणः कौन्तेयान् पाञ्चाल्यः ...। दृढं धनुरनायम्यं कारयामास MahāBhā. i.176.9; (नलस्य) तस्य माम् ... विद्धि भार्याम् ...। अन्वेषमाणां भर्तारम् MahāBhā. iii.61.49; अन्वेषमाणा भर्तारं नलम् ... विचरामीह दुःखिता MahāBhā. iii.61.81; iii.107.16; अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम्। न सीतां ददृशुर्वीराः Rāmā. iv.47.4; हयमन्वेषमाणास्ते समन्तात्र्यखनन्महीम् HariVaṁ. 10.212* (1); BhāgP. ix.8.9; जम्बुकश्चण्डरवो नाम। स कदाचिदाहारमन्वेषमाणः क्षपामासाद्य ... नगरं प्रविष्टः Tantrākhyā. 26.22; सलिलमन्वेषमाणः ... पर्यटन् ... सिक्तं मार्गमद्राक्षीत् Kād. 121.13; गवाखुराङ्कितो देशः पदमित्युच्यते तेन ... विविक्तिं पशुं पदेनान्वेषमाणः अनुविन्देत् BṛĀraUBh.115.18 (*on* i.4.7); स पार्थिवः। यत्नेनान्वेषयामास विश्वामित्राश्रमम् ...। अन्वेषमाणेन तेन भूमिभृता ... संदृष्टं नीलद्रुमकदम्बकम् SkandP. vi.4.5; उत्तरं सलिले तत्र यावद्वर्षसहस्रकम्। अन्वेषमाणो धरणीं नावापं ताम् DevīBhāP.iii.2.18; एकैवाहमन्वेषमाणा पदपद्धतिं नाधिगमं भवतीनाम् GopāKeCan. 99.9; 125.28; भीमो नृपः ... प्रस्थापयामास बहून् द्विजेन्द्रान्। ... अन्वेषमाणाः पृथिवीमशेषां ते बभ्रमुः Nalābhyu. 8.23; शशस्य शृङ्गमस्ति तदेवंलक्षणमरण्ये पतितमन्विष्य लब्धुं शक्यम् तदन्वेषमाणस्य ... यथोक्तचिह्नयुक्तकाष्ठशृङ्गान्तरादिदर्शने शशशृङ्गमिदम् इत्यनुभवोऽस्ति PūrvottaVāNaMā. 356.18; विद्यारण्यनामभिराचार्यवर्यैः ... श्रियम् ... निवेशितुकामैस्तदनुरूपं पुरुषप्रकाण्डमन्वेषमाणैरुपगम्य ĀnandRa. 1.45 (14); 3 waiting for नारी ...। मार्गमन्वेषमाणा सा प्रियस्य ... मरणं गता BhaviP. 447 A. 32 (iii (2).20.8)

**अन्वेषयत्** (anv-eṣayat) *adj.* [*f.*-antī] 1 searching, looking for, finding out ऋक्षवन्तं गिरिवरं विन्ध्यं च गिरिमुत्तमम्। अन्वेषयन्परिश्रान्तः स ददर्श महामनाः। साश्वं हतं प्रसेनम् HariVaṁ.28.20; BrahmāṇḍP.ii.71.39; BrahmP. 16.31; अथासौ ... तस्य पदपद्धतिमन्वेषयन् कंचिद् ग्रामम् ... प्रविष्टः PañcT. 1.55(32) (50.10); Pañcā. 26.12; लब्ध्वा प्रति मार्गमन्वेषयन् सागरं प्रति भूमौ शेते इति भूशयः ViṣṇuSaBh. 94.16 (*on* 80); न मयान्वेषयन्त्यापि सा आर्या समासादिता TāpaVa. 6.0(10); यदि न लभेद्भिमृशत्रन्वेषयन् जन्मना संस्कारेण ... तपसा युक्तः पात्रम् PārāSū. 59.28; कल्पग्रामे तदा सिद्धस्तस्य कन्या सुमध्यमा वरमन्वेषयन्ती सा, न प्राप्तस्तु तया मतः VarāP. 162.16; यं चान्वेषयद्भिरनुभूतः ... परिक्लेशः ... अस्माभिः स नास्ति ... कुमारः TilaMañ. 189.17; बालपर्णशालासु परशुदात्रशस्त्रिकादीन्युपकरणान्यन्वेषयन्तीम् ... वन्धुसुन्दरीमपश्यम् TilaMañ. 307.16; 352.22; अन्वेषयंस्तु तं जारं बिडालं ददर्श मुनिः BrahmP.87.54; क्वचिद्वेणुं करस्रस्तं प्रिययापह्रुतं हरिः। अन्वेषयन्नुपालब्धो विप्रलब्धः प्रियागणैः PadmP. iv. 83.49; (व्रतम्) दमयन्त्या पुरा कृतम्। नलमन्वेषयन्त्या ... दृष्यो दृष्टो नलस्तया GaṇeP. i.70.5; अन्नपानादि दैवादासीन्न किंचन। इतस्ततोऽन्वेषयंश्च सार्थवाहः स्वयं ततः। ईक्षांचक्रे घृतम् TriṣaŚaPuC. i.1.138; (ब्राह्मीसुन्दरीभ्याम्) मुहुरन्वेषयन्तीभ्यां ताभ्यामय तथास्थितः। उपलक्षि कथंचित् सः (मुनिः) TriṣaŚaPuC. i.5.786; न नन्दः प्राप तच्छिद्रं नित्यमन्वेषयन्नपि PariPar. 7.44; पतिः ... मम। ... न चापतपूर्वपुरुषनिधीनन्वेषयन्नपि PariPar. 10.18; अथ तैर्नृपादेशकारिभिः ... अन्वेषयद्भिः ... मन्दविसर्पिणी ... आसादिता Pañcā. 68.6; (नरवाहनदत्तः) अन्वेषयन् यदा नैव लभते स्म कुतोऽपि ताम् (मदनकञ्चुकाम्)। संतेपे KathāSaSāg. xiv.1.10; एकैवाहं नानुदृष्टो द्वितीयः ... सख्यः प्रायोऽन्वेषयन्त्यो लतासु तूर्णं मार्गं माधव प्रापयाद्य GopāKeCan. 100.4; 109.20; नरं राज्यधरं कंचित् तेनान्वेषयता बहिः। गत्वा सोऽमरसेनाख्यः कुमारः सहसाश्रितः PārśvC. 7.112; मुक्ताफलानां तमसि तत इतः स्तोममन्वेषयन्त्याः। कस्याश्चित् स्वस्तरुण्याः ... कीर्तिज्योत्स्ना त्वदीया क्षणमकृत मुदम् Ekāva. 3.1 (355) (116.12); 8.6 (13) (213.8); अन्वेषयन् दित्सितदक्षिणोऽहमाचार्यसान्दीपिनिसूनुवृत्तम्। ... प्राप्तं महाशङ्खमिहान्वविन्दम् Yadavā. 18.109; दम्भङ्गभाक्स्मशतैरसतीरहस्यमन्वेषयन्कपटभिक्षुक लक्षितोऽसि ŚārṅgaPa. 3777; MahāN. 3.70; अन्वेषयन्नपि न तामवलोकयामि UnmaRā. (Vi.) 68; हन्त दाशरथिमन्वेषयतो मम दर्शनमात्रेणैव सर्वतो विभज्यन्ते सनायकाः कपिवाहिनीसैनिकाः AdbhuDa. 8.7 (3); त्वामिहान्वेषयन्ती कूले कूले चरति सरसो हन्त लीलामराली BhramDū. 108; एषा काञ्चनमाला मुक्तचक्षुरपिधाना इतस्ततो विलीनाः सखीरन्वेषयन्ती करलग्नां कलभगमनामानयति ŚṛṅgāSa. 64.(1); 2 seeking वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ŚatTrayī. 352; ŚāntiŚ. 1.13; राज्यमन्वेषयंस्तस्थौ चाणाक्यः कृतनिश्चयः BṛKathāK. 143.63; सा ... देवी ...। चचार जगतीमध्येऽन्वेषयन्ती स्वमीप्सितम् BṛDharmaP. i.25.52; 3 waiting for अय तौ (द्वावपि) ... कालमन्वेषयन्तौ स्थितौ PañcT. 3.67 (18) (329.10)

**अन्वेषयितुकाम** (anveṣayitu-kāma) *adj.* desirous of searching or finding out तस्मात्प्रदेशात्स्वदेशदर्शनं प्रति निराशो निकटवर्तिनं ग्रामं नगरमाश्रमं वान्वेषयितुकामो निमित्तीकृत्य दिशमेकां शनैः शनैरुदचलम् TilaMañ. 245.2.

**अन्वेषयितुम्** (anv-eṣayitum) *inf.* to search for, to look for, to find out के तत्र शूराः संयोज्या जलेऽन्वेषयितुं हयम् PadmP. iv.38.33; स पार्श्वनाथप्रतिमाम् .... अन्वेषयितुमारेभे PrabaK. 85.10; अये किसलयचलनानुगतिरयमपक्रान्तवानेव मम प्रियामन्वेषयितुम् UnmaRā. (Vi.) 46(2)

**अन्वेषयित्वा** (anveṣayi-tvā) *ger.* [irr.] having searched for अन्वेषयित्वा सर्वार्थान्विदधासि नृणामिह। अतो दुण्ढिरिति ख्यातस्त्रिलोक्यां त्वं भविष्यसि GaṇeP. ii.48.184.

**अन्वेषयिष्यत्** (anv-eṣayiṣyat) *adj.* who is going to search (भीमः) स चिन्तयामास वने विनष्टमन्वेषयिष्यन् पतिमात्मजायाः Nalābhyu. 8.48.

**अन्वेषिचार** (anveṣi-cāra) *m.* spy who searches नूनं त्वामभिवीक्षितुं त्वनुसरन्त्यन्वेषिचारा मुदा ... संयोजिनः GopāKeCan. 112.25.

**अन्वेषित** (anv-eṣita) *adj.* [*f.* –ā] 1A which has been searched सर्वा च पृथिवी ...। अन्वेषिता च तत्सर्वं न च पश्याम पाण्डवान् MahāBhā. iv.504*(3); बहुमत्स्योऽयं ह्रदः (v.l. Add. कदाचिदपि नास्माभिरन्वेषितः) PañcT. 1.127 (8) (131.8); तां पिधाय च प्रसीयसा निजप्रावारेण सर्वाङ्गिं जिगमिषुरन्वेषितानेकमलयसुन्दरीजीवितोपायैर्निःसहं चित्रमायमवदम् TilaMañ. 380.14; नान्वदन्वेषितं भवेत्। ... न वारतिथिमासादिशोधनं सूर्यपर्वणि TantrSā. (K.) 16.28; 1B who has been searched अन्वेषितः प्रेषितपदातितन्त्रैस्तत्र तत्राटवीगहनेषु (युवराजः) TilaMañ. 191.8; अन्वेषितापि शतशो महीशेन जनैरपि। न दृष्टा वनमाला सा MalliC. 2.287; मणिभद्रेन कोऽपि सार्थो निजपुरुषान् प्रेष्यान्वेषितः KathāK. 70.1 [अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम् AmaK. 2234; ŚabdaRa. (Vā.) 3206; KośaKaTa. 2.596; KalpaK. 233.171; मार्गितं मृगितान्विष्टौ अन्वेषितगवेषितौ Vaija. 209.98; मृगितं मार्गितान्विष्टान्वेषितानि गवेषिते AbhidhāCin. 1491; अन्वेषिते मतम्। गवेषितं मार्गितं चान्विष्टं मृगितमित्यपि ParaNā. 1582; गवेषितेऽन्वेषितं स्यात् ŚabdaRaSaK. 159.11]; 2 sought out कविः काव्यगुणैरेव शोभतेऽन्वेषितश्चिरम् EI.xiii.292.24 [अन्वेषितमीप्सिते ŚabdaRa. (Su.) 6.77]

**अन्वेषितवत्** (anveṣita-va(n)t) *adj.* who has searched सर्वतो दिक्षु ... अन्येषु च मनोरमेषु स्थानेषु तामन्वेषितवान् TilaMañ. 251.23.

**अन्वेषितव्य** (anv-eṣitavya) *adj.* 1A to be searched, cf. अन्वेषितव्यविश्राम; 1B to be searched, i.e. to be obtained अन्यया यत्र यत्र धूमः तत्राग्निरित्येव स्यात्। इह तु कथमग्निना भवितव्यम्। तस्मादिहापि धूमोऽस्तीति ज्ञानमन्वेषितव्यम् TarkBhā. (Ke.) 38.11; 2A which is to be sought खदिरस्य सदृशमन्वेषितव्यम् ŚābaBh. 1424.13 (*on* vi. 3.28); 2B who is to be sought पङ्क्तिपावनोऽवश्यमन्वेषितव्यः ManuBh. i.285.8 (*on* 3.173)

**अन्वेषितव्यविश्राम** (anveṣitavya-viśrāma) *adj.* wherein the resort is to be searched अरण्यमिदम् ... अन्वेषितव्यविश्रामम् HariVaṁ. 52.13.

**अन्वेषितुम्** (anv-eṣitum) *inf.* 1 to understand, to ascertain न च नीतिः सुनीतस्य शक्यतेऽन्वेषितुं परैः MahāBhā. iv.27.8 (BhārBhāDī. अनुगन्तुम्); 2 to search क्षिप्रं वनमिदं सौम्य नरसंघैः समन्ततः। लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि Rāmā. ii.92.3; येन राजन्हृता सीता तमन्वेषितुमर्हसि Rāmā. iii. 61.12; जनं स्वकीयम्। अन्वेषितुं दुरगतोऽथ कश्चित् Raghunā. 9.38.

**अन्वेषित्वा** (anveṣi-tvā) *ger.* [irr.] having investigated or examined विवृते प्रदेशे वामप्रदेशिन्यान्वेषित्वा (शस्त्रकर्म कुर्यात्) AṣṭāSaṁ. i.185.21 (1.38)

**अपकर्षणाशक्ति** (apakarṣaṇāśakti) *f.* lack of power to take away or remove (श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः) अन्यावर्जितेनाप्याचमनसिद्धिः ... श्मश्रुगतत्वश्रुतेश्चापकर्षणाशक्तावेव BālaKrī. i.132.24 (*on* 1.194)

**अपकर्षणीय** (apa-karṣaṇīya) *adj.* which is to be drawn back or transferred to an earlier context (ततः खड्गांस्त्रिशूलांश्च तोमरांश्च ... तैर्मुक्तानहमच्छिनम्) खड्गांश्च शूलांश्चेति पाठे शरैरित्युत्तरश्लोकादपकर्षणीयम् BhārBhāDī. *on* iii. 167. 20.

**अपकर्षत्** (apa-kárṣat) *adj.* [*f.* –ī] 1A dragging out यु॒मस्यां॑पुभ॒रंणीः। अ॒पक॒र्षन्तः पु॒रस्ता॑दपु॒वर्ह॒न्तो॒ऽवस्ता॑त् TaiBr. I.v.1.5 (BhaṭṭaBhā. शरीरात्प्राणानपकर्षन्तः); 1B removing or expelling (शंतनुः) स कदाचिन्महाराज ददर्श परमस्त्रियम्। सा च शंतनुमभ्यागादलक्ष्मीमपकर्षती MahāBhā. i.928*; 2 drawing back आरुजन्विरुजन्पार्थो ज्याः विकर्षंश्च पाणिना। सोऽवकर्षन्। (v.l. अपकर्षन्) विकर्षंश्च सेनाग्रं समलोडयत् MahāBhā. vii.102.66; उत्कर्षन्नपकर्षंश्च काश्चित्काश्चिन्मनाङ्नाक्। व्यवस्थापयितुं तन्त्रीः करशाखाभिरस्पृशम् BṛKathāŚloSaṁ. 17.37; 3 diminishing वनस्पतिरपि सात्मकः छेदादिभिर्म्लान्यादिदर्शनात् ...। अपकर्षतश्चैतन्याद्वा सर्वेषां सात्मकत्वसिद्धिः SyādvāMañ. 29 (56); 4 taking or carrying away तीरभूरुहततीरपकर्षन्नग्रहारनिकरैः सह पूरः। आययावधिकघोषम् ŚaṅkaDigVi. (Mā.) 5.136.

**अपकर्षतस्** (apakarṣa-tas) *adv.* 1 due to inferiority साधर्म्यवैधर्म्योत्समोत्कर्षापकर्षतः। वर्ण्यावर्ण्यविकल्पाश्च प्राप्त्यप्राप्तीति साध्यता: SarvaSiSaṁ. 6.36; 2 due to decrease साक्षिण्युपाधिमालिन्यादध्यस्तादपकर्षतः। सुखापकर्षमद्वैतविद्याचार्याः प्रचक्षते VedāntSiSūMañ. 1.98.

**अपकर्षता** (apakarṣa-tā) *f.* [Inst.] by way of degradation ब्राह्मणः ... विपरीताचारेण ... जातेरपकर्षतया शूद्रतुल्यतामेति ManvaMu. 190.4 (*on* 4.245)

**अपकर्षतारतम्य** (apakarṣa-tāratamya) *n.* A gradation of decrease (in size) किं वा क्वचिद्द्रव्ये वृत्तिः अपकर्षतारतम्यमियत्तावच्छेदरहितमेव NyāySu. (Ja.) 342 B.6 (*on* ii.2.6); B gradation of inferiority अपकर्षतारतम्यस्य अभिव्यक्तिविशेषकृतत्वमुपपद्यते PūrvottaVāNaMā. 368.14.

**अपकर्षदर्शन** (apakarṣa-darśana)) *n.* observation of decrease or reduction विजातीयवधे तु ब्राह्मणकर्तृकेषु क्षत्रियादिवधेषु गोदण्डे दशमदशमभागक्रमेणापकर्षदर्शनात् तत्तुल्यन्यायात् ... धनदण्डकल्पनम् DaṇḍaVi. 73.14; 277.9.

**अपकर्षदोष** (apakarṣa-doṣa) *m.* defect of degradation अर्थातुरो न गणयत्यपकर्षदोषम् Subhāṣi. 997.

**अपकर्षपक्ष** (apakarṣa-pakṣa) *m.* option of drawing back or transference (of performance of a rite to an earlier time) पूर्वाणि मासिकान्यपकृष्य सपिण्डीकरणं कर्तव्यम्। ... अपकर्षपक्ष एवैतत् CaturCin. iii (1). 297.20; iii(2). 536.7

**अपकर्षपरिग्रह** (apakarṣa-parigraha) *m.* acceptance of decrease परिमाणानन्त्येऽप्युत्कर्षापकर्षपरिग्रहो द्रष्टव्यः NyāySu. (Ja.) 346A.8 (*on* ii.2.6)

**अपकर्षपर्यन्त** (apakarṣa-paryanta) *adj.* A which is upto (the lowest or minimal) division or unit (of size) अपकर्षपर्यन्तं द्रव्यं परमाणुः YogBh. 176.2 (*on* 3.52); एकत्वं लभेरन् यावदपकर्षपर्यन्तगतमर्थवस्तु SphoṭSi. 184.1; अवयवावयविविभागो यतो निवर्तते, सोऽपकर्षपर्यन्तगतः परमाणुः BrahmSūBh. (Śaṅ.) 368.5 (*on* ii.2.12); अपकर्षपर्यन्तं कारणद्रव्यमतिसूक्ष्ममनवयवमवतिष्ठते Bhām. 394.4 (*on* ii.2.11); लोष्टस्य प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यमवतिष्ठते सोऽपकर्षपर्यन्तः परमाणुः TattvVai. 176.15 (*on* 3.52); द्वित्वमपकर्षपर्यन्तः तदादिरयमारम्भः Kiraṇā. 65.15; B which is upto the mininal division or unit (of time) परमापकर्षपर्यन्तः कालः क्षणः YogBh. 176.2 (*on* 3.52)

**अपकर्षपर्यन्त** (apakarṣa-paryanta) *m.* extremity of division यथापकर्षपर्यन्तमनुप्राप्तः प्रतीयते। तत्रैकस्मिन् क्रियाशब्दः केवले न प्रयुज्यते VākyaPa. 3(8).10.

**अपकर्षप्रकार** (apakarṣa-prakāra) *m.* variety of transference (of performance of a rite) back to an earlier time कल्पतरुस्त्वग्रे वृद्धिनिश्चय एव सर्वेऽपकर्षप्रकारा इत्याह NirṇaSi. 426.18.

**अपकर्षप्रतिपत्ति** (apakarṣa-pratipatti) *f.* knowledge of degradation यदयं 'वृषल्याः कामुकः' ... इत्यादौ कामुकादेराक्रोशादपकर्षप्रतिपत्तये समासेऽपि विभक्तेरलुकमाह VyaktiVi. 51.12.

**अपकर्षप्रयोगाङ्ग** (apakarṣaprayogāṅga) *n.* subsidiary of performance which requires drawing back or transference (of rite) to an earlier time वेदिकरणस्यापकर्षाद्ब्रह्मवरणस्यापकर्षप्रयोगाङ्गकर्तृसंस्कारतया ... ब्रह्मवरणस्यापकर्षः MayūMāli. 856.9 (*on* xii.1.18)

**अपकर्षप्रयोजक** (apakarṣa-prayojaka) *adj.* conducive to inferiority तन्मात्रवृत्तिः प्रतियोगितानवच्छेदकश्च धर्मोऽपकर्षप्रयोजकः AlaṅkāKau. (Vi.) 6.6.

**अपकर्षबोध** (apakarṣa-bodha) *m.* knowledge of lower rank or position or degradation न चापकर्षबोधरूपफलाश्रयत्वरूपकर्मत्वं तथाबाधितमेवेति वाच्यम् VyutpaVā. 174.31.

**अपकर्षम्** (apakarṣam) *absolutive* 1 by sucking from, suckingly स्तनरन्ध्रापकर्षं पयः पिबति। स्तनरन्ध्रादपकर्षम् JaineVṛ. 141.31 (*on* ii.4.37); 2 by snatching from, snatchingly भ्राष्ट्रापकर्षमपूपान् भक्षयति। भ्राष्ट्रादपकर्षम् JaineVṛ. 141.31 (*on* ii.4.37)

**अपकर्षमात्र** (apakarṣa-mātra) *n.* [Inst.] by way of mere decrease अनन्तभेदास्वपि व्यक्तिषु नात्यन्तापूर्वविशेषणोपलक्षणोपादानं किंचिदुत्कर्षापकर्षमात्रेण च ... सर्वाण्येवावान्तरसामान्यानि विशेषव्यपदेशं प्राप्नुवन्ति TantrVā. 251.3 (*on* i.3.26)

**अपकर्षयत्** (apa-karṣayat) *adj.* lessening, i.e. depreciating (sentiment) दोषाः ... साक्षात्काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते SāhiDa. 24.9.

**अपकर्षयुक्त** (apakarṣa-yukta) *adj.* A associated with deficiency इह त्रीणि शुक्लानि वस्त्राणि प्रकर्षापकर्षयुक्तानि MahāBh. ii.415.23 (*on* v.3.55); B associated with inferiority कार्यस्यैवानुपपत्तेः उत्कर्षापकर्षयुक्तत्वे च एवोत्कृष्टः स एवेश्वरः RājMār. 12.9.

**अपकर्षरूप** (apakarṣa-rūpa) *adj.* of the form or nature of inferiority महदेतद् द्वयोरुत्कर्षापकर्षरूपं वैरूप्यम् GitāBh. (Rā.) 134.7 (*on* 2.49); उत्कर्षापकर्षरूपं हि सुखतारतम्यं प्रसिद्धम् न परिमाणविशेषरूपम् ŚivārkaMaDī. i.410.23 (*on* i.3.7); किमत्रोपमानादुत्कर्षरूपो व्यतिरेकः ... आहोस्वित् सर्वस्वकाराद्युक्तदिशापकर्षरूपः RasGaṅ. 478.4; अन्वर्जुनं योद्धार इत्यत्रापकर्षरूपं हीनत्वमनुशब्दार्थः VyutpaVā. 153.10.

**अपकर्षरूपत्व** (apakarṣarūpa-tva) *n.* the state of having the nature of inferiority उभयोरप्यनुपादाने तथैव न त्ववगतिः, व्यतिरेकस्योत्कर्षापकर्षरूपत्वात् RasGaṅ. 469.1.

**अपकर्षवचन** (apakarṣa-vacana) *adj.* expressing of removal, i.e. replacement or substitution स्थानशब्दोऽयमस्त्यपकर्षवचनः – गोस्थानेऽश्वो बध्यताम् PadMañ. *on* KāśiVṛ. *on* P.i.1.49 (168.13); स्थानशब्दः ... निवृत्तिवाची न गृह्यते ... नाप्यपकर्षवचनः PadMañ. *on* KāśiVṛ. *on* P.i.1.49 (169.10)

**अपकर्षवत्** (apakarṣa-vat) *adv.* like drawing back or transeference (of word) to preceding context सूत्रेषु उत्तरस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोध्यम् LaŚabdeŚe. i.225.5.

**अपकर्षवती** (apakarṣa-va(n)tī) *adj.* (*f.*)belonging to degradation, i.e. lower rank or position स्वजातिजा सवर्णा अनन्तरानुकल्पत्वेनाम्नाता किंचिदपकर्षवती वा। ब्राह्मणस्य क्षत्रिया वैश्या च VīraMi. (Saṁskāra.) 388.2.

**अपकर्षवत्त्व** (apakarṣavat-tva) *n.* 1 the state of having inferiority समुच्चयः ... नापि नित्यनैमित्तिकैः तत्तदाश्रमविहितानां तेषाम् (नित्यनैमित्तिककर्मणाम्) उत्कर्षापकर्षवत्त्वात् ... कैवल्यफले तावभ्युपेयाविति स्वर्गवदपवर्गस्यापि सातिशयत्वेनानित्यत्वादिदोषप्रसङ्गात् TattvPradī. (Ci.) 355.7; 2 the state of having decrease शब्द उत्पद्यते उत्कर्षवत्त्वे सति अपकर्षवत्त्वात्, माधुर्यवत् TattvCin. iv (1). 392.1.

**अपकर्षवर्णन** (apakarṣa-varṇana) *n.* 1 description of the transference (of performance of a rite) to an earlier time धर्मः ... तदाद्युत्कर्षं करोति नापूर्व इति। तदयुक्तम् ... पूर्वेषामित्यत्राप्राकृतानामपि विदेवनादीनामपकर्षवर्णनेन TantrVā.1097. 21 (*on* iii.6.22); 2 description of inferiority व्यतिरेके ... तूपमेयापेक्षयोपमानेऽपकर्षवर्णननियमात्प्रतियोगिताश्रय उपमानम् AlaṅkāKau.(Vi.)6.4.

**अपकर्षविज्ञान** (apakarṣa-vijñāna) *n.* act of understanding the transference (of a word) to an earlier context सुट्तिथोस्त्वपकर्षविज्ञानम् Vār. 3. *on* P.iii.4.102.

**अपकर्षविधान** (apakarṣa-vidhāna) *n.* injunction of transference (of performance of a rite) to an earlier time महाप्रयोगवचनो हि अपकर्षविधानानन्तरमेव प्रवर्तते न ततः पूर्वम्। ... क्रमक्लृप्तेरपकर्षविधानदशायामभावात्र ... तदन्तापकर्षोऽत्र संभवति MayūMāli. 417.12 (*on* v.1.14)

**अपकर्षविधायक** (apakarṣa-vidhāyaka) *adj.* which prescribes the transference (of performance of a rite) to an earlier time प्रेतश्राद्धानां दैवपित्र्यकर्मानुरोधेनापकर्षविधायकवाक्यानामेकमूलत्वलाघवात् BālamBha. i.598.10 (*on* 1.255)

**अपकर्षविधि** (apakarṣa-vidhi) *m.* injunction of transference (of performance of a rite) to an earlier time प्रातरग्निहोत्रस्य ... अपकर्षविधौ व्यभिचारः स्यात् PūrvottaVāNaMā. 6.9; ननु यूपं छिनत्तीति छेदनविधेर्योऽर्थः स एव दीक्षासु यूपं छिनत्तीत्यपकर्षविधेरप्यर्थो युक्तः MayūMāli. 820.2 (*on* xi.3.4); 857.7 (*on* xii.1.19)

**अपकर्षविधिकल्पक** (apakarṣavidhi-kalpaka) *adj.* which assumes the injunction of transference (of performance of a rite) to an earlier time 'शिरो वा एतद्यज्ञस्य' इति वाक्यमपि नापकर्षविधिकल्पकम् MīmāKau. i.233.20 (*on* i.4.9)

**अपकर्षविशेष** (apakarṣa-viśeṣa) *m.* particular type of subtraction, i.e. defect in inference पर्वतादेरप्रत्यक्षता स्यादिति चेत्र। अपकर्षविशेषस्य विवक्षितत्वात् NyāySu. (Ja.) 342A.1 (*on* ii.2.6); क्रमेणापकर्षविशेषे लक्षणीयेऽपि क्लिष्टा गतिः NyāyPari. 222.10.

**अपकर्षविश्रान्ति** (apakarṣa-viśrānti) *f.* termination of (the lowest minimal) division or unit (of size) यत्रापकर्षविश्रान्तिः स एव परमाणुः SarvaDaKau. 11.27.

**अपकर्षविषयत्व** (apakarṣaviṣaya-tva) *n.* the state of being the object requiring transference (of a word) to an earlier context (स देवांस्तर्पयेद्विजः। पितॄन् मधुघृताभ्यां च) चशब्दस्यापकर्षविषयत्वम् BālaKrī. i.53.20 (*on* 1.41)

**अपकर्षशङ्का** (apakarṣa-śaṅkā) *f.* doubt regarding transference (of performance of a rite) to an earlier time पूर्वोत्तरपदार्थानां च प्रयाजिनङ्गत्वेन तदुत्कर्षापकर्षयोरुत्कर्षापकर्षशङ्कानुपपत्तेः ... तन्मात्रस्यैवोत्कर्षापकर्षौ BhāṭṭDī. ii.169.8 (*on* v.1.12)

**अपकर्षसम** (apakarṣa-sama) *m.* parity per subtraction, type of defect in inference साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः NyāySū. v.1.4; शब्दोऽरूप इति घटोऽप्येवं प्रसक्त इत्यपकर्षसमः NyāyVār. 539.8 (*on* v.1.4); दृष्टान्तधर्मविकल्पेनैव साध्यधर्मिणि सिद्धस्यापि धर्मस्यापकर्षेण प्रत्यवस्थानमपकर्षसमः NyāyMañ. ii.177.15; इष्टधर्मनिवृत्तिरपकर्षसमः NyāySā. 18.13; व्यावृत्ते व्यापकाभासे पक्षतो लिङ्गसाध्ययोः। आकर्षोऽन्यतरस्य स्यादपकर्षसमः स्फुटः। ... साधर्म्य हेतोर्वा पक्षादपकर्षणमपकर्षसमः TārkiRa.259.6-9; यथा चापकर्षसमादिषु एकैकस्यां वा जातिविधायाम् असिद्ध्याद्यनेकदोषसंग्रहं व्याचख्युः। तथा प्रतिप्रमाणसमायामपि NyāyPari. 232.3; 245.9; व्यापकाभासनिवृत्त्या कुतश्चित्कस्यचिद्व्याप्याभासस्यापकर्षणमपकर्षसमः NyāyPari. 248.8; दृष्टान्तस्थविशेषस्य व्यापकत्वाभिमानेन साध्यापकर्षविवक्षा तदा अपकर्षसमभेदोऽयम् NyāyPari. 262.7.

**अपकर्षसमय** (apakarṣa-samaya) *m.* time of drawing back or transference (of performance of a rite) to an earlier time नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते ŚāstrDī. 396.1 (*on* iv.4.2)

**अपकर्षसमसमाख्या** (apakarṣasama-samākhyā) *f.* name of parity per subtraction अपकर्षसमसमाख्यानिरुक्तिमात्रेण संग्रहे संभवति अनुक्तसमाख्यान्तरोन्नीतिश्चायुक्ता NyāyPari. 249.17.

**अपकर्षसमा** (apakarṣa-samā) *f.* parity per subtraction, type of defect in inference उत्कर्षापकर्षाभ्यां प्रत्यवस्थानमुत्कर्षापकर्षसमे जाती NyāyMañ. ii.176.9; PramāMī. 60.8 (*on* ii.1.29); अपकर्षसमा तु दृष्टान्तगतेन धर्मेणाव्याप्तेनाव्यापकस्य धर्माभावस्योपादानम् TarkBhā. (Ke.) 94.13; 95.1.

**अपकर्षहेतु** (apakarṣa-hetu) *m.* 1A cause of decrease अपूर्वस्यैकत्वं वा ह्रातव्यम्, उत्कर्षापकर्षहेतुत्वं वा NyāyVār. 63.2 (*on* i.1.7); 1B cause of lessening, i.e. depreciation रसस्योत्कर्षापकर्षहेतू गुणदोषौ भक्त्या शब्दार्थयोः। ... (रसस्य) अपकर्षहेतवो दोषाः Kavyānu. (He.) 19.10; 1C cause of inferiority यश्चायं क्षेत्रज्ञतया प्रविभक्तः (परमात्मा) तस्येन्द्रियोपलब्धवाह्यलिङ्गसंसूचितमुत्कर्षापकर्षहेतुमार्गमाह BālaKrī. ii.66.9 (*on* 3.185); उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः Kāvyānu. (He.) 332.5; 2 (Abl.) because of degradation स हि (व्यामोहः) ... विनायकशब्दवाच्यः क्रोधादिद्वारम्भकत्वेनापकर्षहेतोर्गणस्याधिपत्ये विनियुक्तो रुद्रेण BālaKrī. i.174.11 (*on* 1.267)

**अपकर्षादि** (apakarṣādi) *adj.* decrease etc. न च सुखनिष्ठोत्कर्षापकर्षादिधर्मैरनेकान्तता TattvPradī. (Ci.) 367.10.

**अपकर्षानन्त्य** (apakarṣānantya) *n.* endlessness of (the lowest minimal) division or unit (of size) अपकर्षानन्त्यमपि तद्बलेन कुतो नाङ्गीक्रियते NyāySu. (Ja.) 344 A.13 (*on* ii.2.6)

**अपकर्षानन्त्यप्रतीति** (apakarṣānantya-pratīti) *f.* knowledge of endlessness of (the lowest minimal) division or unit (of size) आगमात् ... तस्मादेवापकर्षानन्त्यप्रतीतेः NyāySu. (Ja.) 344B.12 (*on* ii.2.6)

**अपकर्षानाश्रयपरिमाणत्व** (apakarṣānāśrayaparimāṇa-tva) *n.* the state of being the measure which is not the substratum of division परममहत्त्वत्वं जातिविशेषः अपकर्षानाश्रयपरिमाणत्वं वा SiddhāMu. 12.9 (*on* 26)

**अपकर्षानुपपत्ति** (apakarṣānupapatti) *f.* untenability of transference (of performance of a rite) to an earlier time अस्यापकर्षानुपपत्तेः प्रवृत्ताम्यर्थनरूपत्वेनादृष्टार्थत्वात्र प्रसङ्गः BhāṭṭDī. iv. 238.18 (*on* xii.1.18)

**अपकर्षानुविधायित्व** (apakarṣānuvidhāyi-tva) *n.* the state of conforming to lack of excellence प्रयोगस्तु नामधेयात्मानोऽर्थाः उत्कर्षापकर्षानुविधायित्वात् NyāyVārPari. 543.2.

**अपकर्षान्वयिन्** (apakarṣānvayin) *adj.* semantically relating to degradation or lower rank चतुर्थ्या चापकर्षान्वय्यवधित्वमवधित्वं वा प्रत्याय्यते VyutpaVā. 174.27.

**अपकर्षापत्ति** (apakarṣāpatti) *f.* 1 contingency of inferiority उपमेयस्य वाचनिक्यपकर्षापत्तिः प्रतीयते SaraKaṇṭhā. 439.7; 2 contingency of transference (of word or meaning) to an earlier context or anticipation विशेष्यस्यैव मन्त्रेण प्रकाशनोपपत्तेः विशेषणांशस्य च मन्त्राभावेऽपि ध्यानाद्युपायान्तरेण स्मृतिसिद्धेर्नापकर्षापत्तिः MīmāKau. iii (2).88.18 (*on* ii.1.15); यदि आधानाम् ... अभ्यासः स्यात्ततो मन्त्राणामपकर्षापत्तिः BhāṭṭDī. ii.191.6 (*on* v.3.2); ताभ्यः स्वाहेति मन्त्रस्य निराकाङ्क्षतया च तावानेव भिन्नो मन्त्रः। तच्छब्दबलेन ता इदमित्यादिरपकर्षे तत्तच्छब्दवशेन सर्वांशस्य अपकर्षापत्त्या BhāṭṭCan. 67.16 (*on* xiv.4.27); 3 contingency of transference (of performance of a rite) to an earlier time अप्राकृतदेवत्यानामपकर्षापत्त्या तेषां प्रत्यक्षपाठक्रमबाधः स्यात् MayūMāli. 429.27 (*on* v.3.2)

**अपकर्षापेक्ष** (apakarṣāpekṣa) *adj.* depending upon the deficiency इन्द्रियस्य प्रकर्षापकर्षापेक्षाणि पटुमन्दभावेन ग्रहणानि भवन्ति NyāyVār. 513.6 (*on* iv.2.14)

**अपकर्षाप्रतिपादन** (apakarṣāpratipādana) *n.* lack of explanation of inferiority जाग्रत्कालेऽपि शुक्तिरूप्याद्युक्तोत्कर्षस्येदमंशे सत्त्वेन जाग्रच्छुक्तिरूप्यापेक्षया स्वाप्नशुक्तिरूपस्य तावताप्यपकर्षाप्रतिपादनेन प्रकृतानुपयोगात् GuruCandr. iii.185.11; LaCandr. 657.26.

**अपकर्षाभिव्यञ्जन** (apakarṣābhivyañjana) *n.* act of conveying or suggesting inferiority अत्र फणिपतिप्रमुखाणामुपमानत्वेन प्रसिद्धानामुपमेयीकरणं दोर्दण्डाद्यपेक्षयापकर्षाभिव्यञ्जनाय Ekāva. 8.62 (26) (318.11)

**अपकर्षार्थविधि** (apakarṣārtha-vidhi) *m.* injunction meant for transference (of performance of a rite) to an earlier time अपकर्षार्थविधेः होमानुष्ठानार्यत्वाभावात् आद्यहेतोर्न व्यभिचारः PūrvottaVāNaMā. 6.24.

**अपकर्षावश्यंभाव** (apakarṣāvaśyambhāva) *m.* necessity of transference (of performance of a rite) to an earlier time न च परेद्युर्हविरासादनोत्तरकाले आम्नाताया वेदेः पूर्वेद्युरपकर्षे सति तदन्तापकर्षन्यायात्तत्पूर्वस्य ब्रह्मवरणस्याप्यपकर्षावश्यंभावादमावास्यायामप्रवृत्तस्यैव ब्रह्मणो वरणमिति वाच्यम् MayūMāli. 856.5 (*on* xii.1.18)

**अपकर्षावह** (apakarṣāvaha) *adj.* conveying inferiority अपकर्षावहं पराङ्मुखमात्रवरणम् ... अनुपपत्रम् ŚivārkaMaDī. 386.12 (*on* i.2.25)

**अपकर्षासंभव** (apakarṣāsambhava) *m.* impossibility of transference (of performance of a rite) to an earlier time तेषामपकर्षस्य वाच्यत्वाभिवासनानपकर्षे तेषामप्यपकर्षासंभवात् MayūMāli. 418.12 (*on* v.116); 734.8 (*on* x.5.22)

**अपकर्षासूचकत्व** (apakarṣāsūcaka-tva) *n.* the state of not indicating the defect of subtraction तुर्णीमावत् ... यत्किंचिदिन्द्रियान्तरकरणेऽपि निगृह्यत एव न तु अपस्मारभूतावेशादिनिमित्तेषु तेषामपकर्षासूचकत्वात् TārkiRa. 351.9.

**अपकर्षिका** (apa-karṣikā) *f.* depression or lowering (with implication of grief) काश्चिच्छीर्षापकर्षिकया (v.l. शिरोऽप० DBHS.) ... रुदन्ति स्म LaliVi. 15.101 (34) [DBHS.]

**अपकर्षित** (apa-karṣita) *adj.* 1A which had been removed तेनापि व्याघ्रेण सर्वं तं पांशुराशिं पादेन अपकर्षितं काष्ठावशेषं संवृत्तम्। ... ऋषिणा तानि काष्ठानि अपकर्षितानि MaVastuAva. i.353.13-16; 1B removed, i.e.

emptied तदाज्ञया तया तोये प्रयोगादपकर्षिते। मुद्रारत्नमयत्नेन भूपः कूपान्तरैक्षत ŚāliC. 4.155; 2 drawn away ध्रुवायां संप्रवृत्तायां पटे चैवापकर्षिते ... कार्यः प्रवेशः पात्राणाम् NāṭyaŚā. 12.3.

**अपकर्षितक** (apakarṣita-ka) *adj.* which had been removed व्याघ्रेण तत्पांशु अपकर्षितकं दृष्ट्वा ऋषिस्य कौतुहलं संजातम् MaVastuAva. i.353.15 [DBHS.]

**अपकर्षितुम्** (apa-karṣitum) *inf.* **1A** to remove, i.e. to dispel अदं दुःखम् ... विदित्वा अपकर्षेयं शक्यं चेदपकर्षितुम् MahāBhā. i.148.1; **1B** to remove नात्युपयुञ्जीत पिप्पलीं क्षारमेव च। लवणं च ... श्लेष्माणं च्यावयित्वा तु नोत्सहेतापकर्षितुम् BhelaS. 67.24 (3.1); **2** to take away, to dissuade न ह्यहं त इमे सर्वे ... दण्डेन न त्वया शक्याः सुग्रीवादपकर्षितुम् Rāmā. iv.53.11.

**अपकर्षिन्** (apa-karṣin) *adj.* [*f.*–*iṇī*] **1** removing बोधिसत्त्वस्य कायप्रमुक्तया प्रभया ... नागराजस्य भवनमवभासितमभूत् ... सर्वक्लेशापकर्षिण्या LaliVi. 19.26 (2); **2A** decreasing ते हि (दोषाः) विकल्पप्रभवाः सत्यपि उपादाने कस्यचिन्मनोगुणस्य आभासात् (अभ्यासात्) अपकर्षिणः तत्पाटवे निरन्वयविनाशधर्माणः स्युर्ज्वालादिवदेव PramāVāSvopVṛ. 73.23; **2B** decreasing speed, i.e. dawdling, shuffling गुरुशकटधुरंधरस्तृणाशी समविषमेषु च लाङ्गलापकर्षी। जगदुपकरणं पवित्रयोनिर्नरपशुना न निमीयते गवेन्द्रः IndSpr. 870.

**अपकर्षोक्ति** (apakarṣokti) *f.* mention of inferiority साम्योत्कर्षापकर्षोक्ति-रुपमानोपमेययोः ... प्रपञ्चोक्तिः प्रदर्श्यते SaraKaṇṭhā. 435.26.

**अपकर्षोत्कर्ष** (apakarṣotkarṣa) *m.* **1** degradation and upgradation, lower and higher rank or position करणादपकृष्टोत्कृष्टजात्योरपकर्षोत्कर्षावाह। जात्युत्कर्षे-त्यादि DīpKa. 13.20 (*on* 1.96); **2** inferiority and superiority, cf. अपकर्षोत्कर्ष-प्रतिपादन.

**अपकर्षोत्कर्षप्रतिपादन** (apakarṣotkarṣa-pratipādana) *n.* act of conveying inferiority and superiority सर्वोत्कृष्टे एकवचनतया अतिनिकृष्टेऽ-स्मदर्थे बहुवचनतया व्याख्यानं तु सुतरामयुक्तमिति केचित्। तन्न। भेदाभेदप्रतिपादनेना-पकर्षोत्कर्षप्रतिपादनाय तथैवौचित्यात् BālamBha. i.91.31 (*on* 1.24 1/2)

**अपकर्षोपपत्ति** (apakarṣopapatti) *f.* tenability of transference (of performance of a rite) to an earlier time अतत्कालत्वात्र तदर्थमिति चेत्। न, वचनेनापकर्षोपपत्तेः SaṅkarKāBh. 19.14 (*on* i.2.20)

**अपकल्** (apa-kal-) cf. अपकालयितव्य [Viśva.]

**अपकलङ्क** (apa-kalaṅka) *adj.* without blemish, stainless, pure इत्यं नास्ति राजत्वमपकलङ्कमुते देवदेवादमुतः सर्वद्वीपभुजो हर्षात् HarṣaC. 138.2.

**अपकलङ्क** (apa-kalaṅka) *m.* deep stain or mark of disgrace, MW.

**अपकलहंसीसारसा** (apa-kalahaṁsīsārasā) *adj.* (*f.*) without female goose and female crane पुरो मे सरिदपकलहंसीसारसेवाविरासीत् ŚṛṅgāTi. (Rā.) 226.

**अपकलिताप** (apa-kalitāpa) *adj.* free from pain or sorrow of strife जिनराजविसरम् ... नमामि .. अपकलितापम् CaturJistu. 70 (comm. अपगतकलहसंतापम्)

**अपकल्क** (apa-kalka) *adj.* sinless अपकल्कस्तु राजेन्द्र निस्तीर्येतद् द्विजोत्तमः MahāBhā. i.1800*(5)

**अपकल्मष** (apa-kalmaṣa) *adj.* [*f.*–*ā*] **A** free from sin, sinless ततःसंभवाम्भः अपकल्मषान्मुनीन् प्रक्षालयामास ViṣṇuP. i.4.27; PadmP. v.3.35; अवबोधि च यच्छान्तमदोषमपकल्मषम्। ऋषिरूपात्मने तस्मै विष्णो रूपाय ते नमः ViṣṇuP. iii.17.24; किं वक्ष्यन्त्यपकल्मषाः कृतधियः KāvyPra. 126.4 (comm. अपगतं कल्मषं पापकर्म येभ्यः); SaraKaṇṭhā. 127.18; AlaṅkāSa. 192.4; SaduktiKa. 137.23; SūktiMu. 43.30; Ekāva. iii.1.272; SāhiDa. 204.7; Subhāṣi. 1343; AlaṅkāŚe. 2.3 (17); Kuval. 171 (67); सा ... अग्रहारं द्विजन्मनाम्। सती कतीमुषां चक्रे रामुषां चापकल्मषा RājTa. (Ka.) 2.55; **B** free from impurity, pure शुभक्षेत्रगतं चाहमात्मानमपकल्मषम्। चन्द्रबिम्ब इवोन्मग्नं वेदवेद्य विदाम्बर YogVā. i.6.48; संप्रवृत्ता वयं द्रष्टुमात्मानमपकल्मषम् YogVā. v.4.9; श्रीजैनोल्लाभदीनोऽथ कश्मीरानपकल्मषः। अनुकूले विधातेव प्राविशद्विजयोर्जितः RājTa. (Jo.) 975; **C** free from stain, stainless, shining राजा तु वस्त्राभरण-मनल्पमपकल्मषम्। साम्बायै दापयित्वास्यै तदास्थानं व्यसर्जयत् BṛKathāŚloSaṁ. 7.21.

**अपकष्** (apa-kaṣ-) I.P. **1** to scrape off यस्माद्ऋचो अपातक्षन् यजुर्यस्मादपा-कषन्। ... तं ब्रूहि कतमः स्विदेव सः AV. x.7.20; AV. (P.) xvii.9.1; **2** to take away, i.e. to remove गृहीत्वा मूर्ध्नि तच्छाखां विष्णुमूर्ध्नोऽपकाषताम् SkandP. ii (2). 45.16.

**अपकषायत्व** (apakaṣāya-tva) *n.* the state of being devoid of impurity, i.e. pure चेतसोऽपकषायत्वं यत्र सा ध्वस्तिरुच्यते MārkP. 39.22.

**अपकान्त** (apa-kānta) *adj.* not charming, not attractive or agreeable अपकान्ता वा अकमनीयाः सर्वेऽप्येवमेव नरकाः SthānṬ. 366B.8.

**अपकान्तय** (apa-kāntaya-) *denom.* to deprive of charm उपपौर्णमासि समये शशिनं क्षणमेत्य राहुरपकान्तयति Rāvaṇā. 17.24.

**अपकाम** (apa-kāmá) *m.* **1** suffering, displeasure, annoyance धन्वना गा धन्वनाजिं जयेम ... धनुः शत्रोरपकामं कृणोति ṚV. vi.75.2, (comm. कामस्यापायम्); AV. (P.) xv.10.2; TaiS. IV.vi.6.1; MaiS. iii.16.3 (iii.185.13); KāṭhS. 46.1 (iv.172.10); VājaS. 29.39; VājaS. (K.) 31.14; **2** lack of willingness, aversion, abhorrence अङ्गिरस पितरः सोम्यासः पापमार्छन्त्वपकामस्य कर्ता AV. ii.12.5; AV. (P.) ii.5.5; (यक्ष्मः) यदि कामादपकामाद्धृदयाज्जायते परि। हृदो बलासमङ्गेभ्यो बहिर्निर्मन्त्रयामहे AV. ix.8.8; AV. (P.) xvi.74.8; आयुर् इह पपतामि संवत्सराय। अपकामस्य श्रे वत्सो देवीर् इव म आ ददे AV. (P.) xx. 23.1; [abominableness, MW.]

**अपकाम** (apa-kāma) *adj.* being devoid of will or desire कुटिलकमिति। वक्रदण्डको विदूषकोपयोगी। ब्रह्मायुधात्मा दण्डः। अपकामत्वेन भीषणत्वावात्याद-पीत्यर्थः AbhinBhā. i.27.22 (*on* 1.60)

**अपकामम्** (apakāmam) *adv.* against one's will, unwillingly अपकामं स्यन्दमाना अवीवरत वो हि कम्। इन्द्रो वः शक्तिभिर्देवीः AV. iii.13.3; AV. (P.) iii.4.3; TaiS. V.vi.1.3; MaiS. ii 3.1 (ii.152.11); KāṭhS. 39.2.

**अपकार** (apa-kāra) *m.* **1A** offence **Bi** injury, harm, hurt [Inst.] by way of harming **ii** war, battle, discord, conflict **iii** punishment **Ci** evil doing, wrong act **ii** act of causing to be wicked **D** loss **2A** impediment, hindrance **B** absence of conduciveness or usefulness **3** reproach, despise, disdain **4A** adverse change **B** wrong or opposite idea **1A** offence महते योऽपकाराय नरस्य प्रभवेन्नरः। तेन वैरं समासज्य ... नाश्नसेत् MahāBhā. v.37.52; रामेण यदि ते पापे किञ्चित्कृतमशोभनम्। अपकारः क इह ते वैदेह्या दर्शितोऽधमे Rāmā. ii.873*.16; ii.873*.18; दानाध्ययनशीलाश्च ... प्रजाः। नापकारेषु वर्तन्ते परेषाम् ParaS. 26.32; तदेतस्यापकारस्य कथमद्य प्रतिक्रियाम्। कुर्याम् KathāSaSāg. v.3.236; गुरोश्चापकारं कृत्वा पादपतनादिना तं प्रसाद्य शिष्यः शुध्यति DīpKa. 104.1 (*on* 3.283); यथासारापकारमिति सारो धनं दण्डस्य अपकारोऽपराधः DaṇḍaVi. 22.7; सूहभट्टः ... अपकारान्मद्रराजे चिन्तयन्नास्त RājTa. (Jo.) 731; **1Bi** injury, harm, hurt उपकाराद्भवेन्मित्रमपकाराद्भवेदरिः MahāBhā. xii.200*.2; दशरथः ... न स्मरत्यपकाराणां शतमप्यात्मवत्तया Rāmā. ii.1.16; उपकारफलं मित्रमपकारोऽरिलक्षणम् Rāmā. iv.8.20; PañcT. 2.23 (203.7); Subhāṣi. 2802; उपकारापकारयोर्दृष्टप्रतिकारी ArthŚā. ii.226.1 (6.1); ततो जातास्त्विमा घोरा नानारूपा महाविषाः अपकाराय वर्तन्ते नृपसाधनवाहने ŚuśruS. v.8.92; खलस्याहेश्च वदनमपकाराय केवलम् Tantrākhyā. 49.22; PañcT. 1.161 (168.10); अयं मे मूषको महतोऽपकारान्करोति Tantrākhyā. 63.6; PañcT. 2.26 (42) (215.7); यत्राभिगमने व्ययवति पूर्वो विरुद्धः क्रोधादपकारं करिष्यति न वेति सक्तो वामर्षितो KāmSū. 358.13 (6.6); उपकारं सुहृद्वर्गे योऽपकारश्च शत्रुषु ... वर्धते प्राज्ञः MārkP. 20.30; अर्घ्याक्षेपातिक्रमकृत् ... सामन्तकुलिकादीनामपकारस्य कारकः पञ्चाशत्पणिको दण्ड एषाम् YājñaSm. 2.233; करोति महतीं प्रीतिमपकारोऽपकारिषु VeṇīSaṁ. 2.60; (क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः) अपकारो द्रोहः KāśiVṛ. *on* i.4.37; (वाक्यादेरामन्त्रितस्यासूया संमतिकोपकुत्सनभर्त्सनेषु) अपकारश्चैर्भयोत्पादनं भर्त्सनम् KāśiVṛ. *on* viii.1.8; उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा। उपकारापकारौ हि लक्ष्यं लक्षणमेतयो ŚiśuVa. 2.37; Hitopa. 4.16; दुर्जनाः। अपकारे समासक्ता परस्य स्वस्य च PadmP. (Ra.) 20.99; अपकारमिवातिसंधयस्तमसत्पक्षमिवापहेतवः। उपसेदुरुदायुधालयः क्षयकालीमलिनाः सनाभयः RāmC. 33.35; न हि क्वचिदपि लोके अविद्याध्यस्तेन धर्मेण उपकारः अपकारो वा दृष्टः GītāBh. (Śaṅ.) 362.5 (*on* 13.2); उपकारापकारौ हि धर्माधर्मयोर्लक्षणमिति प्रसिद्धमेवैतत् NyāyMañ. i.230.13; ये वै क्रूरा भोगिनो दुर्विनीतास्तेषामन्तो भविता नान्यथैतत्। कालप्राप्तं भक्षयध्वं तथाऽपकारे च कृते मनुष्यान् VarāP. 24.28; अपकारो द्रोहस्तदुपर्यवज्ञानं च ManuBh. i.150.27 (*on* 2.144); हिंसा हिंस्यमानस्य महानपकारः। ... यज्ञे तु हतानामुपकारः नापकारः नरकादिफलानुत्पत्तेः ManuBh. i.438.18 (*on* 5.40); क्षमा कृतेऽप्यपकारेऽपकारानारम्भः ManuBh. i.531.20 (*on* 6.92); Mitā. 41.13 (*on* 1.122); VīraMi. (Paribhāṣā.) 34.15; अत्यन्तकोऽपकारेण निरास्थत्र तदानवम्। अत्यन्तकोपकारेण निरास्थं नतदानवम् RāghPāṇ. (Dha.) 18.83; अपकारो भवेद्द्रोहो AbhidhāRaMā. 4.86; मृष्टाहारं ददात्यस्मै ... जिनदत्तापकाराय बन्धुश्रीः BṛKathāK. 64.33; एषः कुञ्जरः केनाप्यसुरेण राक्षसेन वा पूर्वजन्मनि मया कृतं स्मृत्वा कमप्यपकारमुत्पन्नकोपेनानुप्रविश्य नीयते वश्यम् TilaMañ. 243.4;

(स्वयमपसृत उपजपन्) तर्कयितव्य इत्युपकारापकाराभ्याम् JayaMa. 336.19 (*on* 6.4); मित्रं ममैप तु निजात्मनि योऽपकारं कृत्वा ममाशुभकलङ्कविघातहेतुः AbhinBhā. ii.316.9 (*on* 16.31); मयास्यापकारः कृतः SaraKaṇṭhā. 599.12; RasāSu. 170.5 (2.158); अपकारमनुस्मृत्य वासुकेः प्रकुप्यत्कूर्मराजः UdaySuKa. 95.14; ये। विस्मरन्त्यपकारम् ... धन्या श्रीस्तत्समागमात् RāmāMañ. 190.27; ŚivaU. 7.112; नायं राजा भगीरथः। युष्माकमपकाराय तपस्यति महामनाः BṛDharmaP. i.49.39; उपकारोऽपकारश्च प्रवराविति संमतौ BrahmP. 80.54; अपकारोऽन्यपीडनम् Vaija. 193.23; दण्डोपांशुप्रकाशाभ्यां धनापहारादिर्वध-पर्यन्तोऽपकारः Mitā. 117.19 (*on* 1.346); भूतानामपकारेण भयमकुर्वन् शुद्धान्तःकरणः सन्नद्वैतसाक्षात्कारेणामृतीभवति Mitā. 368.12 (*on* 3.61); न हि योऽस्ववशः सन् म्रियते तस्य तन्मरणम् ... यद्यपि कस्यचिदुपकारायापकाराय वा स्यात् VyaktiVi. 124.6; अपकारं कुर्वाणेरुपकारः कोऽपि शक्यते कर्तुम् KaumuMi.10.17; तद्यावे यत्तु द्विगुणमर्थितम्। अपकाराय जायेत बुद्धेः बुद्धिस्तदा हि मे PariPar. 3.37; 8.454; अपकृत्याधिकं शत्रो: अपकारं जयेन्मितम् RājTa. (Ka.) 4.285; स त्वद्दर्दुकृतांश्चित्ते नापकारान् करिष्यति PāṇḍaC. 9.79; धर्माधर्मावज्ञाने परस्परे हिंसादिनापकारस्यैव प्राप्तेः ViṣṇuTaNi. 113.10; TattvPrakā. 96A.3 (*on* ii.2.6); अपकारमसंप्राप्य तुष्येत्साधुरसाधुतः SūktiMu. 8.8; Subhāṣi. 372; अपकारेण प्रयुक्तमनेन मेऽपकृतमित्येतया बुद्ध्या कृतम् ... हिंसात्मकम् PadMañ. *on* KāśiVṛ. *on* P. i.3.32 (435.13); अपकृतेऽपकारेऽन्येन कृते ManvaVi. 835.30 (*on* 7.164); 'कृतघ्नः' कृतमुपकारं विनाश्य उपकर्तुरपकारे वर्तते CaturCin. iii (1). 773.21; SiṁhāDvā. 36.6 (1); KathāK. 40.2; उपकारश्चापकारो यस्य व्रजति विस्मृतिम् BhojPra. 8.12; RauhiC. 351; परापकाराय दुर्जनः सततोद्यतः Sūkti Ra. 32.12; श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ŚārṅgaPa. 367; यावत्संसृतिस्तावदेव जीवस्योपकारापकारौ करोति NyāySu. (Ja.) 499A.10 (*on* iii.2.1); स्वामितो दुःखितोऽपि स्वामिनो नापकारं कुर्यात् RājNiRa. 47.1; विरोधिनः। अपकाराय संनद्धाः ... अभवन् RājTa. (Śrī.) 3.372; परस्वद्रोहोऽपकारः ManvaMu. 67.18 (*on* 2.161); SiddhāKau. 145A.11 (*on* i.4.37); Prasā. i.416.11; मित्रध्रुक् यो मित्रस्यापकारे वर्तते ManvaMu. 119.15 (*on* 3.160); 184.14 (*on* 4.214); पूर्वोपकारी यस्तु स्यादपकारे गरीयसि। उपकारेण तत्तस्य क्षन्तव्यमपराधिनः Subhāṣi. 2708; 'उपकृतं नाम' इत्यादौ लक्ष्येऽपकारे उपकाराभेदप्रतीतिद्वारैव साधुत्वं व्यङ्ग्यम् VaiyāSiMañ. 124.13; **[Inst.]** by way of harming मित्राण्य-मित्रान्मध्यस्थान्परान्स्वांश्च पुनः पुनः। अत्यर्थमपकारेण नोपकारेण चिन्तयेत् BhaviP. 788A. 19 (iv. 126.7); **1Bii** war, battle, discord, conflict षाड्गुण्यम् ...। अपकारो विग्रहः ... इति षड्गुणाः ArthŚā. ii.237.8 (7.1); पणबन्धः स्मृतः सन्धिरपकारस्तु विग्रहः AgniP. 233.18; ViṣṇuDhaP. ii.150.3; विग्रहमपकारम् RājNiRa. 56.22; **1Biii** punishment दुष्टानां तेयाम् ... मया। अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम् ViṣṇuP. v.4.10; BrahmP. 183.5; **1Ci** evil doing, wrong act न स्मरामि स्वल्पमपि तवापकारम् DaśKuC. 54.15; स्निह्यति विनापि हेतुं कुप्यत्यपराधमन्तरेणैव। स्वल्पादप्यपकाराद्विरज्यते साधमा Kāvyālaṅ. (Ru.) 12.40 (32); उपक्रियोपकारः स्यादपकारोऽन्यतः कृतिः Vaija. 193.22; अपकारेण दुर्जनः परिचीयते PuruṣPa. 79.20; धिग् मे स्वपितरं प्रत्यपकारः KathāK. 130.11; **1Cii** act of causing to be wicked अपकारः ... मन्दकरणमिति हलायुधः **1Cii** ... ŚabdaKaDru. **1D** loss, cf. अपकारिन्; **2A** impediment, hindrance तद्धि अङ्गम् यत्प्रधानस्योपकरोति, न यदपकारे वर्तते ŚābaBh. 1428.17 (*on* vi.3.41); उद्देशमात्रेण तावत्तादर्थ्यप्रसिद्धिः सा चोपकारापकारयोस्तुल्या। तथथा मशकार्थो धूम इत्यपकारिण्यपि प्रयुज्यते TantrVā. 668.10 (*on* iii.1.2); सत्यमुक्तं तु द्रव्यस्य कृत्स्नस्य संस्कारो न कर्तव्यः। सोमे उपकारो नास्त्यपकारस्तु कदाचित्स्यात् TupṬ. 237.15 (*on* x.2.17); परस्योपघातोऽपकारः कस्याश्चिदर्थसिद्धौ प्रतिबन्धः ManuBh. i.170.6 (*on* 2.179); स्वक्षेत्रे परेण क्रियमाणः सेतुरल्पस्यापकारस्य महतश्चोपकारस्य हेतुर्न निवार्यः Aparā. 766.13 (*on* 2.156); **2B** absence of conduciveness or usefulness उपकारापकारयोर्व्यभिचारः SaṅkarKāBh. तादर्थ्ये तु चतुर्थी न व्यभिचरति। 194.11 (*on* iv.2.25); पुरुषोपकारितया प्रसक्तं वदनं तत्र तथा किं त्वपकारमेवास्य साधयति ŚāstrDī. 266.3 (*on* iii.4.8); **3** reproach, despise, disdain भर्त्सनं त्वपकारगीः AmaK. 338.; **4A** adverse change सत्त्वं रजस्तमसी आश्रित्य स्वेन रूपेणाङ्गाङ्गिभावं गच्छति तस्यापकाराद्दुःखमुत्पद्यते MāṭhVṛ. 24.4 (*on* 13); **4B** wrong or opposite idea यदि तत्र तादृशसंदेहाभावे प्रवर्तयित्वा वासिद्धिं कारयित्वा वापकारं करोति प्रमाणं नास्ति TarkBhā. (Mo.) 3.2.

**अपकार** (a-pakāra) *adj.* not having the sound '*p*' (as indicatory letter) वत्वविधौ तु 'मतोः' इति अपकारानुबन्धकनिर्देशात् परिभाषानुपस्थानाद् द्वयोरपि ग्रहणम् PraḍI. v.179B.31 (*on* vi.1.222)

**अपकारक** (apa-kāraka) *adj.* [*f.*–ikā] **1** which hinders or impedes नन्वेवं सत्यपकारकोऽपि शेषः प्राप्नोति TantrVā. 668.15 (*on* iii.1.2); उपकारकत्वमेव शेषत्वम्। तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात् BhāṭṭDī. i.184.7 (*on* iii.1.3); **(used as noun)** (that) which hinders or impedes नूनमुपकारकमेवापकारकं मन्यसे ŚatDū. 163.6; **2A** doing wrongs or causes evil आत्मविनिग्रहः आत्मनः अपकारकस्य आत्मशब्दवाच्यस्य ... विनिग्रहः GītāBh. (Śaṅ.) 375.17 (*on* 13.7); असुन्दरे प्रकृत्या च सर्वथाप्यपकारके। मृत्यौ चिन्त्यः प्रतीघातोपायः SamarāSaṁ. 9.179; न रक्षन्त्वप्रकाशं हि तथान्यानपकारकान् ŚukraNi. 1.298; **(used as noun)** (that) which causes evil कथं भूतोपकारार्थं प्रवृत्तस्य जगत्प्रभोः। अपकारकमाविश्य युज्यते तुन्नतोदनम् MṛgendraT. i.7.14; **2B** who or which is harmful, injurious उच्छ्रयमाना ... धूली ... तस्यैव हस्टेरपकारिकासीन् नीत्वोन्नतिं नैव हिताय नीचाः Rāvaṇā. 23.24; वृष्टिमहापातविद्युत्पातादयो मनुष्यादीनां प्राणिनामुपकारका अपकारका वा दैवाद्भवन्ति Aparā. 587.16 (*on* 1.348), उक्तप्रकारेण कृतप्रव्रज्योऽ-पकारकेष्वपि भूतेषु हितोऽनपकारकः Aparā. 951.21 (*on* 3.57); अपकारकोऽनिष्टकृत् DaṇḍaVi. 301.7; **3** who destroyes अदोऽयमालप्य शिखीव शारदो बभूव तुष्णीमहितापकारकः NaiṣC. 9.14.

**अपकारक** (a-pakāraka) *adj.* (used as noun) (root) not having the sound '*P*' (as indicatory letter) (दोऽपः) दाग्रहणेऽपकारकस्यैव ग्रहणम् वेदितव्यम्। दो दत् दत्तम्। इह न भवति दातं बर्हिः अवदातं मुखम् CāndraVṛ. *on* i.1.4.

**अपकारकर** (apakāra-kara) *adj.* causing harm, harmful एते षड्रसाः पृथक्त्वेनैकत्वेन वा मात्रशः सम्यगुपयुज्यमाना उपकाराय भवन्त्यध्यात्मलोकस्य अपकारकराः पुनरतोऽन्यथा भवन्त्युपयुज्यमानाः CaraS. i.26.44 (1941 Ed.)

**अपकारकरण** (apakāra-karaṇa) *n.* **1** act of harming or injuring अहमसमर्थः अस्यापकारकरणे Pañcā. 36.2; **2** act of despising राजगामि पैशुनम् ... राज्ञि गत्वापकारकरणम् ManvaVi. 1370.22 (*on* 11.55)

**अपकारकर्तृ** (apakāra-kartṛ) *adj.* who causes harm or injury अपकारकर्तुः पश्चाशत्पणपरिमितो दण्डः कार्यः DīpKa. 67.30 (*on* 2.233); VīraMi. 699.26 (*on* 2.232)

**अपकारकस्थल** (apakāraka-sthala) *n.* [Loc.] in the case of (the one) causing impediment or hindrance नोपकारकत्वं शेषत्वं गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः। अपि तु पारार्थ्यमेव। अपकारकस्थले तु तदुपकारस्यै-वेष्टत्वेन उद्देश्यता BhāṭṭDī. i.184.14 (*on* iii.1.3)

**अपकारकारक** (apakāra-kāraka) *adj.* causing or doing offence त्रिजगत्य-पकारकारकं ननु लोभाङ्कमवेहि तम् भटम् NemiC. 11.65.

**अपकारकारण** (apakāra-kāraṇa) *n.* **1** [Abl.] on account of committing offence द्विषतामप्यपकारकारणात्प्रसंश्रय इष्यते बुधैः PañcT. 1.7 [18.7]; Hitopa. 2.31; Pañcā. 6.5; Subhāṣi. 2898; **2** cause of harm इह तु तत् स्वावरं शरीरं केषांचिदुपकारकारणमितरेषामपि भूयसामपकारकारणमिति कथं तैः संभूय सृज्यते NyāyMañ. i.187.2.

**अपकारकारिन्** (apakāra-kārin) *adj.* causing harm or injury कंसो हतः स्वसुहृदामपकारकारी HariVi. 5.67.

**अपकारकृत्** (apakāra-kṛt) *adj.* causing harm or injury सुहृदप्यपकारकृद् द्विषन् HammīMaKā. 10.6.

**अपकारक्रिया** (apakāra-kriyā) *f.* act of offending अपकारक्रियायुक्ता = सदा भर्तुः प्रतिकूलाचरणपरा VīraMi. (Vyavahāra.) 545.21.

**अपकारगिर्** (apakāra-gir) *f.* speech of reproach or despise भर्त्सनं त्वपकारगीः AmaK. 338; ŚabdaRaSaK. 68.4.

**अपकारचिकीर्षा** (apakāra-cikīrṣā) *f.* desire for causing harm or injury परापकारचिकीर्षाकालुष्यं चेतसो निवर्तते TattvVai. 39.21 (*on* 1.33)

**अपकारतस्** (apakāra-tas) *adv.* **A** according to the offence पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः ArthŚā. i.278.6 (2.22); ततस्तदेव मे वाच्यं किं च यद्यपकारतः KathāSaSāg. xii.5.273; **B** from the evil act समुद्धरेत्। गर्भप्रपात-पङ्काद्य तथान्यादपकारतः BṛParāSm. 8.128.

**अपकारता** (apakāra-tā) *f.* the state of being a wrong or evil act न स्मराम्यनृतं किंचित्र स्मराम्यनुपाकृतम् (v.l. ॰न्यपकारताम्) MahāBhā. iii.71.13.

**अपकारनिर्वेद** (apakāra-nirveda) *m.* dejection (caused) by wrong doing or evil act वायसोऽपि तेनापकारनिर्वेदेनापि ... वृक्षान्तरं गन्तुं न शक्नोति Pañcā. 35.5.

**अपकारनिर्वेदन** (apakāra-nirvedana) *n.* dejection (caused) by wrong or evil act तेनापकारनिर्वेदनादन्यवृक्षमूलवासिनम् ... गोमायुमपृच्छत् Tantrākhyā. 18.9.

**अपकारनिष्ठ** (apakāra-niṣṭha) *adj.* (used as noun) (one) intent on doing harm or injury न चापकारनिष्ठेषु द्वेषो माध्यस्थमीयुषाम् PadmP. (Ra.) 17.183.

**अपकारपर** (apakāra-para) *adj.* 1 intent on doing harm or injury उपकारप्रधानः स्यादपकारपरेऽप्यरौ AṣṭāHṛ. i.2.24; SūktiRa. 163.69; ŚukraNī. 3.11; (used as noun) (one) intent on doing harm or injury उपकारपरा नित्यमपकारपरेष्वपि। उपाचरति बन्धून् या सा शान्ता BhāvPra. (Śā.) 98.10(4); BhāvPra. (Bhā.) 5.252; SabhāS. 69; 2 intent on wrong or evil act अपकारपरान्सहोदरानपि हन्यात्किल नास्ति पातकम् HammīMaKā. 10.5.

**अपकारपरम्परा** (apakāra-paramparā) *f.* series of offences अनेकं स्मरंस्तेषामपकारपरंपराम्। एष संवर्मयिष्यामि मूलोच्छेदाय वैरिणाम् PāṇḍaC. 16.236.

**अपकारपराङ्मुख** (apakāra-parāṅmukha) *adj.* adverse to doing harm परोपकरणे दक्षो ह्यपकारपराङ्मुखः ... भृतको वरः ŚukraNī. 2.60.

**अपकारप्रकाशक** (apakāra-prakāśaka) *adj.* names of two sons of Vidveṣiṇ (*lit.* offender and revealer) तस्या द्वौ तनयौ पुंसामपकारप्रकाशकौ MārkP. 51.117.

**अपकारप्रयुक्त** (apakāra-prayukta) *adj.* 1 prompted by (the act of doing) harm गन्धनमपकारप्रयुक्तं हिंसात्मकं सूचनम् KāśiVṛ. *on* i.3.32; अपकारप्रयुक्तं वा सूचनं गन्धनमित्यदोषः JaineVyā. 27.19 (*on* i.2.27); सूचनमपकारप्रयुक्तं परदोषाविष्करणम् CāndraVṛ. *on* i.4.78; 2 the word or expression '*apakāraprayukta*' अपकारप्रयुक्तमिति। तृतीयासमासोऽयम्। अपकारमुद्दिश्य यत्प्रवर्तते तदपकारप्रयुक्तं वेदितव्यम्। हिंसात्मकमिति ... पीडाकरणमित्यर्थः Nyās. i.230.21 (*on* i.3.32)

**अपकारबुद्ध्यनुत्पत्ति** (apakārabuddhy- anutpatti) *f.* absence of origin of intention to offened क्षान्तिरपकृतेऽप्यपकारबुद्ध्यनुत्पत्तिः DīpKa. 79.23 (*on* 3.33)

**अपकारमनीषा** (apakāra-manīṣā) *f.* desire to harm (सुदत्तस्य) विग्रहः प्रणतिषु, नापकारमनीषायाम् YaśasCam. ii.244.4.

**अपकारमर्षण** (apakāra-marṣaṇa) *n.* 1 forgiveness against the offence परेऽपकारिण्युपकारिबुद्धिमान् प्रमर्षयन्नुग्रमपि व्यतिक्रमम्। उपायचित्तैरपकारमर्षणैः शुभे समादापयतेऽपकारिणः MaYānaSū. 32.5 (*on* 8.18); 2 forgiveness to support wrong act मर्षाधिवासज्ञानमिति त्रिविधायाः क्षान्तेः स्वभावः। अपकारमर्षणक्षान्तेर्मर्षणं मर्षः MaYānaSū. 105.10 (*on* 16.22)

**अपकारमुख** (apakāra-mukha) *n.* [Abl.] by means of evil doing लोकानामुपकारोऽभूदपकारमुखादहो RajTa. (Jo.) 878.

**अपकारमुद्रा** (apakāra-mudrā) *f.* gesture indicating offence ते सन्ति हन्त बहवो भुवि ये परेषां रन्ध्राण्यवाप्य विदधत्यपकारमुद्राम् SūktiMu. 36.28.

**अपकारयित्वा** (apakārayi-tvā) *ger.* (irr.) having caused to harm कृत्यपक्षोपग्रहेण वा परस्यामित्रं राजानं आत्मन्यपकारयित्वाभियुञ्जीत ArthŚā. iii.194.1 (13.3); ततः शत्रुभूमिलिप्सायां मित्रेणात्मन्यपकारयित्वाभियुञ्जीत ArthŚā. iii.195.2 (13.3); अपकारयित्वा दूष्याटविकेषु वा बलैकदेशमतिनीय दुर्गमवस्कन्देन हारयेत् ArthŚā. iii.206.9 (13.4)

**अपकारवचस्** (apakāra-vacas) *n.* word of reproach अपकारवचोऽथ स्यात्पारुष्यं दुष्टभाषणम् KośaKaTa.i.1518.

**अपकारवत्** (apakāra-va(n)t) *adj.* offending शोभनः प्रसादो यस्य अपकारवतामपि शिशुपालादीनां मोक्षप्रदातृत्वादिति सुप्रसादः ViṣṇuSaBh. 63.1 (*on* 39)

**अपकारवस्तु** (apakāra-vastu) *n.* thing that causes harm अपकारवस्तुनि हि प्रतिघ उत्पद्यते AbhidhKoBh. 289.4 (*on* 5.16)

**अपकारविधि** (apakāra-vidhi) *m.* [Inst.] in harmful way or manner तत्कन्यापुण्यप्रभावप्रेरितपुरदेवतापादितान्तःपुरपुरीपरिजनापकारविधिना साधु संबोध्य ... दातुमुपक्रान्ता YaśasCam. ii.293.17.

**अपकारविषय** (apakāra-viṣaya) *adj.* referring to harm or injury इदं प्रपातडागादिकं पुण्यम्, इदमगारदहनादिकमपुण्यमित्येवमुपकारापकारविषये धर्माधर्मपदद्वये ... अल्पं शास्त्रप्रयोजनम् NyāyRa. 209.11 (*on* 5 (1).3)

**अपकारवैरिन्** (apakāra-vairin) *m.* enemy on account of causing injury क्षत्रजातमपकारवैरि मे RaghuVa. 11.71 (comm. अपकारेण पितृवधरूपेण वैरि)

**अपकारशब्द** (apakāra-śabda) *m.* word expressing (threat of) harm or injury अपकारशब्दैर्भयोत्पादनं भर्त्सनम् Prasā.i.960.7; KaśiVṛ. *on* viii. 1.8.

**अपकारशील** (apakāra-śīla) *adj.* habituated to harm (others) अपकारशीलः शठः CaturCin. iii (1). 491.4.

**अपकारसमर्थ** (apakāra-samartha) *adj.* 1 capable of causing harm व्यसनिनमपायस्थाने सक्तमनर्थिनं वा ज्यायांसं हीनो बलसमेन लाभेन पणेत। पणितस्त्वपकारसमर्थो विक्रमेत ArthŚā. ii. 279.6 (7.7); अपकारसमर्थानु क्षियतो वा भर्तृविनाशमुपांशुदण्डेन प्रशमयेत् ArthŚā. iii.210.11 (13.5); 2 capable of causing impediment or hindrance अन्यदपि महाभूतेषु यत्प्रत्यक्षानुमानाभ्यामनुपलभ्यमानकारणमुपकारापकारसमर्थं च भवति तदप्यदृष्टकारितम् PadārthaSaṁ. 309.12; NyāyKa. 311.5.

**अपकारसामर्थ्य** (apakāra-sāmarthya) *n.* capacity of doing evil or wrong act वाक्यमुद्रा ... सगरं च भगीरथं चेत्यादिवाक्यस्य प्रागुपकाराभिप्रायेण दृष्ट्वा यावदपकारसामर्थ्याभिप्रायेण निवेशनान्मुत्प्रदायिता AlaṅkāŚe. 2.3 (35)

**अपकारस्थान** (apakāra-sthāna) *n.* place of wrong or evil act विषभोजनजतुगृहद्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं मन्यामहे VeṇīSaṁ. 1.169.

**अपकारहेतुता** (apakārahetu-tā) *f.* the state of being the cause of impediment or obstruction तस्य प्रमाणान्तरादवगतामुपकारहेतुतामपकारहेतुतां वा संस्मृत्य इच्छया प्रवर्तते द्वेषेण निवर्तते वा BrahmSi. 24.18.

**अपकाराकरणवत्** (apakārākaraṇa-vat) *adv.* like not doing wrong act न चात्र विरोधः। अपकाराकरणवदमृतमोचनरूपस्योपकारस्याप्यर्थनीयत्वेन तुल्यत्वात् AlaṅkāRa. 17.9.

**अपकाराचरण** (apakārācaraṇa) *n.* act of committing an offence कृतोपकारमपकाराचरणेन यो विनाशितवान् ... संसर्गितया न परिवसेत् ManvaMu. 488.21 (*on* 11.190)

**अपकारातिशय** (apakārātiśaya) *m.* excess of offence अपकारिणं प्रत्युपकारादिप्रतिपादनात् ... फलमपकारातिशयः SāhiDa. 44.9.

**अपकारादि** (apakārādi) *adj.* 1 harm etc. अहं ब्रह्म परं ज्योतिरपकारादिवर्जितम् AgniP. 377.14; 2 wrong or evil act etc. (उपकृतं बहु तत्र किमुच्यते) अपकारादीनां वाक्यार्थेऽन्वयसिद्धये SāhiDa. 44.7.

**अपकारानाचरण** (apakārānācaraṇa) *n.* not doing wrong or evil act क्षमा कृतापकारेऽप्यपकारानाचरणम् ... धर्मस्य कारणम् DīpKa. 16.25 (*on* 1.122)

**अपकारानारम्भ** (apakārānārambha) *m.* absence of attempt to do harm क्षमा कृतेऽप्यपकारेऽपकारानारम्भः ManuBh. i.531.20 (*on* 6.92)

**अपकारान्त** (apakārānta) *m.* end of doing harm उत्तिष्ठमानं संधिना ... प्रतिव्यूहेत। ... अपकारान्तेषु चास्य दूतं प्रेषयेत् ArthŚā. iii.156.1 (*on* 12.1)

**अपकारापराद्ध** (apakārāparāddha) *adj.* guilty of offence अथास्य प्रहरेत्काले यदा विचलिते पथि। अपि घोरापराधस्य (v.l. अपकारापराद्धस्य) धर्ममाश्रित्य तिष्ठतः MahāBhā. i.App. 1.81 (117)

**अपकाराब्जतीव्ररुचि** (apakārābja-tīvraruci) *m.* sun (lit. of fierce brilliance) towards lotus in the form of evil परनिन्दाकुमुदिन्या विधुरपकाराब्जतीव्ररुचिः Nāṭa. 11.10.

**अपकारार्थम्** (apakārārtham) *adv.* for the sake of causing harm or retaliation तस्यापकारार्थं मल्लिकः स्वयमक्षमः RājTa. (Śrī.) 3.331.

**अपकारासमर्थ** (apakārāsamartha) *adj.* incapable of causing harm लघवस्तु मरणासमर्था निर्भयेन जनेन प्रच्छन्ना विद्धाः प्रहरन्तोऽपकारासमर्थाः ManuBh. ii.58.6 (*on* 7.193)

**अपकारासहिष्णुता** (apakārāsahiṣṇutā) *f.* intolerance to harm अपकारासहिष्णुता अमर्षः NyāyVār. 452.10 (*on* iv.1.3)

**अपकारिजन** (apakāri-jana) *m.* person who causes harm, harmful person अपकारिजने कोपो निरोद्धुं शक्यते कथम् TrisaŚaPuC. iv.5.240; अपकारिजनाद्भयमुद्वेगः PrataYaBhū. 111.10.

**अपकारित** (apa-kārita) *adj.* harmed एष कोऽपि नभश्चरेश्वरः कस्यापि रोषणस्य महर्षेः पुष्पसंबन्धापराधापकारिताद् अनुव्याहारादम्बुरुहत्वमवाप AvantiKa. 16.19.

**अपकारित्व** (apakāri-tva) *n.* 1 the state of being one who causes harm (गुरुम् ... आततायिनमायान्तं हन्यात्) तथापि गुर्वादीनां वधानुज्ञानम् यतोऽन्यदपकारित्वमन्यदाततायित्वम् ManuBh. ii.217.30 (*on* 8.350); 2 [Inst.] by way of being that which hinders or impedes सांसारिकं च वृत्तान्तमपकारित्वेन पश्यतः ... मोक्षसिद्धिः AbhinBhā. i.335.21 (*on* 6.83)

**अपकारिन्** (apa-kārin) *adj.* [*f.*–*iṇī*] 1A who offends, offender (used as noun) (one) who offends B who or which does harm or injury, harmful, injurious (used as noun) (one) who causes harm or injury C who does

wrong or evil (used as noun) (one) who does wrong or evil act **2** causing loss **3** causing hindrance or impediment (used as noun) (one) causing hindrance or impediment **1A** who offends, offender धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु। न हि कश्चित् क्षमाकालः MahāBhā. iii. 29.33; तेषां शांतिर्विधेयतेऽस्मासु शीघ्रं मिथ्योपेतानामुपकारिणां (v.l. अपकारिणाम्) सताम् MahāBhā. v.22.2; असंशयं मा विप्रयं वेत्स्यसे धन्विनां वर। अपकारिणं तु मां विद्धि भगवच्छरणागतम् MahāBhā. xii. 98.7; सुदाहुरेयो न ममापकारी MārkP. 43.82; **(used as noun)** (one) who offends यदा ... आच्छिनत्ति रत्नानि विविधान्यपकारिणाम्। ... तदा वैश्रवणः राजँल्लोके भवति भूमिपः MahāBhā. xii.68.46; (राजा) विश्वस्तेष्वपकारिषु MahāBhā. xii.71.7; प्रतिकर्तुमशक्याय ... अपकारिणे असूया जायते तीव्रा MahāBhā. xii.157.16; साम दानं क्षमा ... पार्थिवानां गुणाः राजन्दण्डश्चाप्यकारिषु Rāmā. iv. 17.25; नास्त्यपकारिणो मोक्ष इति कौटल्यः ArthŚā. ii. 108.3 (3.19); उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा Śiśu Va. 2.37; Hitopa. 4.16; अपकारिणि तिष्ठतीह मय्यवधीः किं प्लवगाननागसः RāmC. 33.66; तस्यापि स्वं ममाज्ञानं तस्मात्तदपकारि मे KathāSaSāg. xii.5.272; अनेन रथवेगेन पूर्वप्रस्थितं वैनतेयमप्यासादयेयम्, किं पुनस्तमपकारिणं मघोनः Vikramo. 1.3 (26), अपि चामीयामपकारिणामर्थे कोऽयमत्यावेगोभवतः PraboCan. 5.16 (92.8); किं शक्तेनापकारिणा Pañcā. 11.28; नित्यकिंकराः ममापकारिणो बद्धा भूत्वा मत्कृपया पुनः ... मुक्ता भवन्ति BṛBrahmaS. i.2.9; **1B** who or which does harm or injury, harmful, injurious स तु द्रौणिम् ... प्रत्यविध्यन्महातेजा बलवानपकारिणम् MahāBhā. vii. 46.16; एतद्ध कदनं कृत्वा शत्रूणापकारिणाम् MahāBhā. ix. 62.52; यो मौर्ख्यादपकारी मे तत्राहं त्वां प्रसादये Rāmā. v.1335* (2); न ब्राह्मणो वेदयेत किंचिद्राजनि धर्मवित्। स्ववीर्येणैव ताञ्शिष्यान्मानवानपकारिणः ManuSm.11.31; किं भक्तेनासमर्थेन किं शक्तेनापकारिणा Tantrākhyā. 10.19; Hitopa. 2.68; PañcT. 1.49 [32.9]; ततः स्वदेहे पुत्रादावुपकार्यपकारिषु। रागद्वेषौ च भवतः AhirbuS.38.16; योऽसावुदकस्य महर्षेरपकारिणं धुन्धुनामानमसुरम् ... जघान ViṣṇuP. iv.2.40; मयानृशंस्यं कर्तव्यं नोपकार्यपकारि च MārkP. 23.17; दृष्टिर्मृत्युपकारिणीव निपतत्यस्यापकारिण्यपि Nāgā. 5.14; सर्वेभ्योऽपकारिभ्योऽपि भूतेभ्योऽनभिद्रोहेण हितः सर्वभूतहितः BālaKrī. ii.26.3 (*on* 3.58); स्वभावादेव साधूनां प्रवृत्तिरुपकारिणी अपकारिण्यपि जने BṛĀraUBhVā. ii.4.56; नदीं रक्षश्चसुवा क्षणमैक्षत। ... अपकारिणीम् RāmāMañ. 438.11; शास्तिमस्य करिष्यामि भिल्लस्य ह्यपकारिणः BrahmP. 169.31; तस्यापकारिणम् ... पौलस्त्यम् ... निजघान BrahmP. 213.130; यदि त्वमिच्छसे वैरं पुरुषेष्वपकारिषु। स्त्रियः किमपराध्यन्ते PadmP. i.15.36; यद्यपि प्रकृतेर्भावैरिन्द्रियैरपकारिभिः। मोहपाशशतैर्बद्धस्तथा सिद्धस्तु सर्वथा PadmP. ii.113.7; अतस्त्वयाधिरोढव्यं न तस्मिन्निति तस्य च संदिष्टवान्स लेखेन दायादस्यापकारिणः KathāSaSāg. xii.7.266; PāṇḍaC. 17.359; PuruṣPa. 41.23; अपकारिण्यपि पुरुषे शुभं चिन्तयति SamyaKau. 67.8; तवापकारिणा सर्वं राक्षसेन कृतं त्विदम् AdhyāRā. vi.5.18; पुरुषः ... क्रोधात्स्यादपकारी न वेति सन्देहः KandaCū. vi.6.27; हन्तव्यः प्रथममसौ ममापकारी मद्वर्ग्यप्रसभवधेन राजसूनुः JānaPa. 4.58 (9); **(used as noun)** (one) who does harm or injury अपकारिषु या सत्ता साशा कृशतरी मया MahāBhā. xii.293*.(2); उदासीनेषु योऽस्मासु विक्रमोऽयं प्रकाशितः। अपकारिषु ते राम नैवं पश्यामि विक्रमम् Rāmā. iv.372* (4); YogBh. 107.3 (*on* 2.33); अनुशये वर्तेत ... अर्थदानमनुपकारिषु अपकारिषु वा ArthŚā. i.94.4 (3.16); ii.344.3 (7.16); शक्तोऽहम् ... प्रहर्तुमपकारिणः Tantrākhyā. 113.24; परेऽपकारिबुद्धिमान् प्रमर्षयन्नुग्रमपि व्यतिक्रमं। उपायचित्तैरपकारमर्षणैः शुभे समादापयतेऽपकारिणः MaYānaSū. 32.4 (8.18); करोति महतीं षाड्गुण्ये संधिरादौ परिपणंरचितो विग्रहोऽस्यापकारी YogYā. 1.14; करोति महतीं प्रीतिमपकारोऽपकारिषु VeṇīSam. 2.60; SaraKaṇṭhā. 590.11; अपकारिणि यस्येयं मतिस्तस्य किमुच्यताम् PadmP.(Ra.) 9.169; अपकारिणि कारुण्यं यः करोति स सज्जनः PadmP. (Ra.) 33.306; उपकार्यत्वोपकारकत्वक्षमः सन् बाह्यविषयेण ... अपकारिणा वात्मात्मीयं संबन्धं प्रतिपद्यते NaiṣkaSi. 143.3; आचार्ये च प्रवक्तारं अपकारिणा वात्मात्मीयं संबन्धं मित्यनेनापकारिणामपि वधो निषिद्धः ManuBh. ii.217.24 (*on* 8.350); यो ह्यन्यां कांचनपीडां करोति न सर्वेण शरीरादिना सोऽपकारी ततस्त्वन्य आततायी ManuBh.ii.218.1(*on* 8.350); उपकारिण्यपकारिणि च रागद्वेषयोरभावादुदासीनस्याप्रवृत्तौ ... आत्मनः स्वरूपेणावस्थानम् NyāyKa. 286.8; TriṣaŚaPuC. iii.2.134; Vītarā. 14.6; VīraMi. 210.12 (*on* 1.122); 813.27 (*on* 3.33); अचलेन समर्थस्त्वं निहन्तुमपविदुर्वाग्दण्डपारुष्यमुग्रतामपकारिषु SaraKaṇṭhā. 590.11; RājTa. (Ka.) 4.570; अपकारिषु कारिणम् BṛKathāMañ. i.2.165; GaṇeP. i.5.26; RājTa. (Ka.) 4.570; अपकारिषु TriṣaŚaPuC. iv.5.242; कोपो यः साधुः पुण्यभाक्स उदाहृतः BrahmP. 80.54; पाथोनाथ जगत्यहंकृतिभृत यद्यपि नास्त्येवापकारिण्यपि ते प्रभो PārśvC. 6.210; अपकारिणि कोपश्चेत् कोपे कोपः ... सन्त्यन्येऽप्यपकारिणः SūktiMu.27.8; कथं न जायेत। धर्मार्थकाममोक्षप्राणयशोहारिणि क्रूरे SūktiRa. 59.10; 163.19; अपकारिषु मा पापं चिन्तयस्व कदाचन SūktiRa. 163.67; Subhāṣi. 3358; SāhiDa. 44.8; अपकारिषु यः साधुः स साधुः सद्भिरुच्यते SimhāDvā. 64.10; ŚārṅgaPa. 233; VetāPañ. (Śi.) 26.36; यच्छक्तावप्युपेक्षन्ते कदाचिदपकारिणम् Subhāṣi. 2677; अपकारिष्वपि परमेश्वरशरीरत्वभावना कार्या ŚivārkaMaDī. i.309.19 (*on* i.2.1); 'अपकारिणः प्रत्युत स्वतोऽप्युत्कृष्टता नीताः' इति निन्दया 'शत्रवो रणे हताः' इति स्तुतिः प्रतीयते AlaṅkāMañ. 112.14; **1C** who does wrong or evil न वै देयमनुक्रोशाद्दीनायाप्यपकारिणे MahāBhā. xii.37.37; अयं कृतघ्नो मित्राणामपकारी ... तप्तकुम्भे निपतति MārkP. 14.87; यन्निमित्तं विनेशुस्ते अपापस्यापकारिणः MārkP. 119.7; कपालीअयमस्माकमपकारी। संविभागप्रधानः स्वसिद्धान्तः MattaVi. 12.11; व्यर्थं व्रतादिकं तस्या या भर्तुश्चापकारिणी BrahmVaiP. ii.46.32; DevīBhāP. ix.48.32; जग्मुः ... पुरीम् ... सिद्धचारणसेविताम् ... नापकारी जनः क्वचित्प्रदृश्यते SkandP. v (1).42.34; PārśvC. 2.312; SamarāSam. 8.505; बान्धवा बान्धवा एव बाढमप्यपकारिणः PāṇḍaC. 13.23; अत्रापकारिणीं चेटीं विपरीतलक्षणया कथयति BhāvPra. (Śā.) 173.5 (6); **(used as noun)** (one) who does wrong or evil act पापानामपकारिणाम्। ... उपसर्गाः प्रवर्तन्ते मरणाय सुदारुणाः MārkP. 16.42; सर्वत्र नरकावासे सर्व एवापकारिणः VarāṅgaC. 5.89; उपकृतं बहु तत्र ... एतदपकारिणं प्रति विपरीतलक्षणया कश्चिद्वक्ति KāvyPra. 83.7; चित्ताभिसंधिमात्रेण ह्यदृष्टस्यापि जायते। कथंचिदुपलब्धस्य नित्यमेवापकारिणः MāliViT. 18.64; इयं कस्यचिदपकारिणं प्रत्युक्तिः RasGaṅ. 176.1; **2** causing loss मूषिका गृहजातापि हन्तव्या सापकारिणी PañcT. 1.47 [32.5]; Pañcā. 11.26; Subhāṣi. 2706; अयं मूषको ममापकारी PañcT. 2.26(42) [215.7]; 2.29(56)[230.1]; Hitopa. 1.79 (14); Tantrākhyā. 66.21 तदत्र चौरस्यापि परवित्तापहर्तुरपकारिणः श्रेयश्चिन्त्यते PañcT. 3.66 (19) [327.7]; **3** causing hindrance or impediment अहो! किमपि मे दैवमपकारि पदे पदे PāṇḍaC. 6.639; **(used as noun)** (one) causing hindrance or impediment तद्यथा मशकार्थो धूम इत्यपकारिण्यपि प्रयुज्यते TantrVā. 668.11 (*on* iii.1.2)

**अपकारिभ्रातृव्य** (apakāri-bhrātṛvya) *m.* harmful enemy भ्रातृव्यवान्यजेतेत्यादावप्यपकारिभ्रातृव्यापनयनस्य समीहितत्वात् फलान्तराभावाद्ध फलत्वं बोध्यम् MayūMāli. 377.20 (*on* iv.3.1)

**अपकारिवध** (apakāri-vadha) *m.* act of killing a harmful or injurious person अपकारिवधे दोषाल्पतोक्ता ManvaVi. 615.16 (*on* 5.45)

**अपकारिविषय** (apakāri-viṣaya) *adj.* concerning harmful one उपकार्यपकारिविषयौ रागद्वेषौ व्युदस्य त्यक्त्वा VīraMi. 839.14 (*on* 3.61.62)

**अपकारिसंज्ञा** (apakāri-sañjñā) *f.* indication of one doing wrong or evil act यस्य नापकारिसंज्ञा प्रवर्तते न दुःखसंज्ञा MaYānaSū. 111.1 (16.49)

**अपकारोपकारिन्** (apakāropakārin) *m.* name of Viṣṇu (*lit.* who helps an offender) अपकारोपकारी च (इति विष्णुसहस्रनामानि) SkandP. v (1). 63.160.

**अपकार्य** (apa-kārya) *adj.* to be harmed तदुक्तसारं त्यादाय नापकार्यं यथाबलम् TaiUBhāVā. 37.23(1); (used as noun) (one) who is to be harmed लीलेवापक्रियाकर्तुरपकार्यस्य सा पुनः। नाडीव व्रणिता जातु न शुष्यति कथञ्चन RājTa. (Jo.) 831.

**अपकार्य** (apa-kārya) *n.* evil or wrong act लीलेवापक्रियाकर्तुरपकार्यस्य सा पुनः। नाडीव व्रणिता जातु न शुष्यति कथञ्चन RājTa. (Jo.) 831; कौपीनं त्वपकार्यं च गुह्यचारे प्रभाषितम् NānārthSam. 27.47.

**अपकालयितव्य** (apa-kālayitavya) *adj.* fit to be driven away काकोऽपकालयितव्यः Nir. 3.18 (69.13)

**अपकीर्ण** (apa-kīrṇa) *adj.* abandoned or forsaken अपकीर्णम् (v.l. अपकीर्णस्) त्वहं कुन्त्या MahāBhā. vi.117.22.

**अपकीर्ति** (apa-kīrti) *f.* infamy, disgrace सोऽयम् ... लोकेऽपकीर्तिं महतीमवाप्स्यति BhāgP. iv.4.30; प्रजानाशस्य पापं मे भविष्यति मृते नृपे। अपकीर्तिश्च लोकेषु धनलोभाद्भविष्यति DevīBhāP. ii.10.24; SaurP. 40.14; PrabhāC. 101.7; तदहम् ... चायल्लितव निर्देशैरपकीर्तौ न पातितः ŚāliC. 5.44; 7.105; त्वयि सति मदीयापकीर्तिः ... गता SamyaKau. 27.10; न तु मूर्खो राजेति प्रतीपभूपालमण्डलेष्वपकीर्तिः प्रसरति PrabaCin. 88.27; ŚaṅkaDigVi. (Mā.) 10.68; SimhāDvā. 38.19; आदेयवर्जनादशक्तोऽयमित्यपकीर्तिः ManvaVi. 985.23 (*on* 8.171); सत्कर्म वाप्यसत्कर्म कर्तव्यं विजिगीषुणा। कीर्तिर्वाप्यपकीर्तिर्वा यया स्याच्छाश्वतीः समाः ParamāKā. 89.18; Nāṭa. 14.13.

**अपकीर्तिकण्टालिका** (apakīrti-kaṇṭālikā) *f.* thorny plant in the form of infamy or disgrace निर्गुणेऽपि स्वदेशजे पक्षपातो हि निर्यातो राजनीतेः कुसुमस्तबकोऽपकीर्तिकण्टालिकायाः MudriKu. 4.16 (11)

वधस्सर्वस्वहरणं च। तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपान् दण्डान् प्रकल्पयेत् BaudhDS. i.10.20 (comm. अपकृष्टता चात्र जातितः); सहापकृष्टैर्महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः Kirātā. 14.22 (Malli. उत्तरीत्या जात्या ... निकृष्टैः); अपकृष्टनिकृष्टानां जीवितं शिल्पकर्मभिः। हीनं तु प्रतिलोमानाम् VṛHāriSm. 7.184; अपकृष्टे ह्युत्कृष्टदृष्टिरभ्युदयाय भवतीति यथा भृत्यादौ राजदृष्टिः VedāntDī. 222.11 (*on* iv.1.4-5); अनार्यं व्रात्याद्युत्पन्नमार्यकर्माणम् ... आर्यमव्रात्योत्पन्नमपि निन्दितकृष्यादिकरम्। नासमौ नात्यन्तमपकृष्टौ ब्राह्मण्यभावात् ManvaVi. 1316.12 (*on* 10.73); सममनुत्कृष्टमपकृष्टमुत्तरं जातिरिति च जातिवादिसमः साधारणो नोत्कृष्टः अपकृष्ट इत्यर्थः NyāyPari. 222.7; दण्डो न्यूनस्य द्विगुणः स्मृतः ...। न्यूनस्याक्षेप्यापेक्षया शीलजात्यादिभिरपकृष्टस्याक्षेप्तुरित्यर्थः DaṇḍaVi. 200.6; विद्यावयोवर्णाश्रमतपोभिरुत्कृष्टैः स्वतोऽपकृष्टेषु न सबहुमानेन वचसा व्यवहर्तव्यम् RasGaṅ. 65.10; **1Ci** (bed or seat) which is lower (in height) आसने त्वपकृष्टे तु कायं संधाय केनचित्। ... गुरुस्तूपविशेत् JayāS. 24.41; नोत्कृष्टशय्यासनयोर्नापकृष्टस्य चारुहेत् MārkP. 34.85; **1Cii** minutest, smallest (शुण्डोऽक्षय्योऽपकर्षे रष्टरौ) अपकृष्टा शुण्डा शुण्डारः MugdhaBo. 74.22 (*on* 7.77); न हि परमाणुपरिमाणादपकृष्टं परिमाणमस्ति NyāySu. (Ja.) 342A.4 (*on* ii.2.6); महाबिडालकर्णपरिमाणादपकृष्टा अल्पपरिमाणा बल्यो न भवन्ति VīraMi. (Āhnika.) 401.14; न चावरार्ध्या बल्यो भवन्ति ... बलीनां परिमाणमाह न चेति। अवरार्ध्याः अपकृष्टाः अल्पपरिमाणा इति यावत् VīraMi. (Āhnika.) 414.8; **1Ciii** lowest (in price) द्वयोः सकाशात् समं मूल्यं तयोरेकस्योत्कृष्टमन्यस्यापकृष्टं पण्यं वैषम्येण ददानः पूर्वसाहसं दाप्यः DaṇḍaVi. 90.20; **2Ai** taken away, enticed, lured अपकृष्टो महाबाहुर्नागराजस्य कन्यया। अन्तर्जले महाराज उलूप्या कामयानया MahāBhā. i.206.13; यः ...। जघ्नेऽद्भुतैणवपुषाश्रमतोऽपकृष्टो मारीचम् BhāgP. ix.10.10; **2Aii** taken away, snatched, stolen पित्र्यं हि राज्यं विदितं नृपाणां यथापकृष्टं धृतराष्ट्रपुत्रैः MahāBhā. v.1.15; प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया। सर्वस्वमपकृष्टं च तथाधर्मेण MahāBhā. vii.169.36; **2Bi** held, seized सोऽपकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः। सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु MahāBhā. iii.59.24; तं न देवा न गन्धर्वाः ...। मयापकृष्टं कृपणं शक्तास्त्रातुं महाहवे Rāmā. iii.18.8; **2Bii** restrained, controlled, curbed श्रुत्वा चाभरणस्वनम्। ... चारित्रेण महाराहुरपकृष्टः स लक्ष्मणः। तस्थौ एकान्तमाश्रित्य Rāmā. iv.App. I.17 (5) (*but* Apte forbidden, prohibited); **2Biii** reined, controlled, i.e. dependent on सर्वं दैवापकृष्टं मन्यते युधिष्ठिरः VeṇīSaṁ. 5.84; **3Ai** pulled back, i.e. released विकर्णचित्रसेनाभ्यां निगृहीतश्च कौरवः। दुःसहो नकुलाच्चापि अपकृष्टश्च कौरवैः MahāBhā. i.App. I.99 (16); **3Aii** drawn back, taken back, i.e. withdrawn मत्स्यबन्धैः ... प्रक्षिप्तं संवर्तजालम्। अपकृष्टे च जाले तस्मिन्ह्रदे नाप्येकतरोऽवशिष्टः Tantrākhyā. 38.2; PañcT. 1.127 (21) (133.4); **3B** dragged or drawn away इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया। अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति MahāBhā. ii.39.7 (JñānaDī. प्राच्याविताः); भीमसेनस्य राजेन्द्र पश्यतां सर्वधन्विनाम्। तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात् MahāBhā. vii.App.I.24 (86); मयापकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः MahāBhā. xi.11.24; अकृतार्थं नरपतिं योजनानि त्रयोदश। अपकृष्टे नरपतौ सापि मोहमुपागता VāmaP. 63.55; अप ... अपकृष्टे AnekāSaṁ. 7.32; अप स्यादपकृष्टार्थे MediK. 198.46; ViśvaLoK. 413.43; अपकृष्टो(?ऽ)-पध्वस्ते KalpaK. 222.78], **3C** drawn away from, i.e. deranged or depressed अवैमि चाहं नृपते न त्वं मां त्यक्तुमर्हसि। चेतसा त्वपकृष्टेन मां त्यजेथा महीपते MahāBhā. iii.58.31; **3D** drawn away from, i.e. distant स्वविषयादपकृष्टे सामन्तदुर्गे वासः श्रेयान् ArthŚā. i.85.3 (1.17) (comm. स्वजनपदाद् दूरस्थे); **3E** pulled out or drawn out क्वचित्तीक्ष्णपुरुषापकृष्टस्वकीयान्त्रयन्त्रदोलनतोष्य-माणमातृमण्डलम् YaśasCam. i.49.5 (comm. उदराद्बहिर्निष्कासितानि ... अन्त्रय-न्त्राणि); **4Ai** removed, i.e. washed or cleansed off स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत। दमयन्त्यास्तदा व्यभ्रे नभसीव निशाकरः MahāBhā. iii.66.10; मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते SuśruS. iv.38.23; SiddhYo. 76 (1).21 (comm. अपहारे); **4Aii** expelled or dropped from को हि तस्याः समुत्पन्नः पश्चादतिशयो यतः। स्वामित्वादपकृष्टोऽसौ न भोगं पुनराप्नुयात् TattvSaṁ. 2553; [निष्कासितोऽपकृष्टः स्यात् Vaija. 206.71]; **4Aiii** removed from (दोषाणाम्) तद्गुणैरपकृष्टानां शब्दे संक्रान्त्यसंभवात् ŚlokaVār. 2.63 (65.4); **4Aiv** removed, taken out यथापकृष्टं शैवालं क्षणमात्रं न तिष्ठति। आवृणोति तथा माया प्राज्ञं वापि पराङ्मुखम् AdhyāU.15; **4Bi** separated, i.e. estranged चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणात्र किंचित्कार्यमवश्यं पश्यति MudrāRā. 4.10 (25); सचिवव्यसनं किमन्यत्। अपकृष्टश्चाणक्याच्चन्द्रगुप्तः MudrāRā. 4.12 (19); नृपोऽपकृष्टः सचिवात् ...। अदृष्टलोकव्यवहारमन्दधीर्मुहूर्तमप्युत्सहते न वर्तितुम् MudrāRā. 4.14; **4Bii** separated व्यस्तानि स्थानसंबन्धात्कारणानि यतस्ततः। स्वस्थानेभ्योऽपकृष्टानि मरणे यान्त्यथैकताम् BṛĀraUBhVā. iv.3.1945; तस्मादपि षोडशकाद् अपकृष्टेभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतानि आकाशादीनि SāṁkhyaTaKau. 331.6 (*on* 22) (comm. षोडशकमध्यात् पृथक् कृतेभ्यः); प्रकरणादिदं वाक्यं नापकृष्येतापकृष्टं च सदहर्गणे द्वादशोपसत्तां न विद्यते VedāntKa. 190.12 (*on* i.3.40); **4C** set aside, abandoned मया अपकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत् स्यात् GītāBh. (Śaṅ.) 297.2 (*on* 10.39); **5** flattened (note) पञ्चमस्यापकर्षात् तामेव श्रुतिं पञ्चमवशात् षड्जग्रामिकीं कुर्यात्। एवं श्रुत्यपकृष्टा भवति BṛDeśī. 6.2; **6** attracted तस्यास्तीरभवा वृक्षाः सुगन्धकुसुमाञ्चिताः। तथापकृष्टसंभ्रान्त-प्रमरस्तनिताकुलाः MatsyaP. 116.17; चन्द्राद्याश्च स्वकैः पातैरपमण्डलमाश्रिताः। ततोऽपकृष्टा दृश्यन्ते विक्षेपान्तेष्वपक्रमात् SūryaSi. 13.13 (comm. अपकृष्टाः चालिताः सन्तः, ततः क्रान्तिवृत्तात्); प्रजाः ... स्वरूपादविद्यादिदोषैर्बहिरपकृष्टाः ChāndoUBh. 486.7 (*on* viii.3.2); **7A** decayed, wasted, lost तपः कुसुमैव तवापकृष्टं तटीतरोः पत्रमिव स्रवन्त्या RāmC. 22.9; **7B** diminished अपकृष्टं गुणं पश्चात्त्वभावाद्धेनु(तु)तोऽपि वा। तद्विषं विषतत्त्वज्ञैर्दूषीविषमिति स्मृतम् Hastyāyur. 168.16 (2.7); **7C** reduced, i.e. contracted अपकृष्टौ अपकर्षवन्तौ संकुचितौ गण्डदेशौ यस्य सः JñātāDhaṬ. 138A.12; **7D** lessened or decreased, cf. अपकृष्टरयत्व; **8A** transferred back to earlier context, anticipated नाप्य-तोऽपकृष्टः सत्रहर्गणस्य विद्यते Bhām. 275.2 (*on* i.3.40); अजाशब्दस्य तु छागातोऽपकृष्टस्य प्रधानमाययोस्तेजोऽबन्ने च गुणाद् वृत्तिसंभवात् VedāntKa. 202.6 (*on* i.4.8); विरोध इत्यस्य पूर्वसूत्रादपकृष्टस्य तत्रान्वयः ŚivārkaMaDī. i.461.19 (*on* i.3.27); 'दीक्षासु यूपं छिनत्ति' इत्यनेनापकृष्टं प्रयाजन्यायेन प्राचोऽपि पदार्थान् अग्नीषोमप्रणयनादीनपकर्षति BhāṭṭDī. ii.172.1 (*on* v.1.14); **8B** transferred to earlier time वाक्यान्तरेणैवोत्पन्नस्य वेदिकरणस्य पूर्वेद्युरमावास्यायां वेदिमित्यनेनापकृष्टस्य क्रममात्रं विधीयते TantrRa. 237.5; **9** insulted, dishonoured, disrespetcted अपकृष्टो नैकतरः ... तयोः संबन्धिपक्षयोः DvyāśraKā. 19.86 (comm. निन्दितोऽभूत्); गर्ह्ये अपकृष्ट° Vaija. 207.75; **10** robbed off, cf. अपकृष्टकमण्डलु.

**अपकृष्ट** (apa-kṛṣṭa) *m.* **1** crow काकः ... काणोऽपकृष्टः TrikāŚe. ii.5.20; अथ वायसः ... सकृत्प्रजोऽपकृष्टः स्यात् KalpaK. 328.26; **2** type of intoxication अवज्ञेत्यनुभावाः स्युः ...। मद्योपयोगजस्त्रेधा तरुणो मध्यमस्तथा। अपकृष्टश्च तस्यैव करणं पञ्चधा भवेत् BhāvPra. (Śā.) 16.21 (1); मदः ... मदिराकृतः। स त्रिधा तरुणो मध्योऽपकृष्टश्चेति भेदतः RasāSu. 104.21 (2.16); अथ नीचः – अपकृष्टे तु चेष्टाः स्युर्गतिभङ्गो विसंज्ञता (मदे) Rasā-Su.105.13 (2.19); अपकृष्टस्तु नीचानां तत्तन्मदविवर्धने RasāSu. 105.21 (2.20)

**अपकृष्ट** (apa-kṛṣṭa) *n.* type of quality of intellect का च धीरिति यत्पृष्टं तदुर्वचमपि स्फुटम्। कथयामि ...। अपकृष्टं तथोत्कृष्टम् TantrRā. 36.31.

**अपकृष्टक** (apakṛṣṭa-ka) *n.* flattened note, one of the five types of standards of song (Māna) (*lit.* in which the sound is flattened) तत्तच्छायापरिष्कारलसितं गीतमुच्यते। समानमुच्छ्रितं लम्बं भिन्नं चैवापकृष्टकम्। मानपञ्चकमेतत्तु कथितं गीतकोविदैः BhāvPra. (Śā.) 192.22 (7); यत्रापकृष्यते गीते ध्वनिस्तदपकृष्टकम् BhāvPra. (Śā.) 193.6 (7)

**अपकृष्टकमण्डलु** (apakṛṣṭa-kamaṇḍalu) *adj.* whose water-bowl is robbed off उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम्। तत उद्यतशूलः स राक्षसः समुपाद्रवत् MahāBhā. iii.137.14.

**अपकृष्टकुलत्व** (apakṛṣṭakula-tva) *n.* the state of belonging to a family of low caste न च यस्मै दत्ता तस्यापकृष्टकुलत्वे उत्कृष्टकुलमर्त्राश्रयणं कार्यम् ManvaVi. 693.18 (*on* 5.163)

**अपकृष्टक्रम** (apakṛṣṭa-krama) *m.* [Inst.] in the order of (beginning with) lowest in caste मनुः-दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। पश्चिमोत्तरपूर्वैस्तु यथायोगं द्विजन्मनः। अमाङ्गलिकत्वादत्यन्तापकृष्टक्रमेणाभिधानमाचारशिक्षार्थं च HārLa. 119.10.

**अपकृष्टगन्ध** (apakṛṣṭa-gandha) *adj.* (used as noun) (that) whose odour is removed (अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणम्) भस्मनाप्यपकृष्टगन्धा-

नामेवाविरोधात् ...। इयं तु सर्वसाधारणद्रव्यशुद्धिविषयकल्पना BālaKrī. i.131.1 (*on* 1.190)

**अपकृष्टगुण** (apakṛṣṭa-guṇa) *adj.* 1 of lower caste दन्तजन्मकालात् ... द्वितीयवर्षसमाप्तिपर्यन्तं बालमरणे मातापितृभ्यामशौचं कर्तव्यम्। तद्याशौचमुत्कृष्टगुणाभ्यामेकरात्रम्, अपकृष्टगुणाभ्यां त्रिरात्रम् HārLa.45.1; 2 of inferior quality यद्य 'ज्येष्ठस्य विंश उद्धार' इति मनुनोक्तं तदपकृष्टगुणकनिष्ठविषयम् DīpKa. 54.22 (*on* 2.117); (used as noun) (person) of inferior quality (याज्ञवल्क्यः – पितापुत्रविरोधे तु साक्षिणस्त्रिपणो दमः) अत्रोत्कृष्टगुणः पिता विवक्षितः पूर्वत्रापकृष्टगुणः इत्यविरोधः DaṇḍaVi. 270.1.

**अपकृष्टगुण** (apakṛṣṭa-guṇa) *m.* inferior quality अपकृष्टगुणसंज्ञितशास्त्रप्रवृत्तिस्थाने तत्परित्यागेनापि उत्कृष्टगुणसंज्ञितशास्त्रेण पूजाद्यं सिद्धिदम् PāñcRāRa. 41.1.

**अपकृष्टगुरुत्व** (apakṛṣṭa-gurutva) *n.* 1 inferior in greatness उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ध्रुवम्। शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः। ... एकत्र लघुत्वमल्पबुद्धित्वम्, दृष्टान्ते त्वपकृष्टगुरुत्वयोगित्वम् AlaṅkāKau. (Vi.)264.10; 2 lower in weight, AlaṅkāKau. (Vi.) 264.10.

**अपकृष्टचेतन** (apakṛṣṭa-cetana) *adj.* who has lost his reasoning capacity स राजा ... रहोऽनुमन्त्रैरपकृष्टचेतनः। न कालरंहो बुबुधे BhāgP. iv.27.3.

**अपकृष्टज** (apakṛṣṭa-ja) *adj.* (used as noun) (person) born of degraded person सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्को निर्वास्यः MatsyaP. 227.84.

**अपकृष्टजाति** (apakṛṣṭa-jāti) *adj.* of lower caste अपकृष्टजातिश्चाधमर्णिको धनिकेन सार्धमात्मानं कर्मणापि समं कुर्यात् Subodhi. 25.14 (*on* 2.43); BālamBha.ii.59.8 (*on* 2.43); समानजातिरपकृष्टजातिश्चाधमर्णो धनाभावे सति स्वजात्यनुरूपकर्मकरणेनापि समं कुर्यात् ManvaMu. 321.24 (*on* 8.177); (used as noun) (person) of lower caste यद्यपकृष्टजातिरुत्कृष्टवर्णं शवमुत्कृष्टवर्णो वा अपकृष्टजातिम् ... वहनादिना स्पृशेत् तदा ... अशौचं कुर्यात् HārLa. 89.19; हीनजातिमुत्तमर्णापेक्षया अपकृष्टजातिमृणशोधनार्थं स्वजात्यनुरूपं कर्म कारयेत् DīpKa. 43.16 (*on* 2.43)

**अपकृष्टजाति** (apakṛṣṭa-jāti) *f.* lower caste यथा हि योन्यपकर्ष उत्कृष्टजातिं वारयति तथा बीजोत्कर्षोऽप्यपकृष्टजातिं किं नैव वारयेत् BālamBha. i.281.18 (*on* 1.91)

**अपकृष्टजातीय** (apakṛṣṭa-jātīya) *adj.* [*f.* –ā] belonging to lower caste अशौचम् ... आचार्यपुत्रे चासमानापकृष्टजातीये दिनमात्रं रात्रिमात्रम् HārLa. 80.19; अपकृष्टजातीयास्वन्यपूर्वासु भार्यास्वपकृष्टजातीयेषु च कृतकपुत्रेषु च सद्यःशौचम् HārLa. 81.12; अपकृष्टजातीयेषु कृतकादिपुत्रेषु भार्यासु अपकृष्टजातीयासु पुरुषान्तरसंगृहीतासु मृतासु दिनमेकमशौचम् DīpKa. 78.18 (*on* 3.25); (used as noun) (person) belonging to lower caste अपकृष्टजातीयगमने महापातकित्वेनाशौचाभावात् HārLa. 79.8; तुल्यापकृष्टजातीयवधे उत्तमसाहसमत्यन्तापकृष्टजातीयवधे मध्यमसाहसमिति धनदण्डकल्पनम् DaṇḍaVi. 73.15.

**अपकृष्टजातीयस्त्री** (apakṛṣṭajātīya-strī) *f.* woman belonging to lower caste असवर्णापकृष्टजातीयस्त्रीषु जाताः - यदा कृतविभागा भवन्ति तदा सपिण्डा भवन्त्येव HārLa. 100.1.

**अपकृष्टतर** (apakṛṣṭa-tara) *adj.* more inferior शंखलिखितौ हस्त्यश्वगोवृषायनेषु राजपुत्रापहारवद्दण्डः। ... उपयोगभूयस्त्वम् ...। यस्यापकृष्टतरं तदपहारे मध्यमसाहसिकदण्डः DaṇḍaVi.130.21.

**अपकृष्टता** (apakṛṣṭa-tā) *f.* the state of being inferior, inferiority यत्किं च भूतं प्रणमेदनन्यः। ... स्वापेक्षयापकृष्टताया भेदव्याप्यायाः पुनः पुनर्विभावनेनाद्वैतोपास्तिविरोधापत्तेः SetuBa. 278.13.

**अपकृष्टत्व** (apakṛṣṭa-tva) *n.* 1 the state of being drawn or carried away यथात्राविधमानार्थो मन्त्रः स्तोतुं प्रयुज्यते। तस्यार्थेनापकृष्टत्वात्प्राप्तबाधः प्रसज्यते TantrVā. 395.5 (*on* ii.1.14); 2 the state of being inferior, inferiority अस्याः शीलाचाराभ्यां बहुजनप्रतिभानतदनुष्ठानरूपत्वेनान्योऽन्यसंवादप्राप्तदार्ढ्याभ्यां किंचिदपकृष्टत्वम् ManvaVi. 101.17 (*on* 2.6); सातिशयत्वेऽपि नित्यत्वं चेश्वरादपकृष्टत्व इव ... श्रुत्यादिबललब्धम् Nyāyāmṛ. 646A.9; अधमत्वमपकृष्टत्वं तद्य ... कर्मणा वा भवति CitraMī. 2.15; अथोपमादोषाश्चिन्त्यन्ते – न्यूनत्वम् ... तत्रोपमेयादुपमानस्यापकृष्टत्वं न्यूनत्वम् CitraMī. 30.20; ब्रह्मसत्तातोऽपकृष्टत्वेन प्रपञ्चसत्ताप्रतीत्यापि प्रपञ्चो मिथ्या GuruCandr. ii.327.11; प्रकृते मनुष्यगन्धर्वादिः यत्सजातीयं तदीयधर्मवत्वं तदपेक्षया अपकृष्टत्वशून्यत्वरूपं तद्वृत्तिधर्मवत्त्वम् LaCandr. 896.36; वैदिको धर्मो मुख्य उत्कृष्टत्वात्। स्मार्तोऽनुकल्पः अपकृष्टत्वात् VīraMi.(Paribhāṣā.) 29.10; अपकृष्टसंबन्धिगुणाग्रहणस्य साहजिकत्वेन वैचित्र्याधायकत्वादनलंकारतैवेत्यपकृष्टत्वेन तृतीयविधा तु न संभवति RasGaṅ. 693.14; केवलमपरं पूजामपेक्ष्य मध्यमपूजैव सर्वदा कर्तुमुचितेति ध्वनितम्। अद्वैतपानगन्धविधुरायास्तदभ्याससहितपूजातोऽत्यन्तमपकृष्टत्वात् SetuBa. 316.28; 3 the state of being (a person) of lower caste (ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन) क्षत्रियेण ब्राह्मणस्य धनं ततोऽपकृष्टत्वात्र हर्तव्यम् ManvaMu. 453.18 (*on* 11.18); अधमत्वमपकृष्टत्वं तद्य ... जात्या ... वा भवति CitraMī. 2.15; (जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्) अधरत्वमपकृष्टत्वमुत्तरत्वमुत्कृष्टत्वं ज्ञेयम् VīraMi. 173.2 (*on* 1.96); त्रैवर्णिकानाम् ... प्रतिलोमजानां चापकृष्टत्वान्न क्वचित्पुत्रः कर्तुं शक्यः VīraMi. (Saṁskāra.) 216.13; 4 smallness or minuteness, cf. अपकृष्टत्वाभाव B.

**अपकृष्टत्वकथनार्थम्** (apakṛṣṭatvakathanārtham) *adv.* for the sake of expressing inferiority (श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः। इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमसुखम्) अत्र च शीलादीनामनुक्तिरपकृष्टत्वकथनार्थम् ManvaVi. 104.3 (*on* 2.9)

**अपकृष्टत्वमात्र** (apakṛṣṭatva-mātra) *n.* mere inferiority प्राणा वै सत्यम् ... राजराजः देवदेवः ... इत्यादौ राजत्वदेवत्वादीनामिव प्राणादिसत्यत्वस्य ज्ञानाबाध्यत्वे सत्येवापकृष्टत्वमात्रेण तदुपपत्तेः Nyāyāmṛ. 292A.12.

**अपकृष्टत्वलाभ** (apakṛṣṭatva-lābha) *m.* obtainment of inferiority सर्वतोऽत्रापकृष्टत्वलाभेन वक्ष्यमाणस्मृतिकदम्बविरोधापत्तेः BālamBha. ii.181.11 (*on* 2.132)

**अपकृष्टत्वाभाव** (apakṛṣṭatvābhāva) *m.* A absence of inferiority सायुज्यादिमुक्तावुत्कृष्टत्वव्यपदेशोऽपकृष्टत्वाभावमात्रेण AdvaiSi. 894.11; B absence of smallness or minuteness गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् Siddhā-Mu. 12.3 (*on* 25)

**अपकृष्टदेवता** (apakṛṣṭa-devatā) *f.* inferior, i.e. minor deity (अनेन सदृशं स्तोत्रं न भूतं न भविष्यति) तेषां ललितातोऽपकृष्टदेवताप्रीतिकरत्वेन सर्वोत्कृष्टदेवताप्रीतिकरमिदमेवेत्यर्थः LalitāSaBh. 200.20 (*on* 235)

**अपकृष्टदेश** (apakṛṣṭa-deśa) *adj.* who has moved away to the distant country समीपवासेन विलोभितास्ते ज्ञास्यन्ति नास्मानपकृष्टदेशान् MahāBhā. iii.173.9.

**अपकृष्टदेश** (apakṛṣṭa-deśa) *m.* inferior or worst region भूम्याद्यपकृष्टदेशं गर्भवासाद्यवस्थाम् ... निमित्तीकृत्येश्वरेण क्रियते NyāySu. (Ja.) 510A.11 (*on* iii.2.10); अपकृष्टदेशादिकमिव देहाद्युपाधयो निमित्ततामापत्स्यन्ते NyāySu. (Ja.) 510B.3. (*on* iii.2.10)

**अपकृष्टदोष** (apakṛṣṭa-doṣa) *adj.* whose disorders are removed, i.e. cleansed or washed away रोगान्वितमुपस्निग्धमपकृष्टदोषम् ... आश्वास्य SuśruS. iv.7.30; AṣṭāSaṁ. ii.80.18 (4.13)

**अपकृष्टद्रव्य** (apakṛṣṭa-dravya) *n.* A smaller substance (in size) न च परमाणोरपकृष्टद्रव्याभावाद्बाधितविषयत्वम् NyāySu. (Ja.) 342A.8 (*on* ii.2.6); B inferior object (in quality) समैः सममूल्यदातृभिः सहोत्कृष्टापकृष्टद्रव्यदानेन यो विषमं व्यवहरति ... स दण्डं प्राप्नुयात् ManvaMu. 416.9 (*on* 9.287); शक्त्यपेक्षयोत्कृष्टापकृष्टद्रव्यापहारिविषयसमीकरणं समाधेयम् ManvaMu. 484.16 (*on* 11.168)

**अपकृष्टनक्रा** (apakṛṣṭa-nakrā) *adj.* (*f.*) from which crocodiles are removed स तीरभूमौ विहितोपकार्यामानायिभिस्तामपकृष्टनक्राम्। विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे RaghuVa. 16.55 (Malli. अपनीतग्राहाम्)

**अपकृष्टनिग्रह** (apakṛṣṭa-nigraha) *m.* punishment of contemptible, or wicked निग्रहः अनुग्रहोद्देश्यः ... उत्कृष्टानुग्रहार्थमपकृष्टनिग्रहः ŚivārkaMaDī. i.344.18 (*on* i.2.9)

**अपकृष्टनिरूपित** (apakṛṣṭa-nirūpita) *adj.* described or conditioned by inferior thing तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः LaŚabdeŚe. i.496.5.

**अपकृष्टपद** (apakṛṣṭa-pada) *n.* lower rank or position मधुविद्यायाम् ... उत्कृष्टे पदे स्थिता इन्द्रादयः तेषां तस्यामधिकारो न स्यात्। उत्कृष्टपदे

स्थितानामपकृष्टपदप्राप्तिपूर्वकमुक्त्यर्थित्वासंभवात् ŚivārkaMaDī. i.469.20 (*on* i.3.32)

**अपकृष्टपरिमाण** (apakṛṣṭa-parimāṇa) *n.* small measure or size परमाणुपरिमाणतोऽपकृष्टपरिमाणसद्भावे प्रमाणोपन्यासस्य ... प्रयोजनाभावात् NyāySu. (Ja.) 344A.6 (*on* ii.2.6); परमाणुतोऽप्यपकृष्टपरिमाणाश्रयस्य द्रव्यस्याभावात् NyāySu. (Ja.) 347B.11 (*on* ii.2.6); त्र्यणुकावयवकारणे यद्यपकृष्टपरिमाणमभ्युपगम्येत तदा तस्य ... सावयवत्वं प्रसज्येत ŚivārkaMaDī. ii.76.29 (*on* ii.2.14)

**अपकृष्टपरिमाण** (apakṛṣṭa-parimāṇa) *adj.* (used as noun) A (worldly object) of small measure यद्यदपकृष्टपरिमाणं ततस्ततोऽप्यपकृष्टपरिमाण: NyāySu. (Ja.) 345B.10 (*on* ii.2.6); B (Supreme Reality) of smaller measure NyāySu.(Ja.) 345B.10 (*on* ii.2.6)

**अपकृष्टपरिमाणवत्** (apakṛṣṭaparimāṇa-va (n)t) *adj.* having small measure or size परमाणुः कुतश्चिदुत्कृष्टेन परिमाणेन युक्तः। स्वपरिमाणापेक्षयापकृष्टपरिमाणवानिति वा NyāySu. (Ja.) 342A.7 (*on* ii.26); 343B. 3 (*on* ii.2.6); मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तद्य तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात् SiddhāMu. 12.2.

**अपकृष्टपुरुष** (apakṛṣṭa-puruṣa) *m.* man of low caste ब्राह्मणादिवर्णस्त्रियो लोभादुत्कृष्टापकृष्टपुरुषव्यभिचारिणीर्हत्वा ब्राह्मणादिक्रमेण चर्मपुटधनुश्छागमेषाञ्शुद्ध्यर्थं दद्यात् ManvaMu. 478.15 (*on* 11.138)

**अपकृष्टप्रतनुचैतन्य** (apakṛṣṭapratanu-caitanya) *adj.* having inferior, i.e. undeveloped and slight intelligence अपकृष्टप्रतनुचैतन्यानां पृथिव्यादिजीवानां वधेऽपि स्वल्पपुण्यव्ययेनापरिमितसुकृतसंप्राप्तिः SyādvāMañ. 11 (57)

**अपकृष्टप्रसूति** (apakṛṣṭa-prasūti) *adj.* (*f.*) of low birth अक्षमाला ... शार्ङ्गी ...। एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः। उत्कर्षं योषितः प्राप्ताः स्वैःस्वैर्भर्तृगुणैः ManuSm. 9.24.

**अपकृष्टफल** (apakṛṣṭa-phala) *adj.* which has low effect, i.e. insignificant दानम् ...। 'निष्फलम्' अपकृष्टफलम् CaturCin. i.15.15; अपकृष्टफलशास्त्रपरित्यागेन उत्कृष्टशास्त्रपरिग्रहवचनं लिङ्गवशान्नेतव्यम् PāñcRāRa. 34.8.

**अपकृष्टबीज** (apakṛṣṭa-bīja) *n.* semen of the low caste द्वितीयास्तु (प्रतिलोमजाः) योन्युत्कर्षेऽपि अपकृष्टबीजजत्वाद्वर्णबाह्या: BālamBha.i.284.11 (*on* 1.94); i.284.23 (*on* 1.94)

**अपकृष्टब्राह्मण** (apakṛṣṭa-brāhmaṇa) *m.* inferior Brahmin 'सत्येन त्रासयेद्विप्रम्' इत्यपकृष्टब्राह्मणविषयं न ब्राह्मणमात्रविषयम् BālamBha. ii.86.2 (*on* 2.73)

**अपकृष्टभाव** (apakṛṣṭa-bhāva) *m.* inferior or non-excellent nature सैव संसर्गस्योत्कृष्टापकृष्टभावरूपत्वे सार: RasGaṅ. 626.2.

**अपकृष्टभूत** (apakṛṣṭa-bhūta) *m.* inferior creature or being या मूर्तय उत्कृष्टापकृष्टभूतान्गिदेवरूपतया परिणतानि सर्वदा कर्मसु प्रेरयन्ति ManvaMu. 506.5 (*on* 12.15)

**अपकृष्टमद** (apakṛṣṭa-mada) *m.* worst intoxication गुरुकण्ठध्वनिर्नष्टस्मृतिर्जर्झरभाषणम्। एवमादिविकाराः स्युरपकृष्टमदे मुहुः BhāvPra.(Śā.) 17.12(1)

**अपकृष्टमहत्त्व** (apakṛṣṭa-mahattva) *n.* smallest dimension अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यत्वस्य प्रयोजकत्वात् SiddhāMu.16.18; त्र्यणुकमहत्त्वस्यापकृष्टमहत्त्वरूपतया जन्यत्वेन कारणापेक्षायाम् ... त्र्यणुकस्य समवायिकारणमवश्यमभ्युपगन्तव्यम् ŚivārkaMaDī. ii.76.25 (*on* ii.2.14)

**अपकृष्टमहत्त्वादि** (apakṛṣṭamahattvādi) *adj.* smallest dimension etc. आलोकेन्द्रियसन्निकृष्टचाक्षुषद्रव्यानुपलंभत्वात्। पवनानुपलम्भवदित्यादिकं त्वपकृष्टमहत्त्वादिनैवान्यथासिद्धम् NyāySu. (Ja.) 342A.1 (*on* ii.2.6)

**अपकृष्टमात्र** (apakṛṣṭa-mātra) *n.* inferior (person) only स्थावरादिष्वसदिव ज्ञानादि तिर्यगादिषु सत्त्त्रैवात्यन्तापकृष्टं मनुष्येष्वपकृष्टमात्रम् VedāntKa. 109.23 (*on* i.1.4)

**अपकृष्टरयत्व** (apakṛṣṭaraya-tva) *n.* the state of having lessened or decreased speed रयप्रकर्षेत्यध्ययनविशेषणे निमित्तं चेतसां वर्णनीयादश्वादपकृष्टरयत्वं नोपात्तम् CitraMī. 97.5.

**अपकृष्टवत्** (apakṛṣṭa-va(n)t) *adj.* 1 who has taken away or kidnapped याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान् MahāBhā. v.49.19; 2A who has drawn or dragged away अहम् ...। पलायमानश्च गजं तं दूरमपकृष्टवान् KathāSaSāg. vi.1.174; 2B who has pulled out or raised (water) उदायंस्त पादमिति कूपादुदकम् अपकृष्टवानित्यर्थः PadMañ. *on* KāśiVr. *on* i.2.15 (288.16)

**अपकृष्टवध** (apakṛṣṭa-vadha) *m.* murder of a person of low caste ब्राह्मणवधे ...। शूद्रस्य चैतत्प्रायश्चित्तं सामर्थ्याद्विज्ञेयम्। न खुत्कृष्टवर्णानामपकृष्टवध एतत्संभवति BālaKri. ii.98.17 (*on* 3.243)

**अपकृष्टवर्ण** (apakṛṣṭa-varṇa) *adj.* [*f.* –ā] (used as noun) A (person) of low caste वर्णसंकरा इति अपकृष्टवर्णेनोत्कृष्टवर्णस्त्रीषु जाता: HārLa. 12.3; अपकृष्टवर्णेषु उत्कृष्टवर्णं प्रति मिथ्यातीव्राक्रोशे जिह्वाच्छेदः पञ्चशतं वा दण्डः DaṇḍaVi. 202.13; B (woman) of low caste उत्कृष्टवर्णादपकृष्टवर्णायां जातोऽनुलोमजः VīraMi. 160.3 (*on* 1.90)

**अपकृष्टवर्णसंबन्ध** (apakṛṣṭavarṇa-sambandha) *m.* marital relation with a person of low caste (सदृशी सदृशेनोढा) सदृशेन सवर्णेनोढेति प्रकृष्टापकृष्टवर्णसंबन्धनिरासाय VīraMi. (Vyavahāra.) 519.25.

**अपकृष्टविषय** (apakṛṣṭa-viṣaya) *adj.* 1 referring to inferior (type of jewel) यद्य (उत्तमम्) ... विष्णुः - रत्नापहार्युत्तमसाहसः। तन् ... अमुख्योत्कृष्टरत्नविषयत्वेऽपि न विरोधः। शङ्खलिखितोक्तेरपकृष्टविषयत्वात् DaṇḍaVi. 145.13; 2 referring to smaller (dimension or quantity) सर्वद्रव्यप्रमाणं तु ज्ञात्वा ... दिव्यं प्रयोजयेत्। ... अल्पपरिमाणमपकृष्टविषयम् VīraMi. 539.19 (*on* 2.99)

**अपकृष्टवृत्ति** (apakṛṣṭa-vṛtti) *f.* means of subsistence of a person of low caste य उपजीवति तज्जातीयत्वं तस्य भवति, एतच्चोत्कृष्टेनापकृष्टवृत्त्युपजीवने VīraMi. i.172.27 (*on* 1.96)

**अपकृष्टवैश्यक्षत्रियक्रम** (apakṛṣṭa-vaiśyakṣatriyakrama) *m.* [Inst.] in the order of lower caste, i.e. Vaiśya, and Kṣatriya यथायोगं यथायुक्त्या अपकृष्टवैश्यक्षत्रियक्रमेणेत्यर्थः HārLa. 119.13.

**अपकृष्टशास्त्र** (apakṛṣṭa-śāstra) *n.* inferior science अपकृष्टशास्त्रपरित्यागेन उत्कृष्टशास्त्रपरिग्रहवचनम् ... स्वयंव्यक्ते स्थाने स्थापनीयम् PāñcRāRa. 35.1; उत्कृष्टशास्त्रनिष्ठानामप्यपकृष्टशास्त्रधर्मेषु लोकानुग्रहार्थं प्रवृत्तेः संहितान्तरादिसिद्धत्वस्य प्रागेव दर्शितत्वात् PāñcRāRa. 37.1; विच्छिन्नपारंपर्यप्रत्यभिज्ञानेषु स्थानेषु किंकर्तव्यतामूढान् प्रति पूर्वमपकृष्टशास्त्रप्रवृत्तावपि ... उत्कृष्टशास्त्रपरिग्रहौचित्यमिहोच्यते PāñcRāRa. 41.9.

**अपकृष्टशास्त्रादि** (apakṛṣṭaśāstrādi) *adj.* inferior science etc. एतदपि ... अपकृष्टस्थानेऽपकृष्टाधिकारिणामपकृष्टशास्त्रादियोगत्वं च स्थापयति PāñcRāRa. 35.17.

**अपकृष्टशिरोरुह** (apakṛṣṭa-śiroruha) *m.* removed, i.e. cut off hair रक्तोक्षितैश्छिन्नभुजैरपकृष्टशिरोरुहैः। व्यदृश्यत मही कीर्णा शतशः MahāBhā.ix. 22.52.

**अपकृष्टशीर्ष** (apakṛṣṭa-śīrṣa) *adj.* whose head has been removed, i.e. cut off तस्यापकृष्टशीर्षं तच्छरीरं पतितं रथात् MahāBhā.ix.16.64.

**अपकृष्टशूद्रपर** (apakṛṣṭaśūdra-para) *adj.* referring to the Śūdra of inferior qualities (शूद्रः ...। न शिखां नोपवीतम् (धारयेत्)) न शिखामिति एतदपकृष्टशूद्रपरम्। सच्छूद्रे तु तदप्यनुजानाति वसिष्ठः BālamBha. i.378.5 (*on* 1.121)

**अपकृष्टशोकशङ्कु** (apakṛṣṭa-śokaśaṅku) *adj.* whose dart of grief is drawn out तच्छोकाम्बुधौ सराजलोको राजा, स च पूर्वमोचितलोकश्च निमग्नश्चिरेण चतुरैर्विविधबोधबलादपकृष्टशोकशङ्कुश्चक्रे PrabaCin. 53.16.

**अपकृष्टसंहिता** (apakṛṣṭa-saṁhitā) *f.* inferior collection (of Tāntric texts) न खल्वेतावता कालेन ... अपकृष्टसंहितां परित्यज्योत्कृष्टसंहितां कश्चित् परिजग्राह PāñcRāRa. 30.6; व्यवस्थितस्थानविषयमेवेदमपकृष्टसंहितात्यागेनोत्कृष्टसंहितापरिग्रहवचनम् PāñcRāRa. 31.13.

**अपकृष्टसत्त्व** (apakṛṣṭa-sattva) *n.* inferior being कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे Rāmā. iv. App.I.17 (68); महत्स्वेत्रज्ञौ ... परमात्मानमुत्कृष्टापकृष्टसत्त्वेषु व्यवस्थितमाश्रित्य तिष्ठतः ManvaMu. 505.29 (*on* 12.14)

**अपकृष्टसंबन्धिगुण** (apakṛṣṭasambandhi-guṇa) *m.* quality belonging to the inferior thing अपकृष्टसंबन्धिगुणाग्रहणस्य साहजिकत्वेन वैचित्र्यानाधायकत्वादनलंकारतैव RasGaṅ. 693.13.

**अपकृष्टसादृश्यरूप** (apakṛṣṭasādṛśya-rūpa) *adj.* of the form of resemblance with what is inferior तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते न त्वपकृष्टसादृश्यरूप: LaŚabdeŚe. i.496.5.

**अपकृष्टसिद्धान्त** (apakṛṣṭa-siddhānta) *m.* inferior conclusion (as laid down in Tāntric texts) उत्कृष्टसिद्धान्तस्थितस्य स्वस्थानेऽपकृष्टसिद्धान्तप्रसंगाभावात् PāñcRāRa. 14.4.

**अपकृष्टसुखत्व** (apakṛṣṭasukha-tva) *n.* the state of being inferior happiness or pleasure अपकृष्टसुखत्वावच्छिन्नं प्रति मनस्त्वेन हेतुताया: ... आवश्यकत्वात् LaCandr. 893.32.

**अपकृष्टसृष्टि** (apakṛṣṭa-sṛṣṭi) *f.* creation of inferior beings or things देवतिर्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपात: प्रसज्येत BrahmSūBh. (Rā.) 463.3 (*on* ii.1.34)

**अपकृष्टस्कन्धावार** (apakṛṣṭa-skandhāvāra) *m.* distant camp (of a distant king) अपकृष्टस्कन्धावारादुच्छ्रितध्वजधन्वारक्षा वा मानुषेणाग्निना परदुर्गमादीपयेत् ArthŚā. iii.202.3 (13.4)

**अपकृष्टस्त्री** (apakṛṣṭa-strī) *f.* woman of low caste उत्कृष्टवर्णेन तु अपकृष्टस्त्रीषु जाता न वृथासंकरजाता: HārLa. 202.16.

**अपकृष्टस्थान** (apakṛṣṭa-sthāna) *n.* **1** worst place एतदपि ... अपकृष्टस्थानेऽपकृष्टाधिकारिणामपकृष्टशास्त्रादियोगत्वं च स्थापयति PāñcRāRa. 35.16; **2** lower position or rank कर्मकरजनस्य चोत्कृष्टमध्यमापकृष्टस्थानयोग्यानुरूपेण प्रत्यहं कर्मानुरूपेण वृत्तिं कुर्यात् ManvaMu. 269.18 (*on* 7.125)

**अपकृष्टस्नेह** (apakṛṣṭa-sneha) *adj.* devoid of viscidity अपकृष्टस्नेहं हि जलं वह्निं नाशयति SiddhāMu. 80.7 (*on* 157)

**अपकृष्टा** (apa-kṛṣṭā) *f.* type of introductory verse of a song, refrain अड्डिता चापकृष्टा च षट्प्रकारा ध्रुवा: स्मृता: NāṭyaŚā. 32.329 (AbhinaBhā. सापेक्षभावरूपं संविद्विकासमुन्दरं रसमाश्रयत्यड्डिता तद्विपरीतापकृष्टेति); अत्र गीतिविधि: ... अधिका चापकृष्टा च प्रावेशिक्यावसानिकी। अन्तरा चेति पञ्चैता ध्रुवा नाटकसंश्रिता: BhāvPra. (Śā.) 198.2 (7)

**अपकृष्टाग्निदृष्टि** (apakṛṣṭāgni-dṛṣṭi) *f.* consideration or meditation (on the Supreme Self) as inferior fire उत्कृष्टे परमात्मन्यपकृष्टाग्निदृष्ट्ययोगाच्च न परस्मिन्नग्निदृष्टि:। अग्नौ परमात्मदृष्टिपरत्वं तु परमात्मत्वसमर्थनपरसूत्रतात्पर्यविरुद्धम् ŚrutaPra. iB.344.15 (*on* i.2.27)

**अपकृष्टाधिकारिन्** (apakṛṣṭādhikārin) *m.* inferior competent or eligible person एतदपि ... अपकृष्टस्थानेऽपकृष्टाधिकारिणामपकृष्टशास्त्रादियोगत्वं च स्थापयति PāñcRāRa. 35.17.

**अपकृष्टानुष्ठान** (apakṛṣṭānuṣṭhāna) *n.* performance of lower (duty) स्त्रीभि: भर्तृवच: कार्यमेष धर्म: पर: स्त्रिया:। इति। पर: उत्कृष्ट इत्यर्थ:। एवञ्चोत्कृष्टानुरोधेनापकृष्टानुष्ठानमित्यर्थात् प्रतिपादितम् SmṛtiCan. iv. 590.16.

**अपकृष्टापराधकरण** (apakṛṣṭāparādha-karaṇa) *n.* act of committing lower offence स्वकीयधर्मविरोधादपकृष्टापराधकरणे सत्यभिचारादि न दोषाय ManvaMu. 455.20 (*on* 11.31)

**अपकृष्टाम्बरा** (apakṛṣṭāmbarā) *adj.* (*f.*) whose garment is removed, i.e. nude अप्सरसं तत्र घृताचीम् ...। अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तत: MahāBhā. i.154.3.

**अपकृष्टार्थ** (apakṛṣṭārtha) *m.* [Loc.] in the sense of 'dragged or drawn away' अव्ययानि ... पान्ता:। अप स्यादपकृष्टार्थे ViśvaPra. 188.36.

**अपकृष्टार्थ** (apakṛṣṭārtha) *adj.* having the sense of 'dragged or drawnaway' पार्धश्लोक:। अप स्यादपकृष्टार्थ: DharK. 2919.

**अपकृष्टाश्रय** (apakṛṣṭāśraya) *adj.* dependent on what is inferior उत्कृष्टो यदपेक्ष्येशस्तत्तावद्बाध्यते बलात्। जहाति पश्चादुत्कर्षमपकृष्टाश्रयो हि स: TaiUBhāVā. 149.2 (2)

**अपकृष्टि** (apa-kṛṣṭi) *f.* inferiority नादित्यस्यस्तदोत्कर्षो नापकृष्टिस्तथात्मनि TaiUBhāVā. 149.8 (2); **2** separation, cf. **अपकृष्टिक्रिया**.

**अपकृष्टिक्रिया** (apakṛṣṭi-kriyā) *f.* act of separation (पूर्वं नाभे: कायस्य) पूर्वं कायस्येत्यत्रापि निर्धारणं स्यात्। अस्त्यत्रावयवस्यापकृष्टिक्रिया निर्धारणहेतु: Prasā. i.508.21.

**अपकृष्टोत्कृष्टजाति** (apakṛṣṭotkṛṣṭa-jāti) *f.* persons of lower and higher castes करणादपकृष्टोत्कृष्टजात्योरपकर्षोत्कर्षावाह 'जात्युत्कर्षेत्यादि' DīpKa. 13.20 (*on* 1.96)

**अपकृष्टोत्कृष्टजीव** (apakṛṣṭotkṛṣṭa-jīva) *m.* inferior and superior individual souls or beings आनन्दमयस्यापकृष्टोत्कृष्टजीवेषु पुरुषादित्यपदोपलक्षितेषु स्थितिकथनात् TattvPrakā. 20A.5 (*on* i.1.17)

**अपकृष्टोत्कृष्टसकलजीव** (apakṛṣṭotkṛṣṭa-sakalajīva) *m.* all inferior and superior individual souls or beings स एक इति पुरुषादित्यशब्दोपलक्षितापकृष्टोत्कृष्टसकलजीवानां नियम्यतया ... उपदेशात् NyāySu. (Ja.) 139A.8 (*on* i.1.6)

**अपकृष्टोत्तरासङ्ग** (apakṛṣṭottarāsaṅga) *adj.* who has given up or abandoned the upper garment अपकृष्टोत्तरासङ्ग: कृशो धमनिसंतत:। आसी: कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके MahāBhā. iii.13.13.

**अपकृष्टोत्थित** (apakṛṣṭotthita) *adj.* produced from inferior (metal) बिम्बानि ...। उत्कृष्टलोहजातानि अपकृष्टोत्थितानि वा। तादृशानि भवन्त्येव PāraS. 15.927.

**अपकृष्टोदयसौख्य** (apakṛṣṭodaya-saukhya) *adj.* having inferior prosperity जात: ... मेषर्क्षे ... अपकृष्टोदयसौख्य: कुधर्मसंवर्धितार्थश्च Sārā.47.6.

**अपकृष्ण** (apa-kṛṣṇa) *m.* inferior black bird, i.e. crow (काक: ... अपकृष्ट:) अपकृष्ट: 'अपकृष्ण:' comm. *on* TrikāŚe. ii.5.20.

**अपकृष्य** (apakṛṣ-ya) *ger.* **1A** having separated, having divided **B** having set aside, i.e. having abandoned or withdrawn **2Ai** having dropped **2Aii** having drawn or transferred (words) back to earlier context, having anticipated **B** having drawn or transferred (performance) back to earlier time **3A** having removed **B** having removed or washed off **4A** having taken away or snatched or stolen **B** having taken away, i.e. lured or enticed **C** having taken away **5A** having driven away or off **B** having driven out **6** having drawn back, having retracted or stretched back **7A** having drawn or dragged away **B** having dragged or drawn out **C** having drawn below **8 A** having restrained or curbed **B** having withdrawn **9** having resorted to, i.e. having endured **10** having flattened (note) **1A** having separated, having divided अभिषवविपर्यासो वाभिमृष्टादश्शूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगात् KātyŚS. ix.5.11 (comm. पृथक् कृत्वा); गौतम: ... कृशानामबलानां गोयूथान्निराकृत्य अपकृष्य चतु:शता चत्वारि शतानि गवाम् उवाच ChāndoUBh. 222.11 (*on* iv.4.5); (ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजा:) तुशब्दोऽपकृष्यावधारणार्थो व्याख्येय: BālaKrī. i.30.13 (*on* 1.10); (गन्धरसरूपस्पर्शशब्दा: पृथिव्यादिगुणास्तदर्था:) तदर्था इत्यत एवापकृष्य वा प्रक्रमाद्वा अर्था इति लक्ष्यपदं दर्शयितव्यम् NyāyMañ. ii.55.23; **1B** having set aside, i.e. having abandoned or withdrawn दमयन्ती तव सुता भर्तारमनुशोचति। अपकृष्य च लज्जां मां स्वयमुक्तवती MahāBhā. iii.67.5; सोऽपकृष्य ततो धर्म: स्थापितो भेदवानिह। येन दण्डादिवत्तस्य जायते हि विशेषणम् TattvSaṁ. 1077; यदा हि श्रमण: ... विशिष्टकालक्षेत्रवशावसन्नशक्तिर्न प्रतिपत्तुं क्षमते तदापकृष्य संयमं प्रतिपद्यमानस्तद्बहिरङ्गसाधनमात्रमुपधिमातिष्ठते TattvPradī. (A.) 299.5 (*on* 3.22); **2Ai** having dropped पशुनेहीत्यपकृष्य दधिघर्माय दध्याहर दक्षिणा उपावर्तयेति प्रैषोपचय: KātyŚS. x.1.19 (comm. प्रैषात्पशुनेहीत्येतत्पदद्वयम् ... निष्काश्य); भद्रो न इति ककुभस्ताभ्यो बृहत्यन्तरश्रुतेर्मन्त्रक्रमेण। उद्धृतान्यपकृष्येच्छन् KātyŚS.xvii.12.12 (comm. इच्छया अपकृष्य तन्मध्ये अपठितैव); **2Aii** having drawn or transferred (words) back to earlier context, having anticipated तस्मात्प्रमादादुत्कृष्टस्य ग्रन्थस्यापकृष्य व्याख्यानं कर्तव्यम् TantrVā. 842.9 (*on* iii.3.14); उपरितनन्तु स्मृतिविपरीतार्थप्रतिपादकत्वेन विरुद्धतामाशङ्क्यापकृष्य व्याख्येयमित्याह TātpaṬ.(U.)23.27 (*on* 1.105); उकारं च वक्ष्यमाणमधस्तादपकृष्य ... पृच्छति TaiUBh. 255.8 (*on* 2.6); विप्राणामेवेति पितर: ...। तस्मादपकृष्य एवकारोऽग्निष्वात्तानेव सौम्यानेव निर्दिशेदित्येवं संबन्धनीय: ManuBh. i.292.28 (*on* 3.189); CaturCin. iii. (1). 57.7; स्मृतिप्रसिद्धानामाश्रमाणां सोमोपासनविधिप्रकरणे वितायमाने ततोऽपकृष्य ... प्रणवेन ब्रह्मोपासनस्य स्तुत्यर्थं परामर्शमनुवादमात्रं क्रियते VedāntKau. 362.16 (*on* iii.4.18); कुरुकत अनडुह इत्येतौ शब्दौ एतस्थानादपकृष्य लोहितादिषु कुत्रचित् स्थाने पठितव्यौ Prasā. i.339.21; न चैवं शमीशमिनौ इत्यादौ नुमप्रसङ्ग: झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् SiddhāKau. 512A.1 (*on* iii.2.141); समीपार्थकमन्तपदमपकृष्य अनिते: समीपे यो रेफस्तस्मात्रस्य णत्वम् LaŚabdeŚe. ii.573.11; i.124.5; तत्सुतान्तानामुक्त्या दृष्टक्रमत्वेनैव तेषां मध्ये तस्या: प्रवेशस्य दुष्करत्वात्तत्पर्यन्तमपकृष्य पृथगनुक्तापि सती सा आपतत: ... गोत्रजा इति पाठात् BālamBha. ii.211.27 (*on* 2.135-

136); **2B** having drawn or transferred (performance) back to earlier time उक्तं कर्म यथाकाले यदि कर्तुं न शक्यते। अकाले वापि तत्कुर्यादुल्लङ्घ्य वापकृष्य च LaghvāśvaSm. 1.138; सायंहोमे कृते यदि गृहपतिरासन्नमरणो भवति तदा तस्मिन्नेव काले प्रक्रान्तापरिसमापनदोषपरिहारार्थमपकृष्यैव प्रातर्होमः कर्तव्यः HārLa. 133.13; एकादशिनी ...। सा च प्रकृतितोऽपकृष्य अतिरात्रचरमे निविशते SaṅkarKāBh. 54.9 (*on* i.4.55); मातुरेकादशाहे नवमिश्राण्यपकृष्य दत्त्वा द्वादशाहे सपिण्डीकरणश्राद्धं कार्यम् SmṛtiCan. iv.163.21; यस्मिन् दिने वृद्धिरापद्यते ततः प्रागेवापकृष्य सपिण्डीकरणं कृत्वा CaturCin. iii (1).297.2; iii (1).104.20; अब्दमध्ये गयाश्राद्धकरणे वृद्धयापत्ताविव मासिकान्यपकृष्य कृत्वा गयाश्राद्धं कुर्यादिति केचित् TristhaSe. 347.29; स्वस्थानादपकृष्य पूर्वमनुष्ठानावगतः MīmāKau.i.228.15 (*on* i.4.9); सपिण्डीत्यस्यापकृष्य षोडशश्राद्धानि कृत्वेत्यादिः BālamBha.i.596.4 (*on* 1.255); **3A** having removed अग्निहोत्रहवण्यां पवित्रान्तर्हितायामप आनीयोदञ्चः स्फ्यमपकृष्यान्तर्वेदि धारयन्स्फ्यस्य वर्त्मनुपनिनीयर्तसदः स्थिते स्फ्यपदे सादयति HirŚS. i.6.111 (154.16); (तेनैवोत्तरीयान्तेनाश्रूणि प्रमार्जन्नाकर्षति) तस्मादेनमपकृष्य तावदपनयामि KundaMā. 4.18 (2); मूर्तिद्वयं समाश्रित्य भूभारमपहृत्य (v.l. अपकृष्य) यः। मुषलेन हलाग्रेण तं रामं सततं भजे BṛNāraP. 2.38; **3B** having removed or washed off उत्थानकालेऽपकृष्य पापम्। ... आदित्यमीक्षन्ते ŚāṅkhāGS. vi.4.11; **4A** having taken away or snatched or stolen द्रोणोऽब्रवीत् ... द्रुपदः ... नरेश्वरः। तस्यापकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् MahāBhā. i.154.21; सा गत्वा बाहुके व्यग्रे तन्मांसमपकृष्य च ...। दमयन्त्यै ततः प्रादात् MahāBhā. iii.73.21; **4B** having taken away, i.e. lured or enticed अपकृष्याश्रमपदान्मृगरूपेण राघवम्। शून्ये येनापनीतासि Rāmā. v.32.30; **4C** having taken away अपकृष्य वाहनं मेषमग्रचरणग्राहम् ... पलाययामासुरसुरभटाः NīlaVi. 21.19; **5A** having driven away or off शरैः समन्ततः सर्वं खाण्डवं चापि पाण्डवः। छादयामास तद्वर्षमपकृष्य ततो वनात् MahāBhā. i.218.2; तां द्वारादपकृष्य समाहितः। रुरोध वीरको देवीम् MatsyaP. 157.20; **5B** having driven out बिल्वछायागतो नित्यमयुतं प्रजपेच्छुचिः। तत्फलं जुहुयात् साज्यमष्टोत्तरसहस्रकम्। अलक्ष्मीमपकृष्याय मासेन धनवान् भवेत् ĪśānŚiPa. i.28.125; **6** having drawn back, having retracted or stretched back ततो द्रौणिर्धनुंष्यष्टौ व्यपकृम्य (v.l. अपकृष्य) नरर्षभम्। पुनरभ्याहनत्पार्थम् MahāBhā. iv.54.7 (*but* APTE -bend on a bow); आ कर्णमूलमपकृष्य धनुः सबाणं मय्येव किं प्रहरसि स्मर बद्धकोपः Subhāṣi. 1293; **7A** having drawn or dragged away मत्स्यराजकुलस्त्रियः। उत्तरामपकृष्यैनामार्ततराः स्वयम्। विराटं निहतं दृष्ट्वा क्रोशन्ति MahāBhā. xi.20.28; अपकृष्य वाहनं मेषमग्रचरणग्राहम् ... पलाययामासुरसुरभटाः NīlaVi. 21.19; **7B** having dragged or drawn out संस्कृतं हि नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते, न च यावक उलूखलादेवापकृष्याभ्यवह्रियतेऽवश्यं रन्धनादीनि प्रतीक्ष्याणि MahāBh. ii.307.9-10 (*on* iv.3.25); प्रभूतानपि विनाशाय कश्चिल्लावकेभ्यस्तिलान्प्रयच्छति (v.l. तथा मत्स्यमपि बडिशेनापकृष्य छित्त्वा चर्मापनयनशेषाङ्गपरिरक्षणार्थमसौ तस्यारम्भः) PañcT. 2.22 (14) (203.4); Tantrākhyā. 59.27; अपकृष्य पुद्गलगुणान् गुहाबिलादवदाततां नयसि दूरमिच्छया HarVi. 6.127; क्षणमत्र च नाथ रीक्ष्यतामियमग्निं विशती वराङ्गना। अपकृष्य सुताननोदरात् पतिलोकस्पृहया पयोधरम् RāmC. 33.19; **7C** having drawn below वामदक्षिणरेखान्तरे अधोऽपकृष्य द्वितीयशक्तिपश्चिमकोणात्पश्चिमस्यां दिशि मेलयेत् SetuBa. 29.3; **8A** having restrained or curbed तत्कर्तुमर्हति भवानपकृष्य रोषं यत्त्वां युधिष्ठिरमुखाः प्रणयाद्ब्रुवन्ति DūtaVā. 23; अर्जुनः ...। इन्द्रियाण्यपकृष्यादौ मनसा संस्थितोऽभवत् ŚivaP. iii.38.31 (343A.5); **8B** having withdrawn निदिध्यासनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलो मानसव्यापारः VedāntPari. 347.5; **9** having resorted to, i.e. having endured विनियोक्ष्यामि मनसो विकृतिंपराम्। पिधाय धैर्यद्वाराणि संतोषमपकृष्य च। अवगन्तुं हि मां तत्र न कश्चिदतिपण्डितः MatsyaP. 154.224; **10** having flattened (note) (अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः) पूर्वं नामगतमक्षरं संश्लिष्टं यस्य स पूर्वाक्षरस्तेन नागन्तुरपकृष्य चाकारादिः स्वरः प्लुतः कार्यः ManvaMu. 60.7 (*on* 2.125)

**अपकृष्यमाण** (apakṛṣya-māṇa) *adj.* [*f.*–ā] **1** being removed or taken out off **2A** being dragged or drawn away **B** being dragged or drawn out **C** being dragged away, i.e. being inefficient **D** being drawn out, i.e. being lessened **3A** being transferred back to earlier time (performance) **B** (word or meaning) being transferred to earlier context **4A** being decreased or reduced **B** being diminished **5** being successively inferior **1** being removed or taken out off अपकृष्यमाणे वसने विललाप सुदुःखिता MahāBhā. ii.547* (1); **2A** being dragged or drawn away चक्षुषतुर्भिनं तस्य सर्वायुधानि चः। ... नरनारायणौ बलात्। अपकृष्यमाणः कौन्तेयो नद्येव महारयः MahāBhā. vii.171.14 **2B** being dragged or drawn out स ततः पश्यति वुद्ध्याग्रान्थापकृष्यमाणान्यग्रोग्रोधाधीयमानान् MahāBh. i.137.21 (*on* i.1.56); स ततः पश्यति बुद्ध्यासिं चापकृष्यमाणं भवति चाधीयमानम् MahāBh. i.137.25 (*on* i.1.56) अपि च पाकानन्तरं कन्दुकादपकृष्यमाणाः पिठरादयः केचित्स्फुटिताः NyāyMañ. ii.11.25; **2C** being dragged away, i.e. being inefficient न हि चक्षुः प्रकृष्यमाणं रसं गृह्णाति नापकृष्यमाणं स्वविषयात्प्रच्यवते NyāyVār. 513.5 (*on* iv.2.14); **2D** being drawn out, i.e. being lessened पितैव पुत्रतया प्रतिक्षणमपकृष्यमाणेन रिक्तीकृतः कोशेन UdaySuKa. 56.15; **3A** being transferred back to earlier time (ritual performance) तथापकृष्यमाणोऽपकर्षति ŚābaBh. 1302.16 (*on* v.1.24); यूपस्य छेदनादयः पठ्यमाना वचनेनापकृष्यमाणाः सौमिकानपकर्षन्ति ṬupṬ. 61.3 (*on* v.1.27); अनुपस्थितायां वृद्धौ यः प्रेतश्राद्धान्यपकर्षेदित्यर्थः। ... अपकृष्यमाणस्य च कालविकल्पमाह गोभिलः CaturCin. iii(2).536.22; कामाय तु शुक्रादिग्रहणेष्वपकृष्यमाणेषु न ग्रहणमात्रस्य प्रतिकर्षः अपि तु सादनस्यापि BhāṭṭDī. iv.32.9 (*on* x.5.21); अभिषेकोऽपकृष्यमाणोऽक्लृप्तक्रमोऽपि विदेवनादीन्प्राचः पदार्थानपकर्षति MayūMāli. 306.30 (*on* iii.6.7); **3B** (word or meaning) being transferred to earlier context हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थम् LaŚabdeŚe. i.318.21; **4A** being decreased or reduced अविद्या चापकृष्यमाणा विद्या चोत्कृष्यमाणा BṛĀraUBh. 566.4 (*on* iv.3.20); कार्यमेतदविद्यायाः प्रोद्भूतायाः प्रदर्शितम्। अथापकृष्यमाणायाः कार्यतः कार्यमुच्यते BṛĀraUBhVā. iv.3.1270; **4B** being diminished यथा हि महत्त्वं प्रकृष्यमाणं परमकाष्ठां प्राप्नोति। ... यथा चाणुत्वमपकृष्ण(? ष्य)माणं परमाणुकाष्ठां प्राप्नोति Kiraṇā. 212.16; **5** being successively inferior, cf. अपकृष्यमाणगुण.

**अपकृष्यमाणकुलपालिका** (apakṛṣyamāṇa-kulapālikā) *f.* virtuous woman being dragged out अपकृष्यमाणकुलपालिकाजनाहन्यमानमुखवाद्यनादमेदुरम् अनुप्रविश्य नगरम् NīlaVi. 30.1.

**अपकृष्यमाणगुण** (apakṛṣyamāṇa-guṇa) *adj.* having qualities which are successively inferior (ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः) अनुपूर्वशः तत्तद्विवाहा पकर्षक्रमेणापकृष्यमाणगुणाः ManvaVi. 304.22 (*on* 3.39)

**अपकृष्यमाणतरु** (apakṛṣyamāṇa-taru) *m.* tree which is being dragged down or bent प्रावृडुदञ्चितशैवलिनीरय(?प)कृष्यमाणतरोरिव प्रेर्यतरस्य परेण हि न स्युरिमाः प्रवृत्तिनिवृत्तयः NayaMañ. II.iii.16.31.

**अपकृष्यमाणरूपप्रतीति** (apakṛṣyamāṇarūpa-pratīti) *f.* knowledge of form (of activity) which is being reduced न च कृदन्तेष्वपि अत्यन्तं भावना नास्ति किंचिदपकृष्यमाणरूपप्रतीतेः TantrVā. 346.24 (*on* ii.1.1)

**अपकृष्यमाणविशेष** (apakṛṣyamāṇa-viśeṣa) *adj.* having particularity which is being reduced or diminished गगनपरिमाणादारभ्यापकृष्यमाणविशेषं परिमाणं परमाणौ परमापकर्षवत् PramāMī. 17.10 (*on* i.1.21)

**अपकृष्यमाणविशेषत्व** (apakṛṣyamāṇaviśeṣa-tva) *n.* the state of having particularity which is being reduced or lessened ज्ञानं क्वचिदात्मनि परमापकर्षवत् अपकृष्यमाणविशेषत्वात् परिमाणवत् PramāMī.17.8 (*on* i. 1.21)

**अपकृष्यमाणावस्था** (apakṛṣyamāṇāvasthā) *f.* state or condition of being drawn or transferred back to an earlier time वेदेरपकर्षविधानादपकृष्यमाणावस्थायां वेदेर्हविरभिवासनादिपदार्थैरक्लृप्तक्रमतया तदपकर्षसंभवादिति व्यवस्थापितम् MayūMāli. 306.28 (*on* iii.6.7)

**अपकृ** (apa-kṝ-) VI.P. [P. i.3.21; but takes *ātmanepada* when the augment *suṭ* is placed before *ka* in the sense of the scrapping of earth by four-footed animals or birds, P. vi.1.142; CāndraVyā. i.4.60; KāśiVṛ. *on* i.3.21; vi.1.142; MugdhaBo. 23.6 (135.18); PrakriKau. ii.402.4; KośaKaTa. 2.1441] **1A** to spout out, to spurt, to scatter (चतुष्पाच्छकुनिषु) चतुष्पाच्छकुनिष्विति किम्? अपकिरति देवदत्तो हृष्टः JaineVyā. 300.4 (*on* iv.3.115); KāśiVṛ. *on* vi.1.142; सुट् किम्? अपकिरति CāndraVṛ. *on* i.4.60; किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम्। ... हर्षादिष्विति किम्। अपकिरति कुसुमम् Kāśi. Vṛ. *on* vi.1.142; SiddhāKau. 455B.22 (*on* vi.1.142); अपकिरति श्वा ओदनपिण्डमाशितः KāśiVṛ. *on* vi.1.142; गजोऽपकिरत्यम्भः MugdhaBo.23.6 (135.20);

PrakriKau. ii.402.6; **1B** to throw down अन्यत्र मल्लोऽपकिरति मल्लम् MugdhaBo. 23.6 (135.19); PrakriKau. ii.402.6; **2A** to scrape earth with (feet) (in order to make a resort) कुलायो निवासः - कुलायकरणे - अपस्किरते श्वा आश्रयार्थी JaineVyā. 28.7 (*on* i.2.33); 300.4 (*on* iv.3.115); KāśiVṛ. *on* vi.1.142; PrakriKau. ii.402.5; अपस्किरते श्वा निवासार्थी CāndraVṛ. *on* i.4.60; **2B** to gore with joy हर्षे अपस्किरते वृषभो हृष्टः JaineVyā. 28.6 (*on* i.2.33); 300.3 (*on* iv.3.115); CāndraVṛ. *on* i.4.60; KāśiVṛ. *on* i.3.21; DhātuPra. 6.135 (114.12); PrakriKau. ii.402.5; SiddhāKau. 455B. 21 (*on* vi.1.142); मुक्तशापो गजः पृथ्वीं मुदा यदपचस्करे। गजतीर्थमिति ख्यातं तद्बभूव महत्सरः ŚivLī. 4.37; **2C** to scrape earth with the feet (in search of food) जीविकायाम् अपस्किरते कुक्कुटो भक्षार्थी JaineVyā. 28.6 (*on* i.2.33); 300.3 (*on* iv.3.115); CāndraVṛ. *on* i.4.60; KāśiVṛ. *on* i.3.21; MugdhaBo. 23.6 (135.19); PrakriKau. ii.402.5; **2D** to scrape in general अपस्किरन्ते श्वकविष्किरोक्षाणः क्षेत्रपालाच्युतशंकराणाम्। ... यत्रास्तु तत्राप्यहता तवाज्ञा DvyāśraKā. 10.74 (comm. विक्षिपन्तीति सामान्यार्थः। श्वा आश्रयार्थी सन् विलिख्य भस्म विक्षिपति); **3** to injure, to pound सुरद्विपः ...। स मत्तः संचरन्पृथ्वीं चरणैरपचस्करे। लघूकरिष्यन्निव तां दिग्गजानुजिघृक्षया ŚivLī. 4.23.

**अपकृत्** (apa-kṛt-) X.U. to mention wrongly, to abuse, cf. अपकीर्तित [VIŚVA.]

**अपकोपाग्नि** (apa-kopāgni) *adj.* whose fire of anger is gone away मीरभोखारनामापि बुद्धिमान्प्रथितो भुवि। नितरामपकोपाग्ने राज्ञः साचिव्यमादधे RājTa. (Śrī.) 2.38.

**अपकोपित** (apa-kopita) *adj.* whose anger is gone away निष्ठिते महापचे तत्पुत्रा(व ? न)ष्टावप्यलभिदशभिर्वत्सरैरेकैकमुद्धृत्यार्याकाप्योवापकोपितेन मनस्विना चाणक्येन मौर्यचन्द्रगुप्तः प्रतिष्ठापितः AvantiKa. 183.18.

**अपकोश** (apa-kośa) *adj.* which is (drawn) out of sheath सोऽपि ...। अपकोशमसिं कृत्वा प्रजहार कपिध्वजम् PāṇḍaC. 5.350; खड्गमपकोशं कृत्वा ... जगाम BhojPra. 5.24.

**अपकोष** (apa-koṣa) *adj.* something without cover or sheath, APTE.

**अपकौतुक** (apa-kautuka) *adj.* having no desire, free from desire अधिकारविलम्बितापवर्गस्थिरसङ्गादपकौतुकस्त्रिवर्गे ... विनियुक्तोऽस्मि Yādavā. 15.7 (comm. अनभिलाषः)

**अपकौपीन** (apakaupīna) *adj.* **1** removed from a well अपकौपीनशालीनैरार्त्विजीनैरिवाम्बुजैः। स्थितं संकुच्य चक्रैश्च शैर्षच्छेदिकमानिभिः DvyāśraKā. 17.109 (comm. कूपप्रवेशनमर्हति कौपीनः); **2** whose sin is removed, DvyāśraKā. 17.109 (comm. कौपीनशब्दः पापकर्मणि); **3** whose pudenda or privities are not concealed, DvyāśraKā. 17.109 (comm. ... कौपीनशब्दः ... गोपनीयपायूपस्थे अपगतं कौपीनम् ... तेऽपकौपीना नग्नाः); **4** whose clothes are removed DvyāśraKā. 17.109 (comm. कौपीनशब्दः ... चीवरखण्डे वर्तते। अपगतं कौपीनं चीवरखण्डं येषां तेऽपकौपीनाः)

**अपकौशली** (apa-kauśalī) *f.* news, information, APTE.

**अपक्त** (a-pakta) *adj.* the expression *apakta* (uncooked) (धुङ् व्यञ्जनमनन्तःस्थानुनासिकम्) अपक्त KātanVṛ. ii.1.13.

**अपक्ति** (a-pakti) *f.* **1** indigestion अग्निरेव शरीरे ... शुभाशुभानि करोति तद्यथा। पक्तिमपक्तिम् CaraS. i.12.12; जाड्यग्लानिभ्रमापक्तितंद्रारोगाश्च वातजाः AṣṭāSaṃ. i.59.5 (1.9); श्लेष्मणः ...। बंधोपलेपस्तैमित्यशोफापक्त्यतिनिद्राः AṣṭāHṛ. i.12.53; आलस्यापक्तिनिष्ठीवमलसंगारुचिक्लमाः। लिंगं मलानां सामानाम् AṣṭāHṛ. i.13.24 (comm. आहारस्यापाकः); SiddhYo. 81.5; नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा। कुर्यात् ... अपक्तिं मलसङ्गम् AṣṭāHṛ. iii.9.28; आरोपमाध्मानमपक्त्यशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् RasRaSa. 18.43; **2** immaturity, MW. **3** unripeness, APTE.

**अपक्तिनाशन** (apakti-nāśana) *adj.* which destroys, i.e. cures indigestion यथायोगमिमे योज्याः कषाया दोषपाचनाः। ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः AṣṭāHṛ. iv.1.47.

**अपक्तिमफलाशिन्** (apaktimaphalāśin) *adj.* who eats fruit which is not ripened in a natural way संस्कृत्रिमसंव्यानावनुक्त्रिम (v.l. वपक्त्रिम) फलाशिनौ। ... पर्यभूतां तथापि माम् Bhaṭṭi. 4.37 (comm. अकृष्टपच्यफलाशिनावित्यर्थः)

**अपक्तिशक्ति** (a-paktiśakti) *f.* absence of digestive power, reduced digestive power आटोप आध्मानमपक्तिशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् RugVi. 28.4 (comm. मन्दाग्नित्वादाहारस्यापाकः ... मन्दाग्निता)

**अपक्तिशूल** (apakti-śūla) *m., n.* acute pain caused by indigestion आरोपमाध्मानमपक्तिशूलमासन्नगुल्मस्य वदन्ति चिह्नम् BhāvPra. (Bhā.) 8(32).6.

**अपक्त्वा** (a-paktvā) *ger.* not having cooked क्षुधार्त्तास्ते पशून्हत्वा ग्राम्यानारण्यकांस्तथा। पक्त्वापक्त्वापि वा केचित्तेषां मांसान्यभुञ्जत SkandP. ii (9).9.10.

**¹अपक्रम्** (apa-kram-) I.P. [in Parasmaipada the short *a* is substituted by the long *ā* in *kram*-before *śit* affix, P.vii.3.76; *Ātmanepada* is optionally employed when not preceded by preposition, P.i.3.43] **1Ai** to go away, to step away, to move away (*caus.*) to cause to go away **ii** to move back **iii** to step forth, to step out (*caus.*) to cause to step forth, to cause to step out **iv** to transfer back to earlier time **B** to depart from, to desert from **Ci** to flee away, to run away (pass.) to be fled, away, to be run away **ii** to escape from **Di** to go out, to pass away (used in *caus.* sense) to cause to pass away **ii** to pass by (as time) **E** to retreat, to withdraw, to retire from (pass.) to be retreated, to be withdrawn **F** to go into, to enter **G** to walk, to move **2** to decline, to reduce **3** to come from, to issue from, to originate from **4** to reject, to refuse **5** to forfeit, to lose **6** to remove, to destroy **7A** to transgress, to deviate from **B** to behave in wrong way **8** to renounce, to give up **9** to be in a reverse order or sequence **10** to be engaged in **11** to let on **1Ai** to go away, to step away, to move away अपेहि मनसस्पतेऽपं क्राम पुरश्चर ṚV. x.164.1 (Sāy. दूरदेशं गच्छेत्यर्थः); AV. xx.96.24; AV. (P.) xix.38.4; सोऽसुरानु यज्ञोऽपाक्रामत् TaiS. III.iii.7.1; यथा वस्यंस उपनिधायांपुक्रामति TaiS. VI.v.I.10.3; अपु वै तृतीयसवने यज्ञः क्रामति TaiS.vi.7.3; तां यथा धेनंवोऽदुग्धा अपक्रामन्त्येवमस्मादाशिषोऽदुग्धा अपक्रामन्ति MaiS. i.4.5 (i.53.6-7); KāṭhS. 32.3 (iii.21.6-7), तं ह स्म वैं व्याघ्रां उपघ्रांयं तूर्ष्णीमेवापक्रामन्ति MaiS. ii.1.3 (ii.4.6); तैंऽध्वृतोऽयंमभूदिंत्यपाक्रामन् MaiS.iii.6.10 (iii.74.15); iv.8.6 (iv.114.12); उपोपैवेनं पशवो यन्ति नापक्रामन्ति KāṭhS.7.7 (i.69.3); य एवं विद्वानुपसद उपैति न पुनरपक्रामेद्यतरो वै संयत्तयोः पुनरपक्रामति परा स जयति KāṭhS. 25.1 (ii.103.3); KapiKaS. 38.4 (208.12); सोमम् ... वरुणोऽगृह्णादप पशवोऽपक्रामन् KāṭhS. 27.4 (ii.142.18); KapiKaS. 42.4 (251.3); प्रजापतिः प्रजा असृजत ता अस्मादपाक्रामन् KāṭhS. 29.9 (ii.178.20); 37.1 (iii.84.13); TaiBr. I.vi.4.1; II.ii.2.1; श्वोऽग्निमाधास्यन्स्यात्स तां रात्रीं व्रतं चरेत्। ... सर्वो वै पुरुषोऽग्निमान्। अग्निरस्मादपक्रामेत् KapiKaS. 7.7 (78.8); देवासुरा वा एषु लोकेषु संयत्ता आसुस्तेभ्योऽग्निरपाक्रामत् KauṣīBr. 1.2 (2.5); गार्हपत्यं वा अन्वाहितांग्नेः पुशव उपं तिष्ठन्ते। स यदुद्वायति। तदनुं पुशवोऽपं क्रामन्ति TaiBr. I.iv.4.8; स यत्रैव तिष्ठन्प्रयाजेभ्य आश्रावयेत्। तुत एव नापक्रामेत् ŚatBr. I.v.3.6; तस्मादु हानिन्द्रस्य वृतो नापक्रामेत् ŚatBr. III.v.1.17; III.vi.1.3; तस्मात्पशवोऽपाक्रामन्मित्रं सुन्नमित्रोऽभूदिति ŚatBr. IV.i.4.8; पुनर्मा यन्तु देवता या मदपचक्रमुः MantrBr. ii.5.10; तदु होवाच वाजसनेयोऽश्रद्दधानेभ्यो हैभ्यो गौरपक्रामति JaimiBr. 1.59; कर्ण उवाच भीष्मं नाहं योत्स्ये युध्यमाने त्वयीति। हित्वा सेनामपचक्राम चैव MahāBhā. i.1.122; i.73.3; i.166.18; तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः MahāBhā. iii.38.27; कृष्णा तस्मादपाक्रामद्देशात् MahāBhā. iii.251.19; सुमन्त्रः ... दृष्ट्वा दीनं च पार्थिवम्। प्रगृहीताञ्जलिः किंचित्तस्माद्देशादपाक्रमत् Rāmā. ii.12.19; ii.81.20; वालिमार्गादपाक्रामन्पर्वतेन्द्रा हि गच्छतः Rāmā. vii. 34.26; vii.82.1 अपक्रामतु भवती BālaC. 2.6 (11); सा ... काष्ठसंघट्टनशब्देन कालं निवेद्यापक्रामति स्म JātaMā. 110.24 (19.7(16)) वरत्रिणः सुता ह्येते ...। श्रुत्वेन्द्रस्य तु तद्वाक्यं तस्माद्देशादपाक्रमन् BrahmāṇḍP. ii.1.81; वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति। ... एतेष्विति किम्। - अपक्रामति KāśiVṛ. *on* i.3.38; PadMañ. *on* KāśiVṛ. *on* P. i.3.38; इत्युक्त्वा तं नृपसुतं सा संगतसखीजना। अपाक्रामत SkandP. iii (3).7.131; वालयित्वा रथानश्वान्, कुञ्जरांश्च महौजसः। अपक्रामत तद्यूयम् TriṣaŚaPuC. i.5.524; सेनानीरपचक्राम पीत्वेवाम्भः पिपासितः TriṣaŚaPuC. ii.2.265; कथमपक्रामत्येव HāsyCū. 135.16; लघुतरचरणप्रचारवृत्त्या द्रुतमपचक्रमतुः पुरात्तदीयात् PrabhāC. 67.23; क्रन्दत्यपक्रामति च विषीदति च निन्दति। ... बीभत्सः (मानसः) BhāvPra. (Śā.) 67.7 (3); सपत्नीसहितो राज्ये कृत्वा सन्धिं न विश्वसेत्। अपक्रामेत्ततः क्षिप्रं कृतकार्यो विचक्षणः SūktiRa. 108.5; (caus.) to cause to go away अग्निर्वा एतस्य पशूनपक्रमयति PañcBr. xii.4.25 (Sāy. अपगमयति); **1Aii** to move back सविता ... अब्रवीन्मुख्योऽहमस्मि न प्रत्यङपक्रमिष्यामि

i.342.27 (*on* 4.31); 3 other than the subject (of inference), non-subject प्रत्यक्षाद्यनिराकृतो हि पक्ष उच्यते, न चायमीदृश इत्यपक्ष एव NyāyMañ. i.101.27; अनुमानाविषये प्रयोग इति यथाश्रुते वार्त्तिके पराभिमतापक्षधर्मत्वमेव स्फुटमपक्षस्यैवानुमानाविषयत्वात् NyāyVārPari. 260.8.

**अपक्षक** (apakṣa-ka) *adj.* 1 not having wings or feathers हिरण्यपर्णमश्वत्थमभिपत्य अपक्षकाः। ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथा दिशम् MahāBhā. v.45.9; तुरगाः ... सपक्षा देववाह्यास्ते मनुष्याणामपक्षकाः Viṣṇu-DhaP. ii.45.8; 2 not having wings in the form of knowledge MahāBhā. V.45.9; ये अपक्षकाः ज्ञानपक्षरहिताः मध्वाशिनः परिवर्तन्ते ... ते मुक्ता भवन्ति SanatBh. 297.11 (*on* 4.9); 3 not resorting to the view of optional rites अपक्षकाः प्रवृत्तिधर्मपक्षरहिताः काम्यकर्मपक्षमनाश्रिताः ViṣamaŚlo. *on* MahāBhā. v.45.9; 4 not having (two) conditions, i.e. dream and walking न विद्यते स्वापजागरलक्षणौ पक्षौ येषां तेऽपक्षकाः MahāBhāraDī. *on* MahāBhā. v.45.9.

**अपक्षगामिन्** (a-pakṣagāmin) *adj.* not taking a side, impartial अपक्षगामी नृपतिर्धर्मयुद्धं प्रवर्तयेत् Mānaso. iv.5.874.

**अपक्षगिरिसंकाश** (apakṣagiri-saṅkāśa) *adj.* appearing like a mountain without wings सैन्यम् ... अपक्षैः पक्षसंकाशैः (v.l. अपक्षगिरिसंकाशैः) रथैर्नागैश्च संवृतम् MahāBhā. vi.72.14.

**अपक्षण** (apakṣaṇa) *m.* w.r. for *apakṣāla*, DBHS.

**अपक्षति** (apa-kṣati) *f.* decline, decay, destruction, जन्मास्तित्वविवृद्धयः परिणतिश्चापक्षतिर्नाशनम् SarvaVeSāSaṁ. 460.

**[1]अपक्षति** (apa-kṣati) *adj.* who is not having destruction, without decline स भृङ्गः ... अपक्षतित्वे पदमुन्नतोन्नतं विगाहमानो दिशति स्म विस्मयम् ŚrīKaC. 3.53 (comm. भृङ्गनामा निजनामानुरूपां शोभां वहन्नपगता क्षतिः क्षयो यस्य); स्फुटपक्षपरिग्रहेण शश्वद्दधताप्याहवमूर्ध्न्यपक्षतित्वम्।... नन्दिषेणः ... सरस्वतीं ससर्ज HarVi. 15.9 (comm. अपक्षतित्वं निर्बाधता)

**[2]अपक्षति** (a-pakṣati) *adj.* which does not have roots of wings, i.e. plumage, ŚrīKaC. 3.53 (comm. स भ्रमरोऽविद्यमाना पक्षतिः पक्षमूलं यस्य तद्भावेऽप्युन्नते भ्रमन्नाश्चर्यं ददाति); HarVi. 15.9 (comm. स कथमपक्षतिरपक्षमूलः स्यादिति तु विरोधः)

**अपक्षत्व** (apakṣa-tva) *n.* 1 the state of being wingless वृद्धभावादपक्षत्वाच्छ्रण्वंस्तदपि मर्षये Rāmā. iv.57.3; 2 the state of being non-subject of an inference संदिग्धवह्निकपर्वतापर्वतधूमवतामेकधर्माभावेनापक्षत्वात् TattvCin. ii (2).22.7; सिद्धसाधनेऽपि हि पक्षधर्मत्वं न सिध्यति। सिद्धधर्मविशिष्टस्यापक्षत्वात् NyāyPari. 278.9; मोक्षहेतुज्ञानान्यद्येति तस्यापक्षत्वाय पक्षे सतीत्यन्तम् वैकल्पिकमाद्यं विशेषणत्रयम् Nyāyāmṛ. 145A.6; त्वया हि प्रातिभासिकस्य शुक्तिरूप्यादेरपक्षत्वाय सत्यन्तमाद्यं विशेषणत्रयं विकल्पेन पक्षे प्रक्षिप्तम् AdvaiSi. 41.4.

**अपक्षत्वप्रसङ्ग** (apakṣatva-prasaṅga) *m.* undesired occasion of being non-subject न तावत् पक्षे हेतोः व्याप्यवृत्तित्वं पक्षधर्मत्वम् ... साध्यस्यापि तत्र असंभवात् अपक्षत्वप्रसङ्गात् TarkSaṁ. (Ā.) 95.13.

**अपक्षत्वापत्ति** (apakṣatvāpatti) *f.* undesired contingency of being non-subject सद्रूपं शुद्धचिदेव ... तादृशतादात्म्यस्यापक्षत्वापत्तिः LaCandr. 38.9; कपालादौ तन्नाशकालावच्छेदेन घटादेरसमवायादन्यकालावच्छेदेनैव समवायात् तस्यापक्षत्वापत्तिः LaCandr. 422.27.

**अपक्षत्वापात** (apakṣatvāpāta) *m.* undesired contingency of non-subject द्वितीये अव्याप्यवृत्तित्वानधिकरणशब्देनावयवावृत्तित्वोक्तावयव्यादेरपक्षत्वापातात् Nyāyāmṛ. 88B.9; अवयववृत्तिद्रव्यत्वाद्यवच्छिन्नप्रतियोगिकभेदस्यापक्षत्वापातात् Nyāyāmṛ. 605A.5.

**अपक्षदोष** (a-pakṣadoṣa) *m.* not a defect of subject उत्तरावयवापेक्षो यो दोषः सोऽनुबध्यते। तेनेत्युक्तमतोऽपक्षदोषोऽसिद्धाश्रयादिकः PramāVār. 4.150.

**अपक्षधर्म** (a-pakṣadharma) *m.* 1 not the property of subject, i.e. not subsisting in the subject अपक्षधर्मो न हेतुः न हेत्वाभासः NyāyVār. 132.17 (*on* i.1.35); अपक्षधर्मस्य चास्य हेतुत्वं नास्तीति नैयायिकाः Bṛha. 319.8 (*on* i.1.18); ननु अपक्षधर्मस्याहेतुत्वात् न नियमार्थताशङ्का HetuBiṬ. 14.3; एकाश्रयाश्रितयोरेव गम्यगमकतोक्तेत्यपक्षधर्मस्याहेतुता NayaVi. 126.10 (*on* i.1.5); संभाव्यमानप्रतिपक्षश्चार्थो न साधनमर्हति ...। अयमपक्षधर्म एव NyāyKa. 203.12; (हेतुः) बाधायामपक्षधर्मो भवेत् TātpaṬ. (Vā.) 43.9 (*on* i.1.1); 44.21 (*on* i.1.1); 194.5 (*on* i.1.5); न चापक्षधर्मात् साध्यसिद्धिः PratyabhiVi. i.386.7 (*on* i..7.13); उत्करूपार्थव्यवस्थापने सति कालात्ययापदिष्टोऽयं प्रसङ्गहेतुस्तद्दर्शने चापक्षधर्मः NyāyVārPari. 603.1; दूष्यदूषणव्याप्तौ सत्याम् अपक्षधर्मः कल्पितदूष्यं छलम् TārkiRa. 249.2; 262.8; अविनाभावबलेनैवापक्षधर्मणामपि गमकत्वाभ्युपगमात् PramāMī. 40.20 (*on* i.2.9); 42.11 (*on* i.2.12); (हेत्वाभासानाम् ... लक्षणम्) अपक्षधर्मोऽपि विरुद्धोऽन्यत्र विपरीतज्ञानसमर्थ एव TattvCin. ii (1). 889.2; ii (1).910.4; क्व तर्ह्यस्यान्तर्भावः अविनाभावादिसंभावनायामपक्षधर्मे अन्यथात्वव्याप्ते NyāyPari. 273.8; प्रमाणविरोधे हि हेतुरपक्षधर्मो वा स्यात्। अनैकान्तिको वा NyāySu. (Ja.) 269B.5 (*on* ii.1.2); असन् इति पक्षेऽसन् अपक्षधर्मः (हेतुः) इत्यर्थः Upask. 156.1 (*on* iii.1.15); **2A** name of presumption (*arthāpatti*) गृहं तु न कथंचिच्चैत्रसंबद्धमवगम्यत इत्यपक्षधर्मः TātpaṬ. (U.) 390.24 (*on* 5 (7).12); न चाविनाभावनिश्चयेनापि गमयन्नपक्षधर्मोऽर्थापत्तिरिति युक्तम् NyāyKuA. ii (1).226.5; **2B** type or a kind of fallacy क्व पुनरप्रयोजकोऽन्तर्भवति। ... नापि निर्णये सति पक्षत्वातिपातादपक्षधर्मः NyāyKuA. i.186.2; अपक्षधर्मो हेतुर्यः सोऽसिद्धः परिकीर्तितः Mānaso. iv.2.399; अव्याप्तापक्षधर्मो द्वौ हेत्वाभासौ NyāyPari. 271.4; 271.7.

**अपक्षधर्मजनिता** (apakṣadharma-janitā) *adj.* (*f.*) produced not by the property of subject, i.e. not subsisting in the subject न चापक्षधर्मजनिता प्रतीतिरनुमानम् Kāśi. iii.128.16 (*on* 5 (5).76)

**अपक्षधर्मता** (apakṣadharma-tā) *f.* the state of not being the property of subject, i.e. not subsisting in the subject न व्याप्तिशून्यत्वं नाप्यपक्षधर्मता हेतोः TātpaṬ. (U.) 318.23 (*on* 5 (4).55); 391.19 (*on* 5 (7). 15); Kāśi. iii.166.20 (*on* 5 (7).19); अपक्षधर्मता हेतोर्नामरूपाश्रयत्वतः BṛĀraUBhVā. ii.1.607; एवमपक्षधर्मता हेतोः प्रत्युक्ता, दर्शनसंबन्धस्य पक्षधर्मत्वात् NayaVi. 242.4 (*on* i.1.8); भवेच्छब्दधर्मस्य कृतकत्वस्यापक्षधर्मता NyāyKa. 235.12; अपक्षधर्मतां निवर्तयति लिङ्गि इति TātpaṬ. (Vā.) 104.11 (*on* i.1.3); द्वितीयतृतीययोः अभिध्यानलिङ्गस्यापक्षधर्मता स्यात् ŚrutaPra. ii.354.21 (*on* ii.3.17)

**अपक्षधर्मतादोष** (apakṣadharmatā-doṣa) *m.* defect of the form of not being the propery of subject न चापक्षधर्मतादोषः। उपरिदेशस्य पूरसंबद्धदेशसंबन्धात् Kāśi. iii.167.14 (*on* 5 (7).18)

**अपक्षधर्मत्व** (apakṣadharma-tva) *n.* the state of not being the property of subject, i.e. not subsisting in the subject अथ कृष्यादीनां फलवत्तया दृश्यमानत्वादिति ततोऽप्यपक्षधर्मत्वम् TantrVār. 545.22 (*on* 2.25) नापि विशेषस्य हेतुत्वम् ... सपक्षस्थस्याप्यपक्षधर्मत्वात् TātpaṬ. (U.) 218.19 (*on* ii. 5 (2).104); 231.21 (*on* 5 (2).168); अनुमानेनापि हि सिद्धावयवेन विपर्ययेऽवगते हेत्वन्तरमसिद्धावयवं सिषाधयिषितधर्मविपर्ययेऽपि दर्शनादनैकान्तिकत्वेनापक्षधर्मत्वेन वा साध्यज्ञानं न जनयति TātpaṬ. (U.) 320.11 (*on* 5 (4).58); 343.19 (*on* 5 (4).161); न भूप्रदेशो लिङ्गमगृहीतसंबन्धस्यापि तत्प्रतीतेः अनैकान्तिकत्वादपक्षधर्मत्वात् NyāyMañ. i.47.16; विशेष एव हेतुरुच्यते, तदयुक्तम्। अपक्षधर्मत्वादन्वयाभावाच्च Kāśi. ii.63.7 (*on* 5 (2).105); iii.31.23 (*on* 5 (4).37); iii.126.19 (*on* 5 (5).68); गवयोऽप्यपक्षधर्मत्वात्र सादृश्यविशिष्टस्य गोर्लिङ्गम् Kāśi. iii.154.11 (*on* 5 (6).45); iii.210.18 (*on* 5 (8).50); रजतत्वस्य हेतोः अपक्षधर्मत्वात् Bhām. 17.19 (*on* i.1.0); यद्यपि च वाक्यार्थे साध्ये पदानामपक्षधर्मत्वम् ... तथाप्याकाङ्क्षायोग्यतासत्तिपदार्थाः संसर्गे लिङ्गं भविष्यन्ति TatpaṬ. (Vā.) 414.2 (*on* ii.1.52); अन्वयहीनत्वादपक्षधर्मत्वाद्यहेतुत्वं पूर्वसंक्षिप्तं प्रपञ्चयति NyāyRa.242.9 (*on* 5 (2).104); अस्ति गवयस्य गोसंबन्धः तस्यासौ सदृशः, तत्र कथमपक्षधर्मत्वम् NyāyRa. 447.14 (*on* 5. (6).45); किं केन संगतमपक्षधर्मत्वात् हेतोः NyāyMa. 19.1; तटस्थरजतानुसरणं तु कथमिदंकारास्पदस्योपकारहेतुभावमनुमापयेद्, रजतत्वहेतोरपक्षधर्मत्वात् NyāyMa. 72.2; न चाविनाभावनिश्चयेऽप्यपक्षधर्मत्वात् अर्थापत्तित्वम् Kiraṇā. 324.20; 'असिद्धः' हेत्वाभासः स्वरूपासिद्ध इत्यर्थः। ... अपक्षधर्मत्वादयमसिद्धः इति न मन्तव्यम् PramāMī. 54.19 (*on* ii.1.17); असंदिग्धतया पक्षत्वाभावेन तद्धर्मस्य हेतोः सिद्धसाधनवदपक्षधर्मत्वात् KhaṇḍanKhā. 646.6; असंसर्गाग्रहबलेन च तद्व्यवहारे तत्रासत्त्वाप्रतीतौ हेतोरपक्षधर्मत्वात् TattvPradī. (Ci.) 70.2; स्वशब्दस्य 'सदायतनाः सत्प्रतिष्ठाः' इति सद्विद्यावाक्यविषयत्वं चायुक्तम्, अपक्षधर्मत्वात् ŚrutaPra. ii.8.12 (*on* i.3.6); न च गवयगतं सादृश्यं लिङ्गम्, अपक्षधर्मत्वात् TattvCin. iii.46.1; सर्वेष्वपि पक्षाभासेषु हेतोरपक्षधर्मत्वात् NyāyPari. 278.5; गोगतं सादृश्यं लिङ्गम् ... नापि गवयगतम् अपक्षधर्मत्वात् YuktiSneha. 76.12 (*on* i.1.5)

**अपक्षधर्मत्वनियम** (apakṣadharmatva-niyama) *m.* law or rule of not being the property of subject, i.e. not subsisting in the subject

प्रमाणावगतसाध्यविरुद्धधर्मवतश्चापक्षत्वेन तद्धर्मस्यापक्षधर्मत्वनियमात् NyāySu. (Ja.) 269B.6 (*on* ii.1.2)

**अपक्षधर्मत्वप्रतिपादन** (apakṣadharmatva-pratipādana) *n.* explanation of the state of not being the property of subject सिद्धसाधनस्य चाश्रयसिद्धताप्रकारोऽपक्षधर्मत्वप्रतिपादनेन प्रागुक्तः NyāyPari. 285.4.

**अपक्षधर्मतापत्ति** (apakṣadharmatāpatti) *f.* undesired contingency of not being the property of subject न चैतत् संभवति। साध्यधर्माधिकरणादेरप्यभावप्रसङ्गात् अपक्षधर्मत्वापत्तेः Kāśi. iii.81.9 (*on* 5 (4).135)

**अपक्षधर्मनिवृत्तिमत्** (apakṣadharmanivṛtti-ma(n)t) *adj.* having exclusion from the property of non-subject, i.e. not subsisting in the subject न ह्यव्यापको भवत्यपक्षधर्मनिवृत्तिमान् इत्यत आह TātpaṬ. (Vā.) 290.17 (*on* i.1.35)

**अपक्षधर्मनिवृत्तिमात्र** (apakṣadharmanivṛtti-mātra) *n.* mere exclusion of what is not a property existing in the subject, i.e. not subsisting in the subject अपक्षधर्मनिवृत्तिमात्रत्वेन संभवमात्रं लभ्यते NyāyVār. 132.21 (*on* i.1.35)

**अपक्षधर्मभाव** (apakṣadharma-bhāva) *m.* the state of not being the property of the subject, i.e. not existing in the subject अन्ययानुपपत्त्यैव शब्ददीपादिवस्तुषु। अपक्षधर्मभावेऽपि दृष्टा ज्ञापकतापि च TattvSaṁ. 1378.

**अपक्षनिष्ठता** (a-pakṣaniṣṭhatā) *f.* [Inst.] by way of not being in the subject अपक्षनिष्ठतया निश्चितोऽपि संदिग्धव्याप्तिको यथा विप्रतिपन्नधर्मः निषिद्धत्वात् NyāyPari. 111.16.

**अपक्षपतित** (a-pakṣapatita) *adj.* not partial to any party, impartial नियुक्तेन तु वक्तव्यमपक्षपतितं वचः NāraSm. 40.1; (समग्रामाः ... क्षितिधारिणः) समा अपक्षपतिताः BālaKrī. i.257.9 (*on* 2.156); राजा ... अपक्षपतितो दुष्टम् इष्टं चेच्छन्नागसम् ... समदर्शी MahāP. 42.200; अपक्षपतिताः शान्ताः ... ते पश्यन्ति जगत्पतिम् NaraP. 64.86.

**अपक्षपय्य** (apakṣapay-ya) *ger.* having caused to decrease (सोमं राजानमाप्यायस्वापक्षीयस्वेति) अपक्षीयस्वेति अपक्षपय्येत्यर्थः VedāntKa. 347.23 (*on* iii.1.6)

**अपक्षपरा** (apakṣa-parā) *adj.* (*f.*) being on the opposite side, opposing (ते तनुः) स्थिरासुरापक्षपरा ... विभाति ĪśvaŚ. 21 (comm. प्रतिपक्षभूता)

**अपक्षपात** (a-pakṣapāta) *m.* lack of adopting a side, impartiality कश्चिद्विदितोऽर्थेषु बलिनो दुर्बलस्य च। अपक्षपातात्पश्यन्ति कार्येष्वधिकृता नराः Rāmā. ii.2161* (2) अपक्षपातोऽर्थिषु ... पञ्चैव यज्ञाः कथिता नृपाणाम् AtriS. 28; YogYā. 2.33; BhavasantāraṇaU. 5.13; SiṁhāDvā. 84.2; सम्येष्वपक्षपातस्तु तथा साक्षिषु सत्यवाक् ŚukraNī. 3.239. [Inst.] by way of not adopting a side, by way of impartiality अपक्षपातेन यदर्थनिर्णयस्तदेव धर्मः किमपि क्षमामुजाम् KaumuMi. 9.6; अपक्षपातेन परीक्षमाणा द्वयं द्वयस्याप्रतिमं प्रतीमः। यथास्थितार्थप्रथनं तवैतत् MahāViSt. (H.) 2.22; कुकथात्वप्रकाशनेनापक्षपातेन च द्वावपि निगृह्णन्ति (वादिप्रतिवादिनौ) NyāyPari. 269.4; प्रजा अपक्षपातेन स्वप्रजा इव पालिताः RājTa. (Jo.) 643; पक्षपाती समयस्तथा नः। इति तन्निरस्तम्। अपक्षपातेन समस्तसमयोक्तसत्त्वादिविशेषाभ्युपगमे तत्तद्दुष्टवितासत्त्वादिपक्षदोषाणामप्यभ्युपगन्तव्यत्वापत्तेः ŚivārkaMaDī. ii.102.31 (*on* ii.2.31); अपक्षपातेन श्रुतिस्मृतिपुराणागमान् विमृशतां शिवेन नारायणस्य साम्यं न प्रत्याख्यातुं शक्यम् ŚivārkaMaDī. ii.268.26 (*on* iii.2.35)

**अपक्षपाततस्** (apakṣapāta-tas) *adv.* by way of not adopting a side, by way of impartiality मायामयं जगत्तस्मादीक्षस्वापक्षपाततः PañcDa. 6.142;

**अपक्षपातपतित** (a-pakṣapātapatita) *adj.* not induldged in partiality, impartial तत्र युक्तमयुक्तं वा ... स्वयमेव विचार्यताम्। अपक्षपातपतितैर्विद्वद्भिर्वस्तुसिद्धये BṛĀraUBhVā. iv.3.1204.

**अपक्षपातम्** (apakṣapātam) *adv.* without adopting a side, impartially अत्र च मयीव तस्यामप्यपक्षपातं दर्शितदर्पे कंदर्पे तत्र भगवत्या ... मामुपगम्य Mukundā. 218 (17)

**अपक्षपातिता** (apakṣapāti-tā) *f.* the state of not adopting a side, impartiality प्रजाप्रक्षोभादिदृष्टस्पष्टदोषभयादवश्यमपक्षपातिता संभवति ViraMi. (Vyavahāra.) 30.30.

**अपक्षपातित्व** (a-pakṣapātitva) *n.* the state of not being partial, impartiality अपरे ... अविशेषज्ञतापक्षपातित्वमिति दोषानपि गुणपक्षमध्यारोपयद्भिः ... प्रतार्यमाणाः Kād. 108.6; ब्रह्मणः अपक्षपातित्वात् अविद्वान् गच्छति न गच्छतीति द्वितीयः (अनुप्रश्नः) TaiUBh. 255.17 (*on* 2.6); प्रामाण्यस्यापक्षपातित्वात्परस्येव तवापि तत्तिद्धिर्भवतु NyāyMañ. i.94.30; अन्यतरासिद्धेर्न विवदन्ते प्रमाणस्यापक्षपातित्वात् NyāyMañ. ii.162.28; तदेव शास्त्रं 'कंचित्प्रति प्रमाणं कंचित्प्रति न' इति स्यात्, न चैतयुक्तम्, अपक्षपातित्वात् प्रमाणस्य PratyabhiVi. ii.86.9 (ii.3.2); अथ तत्र तथाप्रतिभासः समाधानम्, परस्यापि तदेवास्तु प्रतिभासस्यापक्षपातित्वात् PramāMī. 28.20 (*on* i.1.32); (पदार्थः) यस्तु स्वशास्त्रोक्तविरुद्धः शास्त्रान्तरीयः सोऽपि प्रमाणस्यापक्षपातित्वादेकद्वारकत्वे सति तुल्यबलत्वात् ... गृह्यमाणो नातीवानीचित्येन नैयायिकानां संमतः CaturCin. iii (1). 755.21.

**[1]अपक्षपातिन्** (a-pakṣapātin) *adj.* adopting the side of *a*, i.e. Viṣṇu अपक्षपातिनापि हंसेन ... पौरजनेनानुगतम् ... कुसुमपुरं नाम नगरम् VāsaDa. 113.1 (comm. अकारे विष्णौ पक्षपाती)

**[2]अपक्षपातिन्** (a-pakṣapātin) *adj.* [*f.* –inī] 1 not flying with wings अपक्षपातिनापि हंसेन ... पौरजनेनानुगतम् ... कुसुमपुरं नाम नगरम् VāsaDa. 113.1 (comm. न पक्षेण गरुता पततीत्यपक्षपाती); 2 not adopting a side, i.e. impartial अपक्षपातिनः सभ्याः सत्यमुत्पत्त्यपेक्षया। शब्दस्य कल्पनामाहुरभिव्यक्तौ लघीयसीम् NyāyMañ. i.199.21; अपक्षपातिनः प्राज्ञाः सामन्ता यावतस्त्वं विनष्टं परिभाव्य ब्रूयुः तावत्क्षेत्रिणे गोमी दद्यात् Aparā. 770.3 (*on* 2.161); नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तया ते MahāViSt. (H.) 1.30; अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम् ŚrutaPra. ii.114.18 (*on* i.4.8); अभावरूपविशेषणमात्रवैशिष्ट्यमनुमन्यामह इति त्वपक्षपातिनस्ते न युक्तम् ŚatDū. 166.13.

**अपक्षपुच्छ** (a-pakṣapucchá) *adj.* not having wings and tail स वा एषोऽग्निरपक्षपुच्छो वायुरेव TaiBr. III.x.11.7; नेन्महदवं कटवाग्नीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्यात् ŚatBr. XIII.viii.1.18; अथैक एकविधप्रभृतीनपक्षपुच्छाञ्श्चिन्वते BaudhŚuS. 2.14; नापक्षपुच्छःश्येनो विद्यते BaudhŚuS. 2.21.

**अपक्षभूत** (apakṣa-bhūta) *adj.* which has become non-subject न अपक्षभूते धर्मिणि वर्तमानस्याश्रयासिद्धिरेव स्यात् TārkiRa. 230.3.

**अपक्षय** (apa-kṣaya) *m.* 1A decay of parts, i.e. destruction ब्रह्माव्ययं नित्यमजं स विष्णुरपक्षयाद्यैरखिलैरसङ्गि ViṣṇuP. i.15.57; BrahmP. 178.116; नापक्षयं च समुपैत्यविकारि वस्तु ViṣṇuP. vi.8.60; परिणामः अपक्षयो नाशः उत्तरावस्था जरा, देहाभावे ... तदुभयनिषेधे अर्थाद्यौवनम् LalitāTriBh. 343.19 (*on* 52); जन्मवृद्धिपरिणत्यपक्षयव्याधिनाशनविहीनमव्ययम्। ... ब्रह्म तत्त्वमसि Vive Cū. 260; अपक्षयस्त्ववयवह्रासो नाश एव Bhām. 66.19 (*on* i.1.2); अपक्षयस्य विनाशान्तर्भावमाह VedāntKa. 51.7 (*on* i.1.2); यद्यपि वृद्धिपरिणामापक्षयाः त्रयो भावविकाराः जन्मस्थितिनाशव्यतिरेकेण प्रसिद्धाः तथापि वृद्धिर्जायते VivaPraSaṁ. 258.18; परेशमेव भगवान्बादरायणः फलप्रदं मन्यते ... कर्मणः करणत्वेनोपक्षयाद GoviBh. 218.3 (*on* iii.2.42); 1B decrease, reduction, wane, decline चमसस्यं भक्षणेन अपक्षयं च कृत्वा पुनः पुनर्भक्षयन्ति BṛĀraUBh. 782.11 (*on* vi.2.15); नापि गुणक्षयेण अपक्षयः, निर्गुणत्वात् GītāBh. (Śaṅ.) 33.19 (*on* 2.20); आप्यायनापक्षयौ यथा सोमस्य तथा भक्षयन्ति Bhām. 530.9 (*on* iii.1.6); सुवर्णस्य दह्यमानस्य नैवास्त्यपक्षयः Aparā. 784.6 (*on* 2.178); 1C decay, distruction जन्मास्तित्ववृद्धिपरिणामापक्षयमरणात्मका विकाराः षड्विधाः VedāntRaMañ. 1.4 (43.24); संप्रदायोऽथ विश्रम्भो विश्वासोऽथ क्षये (v.l. सोऽपक्षये) क्रिया KalpaK. 239.40.

**अपक्षय** (apa-kṣaya) *adj.* having a decay वीर्यमपक्षयमस्य ज्ञात्वा द्रोणस्य वैरिपक्षयमस्य। चिन्तां राजेयाय प्रदातुमस्मै ददौ पराजेयाय YudhiVi. F.N. 7.132.

**अपक्षयप्रतिषेध** (apakṣaya-pratiṣedha) *m.* negation of decay or destruction श्रुतावमर इत्यपक्षयप्रतिषेधः VedāntKa. 221.6 (*on* i.4.22)

**अपक्षयभाज्** (apakṣaya-bhāj) *adj.* having the waning or reduction अपक्षयभाजो वै पितरः KauṣīBr. 5.6 (20.21)

**अपक्षयरहित** (apakṣaya-rahita) *adj.* devoid of decay or destruction अजं जन्मरहितम् अव्ययम् अपक्षयरहितं कथम् ... हन्ति GītāBh. (Śaṅ.) 34.18 (*on* 2.21)

**अपक्षयलक्षणा** (apakṣaya-lakṣaṇā) *adj.* (*f.*) having the nature of decrease or reduction अशुभेन कर्मणा नो कनीयान् नाप्यपक्षयलक्षणां विक्रियां प्राप्नोति BṛĀraUBh. 654.13 (*on* iv.4.23); अपक्षयलक्षणा विक्रिया प्रतिषिध्यते GītāBh. (Śaṅ.) 33.17 (*on* 2.20)

**अपक्षयविनाश** (apakṣaya-vināśa) *m.* decay and destruction अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः। वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ViṣṇuP. i.2.11; स्वाभाविकमिदं रूपम् ... अपक्षयविनाशादिरहितम् ... मम AhirbuS. 44.30.

**अपक्षयविपरीता** (apakṣaya-viparītā) *adj.* opposite to decrease or reduction अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते GītāBh. (Śaṅ.) 33.19 (*on* 2.20)

**अपक्षयविवर्जित** (apakṣaya-vivarjita) *adj.* devoid of decay or destruction अतोऽयमात्मा अजो नित्यः शाश्वतः अपक्षयविवर्जितः KāṭhUBh. 132.18 (*on* 2.18)

**अपक्षयहेतु** (apakṣaya-hetu) *m.* cause of decay स्थित्यापि यास्यतोऽवस्थापनं केवलमपक्षयहेतुः NītiVā. 13.12.

**अपक्षयाभाव** (apakṣayābhāva) *m.* absence of decrease or decline of parts, i.e. destruction (अक्षरम्) तदव्ययमक्षयाभावात् ... भूतकारणं धीराः परिपश्यन्ति PrakaVi. 197.22.

**अपक्षयित** (apa-kṣayita) *adj.* destroyed, i.e. cured आतुरान्तकेन नृपतेर्लोचनद्वयं क्षारचूर्णेन निर्माज्य जलौकाशतं प्रदाय श्लेष्मा अपक्षयितः Hāsyārṇa. 1.36 (12)

**अपक्षय्य** (apakṣay-ya) *ger.* having destroyed अपहत्य पाप्मानम् अपक्षय्य धर्माधर्मौ इत्यर्थः KenUVāBh. 97.11 (*on* 4.9)

**अपक्षराग** (a-pakṣarāga) *adj.* not having attachment to any side, impartial सुबुद्धिः। अपक्षरागः ... चिरं परीक्ष्यैतदवोचदर्थम् VarāṅgaC. 12.16.

**अपक्षलोप** (a-pakṣalopa) *m.* absence of loss of wings गिरिरिव गतिमानपक्षलोपाद् अनुतटपुष्पितकर्णिकारयष्टिः (एष विभाति) Vikramo. 3.3.

**अपक्षवत्** (a-pakṣava(n)t) *adj.* not having a side or party रिपुबलार्णवमुत्क्रमितुं पुनर्नृप न शक्यमपक्षवतस्तव VarāṅgaC. 20.24.

**अपक्षवर्तमानत्व** (a-pakṣavartamānatva) *n.* absense of the state of being present in the subject ननु यथा सिद्धसाधनमात्माश्रयः अपक्षवर्तमानत्वात् तथा बाधितोऽप्यपक्षवर्तित्वादाश्रयासिद्धो भवतु SarvaDaKau. 48.23.

**अपक्षवर्तित्व** (a-pakṣavartitva) *n.* absence of the state of being present in the subject तथा बाधितोऽप्यपक्षवर्तित्वादाश्रयासिद्धो भवतु SarvaDaKau. 48.24.

**अपक्षविशेषणत्व** (a-pakṣaviśeṣaṇatva) *n.* absense of the state of being a qualification of proposition अथ प्रत्यभिज्ञानं तद्वावाद्भवतीति पक्षस्तथाप्यन्यो हेतुर्वक्तव्यः। किं कारणम् प्रत्यभिज्ञानस्यापक्षविशेषणत्वे नोपयुक्तत्वात् NyāyVār. 305.1 (*on* ii.2.33)

**अपक्षवृत्तित्व** (a-pakṣavṛttitva) *n.* absence of the state of being present in the subject तेनापक्षवृत्तित्वं दर्शितं भवति ŚrutaPra. iB. 320.22 (*on* i.2.19)

**अपक्षसाद** (a-pakṣasāda) *m.* absence of loss of wings इत एव प्रस्थितो देवः ... गिरिरिव गतिमानपक्षलोपात् (v.l. अपक्षसादात्) Vikramo.3.3.

**अपक्षस्थत्व** (a-pakṣasthatva) *n.* absence of the state of being present in the subject उपाधेरपक्षस्थत्वं दर्शयति आत्मनस्त्विति ŚrutaPra. i.B.65.23 (*on* i.1.1)

**अपक्षाग्रणी** (a-pakṣāgraṇī) *adj.* not the first of the fortnight मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् KāvyPra. 130.2 (comm. प्रतिपत् प्रथमा तिथिः अथ च अपक्षाग्रणीः पक्षस्यादिभूता नेति विरोधाभासो व्यङ्ग्यः)

**अपक्षाण** (apa-kṣāṇa) *adj.* (used as noun) (wood) which is burnt out यदि होमकाल आहवनीयोऽनुगच्छेत्प्राण उदानमप्यगादिति गार्हपत्ये जुहुयादपक्षाणानि संनिधाय मन्थेत् VaikhāŚS. 20.17 (VIŚVA. F.N. दग्धकाष्ठम्)

**अपक्षाण** (apa-kṣāṇa) *n.* extinction of fire (यद्याहितानेरग्निरपक्षायेदा शम्यापरासात्परि वाजपतिः ... इति त्रिः प्रदक्षिणं परिक्रम्य तं संभरेत्) कृत्स्नाग्न्यपक्षाणे एव चायं विधिः comm. on ĀpaŚS. ix.1.17.

**अपक्षादिभूत** (a-pakṣādibhūta) *adj.* which has not become the subject etc. अज्ञानद्वारिकायां त्वविषयवृत्तित्वम् अज्ञानं हि पक्षादेर्दोषः न त्वनुपन्यस्तत्वेना-पक्षादिभूतस्येति TārkiRa. 280.14.

**अपक्षामम्** (apakṣāmam) *adv.* beyond eyesight पृषता वरत्राकाण्डेन सोमविक्रयिणमपक्षामं नाशयति HirŚS. vii.2.86 (644.27) (comm. परोक्षम्... गमयति) (*but* without destruction, VIŚVA.; wasting away, Sūryakānta)

**अपक्षायत्** (apa-kṣāyat) *adj.* going away संवेशनस्तनु वै चारुरेधि प्रिये देवानां परमे जनित्र इत्यन्वाहिताग्नेरग्निमपक्षायन्तमा शम्यापरास्तात्संभरेत् HirŚS. xv. 1.18 (266.26) (comm. आयतनादपगच्छेत्); xv.1.19 (267.5); तत्रेष्टिं समाप्य-तावाच्छम्याप्रासादपक्षायन्तमाहवनीयं परिव्राजपतिरिति प्रदक्षिणं कृत्वा ... संभरेत् VaikhāŚS. 20.2.

**अपक्षाल** (apa-kṣāla) *m.* defect, fault, failing, sin (*lit.* throwing away) तस्य ये पूर्वके निर्निमित्ते विहारे चत्वारोऽपक्षालास्ते प्रहीणा भवन्ति BodhiBhū. 239.23; अष्टापक्षालमुक्तत्वादानिञ्जं तु चतुर्थकम्। वितर्कचारौ श्वासौ च सुखादि च चतुष्टयम् AbhidhK. 8.11; अत एवोदारकुशलपक्षविवर्जनतापक्षाल इत्युच्यते ŚikṣāSa. 145.6; सात्मीभावाद्य मार्गस्य सर्वापक्षालनाशिनः। न यत्नेन विना हानिर्यत्नो न गुणदर्शनात् TattvSaṁ. 3439 (comm. अपक्षालः दोषः); अपक्षालः MahāVyu. 245.664; [*but* transgression, evil, calamity, DBHS.]

**अपक्षालसाधर्म्य** (apakṣāla-sādharmya) *n.* similarity of fault or sin ध्यानत्रयं द्वितीयादि शीर्षं तासां यथाक्रमम्। तदपक्षालसाधर्म्यात् AbhidhK. 3.101.

**अपक्षि** (apa-kṣi-) I.P. **1** to wane, to decrease, to diminish, to decline नानुगच्छति तस्याग्निर्न विष्यन्दयते हविः। नापक्षयति सन्त्रस्तो न निर्मन्थे विलम्बते ŚiVLī. 4.6; (pass.) to be waned, to be decreased, to be diminished, to be declined अर्द्धमासौ वै मित्रावरुणौ य आपूर्य्यते स मित्रो योऽपक्षीयते स वरुणः PañcBr. xxv.10.10; यु एवापूर्यतेऽर्धमासः सु आग्नेयो योऽपक्षीयुते सु सौम्यः ŚatBr. I.vi.3.24; यु एवापूर्युते तं देवा उपावृन्योऽपक्षीयुते तमुसुराः ŚatBr. I.viii.2.22; ŚatBr. (K.) II.vi.4.18; यु एु वापूर्यतेऽर्धमासः सु देवा योऽपक्षीयुत सु देवा योऽपक्षीयुते सु पितरः ŚatBr. II. i.3.1; ŚatBr. (K.) I.i.3.1; चन्द्रमाः पञ्चदशाहान्यापूर्यते पञ्चदशापक्षीयते ŚatBr. VIII. iv.1.10; स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते ŚatBr. VIII. iv..1.10; स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते ŚatBr. XIV. iv.3.22; XIV. iv.3.23; यु एवापक्षीयुते सु मित्रो यु आपूर्युते स वुरुणः ŚatBr. (K.) I.iii.14.10; यु एवायुमपक्षीयुेऽर्धमासु एुष आग्नेयो यु आपूर्यते सु सौम्यः ŚatBr. (K.) II.vi.1.17; स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते स वित्तेनैवा च पूर्यते अप च क्षीयते BṛĀraU. i.5.14-15; **2** to pass, to expire, cf. **अपक्षीण1**; **3** to destroy, cf. **अपक्षीण2B**.

**अपक्षिक** (apakṣi-ka) *adj.* wingless हिरण्यपर्णमश्वत्थमभिपत्य अपक्षकाः (v.l. ह्यपक्षिकाः) ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् MahāBhā. v.45.9.

**अपक्षिगणसंघात** (apakṣigaṇa-saṅghāta) *m.* combination of the group of non-birds अपक्षिगणसंघाते जगत्येकार्णवीकृते। कीदृग्रूपः समभवन्महादेवो युगक्षये SkandP. v. (3).5.5.

**अपक्षिगणसंपात** (a-pakṣigaṇasaṁpāta) *adj.* **A** not accompanied by the group of birds अपक्षिगणसंपातो वानरेन्द्रो महाजवः। ... सागरान्सर्वान्संध्या-कालमवन्दत Rāmā. vii.34.26; **B** free from the flight of birds अपक्षिगणसंपाते सर्वप्राणिहरे पथि। ... हृषीकेशः शयनायोपचक्रमे MatsyaP. 247.25.

**अपक्षित्** (apa-kṣit) *adj.* defeating यस्त्वा पृतन्यो यदुलूकान्युततान् अपक्षितः स मे ध्रियमाणम् आ वहद् अप द्वेषस् परा वहत् AV. (P.) xx. 54.6.

**अपक्षित** (apakṣita) *m.* name of people, PW.

**अपक्षित** (apa-kṣita) *adj.* **A** spent, passed एवंविधैरहोरात्रैः कालगत्योपलक्षितैः। अपक्षितमिवास्यापि परमायुर्वयः शतम् BhāgP. iii.11.32; **B** wasted दुष्टु मिथ्या क्षितोऽपक्षितः GaṇRa. 1.36 (66)

**अपक्षित्य** (apakṣit-ya) *ger.* having waned, having decreased आपः परस्य त्रेर अयः स्वाद्वा यपि (v.l. अपक्षित) MugdhaBo. 26.216 (293.21) (v.l.)

**अपक्षिन्** (a-pakṣin) *adj.* wingless यथैव पङ्गुरध्वानमपक्षी चाण्डजो नभः। एवं छन्दोगगुरुणा राजा वृद्धिं न गच्छति AVPari. ii5.1.

**अपक्षिन्** (a-pakṣin) *m.* non-bird गवादयोऽपक्षिणः चतुष्पाज्जातिवचनः पशुशब्दः ManuBh. i.439.13 (*on* 5.40); असमर्थावावामपक्षिणं जलचरं त्वां सह नेतुम् Pañcā. 85.17

**अपक्षिप्** (apa-kṣip-) VI.P. **1A** to drive away, i.e. to blow संतऽइति वा तमपक्षिपति KātyŚS. xvi.3.3; **1B** to throw away सव्ये हस्ते प्रस्तरं समस्य ... त्वेषं वचो अपावधीम् इत्यधिक्षिपति (v.l. इत्यपक्षिपति) VādhūŚS. vi.12.58 [Chaubey Ed.]; रक्षांसि ... अपक्षिपन्ति सुभाण्डान् Rāmā. ii.108.17; **1C** to let down उत्क्षिपति अपक्षिपति हस्तमिति ये पूर्वोत्तरे क्षणाः ते क्रमवन्तः

PratyabhiVi.ii.10.4 (ii.1.2); **2A** to take out, to extricate व्रणे रोहति चैकैकं शनैर्वालमपक्षिपेत् SuśruS. iv.2.71; **2B** to refute, to exclude नित्येति क्षयितालक्षणं दुःखमुपक्षिपति (v.l. अपक्षिपति) Bhām. 60.12 (*on* i.1.1) (NSP. Ed.); द्वितीयं पक्षमपक्षिपति 'नापि दोषापनयनेन' ति Bhām. 95.17 (*on* i.1.4); **2C** to remove नीवीस्पर्शे सुहृल्लेखमपक्षिपति तत्करम् BhāvPra. (Śā.) 116.17 (5); (pass.) to be removed निगमनेऽपि हेत्वनुवादेन तस्मादेव नान्यस्मादिति सिद्धसाधनतापक्षिप्यते NyāySu. (Ja.) 263B.2. (*on* ii.1.2); **3** to blame अस्यैव च दुरात्मनः कृतघ्नस्य कृते(?)रपरभवनाद्वारस्थगळग्रहाननुभवन्ति ... गुरूनपक्षिपन्ति ... दुर्मतयः AvantiKa. 41.3; **4** to put or sing in low pitch cf. **अपक्षेपिन्**; *adj.* (*f.*) (used as noun) (girl) who is throwing away उदकाञ्जलिं निनयेत्याह। प्राचीनमपक्षिपन्त्यां कल्याणम् KauśiSū. 37.12

**अपक्षिप्त** (apakṣipta) *adj.* **1** set aside, refuted, excluded एतेनानुमानादिज्ञानमपक्षिप्तं भवति NyāyVār. 42.18 (*on* i.1.4); **2** censured, blamed भूमिदानमपक्षिप्तं तद्वतं प्रणिपीडनात्। प्राणिघातनिमित्तेन पुण्यं पापाणतः पयः PadmP. (Ra.) 14.75; द्विजः ... नाक्षिप्तोऽपि विरज्येत (v.l. नापक्षिप्तोऽपि भायेत) Vedavyāsm. 1.28; **3** thrown away, thrown down अपक्षिप्तस्य मुसलस्यान्त्येन कर्मणा उलूखलमुसलसमवेतो मुसलस्योत्पतनहेतुः संयोगः क्रियते NyāyKa. 299.20.

**अपक्षिभाव** (apakṣi-bhāva) *m.* the state or condition of being a non-bird कपोतरूपिणं प्राप्तं हिमवत्कन्दरेऽनलम्। अपक्षिभावसंक्षुब्धम् RasRaSa. 1.63.

**अपक्षी** (apa-kṣī) IV.U. [it is not recorded in the Dhātupāṭhas; also it is shortened in the present system by P.vii.3.80; P.vi.4.49; according to MW. क्षी is derived from क्षीण; Dhātupātha xxxi.35; Palsule [Dhātupāṭha] justifies the root क्षी to explain the forms like क्षीयते] to wane, to decrease, to reduce TaiS. III. v.1.4 यत् पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालम्भेतामुमपक्षीयमाणमन्वपक्षीयेत तांस्तत्र देवा यथा सोमं राजानमाप्याययस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति ŚatBr. XIV. ix.1.19; देवाः ... प्रातर्भक्षयिष्यन्तस्तमेतद्भक्षयन्ति यदपक्षीयते ŚatBr. (K.) I.iii.4.9; असौ योऽपक्षीयति। स सर्वेषां भूतानां प्राणैरपक्षीयते TaiĀ. i.14.2; षड्भावविकारा भवन्ति ... जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते Nir.1.2 (29.6); असौ योऽस्तमेति। असौ योऽपक्षीयति। एष हि देवः प्रदिशोऽनुसर्वाः पूर्वो हि जातः स उ गर्भे अन्तः SūryaTāU. 1.10; स्वयोन्यन्नागमे हि शरीरमुपचीयते, अन्नमयत्वात्, विपर्यये अपक्षीयते पतति BṛĀraUBh. 275.1 (*on* ii.2.1); यथा सोमं राजानमिह ऋत्विजः आप्यायस्व अपक्षीयस्वेति भक्षयन्ति BṛĀraUBh. 782.7 (*on* vi.2.15); न अपक्षीयते स्वरूपेण, निरवयवत्वात् GītāBh. (Śaṅ)33.18 (*on* 2.20); यो ह्याश्वतः सोऽपक्षीयते KaṭhUBh. 132.18 (*on* 2.18); नैव प्रत्यग्जायते वर्धते नो किञ्चिन्नापक्षीयते नैव नाशम् SarvaVeSāSaṁ. 459; **2** to die यदि सत्रेऽपक्षीयेत मुख्यः सामायिकः सामयिकान्यतमः पूर्ववमुख्यसामयिकत्वेन वरणम् PārāSū. 70.18.

**अपक्षी** (apakṣī) IX.Ā. to wane, to decrease, to reduce मास्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठाः ŚāṅkhāĀ. 4.9 (16.8); मा मम प्राणैरपक्षेष्ठाः TaiĀ. i.14.2.

**अपक्षीकृत** (a-pakṣīkṛta) *adj.* (used as noun) (that) which is not made as subject शाखाभङ्गजशब्दानाम् ... यद्यपक्षीकृतानामपि कारणान्तरादनित्यत्वं भवति कामं भवतु TātpaṬ (Vā.) 687.11 (*on* v.1.28); असिद्धिर्दोष एव न त्वपक्षीकृतस्येति TārkiRa. 280.7.

**अपक्षीण** (apa-kṣīṇa) *adj.* **1** passed, expired कृते युगे ह्यपक्षीणे लुप्तो धर्मः सनातनः LaViṣṇuSm. 1.2; **2A** decreased, declined, reduced असमर्थावावामपक्षि(?क्षी)णं जलचरं त्वां सह नेतुम् Pañcā. 85.17; **2B** decayed, destroyed न हि गृहदाहविप्लुष्टस्य ध्यानादेरिव वा अपक्षीणस्य तस्यास्ति नाशव्यवहारः GoviBh. 296.1 (*on* iv.1.16)

**अपक्षीय** (apakṣī-ya) *ger.* **A** having destroyed अप क्षीय दुरितम् अहम् **B** having waned आपः परस्य जेर् अप रक्षांसि तेजसा AV. (P.) v.14.6; अयः स्याद्वा यपि (v.l. अपक्षीय) MugdhaBo. 26.216 (293.21)

**अपक्षीयमाण** (apa-kṣīyamāṇa) *adj.* **1** waning, decreasing or reducing यत् पौर्णमासीं पूर्वामालभेत ... अमुमपक्षीयमाणमन्वपं। क्षीयेत TaiS. III.v.1.3; संस्थिते गोष्टोमे पौर्णमासं निर्वपन्ते, ते तमपक्षीयमाणं पौर्णमासेन यन्ति PañcBr. xxv.10.8; ते तमापूर्यमाणं ते तमपक्षीयमाणमिति च कृत्स्नवत्पक्षाभिधानम् LāṭyāŚS. x.16.2; अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वम् BrahmSūBh. (Śaṅ.) 407.12 (*on* ii.2.35); अपक्षीयमाणमात्मबलं च निरीक्षितुमपि अतितिक्षवः ... महासुराः NīlaVi.20.18; (used as noun) (that) which is waning, decreasing or reducing तस्मात्पञ्चदशापूर्यमाणस्य रूपाणि पञ्चदशापक्षीयमाणस्य ŚatBr.X.iv.2.17; तस्यैषा परिचक्षा यदपक्षीयमाणे सुत्यां गच्छन्ति JaimiBr.2.373; आपूर्यमाणे उदधिः स्वत एवाभिपूर्यते। ततोऽपक्षीयमाणेऽपि स्वात्मन्यैवापकृष्यते VāyuP. i.49.127; **2** being deprived, being lost गुरुणाभिमृता अन्यतोऽवापक्षीयमाणा अमावास्यायां शान्तिकर्म कुर्वीरन् ĀśvaGS. iv.6.1; **3** passing (time) स खल्वेतं पक्षमपक्षीयमाणः पक्षमनधीयान उपश्राम्येता दर्शात् KauśiSū. 139.13.

**अपक्षीयमाणपक्ष** (apakṣīyamāṇa-pakṣa) *m.* dark-half of the waning (moon) या अपक्षीयमाणपक्षस्य रात्रयस्ताः सर्वा अमावास्यां सम्पद्यन्ति ŚatBr. XI.i.7.4; अथ ये यज्ञेन ... लोकं जयन्ति ते धूममभिसंभवन्ति ... रात्रेरपक्षीयमाणपक्षम् ŚatBr. XIV. ix.1.19; तमेतमपक्षीयमाणपक्षं पौर्णमास्येन यन्ति ŚāṅkhāŚS. xiii.29.9; आर्तिजान्यन्यायेयानि व्याख्यास्यामः ... विपक्षेऽपक्षीयमाणपक्ष इति BaudhŚS. iii.200.12; iii.200.15; ततः अपक्षीयमाणपक्षम् अपक्षीयमाणपक्षदेवताम् ... प्रतिपद्यन्ते BṛĀraUBh.782.3 (*on* vi.2.15)

**अपक्षीयमाणपक्षदेवता** (apakṣīyamāṇapakṣa-devatā) *f.* deity of the dark half of the waning (moon) ततः ... अपक्षीयमाणपक्षदेवताम् ... प्रतिपद्यन्ते BṛĀraUBh. 782.3 (*on* vi.2.15)

**अपक्षीयमाणपक्षदीक्षित** (apakṣīyamāṇapakṣa-dīkṣita) *adj.* initiated in the dark half of waning (moon) अपक्षीयमाणपक्षदीक्षितोऽनुकल्पेन परिचरेदादशम्याः PārāSū. 15.10

**अपक्षुध्** (apa-kṣudh) *adj.* [from *apa-kṣudh-*] **1** hunger नित्यम् ... अपक्षुधमन्नपानम् ... इति कुम्भदासीनां लाभातिशयः KāmSū.6.5 (348.3); अन्नमपक्षुधमुक्तम् ... इत्यं लाभातिशयो ज्ञातव्यः सर्ववेश्यानाम् KandaCū. vi.5.23; **2** word or expression *apakṣudh* अपक्षुधमिति अकदर्थितत्वात्क्षुधमपनयति JayaMa. 348.6 (*on* 6.5)

**अपक्षुध** (apa-kṣudha) *adj.* [from *apa-kṣudhā*, VIŚVA] which removes hunger प्राच्यै त्वा दिशे निर्वपामि शतधारम् अपक्षुधम् AV.(P.)xvi.93.1-10; xvi.94.1-7; xvi. 95.1-9.

**अपक्षेप** (apa-kṣepa) *m.* **1A** foul throw (in gambling) यतो वा शक्नुयाद् आक्षिकवदपक्षेपेणास्य प्रहर्तुम् ... ततो वा गच्छेत् ArthŚā.iii.175.8 (12.5); **1B** act of throwing downwards (as one of the five motions) उत्क्षेपणमपक्षेप आकुञ्चनमथापरम्। ... भिद्यते कर्म पञ्चधा TārkiRa.157.6; **2** destruction नाल्पं महद्वापक्षेपोपायज्ञस्य NītiVā.10.152 (comm. अपक्षेपशब्देन विनाशः कथ्यते); **3** rejection, disdain वल्लभस्य आयासनमपक्षेपेण ... ईर्ष्यारोषाभिव्यञ्जकम् Kāvyānu. (He.) 138.17.

**अपक्षेपण** (apa-kṣepaṇa) *n.* **A** act of throwing down (as one of the five motions) उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चैव कर्माणि PadārthaSaṁ. 11.3; तद्विपरीतसंयोगविभागकारणं कर्मापक्षेपणम् PadārthaSaṁ. 291.17; 292.16; अधोदेशसंयोगकारणमूर्ध्वदेशविभागकारणं कर्मापक्षेपणम् NyāyKa. 291.19; LaKṣaṇā. 12.7; कर्म ... तच्चोत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदात् पञ्चधा TarkBhā. (Ke.) 75.12; SarvaDaSaṁ. 10.73; TattvPrakā. 97B.4 (*on* ii.2.11); TarkKau. 1.11; अधोदेशसंयोगहेतुः कर्मापक्षेपणम् TarkKau. 20.4; TarkSaṁ. (A) 60.13; तच्च पञ्चधा भिद्यते उत्क्षेपणमपक्षेपणमाकुञ्चनम् ... चेति SarvaDaKau. 59.3; YatindraDī.34.11; TarkSaṁ.(A)5.16; ततो हस्तमुसलयोरधोदेशसंयोगहेतुभूता क्रिया जायते तदपक्षेपणम् SarvaDaKau.60.9; उत्क्षेपणं ततोऽपक्षेपणम् BhāṣāPa.6; **B** act of letting or bringing limb downwards गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः। प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् AṣṭāHṛ. i.12.7 (comm. अङ्गस्य अधोनयनम्)

**अपक्षेपणकर्मन्** (apakṣepaṇa-karman) *n.* act of letting or bringing down हस्तमुसलयोर्युगपदपक्षेपणकर्मणी भवतः NyāyKa. 299.19.

**अपक्षेपणत्वादि** (apakṣepaṇatvādi) *adj.* the state of being the act of throwing down etc. एवमपक्षेपणत्वादीनां लक्षणं कर्तव्यम् SarvaDaSaṁ. 10.76.

**अपक्षेपणरूप** (apakṣepaṇa-rūpa) *adj.* [*f.* -ā] of the form of an act of throwing down क्रिया उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनरूपाः अनित्याश्च NyāySu. (Ja.) 337B.9 (*on* ii.2.6); पूर्वोत्तरे उत्क्षेपणापक्षेपणरूपाः क्षणाः क्रियाक्षणाः Bhāsk. ii.10.14 (*on* ii.1.2)

**अपक्षेपणशून्य** (apakṣepaṇa-śūnya) *adj.* devoid of the act of bringing downwords (अन्धकारेऽग्र याने च गतिः कार्या ... भूमौ विसर्पितैः पादैः) विसर्पितैरपक्षेपणशून्यैः AbhinBhā. ii.150.22 (12.87)

**अपक्षेपणसंस्कार** (apakṣepaṇa-saṁskāra) *m.* velosity (produced from) throwing down योऽसौ प्राक्तनोऽपक्षेपणसंस्कारो मुसलगतः सोऽप्यभिघाताद्विनष्टः NyāyKa. 299.26.

**अपक्षेपणेच्छा** (apakṣepaṇecchā) *f.* desire for throwing down पुनरप्यपक्षेपणेच्छोत्पद्यते PadārthaSaṁ. 298.5; अपक्षेपणेच्छोत्पद्यते हस्तेन मुसलस्यापक्षेपणेच्छोपजायते इत्यर्थः NyāyKa. 299.16.

**अपक्षेपपुनरुक्त** (apakṣepa-punarukta) *n.* repetition by change in order or sequence, type of defect in argument शब्दपुनरुक्तमर्थपुनरुक्तमपक्षेपपुनरुक्तं चेति TārkiRa. 346.14.

**अपक्षेपा** (apa-kṣepā) *f.* type of movement of limbs in dance (*cārī*) अपक्षेपा च डमरी SaṁgīRa. iv.281.10 (7.914); बाह्यपार्श्वेन संस्पृश्य पृष्ठमूरोर्यदीतरः। अङ्घ्रिरेतिनितम्बान्तमपक्षेपा तदा मता Nṛtyā.1082; ऊरुपृष्ठं स्पृशेदंह्रिर्बाह्यपार्श्वेन यात्यथ। अन्यो नितम्बं निकटमपक्षेपा तदा स्मृता NṛtyaK. ii.3.47.

**अपक्षेपिन्** (apa-kṣepin) *adj.* (used as noun)(note) which is put or sung in low pitch एवमपक्षेपिष्वपि तारतम्यं द्रष्टव्यम् MayūMāli. 599.13 (*on* ix.1.17)

**अपक्षेप्तुम्** (apa-kṣeptum) *inf.* to let or throw down हस्तमुत्क्षेप्तुमिच्छति अपक्षेप्तुं वा PadārthaSaṁ. 297.20.

**अपक्षेम** (apa-kṣema) *adj.* from which happiness has gone away, devoid of happiness अमुचदपक्षेमेऽयं पुरः शरं जिष्णुरहितपक्षेऽमेयम् YudhiVi. 7.102.

**अपक्षै** (apa-kṣai-) I.P. to get extinguished, to wane य॑स्याग्निरपक्षा॑येत् ... तं॑त्समाधा॑यान्ववसा॑याग्निहोत्रं॑ जुहुयात् MaiS. i.8.9 (i.129.10); आ॑युषा वा॑ एषं वी॑र्येण व्यृध्यते य॑स्याहिताग्नेरग्नि॑रपक्षा॑यति स॑ या॑वच्छ॑म्यया पराविं॑ध्येद्य॑दि ता॑वदपक्षा॑यित्त॑ सं॑ भरेत् KāṭhS. 35.17 (iii.63.3); KapiKaS. 48.15 (306.6); TaiBr. III.vii.1.3; BaudhŚS. iii.382.6; iii.382.7; BhārŚS. ix.1.17; ĀpaŚS. ix.1.17; यदि परस्तरामपक्षायेदनुप्रयायावस्येत् BhārŚS. ix.2.1; ĀpaŚS. ix.1.18; VaikhāŚS. 20.2; यद्यर्वाक् शम्याप्रासादग्निरपक्षायेत् इदं त एकम् ... इति सर्वं संभृत्याहरति MānŚS. 99.12.

**अपक्षैकांशसंभव** (a-pakṣaikāṁśasaṁbhava) *adj.* not arising, leaving out of only one point of issue, i.e. covering exhaustively all the points of one's plea without any left out सारभूतमसंदिग्धमपक्षैकांशसम्भवम् ... देयमुत्तरमीदृशम् (comm.अनवशेषतस्वपक्षैकदेशम्) SmṛtiCan.iii.97.5.

**अपक्ष्मपरिक्षेपम्** (apakṣmaparikṣepam) *adv.* without falling of the eyelashes, without closing of eyes महर्षिभिः समुत्सृज्य समाधिमलक्ष्यमाणमपक्ष्मपरिक्षेपम् ... आलोकमानः सागरमथनसंरम्भमाननन्द गोविन्दः NīlaVi. 88.9.

**अपक्ष्मपात** (a-pakṣmapāta) *adj.* without falling of the eyelashes, without closing of eyes आरुह्य राजा द्विरदं सहर्षैरपक्ष्मपातैः प्रचरन् पुरस्थैः। पुर्यम् ... व्यलोकि VīraBhā. 5.20.

**अपक्ष्मपातम्** (apakṣmapātam) *adv.* without falling of the eyelashes, without closing of eyes तावद्वधूस्तं श्रुतपूर्वरूपमपक्ष्मपातं विददर्श साक्षात् SṛṅgāDī. 1.43.

**अपक्ष्मपातस्तिमित** (apakṣmapāta-stimita) *adj.* still or motionless without falling of the eyelashes, without closing of eyes विचिन्वती किञ्चिदिवेयमादरात्। अपक्ष्मपातस्तिमिते विलोचने NavaSāC. 4.15.

**अपक्ष्मवलन** (a-pakṣmavalana) *adj.* without the movement of eyelashes आचान्तो नयनैरपक्ष्मवलनैः ... अतिययौ देवः स वाराणसीम् Gaṅgāva. 7.50.

**अपक्ष्य** (a-pakṣya) *adj.* having no adherents शून्यं करिष्यति पुरं तव कृष्णबन्धो अवलो बलो बलविहीनु अपक्ष्यपक्ष्यः LaliVi. 21.4.

**अपख्याति** (apa-khyāti) *f.* ill fame भवभूतिराह - देव पक्षपातेन वदसि इति। ततः कालिदासः प्राह - देव अपख्यातिर्मा भूत् BhojPra. 56.14.

**अपग** (ápa-ga) *adj.* [*f.* -ā] **1** going away, turning away from य॒था मां का॒मिन्यसो॒ य॒था मन्ना॒पंगा॒ अस॑ः AV. i.34.5; गृहादनपगं वीक्ष्य राजपुत्र्योऽच्युतं स्थितम्। प्रेष्ठ न्यमंसत स्वं स्वम् BhāgP. x.61.2; **2** (used as noun) (one) who is going astray or transgressing पुरुषः ... श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् MahāBhā. iii.30.23 (Nīla. अपहाय गच्छतीति क्रोधी हीन इत्यर्थः)

**अपगच्छत्** (apa-gacchat) *adj.* **1A** departing from (the soul) जीवावयवाः कुतः प्रादुर्भवन्ति, अपगच्छन्तश्च क्व वा लीयन्ते BrahmSūBh. (Śaṅ.) 408.2 (*on* ii.2.35); आगच्छतामपगच्छतां चावयवानामियत्ताऽनिरूपणेन ... नापवर्गः Bhām. 460.17 (*on* ii.2.35); **1B** retiring, withdrawing हन्ति स्वयंभूर्न परान् समरादपगच्छतः TriṣaŚaPuC. iv.3.163; **1C** going away शुल्कस्थानाच्च शुल्कमदत्वा अपगच्छन् ... दण्डं दाप्यः DīpKa.70.10 (*on* 2.262); **1D** running away अहम् ... चण्डालं दृष्टवानिमम्। अपहृत्यापगच्छन्तं सदारं मेदिनीपतिम् BṛkathāŚloSaṁ. 3.88; **2** removing स्वान्यचक्रभवेनान्तःशल्येनेवापगच्छता। सद्यः प्रीतैर्जनपदैः क्रियमाणागमोत्सवः (ऋषभध्वजः) TriṣaŚaPuC. i.6.58.

**अपगण** (apa-gaṇa) *adj.* countless त्रिदशगोपगणोऽपगणो बभौ VasaViKā. 6.14.

**अपगण्ड** (apa-gaṇḍa) *m.* one who has attained his mejority cf. अपोगंड [APTE.]

**अपगत** (apa-gata) *adj.* [*f.* -ā] **1A** gone away, moved away, gone off **B** deviated or transgressed **C** moved from **D** retired, i.e. unconquered **E** come out **F** passed off, past **G** retreated, receded **H** departed from **I** run away, fled away **2** overwhelmed, overcome **3A** destroyed **B** lost, ceased, vanished **C** disappeared **D** disappeared, i.e. fulfilled **E** extinguished **4A** rejected **B** released **C** alleviated or cured **Di** removed, eliminated **Dii** removed, i.e. expelled, dispelled **Diii** renounced, detached, disassociated **E** cleared off **5A** passed away, i.e. dead **B** passed away, gone out **C** not existing, absent **D** diseased **6** lied down **7** free from, devoid of **8** inapplicable **9** abandoned or given up **1A** gone away, moved away, gone off अत्र ह गोः सममंसतादित्यरश्मयः स्वं नाम। अपीच्यमपचितम्। अपगतम्। अपिहितम्। अन्तर्हितं वा Nir.4.25 (87.1); इत्युक्तेऽपगते दूते ... हरिः। ... तत्पुरं ययौ ViṣṇuP.v.34.13; यदेव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुपि पुरुषच्छाया दृश्यते, अपगते तस्मिन्न दृश्यते BrahmSūBh.(Śaṅ.)117.6 (*on* i.2.17); चक्षुर्यस्य तवाननादपगतं नाभूत्क्वचिन्निर्वृतम् TāpaVa.4.13; VakroJī. 229.19; तत्त्रासतश्चापगतान्दिगन्तान्सुहृज्जनानानयति स्म देवः HariVi.5.56; तन्मुखाद्वक्षच्छायापगता Hitopa. 3.22 (5); कथमपगत एव रामबाणपीडितो दशकण्ठः PrasaRā.7.29 (1); चतुरमपगतासु कृत्यजातं किमपि विधातुमिवान्तिकात् सखीषु। सपदि निरवलम्बनावतस्थे Nalābhyu.6.19; सद्यो लोचनगोचरादपगते संक्रन्दनस्यन्दने। ... बभूव ... ध्वनिः NīlaVi.27.17; ĀnandRa.7.47; **1B** deviated or transgressed ये तु धर्मव्यपेतेषु चारित्रापगतेषु च। हव्यं कव्यं प्रयच्छन्ति तेषां तत्प्रेत्य नश्यति MahāBhā. xiii.90.409*(10); यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं ... प्रहरन्ति BhāgP.v.26.15; सावित्रीपतिताः कालातिक्रमेण सावित्र्या अपगताः व्रात्या व्रात्यसंज्ञाः ManvaVi.132.1 (*on* 2.39); **1C** moved from अश्चितापसृतौ पादौ (v.l. अश्चितोऽपगतः पादः) शिरश्च परिवाहितम् ... तत्सर्पित-मुदाहृतम् NāṭyaŚā. 4.142; **1D** retired, i.e. unconquered स्मृत्वा चाद्य रणाजिरादप-गतं मुञ्चेत्स दामोदरम् PañcRā. 3.6; **1E** come out ततः शरीराद्बहिरपगतं ताभ्यामेव धर्माधर्माभ्यां समुत्पन्नेनातिवाहिकशरीरेण सम्बध्यते PadārthaSaṁ. 309.4; आरनाल-गलदाहशङ्कया मन्मुखादपगता सरस्वती BhojPra.65.16; PrabaCin.42.8; **1F** passed off, past वसन्तादीनामपगतानामपि पुनरागमनवत् MāṭhVṛ. 5.8 (*on* 1); श्रीमान्प्राप्तो वसन्तस्त्वरितमपगतो हारगौरस्तुपारः PadmPrā.1.15; यावत् पूर्वजातदशाहाद्यशौचं नापगतं स्यात् ManvaMu.210.13 (*on* 5.79); **1G** retreated, receded मासैरहं षड्भिरमुष्य पादयोश्छायामुपेत्यापगतः पृथक्मतिः BhāgP.iv.9.30; **1H** departed from येऽपगतास्तेऽपगता एव न तेषां पुनरात्मसम्बन्धो निरूपयितुं शक्यते BrahmSūBh. (Bhā.)127.1 (*on* ii.2.35); न हि कार्यकारणभावाभिधानेऽपि तदपगतम् SyādvāMañ.18 (68); सा चेदपगता लक्ष्मीः BhojPra. 43.13; SūktiRa. 163.53; अपगता रमा येषां ते अपरमाः दरिद्राः तेभ्यः उदाराः LalitāSaBh.189.18 (*on* 224); **1I** run away, fled away द्रुतमपगतो वीर समरात्। ... अरिजनः Ekāva. 8.41 (9) (293.15); **2** overwhelmed, overcome खिन्नाः शयितुकामास्ते निद्रयापगता भृशम् MahāBhā.iiiApp.I(11).14; **3A** destroyed अक्षीयेत ततो राष्ट्रम् ... बभूवापहतं (v.l. अपगतं) तद्राष्ट्रमवकीर्णमचेतनम् MahāBhā.ix.40.14; अपगते च पापे यदेषां स्वर्गारोहकं कर्म तेन स्वर्गं प्राप्नुवन्ति ManuBh.ii.206.12 (*on* 8.318); **3B** lost, ceased, vanished अस्य पुनः पूर्वदेवतासंबन्धोऽपगतः ŚābaBh. 793.2 (*on* iii.2.34); एवमपि प्रत्यक्षत्वेनोपमानस्य प्रमाणान्तरत्वमपगतमेव TātpaṬ. (U.) 377.18 (5(6).14); अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम् BrahmSūBh.(Śaṅ.)328.19(*on* ii.1.22); तस्याग्नेरग्नित्वमिदानीम् अपागात् अपगतम् ChāndoUBh. 357.13 (*on* vi.4.1); मोहः अयं विगतः मम, अविवेकबुद्धिः अपगता इत्यर्थः GītāBh.(Śaṅ.)301.12 (*on* 11.1); उद्गतमपगतं जन्मास्य सर्वकारणत्वादिति वा उद्भवः ViṣṇuSaBh.107.1 (*on* 98); किमसौ व्यामोहोऽपगतः UpadeSā.73.6; ततश्च संधानान्तरमनुत्पन्नायां मदशक्तौ पश्चाद्वापगतायां ब्राह्मणस्याप्यदोष एवेति BālaKrī.ii.119.6 (*on* 3.250 (? 256)); सरित्पतिः .. निरीक्ष्यते चकितचमूरुकातरं त्वयासकृत्किमपगतस्थलीपथः RāmC. 15.6; को हि नाम ... अपगतसकलसुखसंवेदनसम्पदमात्मानमुपपादयितुं यतेत NyāyMañ. ii.78.1; ज्ञाने

कर्मण्यपगते लोके निष्क्रियताङ्गते। कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानुषान् KūrmaP.306.1 (1.30); दोषः ... तन्त्रसम्बन्धेऽपि तदवस्थ एव न त्वपगतः TantRa.53.18; तेनापगतवेतालविकाराणां स नासिकाः। तेषां चकर्त KathāSaSāg. iii.4.157; यथा श्रावितस्य साक्षित्वं नापगतं तथा साक्षिद्वैधेऽप्युत्कृष्टकोटेः साक्षित्व-मक्षतमेव SmṛtiCan.iii.189.4; विजैबाहु(:) सुनुरस्याधिकश्रि(श्री)रपगतदुरितेतिर्वि-हि। तस्मिन्नपगते तीर्णः सर्वाङ्गोकान्भवत्ययम् PañcDa.11.57; अत्र देवेभ्यः श्रवणे न किंचनापगतम्। न काचिद्धानिरभूदित्यर्थः TattvPrakā.178A. 7 (on iii.3.46); भेदः ... तस्मिन्नपगते मुक्तावनुसंधानं भविष्यति NyāySu. (Ja.) 509A.10 (on iii.2.10); जीवेश्वरादिप्रपञ्चेऽपगते चिन्मात्रमवशिष्यते SiddhāTa. 2.8; यथा ... याजमानसमाख्या प्रोषिते यजमाने अपगता SiddhāTa. 44.4; तदपगतः प्रसादनोपायः MadaKeC.32 (9); **3C** disappeared विश्रान्ता विश्वासभूमयः पदान्यपदानानि (v.l. अपगतान्यवदातदानानि) HarṣaC. 236.4; वैरिस्त्रीककुभांगणादपगता हारच्छलास्तारकाः EI. vi.341.59; **3D** disappeared, i.e. fulfilled तत्र यथाकामेऽ-नुष्ठातव्यं तथाऽपगते कामे आरम्भस्य विद्यमानत्वान्नैमित्तिकी समाप्तिः कर्तव्या ṬupṬ. 108.8 (on vi.2.13); **3E** extinguished यस्याधानं समनन्तरमेव प्रतिज्ञा-तमपगतं स आधानाप्रतिज्ञातः BālamBha. i.259.24 (on 1.89); **4A** rejected साक्षात्प्रियामुपगताम् (v.l. अपगताम्) अपहाय पूर्वम् चित्रार्पितामहमिमां बहु मन्यमानः Śāk. 6.17; **4B** released तमपगतसमस्तपापबन्धं व्रज परिहृत्य ViṣṇuP. iii.7.18; **4C** alleviated or cured प्रीत्यभिव्यञ्जितकरतलस्पर्शनेन चैनमपगतयुद्धखेदं चकार ViṣṇuP. iv.13.54; अहो क्षणादपगतोऽयं मे संतापः Ratnā. 4.17 (1); तापो नापगतस्तृषाऽपि न कृशा SūktiMu. 23.10; PadyaVe. 702; PadyāTa. 254; प्रबोध्य भिषजा प्रोक्तो; व्याधिस्तेऽपगतो ननु SamarāSam. 6.414; **4Di** removed, eliminated गोकर्णस्वामिनश्चरणकमलयुगलप्रणामादपगतकलिकलङ्कः ... श्रीमहाराजेन्द्रवर्म्मा EI. iii.128.3; xvii.332.2; xxiii.65.3; xxv.197.3; यावत् ... स्यन्दि [न्यो]यावदु [द्या] अपगतक[लु]षाः ... ताव[द्दि]वालयं [निस्थि]तमिह भवतु EI. ix.192.10; त्वं यदा जानीयाः ... आत्मानम् ... अपगतविबन्ध-स्तम्भसुप्तिवेदनागौरवम् AṣṭāSaṁ. i.134.23 (1.26); किमर्थमपगतस्पर्शसंभोगसुखे कृतं कुले जन्म Kād. 11.22; लडादिशब्देऽपगते लिडादौ प्रत्यागतेऽभीप्सितसाधनत्वम् SaṁkṣeŚā. 1.368 (i.272.5); न्यवर्तन्तातपत्राणि राज्ञामपगतोष्मणाम् KathāSaSāg. iii.4.71; अपगतममुतः ... समनापि पत्रयुग्मम् PrabhāC. 66.10; अपगते तु दोषे भूयस एवांशस्योपलंभे निवर्तते NyāySu. (Ja.) 52A.13 (on i.1.1); न हि निषिद्धतावोधे ब्राह्मणहननादेः क्रियया व्याप्ताऽपगता NyāySu. (Ja.) 69A.4 (on i.1.1); **4Dii** removed, i.e. expelled, dispelled आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः ChāndoUBh. 515.14 (on viii.8.3); सत्यमपगतः सन्देहः SubhaDha. 5.7 (33); त्वयि कृतप्रसादायामिदानीमपगता मे तदीयचिन्ता TilaMañ. 59.21; मानेनापगतं ह्रियेव सुदृशः पादस्पृशि प्रेयसि SaraKaṇṭhā. 577.2 (5); अहं प्रत्ययस्य स्वरूपज्ञानरूपत्वात् तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापगतानीत्याह ŚrutaPra.iA.171.26 (on i.1.1); आयोगवः क्षत्ता चण्डालश्च ... व्युत्क्रमेण वैश्याक्षत्रियाब्राह्मणीषु पुत्रकार्यादपगतास्त्रयः शूद्रा जायन्ते ManvaMu. 428. 29 (on 10.16); सर्वं सद्वृत्तयोगादपगतमधुना तात नैवास्मि शोच्या Subhāṣi. 2597; चातुर्यं कथमीदृगित्यपगता शङ्का समस्तापि नः NīlaVi. 43.15; अपसदाः पुत्रकार्यादप-गताः BālamBha. i.283.25 (on 1.34); **4Diii** renounced, detached, dis-associated (सर्वयोगविनिःसृतः) नानाशास्त्रोक्तायोगादपगतत्वाद्वा ViṣṇuSaBh. 52.14 (on 24); **4E** cleared off अपगतमृणं यस्याः साऽपर्णा LalitāSaBh. 154.5 (on 196); **5A** passed away, i.e. dead स्यमन्तकरत्नं शतधनुषा समर्पितमपगते च तस्मिन्नद्य ... भगवान्याचिष्यतीति ... कालमधारयम् ViṣṇuP. iv13.141; **5B** passed away, i.e. gone out अपगता मम प्राणाः VāsaDa. 159.1; **5C** not existing, absent अचेतनस्येच्छा अपगता नास्तीति यावत् NyāySu. (Ja.) 322 B.13 (on ii.2.1); **5D** diseased [MW.]; **6** lied down मूर्च्छापरवशात्तत्रैव शयने तिर्यगपगता (अहम्) TilaMañ. 298.17; **7** free from, devoid of, cf. **अपगतज्वर**; **8** inapplicable, cf. **अपगतत्व**; **9** abandoned or given up, cf. **अपगतपादप्रक्षण**.

**अपगतकरुण** (apagata-karuṇa) *adj.* from whom mercy has departed, i.e. who has cast his mercy aside (रावणः) अपगतकरुणस्तैः पिपर्मि स्वकाराम् MahāviC. 6.52.

**अपगतकलश** (apagata-kalaśa) *adj.* which has its holy pitcher destroyed यः किल दाक्षं विद्रुतसोमं क्रतुवरमचमसमपगतकलशम् ... कार्मुकमुक्तेनाशु चकार ... इषुणा ... मखमिव NāṭyaŚā. 15.147.

**अपगतकलिदोष** (apagata-kalidoṣa) *adj.* who has removed or eliminated the defect of Kali age परमिदमतिगुह्यम् ...। अपगतकलिदोषः कामनिर्मुक्तबुद्धिः तदतुलमसकृत्त्वं भावयेदं मुमुक्षुः ViveCū. 577.

**अपगतकषायराग** (apagata-kaṣāyarāga) *adj.* who has renounced the attachment and passion कुम्भश्रुतिमारीचावन्येऽत्र महाविशालसंवेगाः। अपगत-कषायरागाः श्रामण्येऽवस्थिताः परमे PadmP. (Ra.) 78.82.

**अपगतकामत्व** (apagatakāma-tva) *n.* the state of being one who has renounced the desire अपगतकामत्वे च तदप्रयुक्ता नैवाग्निहोत्रादिभिर्दाराः प्रयोक्तुं शक्याः BālaKrī. ii.20.21 (on 3.45)

**अपगतकालक** (apagata-kālaka) *adj.* **1** free from moral guilt अयमुच्यते अपगतकालकः पुद्गलः शुद्धो व्युत्थितस्तस्या आपत्तेः परिमुच्यते GiMS. iii (3).76.18, iii (3).79.1; **2** having no black spots तद् यथा शुद्धं वस्त्रमपगतकालकं रंजनोपगं रंगे प्रक्षिप्तं सम्यगेव रङ्गं प्रतिगृह्णीयात् GiMS. iii (3). 142.19.

**अपगतकालुष्या** (apagata-kāluṣyā) *adj.* (*f.*) of which the turbidity (sin) is removed आसन्नवर्तिनीभिस्तपोधनसंपर्कादिवापगतकालुष्याभिः ... दीर्घिकाभिः ... परिवृतम् ... आश्रमपदम् Kād. 39.5.

**अपगतकिल्बिष** (apagata-kilbiṣa) *adj.* from whom the sin is removed or eliminated क्षितीधरैरपगतकिल्बिषैः स्तुतं गदाधरं प्रणमति यः सुखं वसेत् VarāP. 7.33.

**अपगतकुङ्कुमरेणु** (apagata-kuṅkumareṇu) *adj.* from which pollen of saffron has been removed परिचितपरिचुम्बनाभियोगादपगतकुङ्कुमरेणुभिः कपोलैः। ... अतमि तदा नितरां नितम्बिनीभिः ŚiśuVa. 7.63.

**अपगतकुहूक्रोडनिलय** (apagata-kuhūkroḍanilaya) *adj.* whose residence on the bosom (of the presiding deity) of new moon day has gone off सुधार्धैर्नियतो यदि भवति कोटीन्दुनिवहः कलङ्कान्निर्मुक्तोऽप्यपगतकुहूक्रोडनिलयः GopāKeCan. 138.10.

**अपगतकोप** (apagata-kopa) *adj.* whose anger has disappeared यो यादृशीं पूजामर्हति तं तथा पूजयित्वा ... अपगतकोपं कृत्वा तत एषां यः स्वधर्मस्तं बोधयेत् ManvaMu. 358.32 (on 8.391); भोजननिवृत्तः पादोपग्रहणेनापगत-कोपं कुर्यात् (विप्रम्) ManvaMu. 491.10 (on 11.204)

**अपगतक्लम** (apagata-klama) *adj.* whose fatigue is removed अयं च तावदपगतक्लमः क्रियतामाहारेण Kād. 47.8.

**अपगतक्षणदाचर** (apagata-kṣaṇadācara) *m.* demon (*lit.* one wandering at night) who has fled away or run away तूर्णं रणादपगतक्षणदाचरेभ्यो विज्ञाय तन्निधनमाधिकरं दशास्यः। नेत्रावलीविगलदश्रुपरंपराया व्याजाज्जलाञ्जलिमिवैष ददौ जयाय RāmC. (App. 2). 37.4.

**अपगतखरभाव** (apagata-kharabhāva) *adj.* whose roughness is removed रघुकुलनाथः ... अपगतखरभावं वल्कलं पर्यधत्त RāmāCam. 2.38.

**अपगतगद्गदनिर्विशङ्क** (apagata-gadgadanirviśaṅka) *adj.* from which stammering tone is gone and doubts are removed प्रसन्नं नामापगतगद्गदनिर्विशङ्कं प्रसन्नमित्युच्यते NāraŚi. i.3.4.

**अपगतगन्धादि** (apagata-gandhādi) *adj.* (used as noun) (one) whose smell etc. have disappeared अपगतगन्धादिरेवाध्ययनार्हः BālamBha.i.407.18 (on 1.146)

**अपगतगुण** (apagata-guṇa) *adj.* **A** which has lost its (natural) attributes उदकं खलु ... अप्रीतिकरमपगतगुणं विद्यात् CaraS. iii.3.7 [1941 Ed.]; **B** which has lost its virtues न चेत् ते सामर्थ्यं भवनमरणात्तुहरणे मनोऽनिर्दिष्टेऽ-स्मिन्नपगतगुणे ज्ञातुमकले ... भजस्व श्रीरङ्गम् VijñāŚ.16.

**अपगतगुणद्वन्द्व** (apagata-guṇadvandva) *n.* duality of qualities which is lost अपगतगुणद्वन्द्वासत्त्वे स्थिता समयक्रमान्मलिनविषयाकारस्पर्शं विमुञ्चति चेतना AmṛUda. 3.11.

**अपगतगुणयोग** (apagata-guṇayoga) *adj.* **1** whose connection with bow-string is lost, i.e. without connection with bow-string उपलक्ष्य वर्णसङ्कर-मपगतगुणयोगमुज्झितस्थैर्यम्। पथिकाः समुद्विजन्ते कुदेशमिव वीक्ष्य शक्रधनुः Subhāṣi.1735; **2** whose possibility of virtues has disappeared, Subhāṣi. 1735.

**अपगतग्राम्यदोष** (apagata-grāmyadoṣa) *adj.* free from the fault of residing among the ignorant people ऋषयः ... अपगतग्राम्यदोषं शिवं पुण्यम् ... हिमवन्तम् ... जग्मुः CaraS. vi.1 (4).3 [1941 Ed.]

**अपगतघनपङ्क** (apagata-ghanapaṅka) *adj.* from which thick mud is removed अपगतघनपङ्कं नाकमीलेसहस्रैः ... सर इव शफरीभिर्घूर्णमानैरभासीत् HarVi. 41.55.

